## ।। अथ भगवत्प्रसादार्थं भजनम् ।।

ग्रन्थविषयानुक्रमोऽप्ययमेव ।। अत्रैकाद्यङ्कावसाने श्रीमद्दत्तपुराणस्य प्रत्यध्यायतात्पर्यं वेद्यम् ।।

श्रीः ।। वेदपादनुतितोषित दत्त १ श्रावितशास्त्रविरोधक दत्त २ संमतवेदशिरोमत दत्त ३ संपृष्टेश्वरसत्क्रिय दत्त ४ कर्मेट्तत्त्वज्ञापक दत्त ५ स्मृतितः संनिधिकारक दत्त । सह्यमहीधरवासिन् दत्त । काशीगङ्गास्नायिन् दत्त । कमलापत्तनभिक्षुक दत्त । शाण्डिल्यानुग्राहक दत्त ६ योगाष्टाङ्गज्ञेश्वर दत्त ७ योगफलाभिज्ञेश्वर दत्त ८ ।। १ ।। शिक्षितपातञ्जलमत दत्त ९ अर्पितसायुज्यामृत दत्त १० विक्षेपावृतिवर्जित दत्त । असङ्ग अक्रिय अविकृत दत्त । स्वाश्रयशक्त्युद्बोधक दत्त । स्वैकांशाहितविश्वक दत्त । जीवेश्वरतास्वीकृत दत्त । व्यष्टिसमष्ट्यन्तर्गत दत्त । गुणतो रूपत्रयधर दत्त । नानाकर्मगतिप्रद दत्त ११ स्वभक्तमायानाशक दत्त १२ अनसूयात्र्याह्लादक दत्त १३ मत्स्याद्यवतारात्मक दत्त १४ प्रह्लादानुग्राहक दत्त । असुरसुरोरगशिक्षक दत्त १५ ज्ञानकाण्डसंदर्शक दत्त १६ ।। २ ।। नवविधभक्तिपरायण दत्त । स्वमन्त्रजापकतारक दत्त १७ योगभ्रष्टद्विजनुत दत्त । सतीमाहात्म्यप्रमुदित दत्त । सत्यनसूयात्र्यर्भक दत्त १८ कृतवीर्यानुग्राहक दत्त १९ जंभाख्यासुरघातक दत्त । देवेन्द्राभीष्टार्पक दत्त । अर्जुनहृद्यवरप्रद दत्त २० माक्षेच्छ्वर्जुनसंस्तुत दत्त । शिल्पज्ञोद्गतिशंसक दत्त । कामशास्त्रविज्ञापक दत्त । सप्तग्रहविद्रावक दत्त । विष्णुदत्तवरदायक दत्त २१, २२ कर्मविपाकख्यापक दत्त । झुटिंगपीडाहारक दत्त २३ भीतप्राज्ञाह्लादक दत्त २४ ।। ३ ।। श्रवणादिविधिद्योतक दत्त २५ सयोगविज्ञानार्पक दत्त २६ विमुक्तचर्याजल्पक दत्त २७ शक्तभक्तहितयोजक दत्त २८ भार्गवरामाह्लादक दत्त २९ अर्जुनसायुज्यप्रद

दत्त ३० रेणुकाभीष्टार्थप्रद दत्त ३१ पातितभूपकदंबक दत्त ३२ ॥ ४ ॥ ऋतध्वजानुग्राहक दत्त ३३ मदालसानुग्राहक दत्त ३४ अलर्कराज्योत्कर्षक दत्त ३५ अलर्कराज्यत्याजक दत्त ३६ योगसिद्धिसंदर्शक दत्त ३७ योगसुचर्याभाषक दत्त ३८ मृत्युलक्ष्मसंजल्पक दत्त ३९ अलर्कगीतोत्तमगुण दत्त । विहितालर्कश्रेयो दत्त ४० ॥ ५ ॥ आयूराजवरप्रद दत्त ४१ नहुषाशेषारिष्टद दत्त ४२ आयुःशोकद्रावक दत्त । इन्दुमतीहृद्धर्षक दत्त ४३ प्रकटितनहुषसुतेजो दत्त । घातितहुंडासुरबल दत्त । आयुर्लिप्सापूरक दत्त ४४ यदुराजानुग्राहक दत्त । बहुगुरुतत्त्वग्राहक दत्त । श्रीयदुवंशाह्लादक दत्त ४५ मन्वन्तरसत्कीर्तिग दत्त । सप्तद्वीपक्ष्माप्रिय दत्त । ४६ दिनकरवंशोत्कर्षक दत्त ४७ हिमकरवंशोद्धारक दत्त । पूरितभक्तमनोरथ दत्त । उपासनाकाण्डप्रिय दत्त ४८ ॥ ६ ॥ देहाघ्रव्योद्बोधक दत्त । शरीरदोषादर्शक दत्त । तनुसाफल्यद्योतक दत्त । ऋचिकातपआख्यापक दत्त । भाषितमुन्दासुरमृत दत्त ४९ जल्पितवैश्योत्तमगत दत्त । अभिहितविद्सुतदुर्गत दत्त ५० नानाधर्मद्योतक दत्त ५१ निषेधविधिसंदर्शक दत्त ५२ वैष्णवधर्मदर्शक दत्त ५३ सन्माहात्म्यद्योतक दत्त ५४ माघस्नानख्यापक दत्त ५५ भाषितराक्षसमोचन दत्त । सुकृतोत्सुकजनरोचक दत्त ५६ ॥ ७ ॥ सोमकीर्तिनृपतारक दत्त । अधर्मसाध्वसहारक दत्त । वर्णाश्रमवृषकारक दत्त । ब्रह्मचारिवृषबोधक दत्त ५७ गृहस्थधर्मद्योतक दत्त ५८ श्राद्धसुपद्धतिदर्शक दत्त ५९ दर्शितसत्तिथिनिर्णय दत्त ६० कृतदुष्कर्मविनिर्णय दत्त । प्रायश्चित्तस्थापक दत्त ६१ कर्मविपाकज्ञापक दत्त ६२ सत्संस्कारद्योतक दत्त । वनस्थतपआदर्शक दत्त ६३ पञ्चप्रलयासंगत दत्त । संमतसंन्यासाश्रम दत्त (स्वभक्तचित्ताह्लादक दत्त । सुकर्मयोगस्थापक दत्त) ६४ ॥ ८ ॥ इति भजनं ॥ ग्रन्थविषयानुक्रमणिका च संपूर्णा ॥

---

## ॥ अथ देवप्रबोधः ॥

श्रीः ॥ नित्यो हि यस्य महिमा न हि मानमेति स त्वं महेश भगवन्मघवन्मुखेड्य ॥ उत्तिष्ठ तिष्ठदमृतैरमृतैरिवोक्तैर्गीतागमैश्च पुरुधा पुरुधामशालिन् ॥ १ ॥ भक्तेषु जागृहि मुदा हिमुदारभावं तल्पं विधाय सविशेषविशेषहेतो ॥ यः शेष एष सकलः सकलः स्वगीतैस्त्वं जागृहि श्रितपते तपते नमस्ते ॥ २ ॥ दृष्ट्वा जनान् विविधकष्टवशान्दयालुस्त्र्यात्मा बभूव सकलार्तिहरोऽत्र दत्तः ॥ अत्रेर्मुनेः सुतपसोऽपि फलं च दातुं बुध्यस्व स त्वमिह यन्महिमानियत्तः ॥ ३ ॥ आयात्यशेषविनुतोऽप्यवगाहनाय दत्तोऽधुनेति सुरसिन्धुरपेक्षते त्वाम् ॥ क्षेत्रे तथैव कुरुसंज्ञक एत्य सिद्धास्तस्थुस्तवाचमनदेश इनोदयात्प्राक् ॥ ४ ॥ संध्यामुपासितुमजोऽप्यधुना गमिष्यत्याकाङ्क्षते कृतिजनः प्रतिवीक्षते त्वाम् ॥ कृष्णातटेपि नरसिंहसुवाटिकायां सारार्तिकः कृतिजनः प्रतिवीक्षते त्वां ॥ ५ ॥ गान्धर्वसंज्ञकपुरेपि सुभाविकास्ते ध्यानार्थमत्र भगवान्समुपैष्यतीति । मत्वास्थुराचरितसंनियताप्लवाद्या उत्तिष्ठ देव भगवन्नत एव शीघ्रम् ॥ ६ ॥ पुत्री दिवः खगगणान् सुचिरं प्रसुप्तानुत्पातयत्यरुणगा अधिरुह्य तूषाः ॥ काषायवस्त्रमपिधानमपावृणूद्यन्ताक्ष्याग्रजोऽयमवलोकय तं पुरस्तात् ॥ ७ ॥ शाटीनिभाभ्रपटलानि तवेन्द्रकाष्ठाभागं यतीन्द्र रुरुधुर्गरुडाग्रजोऽतः ॥ अस्माभिरीश विदितो ह्युदितोऽयमेवं चन्द्रोपि ते मुखरुचिं चिरगां जहाति ॥ ८ ॥ द्वारेऽर्जुनस्तव च तिष्ठति कार्तवीर्यः प्रह्लाद एष यदुरेष मदालसाजः ॥ त्वां द्रष्टुकाम इतरे मुनयोऽपि चाहमुत्तिष्ठ दर्शय निजं सुमुखं प्रसीद ॥ ९ ॥ एवं प्रबुद्ध इव संस्तवनादभूत्स मालां कमण्डलुमधो डमरुं त्रिशूलं ॥ चक्रं च शंखमुपरि स्वकरैर्दधानो नित्यं स मामवतु भावितवासुदेवः ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यवासुदेवानन्दसरस्वतीकृतदेवप्रबोधः संपूर्णः ॥

---

# ॥ दत्तपुराणम् ॥

## वेदपादस्तुतिः ॥

॥ ॐ ॥ श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुभ्यो नमः ॥ श्रीदत्तात्रेयगुरुचरणाभ्यां नमः ॥

श्रीदत्तेनोदिता टीका वासुदेवसरस्वतीम् ॥
निमित्तीकृत्य विभुना चरितस्य गुरोर्वरा ॥ १ ॥

अथान्यापि तथैवेयं स्वमाहात्म्यार्थबोधिनी ॥
स्वल्पग्रन्था स्फुटार्था च टीका तेनैव तन्यते ॥ २ ॥

सरस्वतीमहानद्यास्तीरे सिद्धाश्रमेऽश्रमे ॥
श्रीक्षेत्रे विमले दत्तभक्तप्रार्थनया स्फुटम् ॥ ३ ॥

कलौ प्रत्यक्षफलप्रदस्य भगवतः श्रीदत्तात्रेयस्येदं माहात्म्यं सर्वपुराणेतिहाससारभूतं काण्डत्रयात्मकं भागीरथीतीरे ब्रह्मावर्ते उदितम् ॥ अत्र द्वाभ्यामष्टकाभ्यां ज्ञानकाण्डं, चतुर्भिरुपासनाकाण्डं द्वाभ्यां कर्मकाण्डं, च वितन्यते । अत्र प्रकरणवशात्प्रथमकाण्डे सर्गोऽन्तिमे प्रतिसर्गो मध्ये वंशमन्वन्तरादि चोपवर्णितम् । अतएवेदं पुराणमित्यभिधीयते । ‘ सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥ वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम् ’ इति तल्लक्षणत्वाद्ब्राह्मादिवत् यदनेवं न तदेवं यथा काव्यनाटकचम्प्वादि । अत्र श्रीदत्तात्रेयदेवताप्राधान्याच्छ्रीदत्तात्रेयपुराणमिति वक्तुं युक्तमेव ॥ अत्र प्रथमाध्याये प्रतिश्लोकमृक्शाखीयाध्यायप्रतीकमुखेन तत्तदध्यायान्तर्गतैकाद्वित्रिपादान्वितेनोपनिबन्धनाद्वेदपादस्तुतिरित्यु-

अग्निमीळे परं देवं यज्ञस्य त्वां त्र्यधीश्वरम् ॥
स्तोमोऽयमग्रियोऽर्थ्यस्ते हृदिस्पृगस्तु शंतमः ॥ १ ॥

च्यते । तदीदृशं पुराणं लोकोपकृतये श्रीदत्तात्रेयप्रीतये च यथाप्रतिभानं व्याख्यायते ॥ ॥ यथामृतं दिविषदां श्रीदत्तात्रेय जीवनम् ॥ तथा ममापि भगवंस्त्वत्कथामृतजीवनम् ॥ १ ॥ त्वद्गृहीतमनसो हि जीवनं प्रेष्ठ कान्त सकलं त्वमेव मे ॥ अप्रमेय शिव निर्गुणाव्यय व्यक्तिरत्र तव निर्गुणाऽज मे ॥ २ ॥ स्वप्रकाशमपरोक्षमवेद्यं त्वां स्मरन्ननुदिनं ह्यनवद्यम् ॥ याति यां गतिमृषिस्त्वदनन्यः प्राप्नुयां स्तवनतोपि गतिं ताम् ॥ ३ ॥ यद्यप्यहं केवलमीश्वराज्ञः साहित्यसंगीतकलानभिज्ञः ॥ तथापि ते प्रेरणया प्रवर्ते स्तोतुं सुकीर्ते तव विश्वमूर्ते ॥ ४ ॥ त्वदर्थे न्यस्तसर्वेहो निर्ममो निरपत्रपः ॥ प्रवर्ते ते स्तवे सोऽस्तु प्रीत्यैः तेऽर्भोक्तिवत्पितुः ॥ ५ ॥ अग्निमिति । अगिधातोर्गत्यर्थस्य निप्रत्ययान्तस्य रूपमग्निरिति । अङ्गयति गमयत्यग्रं कर्मणः फलं प्रापयतीत्यग्निरग्रणीरभिगतो वा । 'स त्रेधाऽऽत्मानं व्यकुरुत' इति श्रुतेर्वाऽग्निवाय्वादित्यात्मनाऽवस्थितस्य विराजोऽस्मिन्लोकेऽग्निरूपेणावस्थानात् 'अग्निर्गृहपतिरिति हैक आहुः सोऽस्य लोकस्य गृहपतिः' इति श्रुतेस्तादृशमग्निमीळे । 'ईड्टेः स्तुतिकर्मणः' इति नैरुक्तात् । ईडे स्तौमीति यावत् । यज्ञस्य देव द्योतनात् । किमूर्ध्वज्वलनात्मकं चिद्धातुं । न । परं । परत्वे हेतुः त्र्यधीश्वरं अन्तर्यामित्वेनाग्निवाय्वादित्यनियन्तारम् । 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । त्रिगुणमायानियन्तारं वा श्रीदत्तात्रेयमीडे । भो भगवन् , अयं स्तोमः स्तवोऽग्र्यः पौरस्त्यः शंतमोऽतिशयेन कल्याणतमोऽत एवार्थ्योऽर्थादनपेतः 'धर्मपथ्यर्थ' इति यत् । ते तव हृदि स्पृशतीति हृदिस्पृक् 'हलदन्तात्' इत्यलुक् । प्रेमास्पदोऽतिप्रियत्वेन चिरं हृदि स्थाने इति यावत् । अस्तु भवतु । अन्तिमोऽयं वेदपादः ॥ १ ॥ अयं वक्ष्यमाणः स्तोमः देवाय स्वप्रकाशाय गिरां वाचां दूराया-

अयं देवाय दूराय गिरां स्वाध्याय सात्वताम् ॥
स्तोमोऽस्त्वनेन विन्देयं तद्विष्णोः परमं पदम् ॥ २ ॥
एता या लौकिकाः सन्तु हीना वाचोऽपि नः प्रियाः ॥
बालस्येव पितुस्ते त्वं स नो मृळ महाँअसि ॥ ३ ॥
अयं वां नात्मनोस्तत्त्वमधिगम्यास्ति दुर्मनाः ॥
हृद्रोगं मम सूर्य त्वं हरिमाणं च नाशय ॥ ४ ॥

विषयाय । 'दूरान्तिकार्थैः' इति षष्ठी । सन्नाराधनीयत्वेन विद्यते येषां ते सत्वन्तः त एव सात्वन्तो भक्ताः तेषां स्वाध्याय सुतरामाराधयितुं शक्याय तेऽस्तु । को लाभोऽनेनेत्यत आह । विष्णोर्व्यापनशीलस्य तव । 'विषेः किच्च' इति नुप्रत्ययः । कित्वान्न गुणः । तन्निरतिशयानन्दं पदं 'पद गतौ' पद्यते भक्तैर्गम्यत इति पदं स्वरूपं विन्देयं प्राप्नुयाम् ॥ २ ॥ ननु गिरां दूरस्य मे हृदिस्पृगयं स्तोमः कथमित्यत आह । एता या बुद्धिस्था लौकिक्यः सामान्यात्प्राकृताः अलंकारादिहीना अपि नोऽस्माकं स्तोमरूपा वाचः बालस्य पितुरिव ते प्रिया आह्लादकाः सन्तु । एताभिर्गीर्भिः स्तुतः स त्वं नोऽस्मभ्यं मृळ मृडय । यतस्त्वं महान्सर्वेषां पिता पूज्यश्चासि । अत्र पादानुरोधेन क्वचिद्बहुवचनम् ॥ ३ ॥ किमर्थं स्तौषि दौर्मनस्यनाशायेत्याह । अयं भक्तः वां प्रतीचः परमात्मनश्च तत्त्वं अखण्डैकरसत्वं उपाधिप्रतिबन्धान्नाधिगम्य तत्त्वंपदार्थोपस्थितिमप्राप्याविद्याकामकर्मभिर्दुर्मना अस्त्यतः सूर्यः जगदुत्पत्तिस्थितिप्रलयोपलक्षकोऽभिन्ननिमित्तोपादानक आत्मा । 'सूर्य आत्मा जगतस्तस्थुषश्च' इति श्रुतेः । हे सूर्य भगवन्, कामादिजं हृद्रोगं हरिमाणं ज्ञानवैरिणं चकारात्तत्त्वपरिवारं च विशेषेण नाशय घातय ॥ ४ ॥ भो भगवः । छान्दसं संबुद्धौ 'मतुवसोः' इति रुत्वम् । अस्मान्भक्तान्विद्धीति प्रमन्महे याचामहे । यतो वयं ते

प्रमन्महेस्माऽन्विद्धीतिस्तोतारस्ते वयं नमः ॥
भगवो देव ते स्तोममारे अस्मे च शृण्वते ॥ ५ ॥
इन्द्रो मदाय यातीह सत्वरं सोमिनो यथा ॥
स्तोतॄनेहि तथाऽस्माँस्ते माध्वीर्गावो भवन्तु नः ॥ ६ ॥
द्वे विरूपेऽत्र मायायास्तेऽत्र मग्नोऽस्मि पीडितः ॥
माभितः संतपन्तीह सपत्नीरिव पर्शवः ॥ ७ ॥
इदं श्रेष्ठमपि प्राप्य जन्म गन्ताध एव तत् ॥
कुरु प्रसादं ज्ञात्वैतत्तेनाहं भूरि चाकन ॥ ८ ॥

स्तोतारः, भो देव, 'आरे परावतः' इति नैघण्टुके दूरनामत्वात् आरे बहिर्मुखत्वाद्दूरे विद्यमानानामस्मेऽस्मदर्थे । सार्वविभक्तिकमव्ययम् । तथाच नैरुक्ताः 'अस्मे ते बन्धुः' वयमित्यर्थः । 'अस्मे यातं नासत्या सजोषाः' अस्मानित्यर्थः । 'अस्मे समानेभिर्वृषभ पौंस्येभिः' अस्माभिरित्यर्थः । 'अस्मे प्रयन्धि मघवन्नृजीषिन्' अस्मभ्यामित्यर्थः । 'अस्मे आराच्चिदद्वेषः सनुतर्युयोतु' अस्मदित्यर्थः । 'ऊर्व इव पप्रथे कामो अस्मे' अस्माकमित्यर्थः । अस्मे धत्त वसवो वसूनि' अस्मास्वित्यर्थ इति । अस्माकं स्तोमं शृण्वते ते नमः ॥ ५ ॥ इह यथेन्द्रः सोमिनः प्रतियाति हे भगवन्, तथा स्तोतॄनस्मानेह्यागच्छ । नोऽस्माकं स्तोत्ररूपा गावः ते माध्वीर्माध्व्यो रसवत्यो भवन्तु बालवाक्यवत् ॥ ६ ॥ किंचात्र विक्षेपावरणशक्तिरूपायाः ते मायायाः द्वे विसदृशे रूपे । अत्रानयो रूपयोर्मध्ये मग्नोऽत एव पीडितोऽस्मि । इह मामभितः पुरुषमेकं पतिं सपत्नीर्बह्व्यः सपत्न्य इव पर्शव आधयः संतपन्ति ॥ ७ ॥ श्रेष्ठमिदं नृजन्म प्राप्यापि तापतोऽहं नृलोकादधो गन्ता तत्तस्मादेतज्ज्ञात्वा प्रसादं कुरु । तेन सर्वदुःखहरणेन प्रसादेनाहं भूरि प्रभूतं यथा तथा चाकन कामये 'कनी

प्रवस्तुज्ञानाज्जहाति निष्कामश्चेन्मृतिं त्वहम् ॥
न तादृशोऽतः कामादि सर्वं रक्षो निबर्हय ॥ ९ ॥
सुषुमामूर्धियः स्तोमैरागच्छैते(?) वयं विभो ॥
त्वदंशास्त्वं पतिर्नोऽसि देवो देवेषु मेधिरः ॥ १० ॥
वसू रूपं रूपमिह प्रतिरूपोऽसि नो पृथक् ॥
एतानि भूतानि विदुर्ब्राह्मणा ये मनीषिणः ॥ ११ ॥

दीप्तिकान्तिगतिषु ' छन्दसि लिट् । ' णलुत्तमो वा ' इति णित्त्वस्य विकल्पाद्वृद्ध्यभावः । तुजादित्वादभ्यासो दीर्घश्च ॥८॥ निष्कामश्चेत्प्रमादाख्यं मृत्युं प्रजहाति । 'छन्दसि परेपि' 'व्यवहिताश्च' इति प्रादीनां व्यवहितत्वं परत्वं च । यद्वा प्रकृष्टवस्तुनो ज्ञानान्निष्कामश्चेन्मृत्युं जहाति । अहं तु न तादृशो निष्कामोऽतः सर्वं कामादि रक्षः पीडकत्वाद्दुष्पूरत्वाच्च । आदिशब्देनाविद्याकर्म च निबर्हय घातय ॥ ९ ॥ हे विभो व्यापक, यद्येवं न करोषि चेत्ते स्तोतारो वयं स्तोमैरमूर्धियो धीवृत्तीः सुषुम शोधयामः यतो वयं त्वदंशाः ' ममैवांशो जीवलोके ' इति स्मृतेः । देवेषु मेधिरो मेधावी शुद्धसत्त्वोपाधित्वात् । देवो द्योतनस्वभावस्त्वं नोऽस्माकं पतिः पाता वा पालयिता वाऽसि ॥ १० ॥ वासयति भूतानीति वसुरात्मा त्वं रूपं रूपं प्रतिरूपोऽसि मायाशक्त्येति शेषः । ' इन्द्रो मायाभिः पुरुरूपः, ' ' रूपं रूपं प्रतिरूपः ' इति श्रुतेः । ये मनीषिणो मननशीला ब्राह्मणास्त एतानि भूतानि विवर्तोपादानत्वात्वत्तो न पृथक् , कनकोत्पन्नकुण्डलादिवदिति विदुः । ' विदो लटो वा ' इति झेर्जुसादेशः ॥ ११ ॥ भो श्रीदत्त, अन्तःकरणसंभिन्नत्वादल्पज्ञोऽहं तं परोक्षं भगवन्तं सर्वज्ञं ज्ञानविज्ञानयोर्भगत्वप्रतिपादनात्तद्वन्तं सर्वज्ञं त्वां प्रति नु निश्चयेन शीघ्रं वा ' नु मक्षु ' इति नैघण्टुकोक्तेः । किं ब्रुवे अपि तु न किमपि । भो

तं नु त्वां किं ब्रुवेऽल्पज्ञो भगवन्तं क्षमस्व भोः ॥
ओषमागहि मां त्वं चेत्सखा सन्नतिमन्यसे ॥ १२ ॥
ता वासना घ्नन्ति यथा वृश्चिकस्यारसं विषम् ॥
अतो मां पाहि भूयिष्ठां नमउक्तिं विधेम ते ॥ १३ ॥
नि होता सीदसि विभो यस्त्वं यष्टुर्गृहे प्रिय ॥
तं त्वाह्वये ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते ॥ १४ ॥
सेमामविड्ढि प्रभृतिमीशिषे योऽव मानिशम् ॥
त्वं विश्वेषां यदीशानो ब्रह्मणा वेषि मे हवम् ॥ १५ ॥

भगवन्, संजातान्मेऽपराधान् क्षमस्व । 'द्वा सुपर्णा सयुजा सखाया' इति श्रुतेस्त्वं सखा सन्मामतिमन्यसेऽतिप्रियं मन्यसे चेन्मां प्रति ओषं शीघ्रं धेनुर्वत्समिवागहि आगच्छ ॥ १२ ॥ अधुना नागच्छसि चेत्तर्हि मरिष्ये । यतस्ता अनिर्वचनीयाः पूर्वजन्मसंचिता वासना यथा वृश्चिकस्यारसं रस आनन्दस्तद्विरोधि विषं यथा नरं हन्ति तथा मां घ्नन्त्यतो मां पाहि । ते तुभ्यं भूयिष्ठां नमउक्तिं विधेम परिचरेम । यद्वा करवामेति शिष्याभिप्रायं बहुवचनं 'न वै देवा नमस्कारमति 'इति विश्वासात् ॥ १३ ॥ हे विभो यस्त्वं यष्टुर्यजमानस्य गृहे अग्निरूपेण होता सन्निषीदसि । व्यवहितं छान्दसम् । हे प्रिय, ब्रह्मणामन्नादीनां 'अन्नं ब्रह्मेति व्यजानात्' इति श्रुतेः । ब्रह्मणो वेदस्य च पते, ज्येष्ठराजं तं त्वा त्वामाह्वये ॥ १४ ॥ स त्वमिमां प्रकृष्टां भृतिमस्माकं भरणं अविड्ढि प्राप्नुहि । अवतेः प्राप्त्यर्थस्य लोट्ये-तद्रूपम् । पादपूरणार्थः संधिलोपः । य ईशिषे स एव त्वमनिशं मामव मायामयात्प्रपञ्चाद्रक्ष । यस्मात्त्वं विश्वेषां सर्वेषामीशानोऽस्यतो ब्रह्मणा स्तोत्रेण मया कृतं हवमाह्वानं वेषि कामयसे । 'वी गतिप्रजनकान्त्यसनखादनेषु' अतो मयोक्तं कुर्वित्यर्थः ॥ १५ ॥

मन्दः स्वकोऽयं दीनोऽज्ञ इति विद्वान्भवान्प्रभुः ॥
इन्द्र आशाभ्यः परि मां सर्वाभ्यो अभयं करत् ॥१६॥
प्र य आरुपितां भ्रान्तिं त्वत्प्रसादाज्जहाति सः ॥
विमुच्यते तद्विप्रास्त्वां जागृवांसः समिन्धते ॥ १७ ॥
इच्छन्ति देवा अपि ते प्रसादाय नृजन्म तत् ॥
विद्वान्नामानि ते दत्त विश्वाभिर्गीर्भिरीमहे ॥ १८ ॥
इन्द्र त्वा भजतः सूरेर्दुलभं किं तरामि तत् ॥
भक्त्या क्लेशादि ते नावा गम्भीराँ उदधीँरिव ॥ १९ ॥

बुद्ध्या मन्दो दीनोऽज्ञोऽप्ययं स्वकः स्वभक्त इति विद्वाञ्जानन् प्रभुः समर्थ इन्द्रः परमेश्वरो भवान् मां परि परितः सर्वाभ्य आशाभ्यो दिग्भ्योऽथवा ऽऽशाभ्यस्तृष्णापाशेभ्य इति यावत् अभयं करत् करोत्विति भावः। 'तृष्णया चाभिभूतस्तु नरकं प्रतिपद्यते। तया मुक्ताश्च ये केचित्स्वर्गवासं लभन्ति ते' इति गारुडात्, 'आशादासा भ्रमन्तीह तन्मुक्ताः सुस्थिरा नराः। आशादासः सर्वदासोऽनाशे दासायते जगत्' इति ॥ १६ ॥ यस्त्वत्प्रसादादारुपितां मिथ्याध्यस्तां देहाद्यनात्मन्यात्मलक्षणां भ्रान्तिं प्रजहाति व्यवहितं छान्दसम्। स विशेषेणाविद्याकामकर्मभ्यो मुच्यते। यत एवमतो विप्रा विवेकिनः जागृवाँसो जागरणशीलाः 'जागृ निद्राक्षये' लिटः क्वसुः। अप्रमत्ता इति यावत्। त्वां भगवन्तं समिन्धते। णिचो लोपः समन्धयन्ति उपासते ॥ १७ ॥ देवाः स्वर्गता अपि ते तव प्रसादाय नृजन्मेच्छन्ति। तस्मात् हे दत्त, विश्वाभिः सर्वाभिर्लौकिकीभिः संस्कृताभिश्च ते तव नामानि गातुं याचामहे। देवलोकेऽपि प्रेमपूर्वकं त्वन्नामगानं सुदुर्लभमत इहैव गातुं त्वत्प्रसादात्तव नामानि मनसि स्फुरन्त्विति भावः ॥ १८ ॥ हे इन्द्र परमेश्वर श्रीदत्त, त्वा त्वां भजतः सूरेः पण्डितस्य किं दुर्लभं।

**न ता रोद्धुं धियः शक्ता योगेनापि ततः सदा ॥**
**त्रातारं धीमहीश त्वां धियो यो नः प्रचोदयात् ॥२०॥**
**वैश्वानराय दत्वाऽन्नं विधिलब्धं सदैव ते ॥**
**भवामो भजने सक्ता अस्माकं शृणुधी हवम् ॥ २१ ॥**
**एवा त्वामिन्द्र विप्रासो जागृवांसो विपन्यवः ॥**
**स्तुवन्त्येभ्यो हि ते कोऽपि न ज्यायाँ अस्ति वृत्रहन् २२**

न किमपि। तत्तस्मात्ते भक्त्या नावा भक्तिरूपया नौकया गम्भीरानुदधीन् समुदानिव। 'उदकस्योदः संज्ञायाम्' इत्युदादेशः। देहान्तरप्रापकक्लेशादि तरामि। भक्त्या सुकरत्वाद्वर्तमानकालः। रङ्गौ छान्दसौ प्रातिशाख्ये विहितौ ॥ १९ ॥ ताः कामरागद्वेषाद्याः धियो धीवृत्तीः। धिय एकत्वेऽपि वृत्तिभेदाद्बहुवचनम्। वयं रोद्धुं न शक्ताः। किमुपायं विना। न। योगेनापि। ततः हे ईश, सदा त्रातारं त्वां धीमहि ध्यायामः। 'ध्यै चिन्तायां' लिट्। छान्दसं संप्रसारणम्। योऽस्माभिर्ध्यातः स भवान्नो धियो धीवृत्तीः प्रचोदयात् धर्मविषये प्रेरयतु ॥ २० ॥ विश्वेभ्यो नरेभ्यो हितः सर्वोपकारकः 'नरे संज्ञायाम्' इति पूर्वपददीर्घः। यद्वा विश्वश्चायं नरः सर्वात्मकत्वात्, विश्वेषां विकाराणां वा नरः कर्ता, विश्वे सर्वे नरा जीवा अस्यात्मत्वेन नियम्यत्वेन सन्तीति विश्वानरः स एव वैश्वानरः। स्वार्थे तद्धितः राक्षसवत्। तस्मै 'अहं वैश्वानर' इति स्मृतेः। विधिलब्धं दैववशात्प्राप्तं अन्नं दत्वा सदैव ते भजने सक्ता भवामः। हे भगवन्, अस्माकं हवमाह्वानं शृणुधी शृणुहि 'श्रुशृणुपृकृवृभ्य' इति धत्वं दैर्घ्यं छान्दसम् ॥ २१ ॥ हे इन्द्र, त्वामेव विपन्यवः। स्तुत्यर्थस्य पनेर्बाहुलकादौणादिको युप्रत्ययः। विशेषेण स्तोतारो जागृवांसोऽप्रमत्ता विप्रासो मेधाविनः 'आज्जसेरसुक्' स्तुवन्ति एभ्यः स्तोतृभ्यः हि निश्चयेन ते तव

प्रऋभुभ्यो गृणद्भ्यस्ते मर्त्येभ्योऽप्यमृतत्वमित् ॥
दत्तं स्मृत्वा तव मनोरथ आयातु पाजसा ॥ २३ ॥

इदमु त्यदिषं श्रेयो यज्जग्ध्वा परितृप्यति ॥
साधुस्तद्भजनं तेऽस्मे इषं स्तोतृभ्य आभर ॥ २४ ॥

त्वामग्ने मायिनं मायां जेतारमपराजितम् ॥
हित्वा कं शरणं यामः स नो बोधि श्रुधी हवम् ॥२५॥

कोऽप्यन्यो ज्यायान्नास्ति । रङ्गश्छान्दसो द्विमात्रकः । शिक्षायां 'हृदये चैकमात्रस्त्वर्धमात्रस्तु मूर्धनि ॥ नासिकायां तथार्धं च रङ्गस्यैवं द्विमात्रता' इति । उच्चारणप्रमाणं तु 'रङ्गवर्णं प्रयुञ्जीरन्नो ग्रसेत्पूर्वमक्षरम् ॥ दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत्' इति । वृणोतीति वृत्रं आवरकमज्ञानं 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति स्मरणात् । तद्धन्ति स्वात्मयाथात्म्यप्रकाशेन वारयतीति वृत्रहा तत्संबुद्धौ । 'तेषामेवानुकम्पार्थम्' इति स्मृतेः ॥ २२ ॥ पूर्वं मर्त्या अपि त्वां गृणन्त ऋभवः तेभ्योऽमृतत्वं त्वया प्रदत्तं इदिवार्थः 'ऋभवो वै देवेषु तपसा सोमपीथमभ्यजयन्' 'अधारयन्त वह्नयोऽभजन्त सुकृत्यया । भागं देवेषु यज्ञियम्' इति श्रुतेः । इदं स्मृत्वा तव मनोरथः पाजसा वेगेनायातु गृणन्तं मां प्रतीति शेषः ॥ २३ ॥ त्यत्तत् इदमु इदमेव इषमन्नं श्रेयः श्रेष्ठं यदन्नं जग्ध्वा साधुः परितृप्यति । किं लोकप्रसिद्धमदनीयं । न । तत्ते भजनमेवान्नं अस्मे अस्मभ्यं स्तोतृभ्य आभराहर देहि । हरतेर्भकारः ॥ २४ ॥ हे अग्ने, मायिनं वशमायम् । 'अस्माया' इति विनिः । अतएव मायां जेतारं स्वयमपराजितं ईदृशं त्वां हित्वाऽन्यं कं शरणं यामः । त्वदृते न कोऽप्यस्माकं रक्षितेति भावः । स त्वं नोऽस्माञ्छरणागतान्बोधि । 'बुध ज्ञाने' लोण्मध्यमैकवचनम् । जानीहि । हवं कृतमाह्वानं श्रुधी शृणु 'श्रुपृकृवृभ्यः'

महीं महेशोऽज्ञानेन भवानवतु मावृतम् ॥
यथा वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः ॥ २६ ॥

प्रयुञ्जती यदात्मानं मनीषा मनसा सह ॥
तदैव भवतैकान्तं जानता संगमेमहि ॥ २७ ॥

ऋतस्य गोपास्त्वं देहि मह्यं शं युञ्जते धियः ॥
भीताय नाधमानाय ऋषये सप्तवध्रये ॥ २८ ॥

इति सेधिः ॥ २९ ॥ महो नित्योत्सवोऽस्यास्तीति मही महतां ब्रह्मादीनामपीशः महीनां ज्ञानभूमीनां वेशः महायोगी मह्याः ब्रह्माण्डगोलरूपायाः वेशः 'स भूमिं विश्वतः' इति श्रुतेः। भवानज्ञानेनावृतं स्वांशभूतं मामवत्वावरणपरिहारेण रक्षतु। ननु ममांशभूतस्य तव कथमावरणमित्यत आह यथा स्वर्भानू राहुस्तमसा सूर्यं पर्वण्याविध्यत्तथा वै निश्चयेनाज्ञानेनावृतं मामिति संबन्धः। 'राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादनात्' इति पूर्वाचार्योक्तिर्नावरणं वास्तवं 'आदित्यवर्णं तमसः परस्तात्' इति श्रुतिस्मृतिभ्याम् ॥ २६ ॥ तद्रूपापरोक्षार्थं भवदनुग्रहेण यदा विनिरुद्धभूमिगतेन मनसा सह मनीषा मनोनियन्त्री बुद्धिरात्मानं प्रत्यञ्चं प्रयुञ्जती प्रकर्षेण योगं कुर्वती तदैव भवदनुग्रहकाल एव जानता सर्वज्ञेन भवता तत्पदलक्ष्येण वयं त्वंपदलक्ष्या ऐक्यं एकान्तमत्यन्तमखण्डैकरसमिति यावत्। संगमेमहि संगता भवामः ॥ २७ ॥ ऋतस्यावश्यंभाविकर्मफलस्य गोपास्त्वं धियो युञ्जते योगं कुर्वते मह्यं श्यति दुःखं तनूकरोतीति शं सुखमात्यन्तिकं बुद्धिग्राह्यं देहि। कथंभूताय। भवाद्भीताय 'युञ्जते मन उत युञ्जते धियः' इति मन्त्रेण नाधमानाय प्रार्थयमानाय ऋषये देहातिरिक्तात्मप्राप्तिरूपगमनशीलाय 'ऋष गतौ' इति धातुस्मरणात्। सप्तवध्रये ॥ २८ ॥ हि यस्मादस्माकं त्वं पाता रक्षकोस्यतो हे देव, नः दुष्कृतं ज्ञानप्रतिबन्धकं

त्वं हि पाताऽसि नो दत्त परिबाधस्व दुष्कृतम् ॥
कामादीन्यस्य बीजानि जहि रक्षांसि सुक्रतो ॥ २९ ॥
पिबा सोममिति श्रुत्वा यष्टुर्हूतिं शुभं द्रवत् ॥
आयासि पुरुरूप त्वमासु गोषूपपृच्यताम् ॥ ३० ॥
इन्द्रं वोतान्यं न पृथङ् मन्ये मायाभिरिद्भवान् ॥
पुरुरूप इतीक्षे त्वममित्राँ सुषहान्कृधि ॥ ३१ ॥
यज्ञा यज्ञाधीश सर्वे त्वन्मया अपि तेषु नः ॥
जपयज्ञो मतस्तेन सम्रु पूष्णा गमेमहि ॥ ३२ ॥

पापं परिबाधस्व दूरीकुरु निवर्तय । अस्य दुष्कृतस्य बीजानि कामादीन्येव रक्षांसि सर्वभक्षकत्वात् । 'दुष्पूरेणानलेन च' इति 'महाशनो महापाप्मा' इति च स्मृतेः । सुष्ठु क्रतुर्भक्तदुष्कृतनाशकं कर्म यस्य भक्तोद्धरणक्षमसुप्रज्ञो वा तत्संबुद्धौ हे सुक्रतो श्रीदत्त, तानि जहि ॥ २९ ॥ हे इन्द्ररूपिन् दत्त, पिबासोममभीति यष्टुर्हूतिं श्रुत्वा द्रवच्छीघ्रं शुभं यज्ञं हे पुरुहूत पुरुष्टुत, त्वमायासि आसु गोषु सेन्द्रियान्तःकरणेषूपपृच्यतां गोष्वाप्यायतीषु स आप्यायितो भवतीति भावः ॥ ३० ॥ नन्वीदृशः सोमप्रिय इन्द्रस्तमाह्वयेत्यत आह । इन्द्रं देवराजं वाय्वग्न्यादिदैवतं उतापि भवतः पृथङ् न मन्ये । यतो मायाभिः इत् एव पुरूणि बहूनि रूपाणि यस्य स पुरुरूप इतीक्षे । 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतेः स पुरुरूपस्त्वमस्माकममित्रान् कामादिशत्रन् सुषहान्सुखेन सोढुं शक्यान् कृधि कुरु । 'शक्नोतीहैव यः सोढुम्' इति प्रतिपादितफलप्राप्तय इति भावः ॥ ३१ ॥ हे यज्ञाधीश । 'दैवमेवापरे यज्ञम्' इत्याद्या द्वादश यज्ञाः सर्वे त्वन्मया अपि तेषु जपयज्ञो नोऽस्माकं मतः । 'मतिबुद्धि' इति षष्ठी । 'यज्ञानां जपयज्ञोऽस्मि' इति विभूतित्वस्मरणात् इतरेषामनात्मव्यापारजन्यत्वाज्जपस्य

स्तुषे नराप्यं तुष्टः सन्नथो यस्या अयोमुखम् ॥
मायां जित्वा भवान्तां मे विश्वाहा शर्म यच्छतु ॥ ३३ ॥

जुषस्व स्तोममीशैते प्रियासः सन्तु सूरयः ॥
वयं स्तोमप्रियानेन यच्छा नः शर्म दीर्घश्रुत् ॥ ३४ ॥

उग्रो जज्ञे मृत्युरयमदुग्धा इव धेनवः ॥
धियो मेऽनेनेदृगीश न जातो न जनिष्यते ॥ ३५ ॥

मनोव्यापारजन्यत्वेऽपि आत्मस्वरूपज्ञानस्य मनःपरिणामेऽभिव्यक्तिमात्रं नतु तज्जन्यत्वमिति द्रव्यमयाद्विशेषो मतोऽतः श्रेष्ठत्वात् 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः' इति स्मृतेस्तेन जपयज्ञेन पुष्णातीति पूषा जगत्पालकः। उपलक्षणमेतत्सृष्टिस्थितिभङ्गानाम् तेन पूष्णा त्वया तत्पदलक्ष्येण वयं त्वंपदलक्ष्याः संगता अखण्डैकरसा भवामः। उ एवार्थे व्यवहितं छान्दसम् ॥ ३२ ॥ नराप्यं नरैः प्राप्तुं योग्यं नारायणं भगवन्तं प्रसादार्थं स्तुषे स भवान्तुष्टः सन्नथो अनन्तरं यस्या अयोवत्कठिनं मुखं तां मायां जित्वा भवान्विश्वानि च तान्यहानि च विश्वाहा। विभक्तेराकारोऽत्यन्तसंयोगे द्वितीया। मे मह्यं शर्मात्यन्तिकं सुखं यच्छतु ॥ ३३ ॥ हे ईश, स्तोमं जुषस्व सेवय। हे स्तोमप्रिय, मादृशः स्तोतारस्तव प्रियासः प्रियाः सन्तु वयमप्येतेन स्तोमेन तव प्रियासो भवाम इति शेषः। हे दीर्घश्रुत् दूरश्रवण, नोऽस्मभ्यं शर्म यच्छ॥३४॥ उग्रो भयंकरोऽयं प्रमादाख्यो मृत्युर्जज्ञे। अनेन प्रमादमृत्युना मे धियो धेनवो नवसूता अपि गावोऽदुग्धा इव निष्फला जाताः। तर्हि अयं प्रसिद्धमृत्योरप्यधिकः किमित्यत आह। ईदृशोऽन्योऽद्यापि न जातोऽग्रतोऽपि न जनिष्यते। प्रसिद्धमृत्युस्तु देहप्राणवियोगमात्रकरोऽयं तु निरन्तरं जीवनभूतस्यापि विद्यमानस्य तेऽनवधानरूपं वियोगं करोति ॥ ३५ ॥ भगवन्,

प्रब्रह्मैहीदमाकर्ण्योर्वारुकमिव बन्धनात् ॥
मृत्युंजय प्रमादाख्यान्मृत्योर्मुक्षीय माऽमृतात् ॥३६॥
यदद्य वर्ष्म तेनैव पश्येम शरदः शतम् ॥
स्तोत्राय ते हते मृत्यौ जीवेम शरदः शतम् ॥ ३७ ॥
प्रत्युत्तमं महेश त्वां मनामह इहागहि ॥
मृळा सुक्षत्र मृळय मा नो दुःशंस ईशत ॥ ३८ ॥
तिस्रो वाचस्तेऽत्र वरां क ईशानं न याचिषत् ॥
भक्त्या गृणीमस्त्वां स्तोत्रैस्तेभिर्नस्तूयमागहि ॥३९॥
दूराद्विहाय सर्वं त्वामृषयो ये च तुष्टुवुः ॥
मर्ता अमर्त्यस्य ते तद्भूरि नाम मनामहे ॥ ४० ॥

प्रकृष्टस्तोत्रमिदमाकर्ण्य एहि प्रेहीति वा बन्धाद्वृन्तादुर्वारुकमिव प्रमादाख्य-मृत्योः सकाशान्मां मुक्षीय मुञ्चस्व । अमृतान्मोक्षान्मा मुक्षीय मोक्षं देहि । अभ्युदयनिश्रेयसफलद्वयान्मम भ्रंशो मास्तु ॥ ३६ ॥ यदद्य विद्यमानं वर्ष्म शरीरं तेन शतं शरदो वर्षाणि पश्येम । मृत्यौ हते नष्टे सति ते स्तोत्राय त्वां स्तोतुं शतं शरदो जीवेम ॥ ३७ ॥ हे महेश, त्वां प्रत्युत्तमं मनामहे याचामहे । इहाग्रत आगच्छ । हे सुक्षत्र महाबल, अस्मभ्यं मृळय सुखिनः कुरु । दुःशंसो दुर्जनकृतशापप्रयोगादिर्नो मा ईशत मा प्रभवतु ॥३८॥ वेद-रूपास्तव तिस्रो वाचः क्रियाभक्तिज्ञानलक्षणाः अत्र भक्तिलक्षणां वरां त्वां प्रति को न याचिषत् । अतो भक्त्या स्तोत्रैस्त्वां गृणीमः । तेभिः स्तोत्रैस्त्वं तूयं शीघ्रं नोऽस्मभ्यमागह्यागच्छ ॥ ३९ ॥ सर्वं योगाद्युपायं विहाय ये ऋषयस्ते च त्वां तुष्टुवुः तत्तस्मान्मर्ता मरणधर्माणो वयममर्त्यस्य सर्व-संसारधर्मवर्जितस्य ते नाम भूरि प्रभूतं संसारनाशक्षमं मनामहे ॥ ४० ॥

य इन्द्र त्वं यो नमसा स्वध्वरो हीति संस्तुतः ॥
इन्द्रो ब्रह्मेन्द्र ऋषिरित्युप ब्रह्माणि नः शृणु ॥ ४१ ॥
वयमु त्वा वरं देवमस्मभ्यं शर्म सप्रथः ॥
मनामहे पृणन्तं तदभित्वामिन्द्र नोनुमः ॥ ४२ ॥
प्रकृतान्यपि सूक्तानि शृण्वन्तं जातवेदसम् ॥
त्वां गृणन्ति न के त्वं हि येषामिन्द्रो युवा सखा ॥४३॥
त्वावतः पाहि नो मर्त्यान्यत इन्द्र भयामहे ॥
आदिश्य पदभक्ति ते ततो नो अभयं कृधि ॥ ४४ ॥
आ त्वा रथं न तुरगैः स्तोत्रैस्त्वा वर्तयामसि ॥
स त्वं न इन्द्र मृळय यस्य ते स्वादु सख्यमित् ॥४५॥

हे इन्द्र, यस्त्वं नमसा नमस्कारेणैव शोभनोध्वर इति वेदेन स्तुतोऽसीत्यत एवेन्द्रो ब्रह्मा इन्द्र ऋषिः प्रजापरिति नोऽस्माकं ब्रह्माणि तत्पदशोधनार्थे कृतानि स्तोत्राण्युपशृणु समीपमेत्याकर्णय ‘एष ब्रह्मैष इन्द्रः’ इत्यादिश्रुतेः ॥ ४१ ॥ उ पादपूरणे । अस्माकं सप्रथः प्रथनीयं क्षेमदातारं प्रथनं प्रथः विस्तारो जगद्रूपः तेन सहवर्तमानस्तत्संबुद्धिर्वा त्वां देवं वरं मनामहे । हे शूर, तत्त्वा त्वामभि त्वां प्रति नोनुमः आभिमुख्येन त्वां स्तुमः ‘नु स्तुतौ’ ॥ ४२ ॥ प्रकृतान्यपि सूक्तानि शृण्वन्तं जातवेदसं जातप्रज्ञं के न गृणन्ति अपितु गृणन्त्येव । येषां गृणतामीश्वरस्त्वं युवा नित्यतरुणः सखाऽसि ॥ ४३ ॥ तवेमे त्वावन्तस्तान्मर्त्यान्पाहि । हे इन्द्र, यतः संसारात् भयामहे । ते पदभक्तिमादिश्य ततो नोऽभयं यथा तथा कृधि ॥ ४४ ॥ रथं तुरगैर्नाश्वैरिव स्तोत्रैस्त्वाऽऽवर्तयामः उपतिष्ठामहे । स त्वं नोऽस्मभ्यं मृळय सुखय । यस्य ते सख्यं स्वादु इत् एव मुक्तिजनकत्वात् ॥ ४५ ॥

आ प्रबोधं भवोऽबोधः स्वप्नवद्दुःखदोऽशुचिः ॥
पतितान्दुःखितान्नृन्नः पाहि त्वं शृणुधी गिरः ॥४६॥

इन्द्राय साम ते गातुं न क्षमो नाम ते गृणे ॥
बण्महाँऽअसि सूर्य त्वं सत्रादेव महाँऽअसि ॥ ४७ ॥
सोमः पुनानोंतारामो मया त्वं नाधिलक्षितः ॥
ईक्षे तुच्छान्बहिर्भोगान्योषा जारमिव प्रियम् ॥ ४८ ॥
प्रण इन्दोऽपि स्मेरं रूपं ते दर्शयामलम् ॥
नॄन्स्तोतॄन्पाह्यंहसो नो जहि रक्षांसि सुक्रतो ॥ ४९ ॥

हि न्वन्ति द्वैतमस्त्यस्माद्भयं विन्दति मामिह ॥
यदन्ति दूरके यच्च पवमान वि तज्जहि ॥ ५० ॥

**आ प्रबोधं** यद्यपि भवः बोधविरोधी तथापि दुःखदोऽशुचिश्चात्र पतितान् **नॄन्नः** पाहि । नो गिरः शृणुधि ' शृश्रुण्वि ' ति हेर्द्धिः ॥ ४६ ॥ **इन्द्राय साम** ते गातुं न क्षमोऽतस्ते नाम गृणे । हे सूर्य, त्वं बट् सत्यं महानसि हे देव, त्वं सत्रा सत्यं सुव्रति कार्ये प्रेरयति जगदिति सूर्यः । ' राजसूय ' इति निपातः ॥ ४७ ॥ उमा आत्मविद्या तत्सहितः सोमः पुनानोऽन्त-र्हृदय आरामस्त्वं मया नाधिलक्षितोऽतस्तुच्छान् बहिर्भोगान्पारतंत्र्यादि-दूषितान्क्षणविरसानपीक्षे स्वाधीनं पतिं हित्वा योषा प्रियं जारमिव ॥४८॥ इन्दोऽपि स्मेरममलं ते रूपं नोऽस्मभ्यं प्रदर्शय । स्तोतॄन्नॄनंहसो दुरितात्पाहि । हे सुक्रतो शोभनप्रज्ञ, नो रक्षांसि भक्षकान्कामादिराक्षसाञ्जहि ॥ ४९ ॥ हि यस्मादन्ति समीपे द्वैतमस्ति अस्माद्भयं मां विन्दति ' द्वितीयाद्वै भयं भवति ' । हे पवमान, यदन्ति यच्च दूरके तद्भयं नु क्षिप्रं विजहि ॥ ५० ॥ इह सर्वेषां कारकशक्तीनां धर्ता त्वमेक एवातोत्र

धर्ता कारकशक्तीनां सर्वेषां त्वमिहैक इत् ॥
यशोऽत्रेदं पवित्रं ते विततं ब्रह्मणस्पते ॥ ५१ ॥

असर्जि भवता विश्वमनित्यमवशं बृहत् ॥
त्वं संस्मर ज्ञ शरण वत्सं जातं न धेनवः ॥ ५२ ॥

पुरोजितीश भो भूमन्तत्र मामसृतं कृधि ॥
यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ॥ ५३ ॥

अयं स इति विद्वान्त्सन्यमाय घृतवद्धविः॥
कुतो जुहोम्यतोऽदेवा यमाय जुहुता हविः ॥ ५४ ॥

निवर्तध्वमितो देवा भद्रं नो अपि वातय ॥
मनो हरे मां पाह्यार्तं पिता पुत्रमिव प्रियम् ॥ ५५ ॥

लोके इदं यशो विततं हे ब्रह्मणस्पते वेदपालक, ॥ ५१ ॥ भवताऽवशं परतन्त्रं अनित्यं बृहद्विश्वमसर्जि । हे ज्ञ कर्मफलाभिज्ञ, हे शरण भक्तरक्षक, त्वं संस्मर वत्सं जातं धेनवः न । न इवार्थः । वात्सल्यं कुर्विति भावः ॥ ५२ ॥ जितं जयः नपुंसके भावे क्तः । पुरः जितं यस्य स तथा सन् हे भूमन्नीश, यत्र पितृणामानन्दाः देवानां मोदा इन्द्रस्य मुदः ब्राह्मणः प्रमुदश्चासते तत्र मामसृतं कृधि ॥ ५३ ॥ योऽयमात्मा स ईश्वर इति व्यतीहारतोऽखण्डैकरसं विद्वान्सन् यमाय घृतवद्देहरूपं हविः कुतो जुहोमि अपितु नैव । ज्ञानोत्तरमुत्क्रान्त्यभावात् । अतोऽस्मत्तोऽन्ये हे मर्त्याः, यमाय देहरूपं हविर्जुहुताहुतिवत्कल्पयत । 'जायस्व म्रियस्व' इति श्रुतेः ॥५४॥ हे देवाः, इन्द्रियाणि मनश्च इतः विषयसुखान्निवर्तध्वं तुच्छत्वात् । हे हरे संसारदुःखहर, भद्रं नो मनोऽपि वातय । अपिरबाधार्थे वानुवादी । आगमय त्वत्संबन्धिस्तोत्रकरणे प्रेरय । आर्तं अवशिष्टारब्धं मां पुत्रं पितेव पाहि ॥५५॥

प्रमा प्रमाता प्रमेयं त्रिपुटीह न विद्यते ॥
रूपं तेऽविकृतं सत्वं मधुमन्मे परायणम् ॥ ५६ ॥

प्रहोतारोऽत्रैव मनोन्वाहुवामह इत्यतः ॥
गमादि मनसो नास्य यो यज्ञस्य प्रसाधनः ॥ ५७ ॥

ये यज्ञेनार्चन्त्यनेन सर्वे नन्दन्ति ते त्वया ॥
नान्येऽतस्त्वत्प्रिया एव विरूपासो दिवस्परि ॥ ५८ ॥

देवानां नु वशे योऽस्य सुमङ्गलीरियं वधूः ॥
स्नेहेषु त्वच्च्युतो भोगी पतिर्बन्धेषु बध्यते ॥ ५९ ॥

**प्रमा** प्रत्यक्षादिः **प्रमाता** जीवः **प्रमेयं** प्रत्यगितीह त्वद्रूपे **त्रिपुटी न विद्यते**ऽखण्डत्वात् । ईदृक् **ते रूपमविकृतं** सर्वविकाररहितं परानन्दत्वात् । **मधुमन्मे परायणम्** ॥ ५६ ॥ ननु रूपस्येदृक्त्वं कथमित्यत आह । **अत्रै**वाभिचारेण मृतस्य सुबन्धोर्बन्धवः ' मनोन्वाहुवामह ' इत्यादिनोपलभ्यन्तेऽतः **गमादि** सर्वं **मनस** एव । **यो यज्ञस्य** प्रकृष्टसाधनभूतः तस्यास्यात्मनो न **गमादि** । उक्तमाचार्यैः शतश्लोक्याम् । ' नायाति प्रत्यगात्मा० ' 'आसीत्पूर्वं सुबन्धु०' रिति श्लोकद्वयेन ॥ ५७ ॥ **ये**ऽधिकारिणो**ऽनेन** ज्ञान**यज्ञेन** त्वामर्चन्ति **ते सर्वे त्वया**ऽऽत्मना सहैकीभूय **नन्दन्ति** नान्ये बहिर्मुखाः । अतएव **त्वत्प्रिया** ज्ञायिन **एव दिवस्परि** स्वयं प्रकाशरूपे विगतनामरूपभाना भवन्ति ॥५८॥ **यो** बहिर्मुखो **देवाना**मिन्द्रियाणां **वशे** वशवर्ती **अस्येयम**शुचिरूपाऽपि **वधूः सुमङ्गली**र्मता । स **भोगी** अतिस्नेहप्रसङ्गाभ्यां स्त्रीसक्तोऽत एव त्वत्तः सच्चिदानन्दात्मन**श्च्युतो** भ्रष्टः **पति**रहमित्यभिमानी स स्नेहमयेषु **बन्धेषु बध्यते** नास्य मोक्षः । ' दारुलोहमयैः पाशैः पुमान्बद्धो विमुच्यते ॥ नतु स्नेहमयैः पाशैर्बद्धो मोक्षमवाप्नुयात् '–इति गारुडोक्तेः ॥ ५९ ॥ भूतं भव्यं

विहितं सर्वमित्ते त्वमतो ज्यायांश्च पूरुषः ॥
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥६०॥

हये जाये इति वदन्या सालावृकहृत्समा ॥
तन्मयो न स वेदामुमात्मानं तव पूरुष ॥ ६१ ॥

उभा उपाधितोऽत्रैकः पाकेन मनसान्वितः ॥
त्वां यदीक्षेत तं माता रेह्ळि स उ रेह्ळि मातरम् ॥६२॥

तदिदात्मन्हृदि वपुः पश्यन्तस्ते मनीषया ॥
मुनयो वातरशनाः पिशङ्गा वसतेऽमलाः ॥ ६३ ॥

भवत्सर्वं इत् एव ते त्वया पुरुषेणैकदेशे विहितं कृतम्। 'एकांशेन स्थितो जगत्' इति स्मृतेः। अतो विवर्तादब्रह्माण्डरूपात्त्वं ज्यायानधिकः च एवार्थः। विश्वा विश्वानि भूतानि अस्य तव पादः त्रयाणां पादानां समाहारस्त्रिपात् 'पादः पत्' इति पदादेशः। दिवि द्योतनात्मके स्वरूपेऽमृतं मुक्तिः। यद्यपि निरंशेऽनन्ते नांशकल्पना तथापि परप्रसिद्ध्येदमुक्तम्। तथाचाभियुक्तोक्तिः 'निरंशेऽप्यंशमारोप्य कृत्स्नेंऽशे वेति पृच्छतः॥ तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतृहितैषिणी' इति ॥ ६० ॥ या नारी सालावृकहृत्समा। 'न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता' इति पुरूरवसं प्रत्युर्वश्योक्तत्वात्। तां प्रति हये अये जाये इति वदन् तन्मयो यः स स्त्रैणः। हे पूरुष, अमुमपरोक्षं तवात्मानं न वेद ॥ ६१ ॥ तर्हि को वेदेत्यत आह। एकस्याप्युपाधित उभौ भेदौ जाताविव अत्रानयोर्मध्ये एकः गुरूपसत्त्यादिना संजातकषायपरिपाकेन मनसान्वितोऽन्तःकरणे त्वां यद्यभेदेनेक्षेत तं मायोपाधिभूताऽविद्या रेह्ळि त्यजति। स उ मातरं रेह्ळि नान्यः ॥ ६२ ॥ हे आत्मन्, तदित्तदेव ते वपुः सत्त्वप्रधाने हृदि मनीषया पश्यन्तोऽपरोक्षीकुर्वन्तस्ते मुनयः वातरशना दिगम्बराः स्नानादिविध्यती-

त्वं चिन्मयं बुधा रूपं संजानाना उपासते ॥
यो अस्य पारे रजसः स नः पर्षदति द्विषः ॥ ६४ ॥

इषे त्वोर्जे चौदनेन नित्यहोमेऽपि गव्यतः ॥
यजन्त्यहं त्वकामस्त्वां श्रेष्ठतमाय कर्मणे ॥ ६५ ॥

अग्न आयाहीति गातुं त्वाऽक्षमः स्तौमि केवलम् ॥
निषीद मे हृदि यथा निहोता सत्सि बर्हिषि ॥ ६६ ॥

तत्वात्पिशङ्गाः धूलिधूसरा अप्यमला इतरेषां मलनिवर्तका वसते ॥ ६३ ॥ बुधा ज्ञानिनस्त्वं तं चिन्मयं चिदेकरसं रूप्यते वेदान्तैर्निरूप्यत इति रूपस्तं वेदान्तप्रतिपाद्यं त्वां सम्यगभेदेन जानाना उपासते । योऽस्य रजसः उपलक्षणमिदं । तमसश्च पारं विद्यते स आत्मनो द्विषो वैरिणोऽतिपर्षद-तिपारयेत् ॥ ६४ ॥ यजमान इष्यते धान्यादिनिष्पत्तये काङ्क्ष्यत इतीट् वृष्टिः कर्मणि क्विप् । उपलक्षणादन्नाद्यं तस्यै इषेऽन्नाद्यकामायौदनेन ऊर्जयति बलयतीत्यूर्क् तस्मै ऊर्जे सर्पिषा यजन्ति नित्यहोमेऽपि 'पयसा नित्यहोमो यवागुरोदनो दधि सर्पिर्ग्रामकामान्नाद्यकामेन्द्रियकामतेजस्कामानाम्' इत्युक्तेः । अहं तु 'पयसा नित्यहोम' इति नित्यहोमो निर्वर्त्यो, नतु सकाम इति निश्चयेन श्रेष्ठतमाय कर्मणे 'अप्रशस्तं शास्त्रबाह्यं प्रशस्तं स्वीयपोषणम् ॥ श्रेष्ठं सकामं निष्कामं कर्म श्रेष्ठतमं मतम्' इति कार्मठाः । नैष्कर्म्यसिद्धये यजामीति शेषः ॥ ६५ ॥ हे अग्ने तद्रूपेश्वर, आयाह्यागच्छेति साम्ना त्वां गातुमक्षमोऽसमर्थोऽतः केवलं लौकिकवाचा स्तौमि । यथा होता सन्बर्हिषि निषत्सि तथा स्तुतः सन् सत्त्वप्रधाने मे हृदि निषीदेति साम्नः ॥६६॥ तेऽन्तरात्मनः साक्षाद्देवीः प्रकाशशीलाः धीवृत्तय आत्मनि तात्पर्येण प्रवाहो यासां यथा तथा सन्तु भवन्तु । 'यु मिश्रणा-

शं नो देवीः प्रसादात्ते सन्तु धीवृत्तयोऽनिशम् ॥
आत्मप्रवाहाः स्वारस्याच्छंयोरभिस्रवन्तु नः ॥ ६७ ॥

ज्ञातेऽस्मिन्पाशमुक्तिः सकलविदिति तत्स्यादनिर्देश्यमेकं
सूक्ष्मं चातीन्द्रियं सत्तदयमिति गिरा शाब्दनिर्देश्यमेव ॥
वाक्यैस्तत्त्वंविरोधेऽपि सति सुमतिभिः सोऽयमित्यादिवत्तद्-
भागत्यागेन लक्ष्यं वरगुरुकृपया लभ्यमेवयं हि तज्ज्ञैः॥६८

मिश्रणयोः ' इति धातोरमिश्रणं दुःखासंभिन्नं शं सुखं यथा तथा। यद्वा रोगाणां शमनं शंयोर्भयानां यवनं पृथक्करणं चाभिस्रवन्तु भयरोगशमनं कुर्वन्तु। स्वारस्यादात्मप्रवाहभूतास्तथाभूतानामेव निदिध्यासनेन विहितत्वात्ततो विपरीतभावनालयोऽप्यर्थतः सिद्धयेदिति भाव इत्यथर्वणः ॥६७॥ अस्मिन्स्वप्रकाशापरोक्ष आत्मनि ज्ञाते सति सोऽहमित्यखण्डैकरसत्वेन विदिते सति सर्वपाशेभ्यो मुक्तिर्भवति ' ज्ञात्वा देवं मुच्यते सर्वपाशैः ' इति श्रुतेः। सकलवित्सर्वज्ञानं च स्यात्। ' यस्मिन्ज्ञाते सर्वमिदं विज्ञातं भवति ' इति श्रुतेः। तदात्मरूपमेकं सजातीयादिभेदशून्यं सादृश्येन जायमानोपमानप्रमाणाविषयं इन्द्रियाण्यतीतमतीन्द्रियं ' अत्यादयः क्रान्ताद्यर्थे ' इति द्वितीया। ' अशब्दमस्पर्शमरूपम् ' इति श्रुतेः। संनिकर्षषट्कजन्यप्रत्यक्षप्रमाणाविषयं अविषयत्वात् सूक्ष्मम् 'आकाशवत्सर्वगतश्च सूक्ष्म' इति श्रुतेः। अंशांशिभावराहित्याद्धूमादिलिङ्गेन जायमानाग्न्यादिवदनुमानप्रमाणाविषयं ईदृशं प्रमाणत्रयाविषयमपि सत्कालत्रयाबाधम्। तर्हि तत्कथं ज्ञायत इत्यत आह। ' तत्त्वमसि ' ' अयमात्मा ब्रह्म ' इति गिरा वेदवाण्यावान्तरैस्तत्त्वंपदार्थशोधनोपयुक्तैर्वाक्यैः सह शाब्दनिर्देश्यमेव। आप्तवाक्यं शाब्दम्। आप्तो नाम यथार्थवक्ता भ्रमप्रमादरहित ईदृश ईश्वर एव

**इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्ड-मण्डितायां संहितायां वासुदेव्यां प्रथमाष्टके ज्ञानकाण्डे वेदपादस्तुतिर्नाम प्रथमोऽध्यायः ॥ १ ॥**

तस्य वाक्यं वेदः । 'अरेऽस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदः' इत्यादिश्रुतेः । तत्र तत्त्वंपदार्थयोः परोक्षत्वापरोक्षत्वविरोधे सत्यपि सुमति-भिर्लक्षणावाक्यवृत्तिज्ञैः 'सोऽयं देवदत्तः' इतिवद्भागत्यागेन विरुद्धवाच्यां-शत्यागपूर्वकमविरुद्धं लक्ष्यांशग्रहणलक्षणेन लक्ष्यं हि निश्चयेन वर ईश्वर एव गुरुस्तत्कृपया नतु स्वबुद्ध्या । 'नैषा तर्केण मतिरापनेया' । 'यस्य देवे परा भक्तिः' इति श्रुतेः । तज्ज्ञैः श्रवणमननादिज्ञैरैक्यमखण्डैकरसत्वं लभ्यम् ॥ ६८ ॥ ॥ इति श्रीमद्दत्तात्रेयपुराणे टीकायां प्रथमोऽध्यायः ॥ १ ॥ ॥ श्रीदत्तार्पणमस्तु ॥

**इति श्रीदत्तपुराणे वेदपादस्तुत्याख्यः प्रथमाष्टके प्रथमोऽध्यायः ॥ १ । १ ॥**

---

## ॥ अथ विरोधपरिहाराख्यः प्रथमाष्टके द्वितीयोऽध्यायः ॥ १।२ ॥

**अयं देवायनस्त्रीशस्तत्त्वदीपोऽमलोऽस्य भूः ॥**
**साक्षी परः शिवोऽचिन्त्योऽव्यक्तोऽनन्तो जयत्यजः १**

श्रीः ॥ न्यायकाणादमीमांसासांख्यपातञ्जलादितः ॥
विरोधपरिहाराय द्वितीये प्रश्न ईरितः ॥ १ ॥

एवं प्रथमाध्याये वेदपादस्तुतिमुक्त्वा 'श्रेयांसि बहुविघ्नानि' इत्युक्तेर्विघ्नबाहुल्ये मङ्गलबाहुल्यापेक्षितत्वादारब्धस्य पुराणस्य निर्विघ्नतया परिसमाप्तिप्रचयगमनार्थं पुनर्मङ्गलमाह । अयं देवायेति । शाकलशाखाया द्वितीयाध्यायस्य प्रतीकम् । एवमग्रेऽपि प्रत्यध्यायं वेदितव्यम् । अयमपरोक्षः स्वयंप्रकाश आत्मा 'अयमात्मा ब्रह्म' इति श्रुतेः । देवा इन्द्रियाण्यन्तःकरणं च प्रकाशशीलत्वात्तान्ययनं प्राप्तिसाधनं यस्य सः देवायनः । यद्यपि 'नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा' 'न तत्र चक्षुर्गच्छति' इति श्रुतिस्तथापि 'अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम्' इति ब्रह्मप्राप्तिमार्गा उपदिष्टाः । नहि मनआदिविकलोऽश्मतुल्यः परोक्षतया ब्रह्मोपलब्धुं शक्तः । निषेधस्त्वात्मनोऽविषयत्वप्रतिपादकः 'अशब्दमस्पर्शम्' इति श्रुतेः । देवायनत्वं तु यो न विकारतयाऽयस्कान्तवन्मनआदीनि चालयति स ततोऽन्यः प्रत्यगात्मेत्यनुमीयतेऽभ्यासवशात् स्वयमेव सोहमित्यनुभूयते च 'प्रतिबोधविदितं मतम्' इति श्रुतेः । प्राञ्चः 'अनायं न विकारः सन्नयस्कान्तवदेव यः । बुद्ध्यादींश्चालयेत्प्रत्यक्' इति । हस्तामलकः 'यमग्न्युष्णवन्नित्यबोधस्वरूपं मनश्चक्षुरादीन्यबोधात्मकानि । प्रवर्तन्त आश्रित्य निष्कम्पमेकम्' इति । किं जीवः । न । त्रीशः विश्वतै-

**कश्चिद्द्विजवरो दैवात्सर्वसंस्कारसंस्कृतः ॥**
**अधीतवेदवेदाङ्गश्चरिताश्रमसत्क्रियः ॥ २ ॥**

**मातापितृगुरूद्युक्तऋणत्रयविवर्जितः ॥**
**सद्भक्त्योपास्तयोगीन्द्रः प्रायश्चित्त्यस्तकल्मषः ॥ ३ ॥**

जसप्राज्ञानामप्यन्तर्यामित्वेन नियन्ताऽत एव तत्त्वदीपस्तात्त्विकात्मस्वरूपप्रकाशकः । केन प्रकारेणेत्यत आह अमलः रागादिमलनिवर्तकः प्रतिबन्धकपापनिवर्तको वा 'विपापो विरज' इति श्रुतेः । किंरूपः । साक्षी द्रष्टा । साक्षित्वमप्यस्य गौणं यतः परः अतएव निरतिशयानन्दरूपः 'प्रपञ्चोपशमं शान्तं शिवमद्वैतं स आत्मा' इति श्रुतेः अत एवाचिन्त्यः 'अचिन्त्यमव्यक्तमनन्तम्' इति श्रुतेः । अनन्तः देशकालवस्तुपरिच्छेदरहितः श्रीदत्तो जयति ॥ १ ॥ अथ कथासंदर्भमाह—कश्चिदिति । गर्भाधानादिसर्वसंस्कारैः संस्कृतः वेदा ऋगादयः अङ्गानि शिक्षादीनि । एतेन साङ्गो ब्रह्मचर्याश्रम उक्तः । विहिताः कृताः आश्रमसंबन्धिन्यो नित्यनैमित्तिकरूपाः सत्क्रिया येन । सच्छब्दः काम्यनिषिद्धव्यावर्तकः ॥ २ ॥ उद्युक्तस्तत्परः 'त्रिभिरेत्य संधिं यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्' इत्यात्मविद्यायामुपयुक्तत्वात् । अत एवानुशासनं 'मातृदेवो भव पितृदेवो भव आचार्यदेवो भव' इति । वेदाध्ययनयजनप्रजोत्पादनैर्ऋषिदेवपित्रृणमुक्तं तदकरणे ऋणवत्त्वं श्रूयते 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते' इति । एतेन साङ्गो गृहस्थाश्रमः सिद्धः । योगीन्द्रः श्रीदत्तात्रेयगुरुः । कृच्छ्रादिप्रायश्चित्तिभिरस्तं त्यक्तं वाङ्मनःकायजं कल्मषं येन । एतेन वानप्रस्थाश्रम उक्तः ॥ ३ ॥ त्यक्ता विधिवत्प्रैषोच्चारणपूर्वकं सर्वैषणा वित्तपुत्रलोकेच्छा येन । वशी जितेन्द्रियः । चतुःसाधनानि तु नित्यानित्यवस्तुविवेकः १ इहामुत्रार्थफलभोगविरागः २ शमादिषट्कं ३ मुमुक्षुत्वं

विधिवत्कृतसंन्यासस्त्यक्तसर्वैषणो वशी ॥
चतुःसाधनसंपन्नो दैवीसंपत्समन्वितः ॥ ४ ॥
दृढं निरुद्धसत्त्वान्यचित्तवृत्तिर्यतिर्हि सः ॥
एवं सन्नपि नो शान्तिं प्राप्तो नानाश्रुतभ्रमात् ॥ ५ ॥
दृष्ट्वा तं खिन्नहृदयं विषीदन्तं शुचान्वितम् ॥
तत्पुण्येन्दूदयालोकहृष्टानुग्रहसागरः ॥ ६ ॥
सहसाऽऽविरभूच्छ्रीमान्दत्तात्रेयो दिगम्बरः ॥
अवतीर्णोऽत्र यो दीनानुद्धर्तुं भक्तवत्सलः ॥ ७ ॥

४ च । तत्र ब्रह्मैव सत्यं तदन्यन्नामरूपात्मकं मायिकं जगदनित्यं दृष्टत्वा-ज्जन्यत्वाद्विकारित्वाच्च घटवत् इति नित्यानित्यवस्तुविवेकः १ । इह स्रक्-चन्दनवनितादिभोगः । अमुत्र परलोकेऽप्सरःप्रभृतिभोगश्चोभयं पारतन्त्र्या-दिदोषदूषितमनित्यं सोपाधिकं सातिशयं चेति श्ववान्ताशनवत्तत्र वैरस्यमिहामुत्रार्थफलभोगविरागः २ । शमो नाम मनोनिग्रहः । बाह्येन्द्रिय-दमनं दमः । उपरतिः संन्यासः तदसंभवे निष्कामकर्मानुष्ठानं व्यवहारलोपो वा । तितिक्षा नाम—प्रारब्धगतशीतोष्णसुखदुःखादिसहनं । श्रद्धा नाम गुरु-वेदान्तवाक्यविश्वासः । समाधानं नाम श्रवणाद्यनुकूलविषये मनःसमाधिः । एतच्छमादिषट्कं ३ । अविद्याऽध्यासकल्पितदेहेन्द्रियप्राणमनोबुद्ध्यहंकार-रूपबन्धेभ्यो मोक्षो मे भूयादिति तीव्रेच्छा मुमुक्षुत्वं ४ । एवं चतुःसाधन-संपन्नः ॥ ४ ॥ दृढं परवैराग्यपूर्वकं नितरां रुद्धाः सत्त्वान्यचित्तवृत्तयो येन सः यतिर्यतनशीलः एवं सन् वर्तमानोऽपि नानाशास्त्रभ्रमाद्धेतोर्निर्वाणपर-मामात्मसंस्थां शान्तिं न प्राप्तः ॥ ५ ॥ अकृतार्थत्वान्नारदवच्छोकेनान्वितं तं दृष्ट्वा तत्पुण्यरूपचन्द्रोदयालोकेन हृष्टोऽनुग्रहाख्यसागरो यस्य ॥ ६ ॥ सहसा प्रादुर्बभूव ॥ ७ ॥ अनसूयात्र्योस्तप एव संतानाख्यकल्पवृक्षस्तस्य

स्मर्तृगाम्यनसूयात्रितपःसंतानसत्फलः ॥
सर्वाभासकतत्तेजोपिहिताक्षो महामतिः ॥ ८ ॥

यतिस्तस्मै नमश्चक्रे श्रद्धाभक्त्या महात्मने ॥
कस्मै वाङ्मनसातीतरूपायानन्तशक्तये ॥ ९ ॥

पूर्वेषामादिगुरवे सर्वज्ञानस्वरूपिणे ॥
सद्भक्तिज्ञानगम्याय निर्गुणाय गुणात्मने ॥ १० ॥

स तमाश्वास्य योगीन्द्रो दयालुर्भगवान्प्रभुः ॥
प्राह भिक्षो किमर्थं त्वं दुर्मना इव लक्ष्यसे ॥ ११ ॥

सर्वनाशकरत्वात्तन्मद्भक्ते नोपपद्यते ॥
वद तस्मान्ममाग्रे त्वं दौर्मनस्यस्य कारणम् ॥ १२ ॥

श्रुत्वा सहार्दं तद्वाक्यं ज्ञात्वा सर्वगुरुं यतिः ॥
तं प्रत्युवाच तद्भक्तियन्त्रितो नतकन्धरः ॥ १३ ॥

सत्फलरूपः । सर्वेषां सूर्यादीनामपि भासकं यत्तेजस्तेनापिहिताक्षोपि महती उदारा सर्वविषयग्रहणलक्षणा वा मतिर्यस्य । कस्मै ब्रह्मरूपाय । अनन्ता अप्रच्युताः सर्वज्ञत्वादिशक्तयो यस्य ॥ ८ ॥ ९ ॥ पूर्वेषां ब्रह्मादीनां । ज्ञायत आभिरिति ज्ञानानि महावाक्यानि सर्वाणि च तानि ज्ञानानि च स्वरूपं यस्य तस्मै । वस्तुतो निर्गुणोऽपि स्वभक्तेच्छया गुणात्माऽत एवाव्यभिचारिण्या भक्त्या ज्ञानेन च गम्यस्तस्मै ॥ १० ॥ ११ ॥ सर्वेषां विवेकधैर्यादीनां नाशकरत्वाद्दौर्मनस्यं मद्भक्ते त्वयि नोपपद्यते योग्यं न भवति ॥ १२ ॥ सहार्दं सप्रेम । नता नम्रा कन्धरा ग्रीवा यस्य ॥ १३ ॥

विमुक्तो मुच्यतेऽनर्थादिति श्रुत्वा तदीहया ॥
प्रवृत्तस्य ममाज्ञस्य भ्रमदोऽभूच्छ्रुतार्णवः ॥ १४ ॥

प्रमाणानि प्रमेयानि संशयश्च प्रयोजनम् ॥
तथा दृष्टान्तसिद्धान्तावयवास्तर्कनिर्णयौ ॥ १५ ॥

वादो जल्पो वितण्डा च हेत्वाभासाश्छलानि च ॥
जातिनिग्रहस्थानानि पदार्थानक्षपाज्जगौ ॥ १६ ॥

एतेषां तत्त्वज्ञानान्नुः श्रेयोऽकलयरूपकम् ॥
स्वदुःखजन्मप्रवृत्तिदोषमिथ्याविदां क्रमात् ॥ १७ ॥

उत्तरोत्तरनाशे स्यात्तदनन्तरनाशतः ॥
देहिनां मुक्तिरित्येतत्सद्वितीयं प्रदृश्यते ॥ १८ ॥

‘विमुक्तश्च विमुच्यते’ इति श्रुतेर्विमुक्तोऽनर्थात्संसारान्मुच्यत इति श्रुत्वा तदिच्छया वर्तमानस्य मम भ्रान्तिदः शास्त्रसमुद्रः दुःपारत्वात् ॥ १४ ॥ कथमित्यत आह–तावन्न्यायशास्त्रं पुरस्कृत्य प्रमाणादिषोडशपदार्थान् । अक्षपाद्गौतमः । एतेनापूर्णदृक्त्वं सूचितम् ॥ १५ ॥ १६ ॥ एतेषां तत्त्वज्ञानान्नुः पुरुषस्याकलयरूपकं । दुःखाभावरूपं श्रेयो मोक्षः नतु सुखरूपः सुखस्य नित्यत्वाभावात् । स्वजन्मादीनामुत्तरोत्तरनाशे क्रमात्तदनन्तरस्य तत्पूर्वपूर्वस्य दोषादेर्नाशतो देहिनां मोक्षः । स यथा पदार्थतत्त्वज्ञानान्मिथ्याविन्नाशः ततो रागादिदोषनाशः ततोऽधर्मादिप्रवृत्तेर्नाशः ततो देहान्तरसंबन्धरूपजन्मनाशो भोगेनारब्धनाशः अर्थाज्ज्ञानेन च संचितनाश इति एतत्सद्वितीयं ज्ञानैकनिवार्यस्य क्वापि सत्यत्वादर्शनात् ‘नान्यः पन्था अयनाय विद्यते’ इति श्रुतिविरुद्धं दृश्यते ॥ १७ ॥ १८ ॥ अथ काणा-

कणादाम्नायप्रामाण्यं मत्वा धर्मः स वै यतः ॥
नृणामभ्युदयश्रेयःसिद्धिरित्थं प्रविच्य च ॥ १९ ॥
द्रव्याणि गुणकर्माणि सामान्यं च विशेषकः ॥
समवायः पदार्थाः षट् चैतेषां तत्त्वसंविदा ॥ २० ॥
साधर्म्यवैधर्म्याभ्यां च स्वस्वोपाध्यनुशायिनाम् ॥
असज्जानां मुक्तिरिति प्राह सोपि विरुद्धवत् ॥ २१ ॥
आम्नायस्य क्रियार्थत्वाच्छास्त्रदृष्टविरोधतः ॥
पुनस्तथा फलाभावान्नानर्थक्यं च जैमिनिः ॥ २२ ॥

दमतं । कणादवैशेषिकः । आम्नायप्रामाण्यं तर्कानुकूलश्रुतिप्रामाण्यं । अभ्युदय ऐहिकः श्रेय आमुष्मिकं चानयोः सिद्धिः ॥ १९ ॥ द्रव्यादिषट्पदार्थाः चकाराच्चतुर्विधाभावोपि एतेषां सप्तपदार्थानां साधर्म्यवैधर्म्याभ्यां तात्त्विकज्ञानेन॥२०॥ असत्प्रागभावः स एव कारणं तस्माज्जातानां कार्यरूपाणां स्वस्वोपाध्यनुशायिनां प्रतिशरीरं भिन्नानां विभुत्वेन नित्यत्वेन च विद्यमानानां ज्ञानाधिकरणानां जीवानां श्रेय इत्येतत्सोपि वैशेषिकोऽपि विरुद्धवदपसिद्धान्तवत् ‘ सदेव सोम्येदमग्र आसीत् ’ इति श्रुतेरसतोऽभावादुत्पत्त्यसंभवाद्द्वितीयाभावाच्च ॥ २१ ॥ अथ जैमिनिमतं । आम्नायस्य सर्वस्यापि वेदस्य क्रियाप्रतिपादनपरत्वात्कुर्वन्नेवेत्यादिशास्त्रदृष्टविरोधात्सृष्टिप्रलयानङ्गीकारादद्वितीयात्मसाक्षात्कारफलाभावाच्च ‘ सोऽरोदीत् ’ ‘ प्रजापतिरात्मनो वपामुदखिदत् ’ ‘ वायुर्वै क्षेपिष्ठा देवता ’ इत्यादीनां अतदर्थानां अक्रियार्थानामपि चोप्यर्थे । नानर्थक्यं ‘ विधिना त्वेकवाक्यत्वात् ’ ‘ तद्भूतानां क्रियार्थेन समन्वयात् ’ इत्याभ्यां ‘ रजतं न देयं ’ ‘ पशुना यजेत ’ ‘ श्वेतमालभेत ’ इत्यादिक्रियाप्रतिपादकवाक्येन सहान्वयः । विधिप्रत्ययरहितानामपि विधिवाक्याकाङ्क्षितनिन्द्यत्वप्राशस्त्याद्यर्थपूरणेनान्वये कृते

अवादीदतदर्थानां वेदवादरतोऽल्पदृक् ॥
कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ॥ २३ ॥
यावज्जीवं चाग्निहोत्रं जुहोति च दहन्ति च ॥
तं यज्ञपात्रैरित्यादिश्रुतेः सर्वायुषो नृणाम् ॥ २४ ॥
व्याप्तत्वात्कर्मभिर्दोषश्रवणाच्चाप्यकर्मणः ॥
तच्चोदनालक्षणार्थधर्मानुष्ठानतो ध्रुवम् ॥ २५ ॥
अमृतत्वं भवेन्नृणामिति स प्राब्रवीदिह ॥
पुनःपातादिश्रवणाद्भातीदं जन्यमध्रुवम् ॥ २६ ॥

नानर्थक्यं 'स्वाध्यायोऽध्येतव्य' इत्यत्र निरर्थकाध्ययनविध्यनुपपत्तेः क्रियाज्ञानार्थाध्ययनविधिपरिगृहीते सर्वस्यापि वेदस्य नानर्थक्यं 'तत्त्वमसि' इत्यादीनामपि यज्ञाङ्गभूतयजमानस्येश्वराभेदप्रतिपादनस्तुतिरूपनिरूपणेन नानर्थक्यमिति मीमांसकोऽवादीत् ॥ २२ ॥ 'अक्षय्यं ह वा' इत्याद्या वेदोक्ता अर्थवादास्तेषु रतः प्रध्वंसाप्रतियोगिकर्मफलं मन्वानो यज्ञाद्यकरणे दुःखप्रागभावनाशे बन्धो यज्ञादिकरणे च नित्यस्वर्गोत्पत्त्या दुःखोत्पत्त्यभावे तत्प्रागभावपालनरूपाल्पा दृग् यस्य सः । जिजीविषेज्जीवितुमिच्छेत् । 'शतायुर्वै पुरुषः' इति तावाञ्जीवनकालः तदूर्ध्वं जीवेच्चेत् ॥ २३ ॥ यावज्जीवश्रुत्या जीवनपर्यन्तं कर्म कार्यं 'तादृशं मृतमपि तं यज्ञपात्रैर्दहन्ति' इति श्रुतेर्नृणां सर्वायुषः कर्मभिर्व्याप्तत्वात् ॥ २४ ॥ 'वीरहा वा एष देवानां योऽग्निमुत्सादयते' इत्यकर्मणो दोषश्रवणाच्चापूर्वनियमपरिसंख्याविधिलक्षणार्थधर्मानुष्ठानात् ॥ २५ ॥ इह मुक्तिविषये पुनःपातश्रवणादमृतत्वं जन्यमध्रुवं भाति । आदिशब्दात्क्षुत्पिपासादिसंसारश्रवणं ग्राह्यम् । विमतममृतं अध्रुवं जन्यत्वादैहिकवत् । 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुतेः ॥ २६ ॥

उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेस्तथा ॥
अनावृत्तिश्रुतेर्बन्धाभावान्मुक्तस्य चान्यथा ॥ २७ ॥

पुंसोऽप्यपुरुषार्थत्वान्नानात्मत्वं विविच्य च ॥
पञ्चविंशकपुंज्ञानान्मुक्तिर्बन्धो विपर्ययात् ॥ २८ ॥

विरक्तस्यैव तत्सिद्धेर्नतु श्रवणमात्रतः ॥
अनादिवासनादार्ढ्याच्छनैश्चित्तप्रसादनात् ॥ २९ ॥

वैराग्याभ्यासध्यानाद्यैरत्यन्तपुरुषार्थता ॥
आत्मज्ञानात्तत्त्वविदो दुःखात्यन्तनिवर्तनम् ॥ ३० ॥

निवृत्तेऽप्यनुवृत्तिप्रदर्शनान्न तु दृष्टतः ॥
तच्छुद्धिः प्रत्याहिकक्षुत्प्रतीकारवदत्र तु ॥ ३१ ॥

चतुर्णां पुरुषार्थानां मध्ये मोक्षस्योत्कर्षश्रवणात् 'न स पुनरावर्तते' इत्यनावृत्तिश्रवणान्मुक्तस्य बन्धाभावाच्चान्यथा मोक्षं विना ॥ २७ ॥ पुंसोऽपुरुषार्थत्वान्नानात्मत्वं प्रतिशरीरं भिन्नं भिन्नमात्मानं विविच्य 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त' इति क्रमात्पुरुषं विविच्य 'पञ्चभूतान्यहंकारो बुद्धिरव्यक्तं दशेन्द्रियाणि मनः पञ्चविषया एवं चतुर्विंशतितत्त्वापेक्षया पञ्चविंशकपुरुषज्ञानान्मुक्तिर्विपर्ययाद्बन्धः ॥२८॥ विरक्तस्यैव मोक्षसिद्धेरनादिवासनादार्ढ्यान्न वेदान्तश्रवणमात्रेण मुक्तिः वैराग्याद्यैः शनैश्चित्तप्रसादनान्मोक्षः आत्मज्ञानाद्विदुषोत्यन्तदुःखनिवृत्तिः ॥२९॥ न पदार्थशोधनान्न कर्मणा नापि योगेन। दुःखे निवृत्तेऽप्यनुवृत्तिदर्शनान्न दृष्टतः केचित्कालमनुभूतसमाधिसुखान्मोक्षसिद्धिः । अत्र दृष्टान्तः । अहः अहः प्रत्यहः तत्र भवा प्रत्याहिका सा चासौ क्षुत्तस्या अन्नदानरूपप्रतीकारः तेन तुल्यं तद्वत्। अत्र मोक्षविषये तु ॥ ३० ॥ ३१ ॥ योगसमाधिना

न भवेत्पुरुषार्थत्वं तत्प्रतीकारचेष्टनात् ॥
इत्याह सांख्योप्येतन्मे नेष्टं दृष्टविरोधतः ॥ ३२ ॥

पुमर्थशून्यपुंसः स्याद्धर्ममेघसमाधिना ॥
क्लेशकर्मविमुक्तिर्वै तदा ज्ञानं विमुक्तिदम् ॥ ३३ ॥

सर्वावृतिमलास्तस्याकर्मास्य शुक्लकृष्णकम् ॥
इतरेषां तु त्रिविधं तद्विपाको द्वयात्मकः॥ ३४ ॥

क्रियायोगौ तन्निवृत्त्यै तपोजपमुखा क्रिया ॥
संप्रज्ञातेतरौ योगौ धर्मौ चित्तस्य पञ्च च ॥ ३५ ॥

भुवो मूढक्षिप्तविक्षिप्तैकाग्र्यविनिरुद्धकाः ॥
तिस्रो बन्धाय मुक्त्यै द्वे योगिनामीशसेविनाम् ॥३६॥

क्षणं दुःखप्रतीकारेण तत्प्रतीकारचेष्टनाद्दुःखोपशमोपायभूतात्पुनःपुनः समाध्यभ्यासाच्छ्रेयो नेति कपिल आह—'एकमेवाद्वितीयं ब्रह्म' इत्यद्वैतात्मसिद्ध्यभावात् 'एकधैवानुद्रष्टव्यम्' इति दृष्टविरोधात्तदपि न ममेष्टम् ॥३२॥ पतञ्जलिस्तु पुरुषार्थशून्यस्य जीवस्य रसयोगादयसः स्वर्णप्राप्तिवत् 'क्षणमेकं क्रतुशतस्यापि' इति श्रुतेर्धर्मामृतधारवर्षकेण समाधिना क्लेशादिनिवृत्तिः तदपावरणं ज्ञानं मोक्षदं भवेत् ॥ ३३ ॥ सर्वावरणमला अस्तास्त्यक्ता येन तस्य योगिनो नानिष्टं नेष्टं च कर्म इतरेषामत्यागिनामनिष्टमिष्टं मिश्रं च तद्विपाकः सुखदुःखादिद्वन्द्वात्मकः ॥ ३४ ॥ तन्निवृत्त्यै क्रियायोगश्च तत्र तपआद्या क्रिया। संप्रज्ञातासंप्रज्ञातश्च द्वौ योगौ चित्तधर्मौ ॥ ३५ ॥ मूढाद्याः पञ्च चित्तभूमयः तिस्रो बन्धायान्त्ये द्वे मुक्त्यै भवतः ॥ ३६ ॥ अन्त्यभूमिद्वयगतस्य योगिनः वैराग्यक्षान्त्यौ-

शान्तोग्रमूढवृत्त्यूने चित्ते नित्यैकरूपिणः ॥
स्वरूपेऽवस्थितिर्द्रष्टुर्वृत्तिसारूप्यमन्यथा ॥ ३७ ॥
तच्छुद्धिसाम्यं कैवल्यं सत्त्वपुंसोस्तु योगतः ॥
सर्वज्ञानं सर्वजयः प्रकाशावरणक्षयः ॥ ३८ ॥
सिद्धिलाभः कायसंपत्तद्धर्मानभिघातनम् ॥
दोषबीजक्षये योगात्कैवल्यस्यास्य का कथा ॥ ३९ ॥
इति चक्षुःश्रवाः प्राह नेदं दोषश्रुतेर्वरम् ॥
अथातो ब्रह्मजिज्ञासेत्युपक्रम्य यतोऽस्य च ॥ ४० ॥
जन्माद्युपाधेरात्मानौ गुहाविष्टौ प्रदर्श्य च
तदैक्यार्थं शमाद्युक्त्वा तत्सिद्ध्यर्थं क्रियादिकम् ॥४१॥

दार्याद्याः सत्त्ववृत्तयः । कामक्रोधयत्नलोभाद्या राजस्यः । आलस्यभ्रान्तितन्द्राद्यास्तामस्यः । ताभिरूने चित्ते जाते सति नित्यैकरूपिणः स्फटिकवच्छुद्धस्य द्रष्टुः स्वरूपेऽवस्थितिः अन्यथा वृत्तिसारूप्यम् ॥ ३७ ॥ योगात्सत्त्वस्य पुरुषस्य च शुद्धिसाम्यं कैवल्यं मोक्षः तदा सर्वज्ञानं सर्वत्र विजयः प्रकाशावरणक्षयश्च ॥ ३८ ॥ अणिमादिसिद्धिलाभो वज्रसंहननादिलक्षणदेहसंपद्भूतभौतिकधर्मानभिघातश्चैवं दोषबीजक्षये मोक्षस्य का कथा। न काऽपि ॥३९॥ चक्षुःश्रवाः शेषः । 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतेर्नेदं वरम् । अथ सिद्धान्तिमतम् । अथ साधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येत्युपक्रम्य ॥ ४० ॥ 'जगज्जन्मस्थितिभङ्गा यतः' इति तटस्थं ब्रह्मोपलक्ष्याविद्यामायोपाधिनिमित्ततो गुहां प्रविष्टावात्मानौ प्रदर्श्य तयोरात्मनोरैक्यार्थं शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वादिति शमाद्युक्त्वा शमादिसिद्ध्यर्थं 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति बहिरङ्गभूतं क्रियादिकमप्युक्त्वा वैराग्यार्थम्॥४१॥ 'अर्चिरादिना तत्प्रथितेः'

पुनः काम्यक्रिया कर्तुर्विफलं चार्चिरादिना ॥
प्रदर्श्यासकृदावृत्त्या श्रवणादेः परात्मनोः ॥ ४२ ॥
विज्ञानात्पुरुषार्थत्वं पूर्वोत्तरमलक्षयः ॥
इतरस्याप्यसंश्लेषो यावदारब्धमीक्षितुः ॥ ४३ ॥
शब्दादनावृत्तिरिति ब्राह्मणेनोपसंहृतम् ॥
प्रमाणयुक्तितस्त्वेतैः स्वस्वपक्षो दृढीकृतः ॥ ४४ ॥
इतरेऽप्यमृतत्वं च बहुधा दर्शयन्त्यहो ॥
ईशस्याभावमन्यत्वं सर्वज्ञत्वादि केचन ॥ ४५ ॥
केचित्प्रधानप्राधान्यं केचिदीशस्य चोभयोः ॥
अग्रेऽणून्सदसत्केचित्केचिदारम्भवादिनः ॥ ४६ ॥
परिणामपराः केचिद्विवर्तमतयोऽपरे ॥
एवं विप्रतिपत्तौ मे दौर्मनस्यमभूत्प्रभो ॥ ४७ ॥

इत्यादिना काम्यक्रियाकर्तुर्त्रिविधं नश्वरं फलं प्रदर्श्य 'आवृत्तिरसकृदुपदेशात्' इत्यपरोक्षानुभवार्थं श्रवणाद्यावृत्त्या परस्य प्रतीच आत्मनश्च विज्ञानान्मोक्षः पूर्वोत्तरपापक्षय इतरस्य पुण्यस्याप्यसंश्लेषः यावदारब्धं साक्षिभूतस्य ज्ञानिनः ॥४२॥४३॥ 'न स पुनरावर्तते' इति शब्दादनावृत्तिरिति ब्राह्मणेन व्यासेनोपसंहृतम्। अनुकूलश्रौतप्रमाणेन युक्त्या च सर्वैः स्वस्वपक्षो दृढतां नीतः ॥ ४४ ॥ इतरे शून्यवादिनो बौद्धादयश्चानीशताम्। अन्यत्वं कर्मानुसारिफलदातृत्वम् ॥ ४५ ॥ केचित् सांख्यादयः प्रकृतिप्रधानत्वं केचित्पातञ्जलादय ईशप्राधान्यं केचिदुभयोः प्रकृतिपुरुषयोः प्राधान्यं केचिदग्रे कारणभूतानणून् सदसच्च वदन्ति। केचिदीशस्य कर्तृत्वमादायारम्भवादिनः ॥ ४६ ॥ केचिद्विकारित्वमपि स्वीकृत्य परिणामपराः केचिदुभयदोषपरिहाराय विवर्तवादाः ॥ ४७ ॥ ४८ ॥ भिक्षाचर्यं संन्यासस्वीकारः मे

एतेषां कतमः श्रेयाञ्छिवः पन्थाऽभयप्रदः ॥
सुगमो मेऽद्य कृपया संप्रदर्शय सद्गुरो ॥ ४८ ॥
भिक्षाचर्यं मे दयालो यदर्थं तप्तं यत्नात्सत्तपो मे यदर्थम् ॥
दैवादाप्तं प्रार्थये त्वां तदर्थं दुःखाढ्यं वीक्ष्यैहिकामुष्मिकार्थम् ४९
इन्द्रियोत्थं सुखं तुच्छमागमापायिधर्मकम् ॥
कोऽवशं क्षणिकं विद्वानिच्छेदिह परत्र च ॥ ५० ॥

इति श्रीमद्दत्तपुराणे प्रथमाष्टके द्वितीयोऽध्यायः ॥ २ ॥

मयाऽऽप्तं प्राप्तम् । ऐहिकामुष्मिकभोगजातं वीक्ष्य त्वां तदर्थं मोक्षार्थं प्रार्थये ॥ ४९ ॥ आगमापायिधर्मकमुत्पत्तिविनाशवद्विद्वान् ॥ ५० ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां वासुदेव्यां प्रथमाष्टके ज्ञानकाण्डे शास्त्रविरोधदर्शनं नाम द्वितीयोऽध्यायः ॥ श्रीदत्तः प्रसन्नोऽस्तु ॥ छ ॥

इति विरोधपरिहाराख्यः प्रथमाष्टके द्वितीयोऽध्यायः ॥ १।२ ॥

---

## ॥ अथ ज्ञानकाण्डे प्रथमाष्टके
## तृतीयोऽध्यायः ॥ १।३ ॥

ॐ ॥ एता याः सद्गिरः श्रुत्वा श्रीदत्तो भगवान्प्रभुः ॥
दयालुर्दयनीयं तमभिनन्द्याऽऽह सादरम् ॥ १ ॥

सम्यग्व्यवसिता बुद्धिस्तत्त्वजिज्ञासया तव ॥
समीचीनः कृतोऽयं ते प्रश्नोऽतोऽवहितःशृणु ॥ २ ॥

यावन्न जायते साक्षादीश्वरात्समनुग्रहः ॥
सच्छास्त्रं सद्गुरुश्चापि तावल्लभ्यः कुतो नृणाम् ॥ ३ ॥

ईश्वराराधनधिया स्वधर्माचरणात्सताम् ॥
ईशप्रसादस्तद्रूपः सुलभश्चात्र सद्गुरुः ॥ ४ ॥

सद्गुरोः संप्रसादेऽस्य प्रतिबन्धक्षयस्ततः ॥
दुर्भावनातिरस्काराद्विज्ञानं मुक्तिदं क्षणात् ॥ ५ ॥

॥ ॐ श्रीदत्तगुरुभ्यो नमः ॥

शास्त्रवैरं निराकृत्य सिद्धान्तमतमाश्रितः ॥
बन्धमोक्षव्यवस्थादि तृतीये प्राह सद्गुरुः ॥ १ ॥

या एताः प्रश्नरूपाः सद्गिरः श्रुत्वा ता अभिनन्द्य सत्कृत्य सादरमाह अवहितः समाहितः सन् ॥ १ ॥ २ ॥ ३ ॥ इदमीश्वराराधनमिति बुद्ध्या नित्यनैमित्तिकरूपाश्रमोचितधर्माचरणात्सतामभिमानफलाभिसंधिशून्यानां ईश्वरप्रसादस्तद्रूपस्तदभिन्नः सद्गुरुश्च सुलभः ॥४॥ अस्याधिकारिणः प्रतिबन्धकपापक्षयः । ततः श्रवणादिना संशयभावनाऽसंभावना-

तस्मात्त्वमिह धन्योऽसि यतस्ते बुद्धिरीदृशी ॥
अतोऽप्यनपगामीह संप्राप्तोऽस्मि यदृच्छया ॥ ६ ॥

स्वात्मविज्ञानेन मुक्तिर्न पदार्थविवेकतः ॥
ब्रह्मवित्परमाप्नोति पदं तन्नैव कर्मठः ॥ ७ ॥

शोकं तरत्यात्मविन्नो क्षणिकार्कनिवृत्तिमान् ॥
अद्वितीयात्मद्रष्टेहाभयं विन्दन्ति नेतरः ॥ ८ ॥

रसलाभात्परानन्दी भवतीतरथा नतु ॥
कर्तृत्वादिविहीनस्य विभोर्नित्यैकरूपिणः ॥ ९ ॥

जगदारम्भकत्वं नो घटतेऽस्याक्रियस्य हि ॥
परिणामोऽपि न सतो निरंशस्याविकारिणः ॥ १० ॥

विपरीतभावनातिरस्कारात् ॥ ५ ॥ अनपगाम्यनपायी ॥ ६ ॥ न्यायकाणादमतं निषेधति । स्वरूपभूतस्यात्मनो विज्ञानान्मुक्तिः न पदार्थविवेचनात् । 'ब्रह्मविदाप्नोति परम्' इति श्रुतेः ब्रह्मवित्परं पदं प्राप्नोति कर्मठो नैवेति मीमांसामतं प्रत्युक्तम् ॥७॥ आत्मविच्छोकं तरति न क्षणिकदुःखनिवृत्तिमान् । 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः ॥ एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इत्युक्तेरद्वितीयात्मद्रष्टाऽभयं विन्दति नान्यः सांख्यवत् प्रतिशरीरमात्मनो भेददर्शी ॥८॥ 'रसँ ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति वाक्यार्थाखण्डैकरसलाभात् परानन्दी भवतीतरथा योगेन क्षणिकदुःखनिवृत्तिमान्न । कर्तृत्वादिरहितस्य व्यापकस्य निर्बाधस्य ॥९॥ कुलालवज्जगदारम्भकत्वं न घटतेऽक्रियत्वात् अधिष्ठानसमसत्ताककार्यापत्तिरित्युक्तलक्षणः परिणामो निरंशस्य सतो न अविकार्यत्वात् । 'अविकार्योऽयमुच्यते' इति स्मृतेः ॥ १० ॥ द्वितीयाध्याये तृतीयपादे 'रचनानुपपत्ते-

नाणवोऽग्रेऽविद्यमानाः प्रभवो जगदुद्भवे ॥
तेषां सर्वात्मसंयोगे प्रथिमाऽनुपपत्तितः ॥ ११ ॥
नाप्यसत्कर्तृ तस्याग्रेऽप्रामाण्याच्चाप्यसंभवात् ॥
जडं प्रधानमप्येकं न क्षमं जगदुद्भवे ॥ १२ ॥
सृजतीव तदात्मैकः स्वैकांशादूर्णनाभिवत् ॥
लीलाकैवल्यमस्येदं लोकवत्समदर्शिनः ॥ १३ ॥
यथैकस्यापि पुंसोऽन्तः स्वप्नावेशात्क्षणान्तरे ॥
सत्यवद्भाति नानात्वं बोधे सर्वं विलीयते ॥ १४ ॥

श्च नानुमानम्' इत्यारभ्याष्टाधिकरणैरेते पक्षाः प्रत्युक्ताः 'नासदासीत्' इति श्रुतेः सृष्टेः पूर्वमविद्यमाना अणवो जगदुद्भवे न समर्थाः सृष्ट्यन्तःपातिनां तेषामात्मनः संयोगे प्राथिम्नोऽनुपपत्तेरुत्तरकार्ये न प्रभवः ॥११॥ नासदपि कर्तृ छान्दोग्यतोऽप्रामाण्यादसंभवाच्च । एकमसहायं जडं प्रधानमपि जगदुत्पत्तौ न समर्थं । 'ईक्षतेर्नाशब्दम्' इति न्यायात् ॥ १२ ॥ तस्मादात्माऽविकृतस्वैकांशाज्जगत्सृजति । इवशब्देन विवर्तवादः । एकांशोक्त्या मायाया एकदेशत्वम् । 'पादोऽस्य विश्वा भूतानि' इति श्रुतेः । 'विकारावर्ति च तथाहि स्थितिमाह' इति न्यायाच्च । अभिन्ननिमित्तोपादानत्वे ऊर्णनाभिदृष्टान्तः । समदर्शिनो वैषम्यनैर्घृण्यरहितस्येदं सृष्ट्यादिरूपं लीलाकैवल्यम् ॥ १३ ॥ उपाधित एकस्यानेकत्वं सदृष्टान्तमाह । सुप्तेः पूर्वं शयनस्थस्यैकस्यापि पुंसोऽन्तःकण्ठे स्वप्नावेशात्क्षणान्तरेऽपि दिनपक्षादिकालान्वितगिरिनदीमार्गस्थावरजंगमप्राणिरूपनानात्वं स्वेन भासा स्वेन ज्योतिषा भाति तत्सर्वं बोधे स्वस्मिन्नेव लीयते । यदुक्तं 'मृच्छक्तिवद्ब्रह्मशक्तिरनेकाननृतान्सृजेत्' इति ॥ यद्वा जीवगता निद्रा स्वप्नश्चात्र निदर्शनम् ॥ निद्राशक्तिर्यथा जीवे दुर्घटस्वप्नकारिणी ॥

तथात्मनोऽनादिमायावेशादेकस्य चाप्ययम् ॥
मिथ्याभ्रमः प्रबोधेऽयमेकः स्वात्मैव शिष्यते ॥ १५ ॥
भातीदं स्वान्तरादर्शदृश्यवन्मायया बहिः ॥
स्वप्नवज्जातमिव तत्प्रबुद्धः स शिवोऽस्म्यहम् ॥ १६ ॥
एवं श्रद्धाभक्तियुक्तः संशयं यो विभावयेत् ॥
देवसद्गुरुभक्तोऽस्य कुतोऽयं शिष्यते भ्रमः ॥ १७ ॥
अनादिस्वप्नभ्रमोऽयं न स्वयं विनिवर्तते ॥
किंतु स्वदैवयोगाप्तदेवाचार्यप्रसादतः ॥ १८ ॥

ब्रह्मण्येषा स्थिता माया सृष्टिस्थित्यन्तकारिणी ॥ स्वप्ने वियद्गतिं पश्येत्स्वमूर्धच्छेदनं तथा । मुहूर्ते वत्सरौघं च मृतपुत्रादिकं पुनः' इति ॥ १४ ॥ तथैवैकस्यात्मनोऽनादिमायावेशाद्बाह्यो नानारूपो मिथ्याभ्रमो भाति । सद्गुरुकृतबोधेऽपरोक्षसाक्षात्कारे तु स्वात्मैव शिष्यते ॥ १५ ॥ नन्वखण्डे ब्रह्मणि तद्विलक्षणस्य जगतः कथं भानमिति चेदादर्शदृश्यसावकाशवस्तुवदित्याह ॥ इदं नामरूपात्मकं जगत्स्वान्तर्मायया आदर्शदृश्यमाननगरवद्भाति । तदेवाध्यासेन स्वप्नवद्बहिरपि जातमिव दृश्यतेऽधुना स्वप्नोत्थितवत्प्रबुद्धः स एवाद्वैतद्रष्टाहं तद्द्वैतदर्शनराहित्याच्छिवो निरतिशयानन्देन शोभनोऽस्मीति । तथाहि 'निश्छिद्रे दर्पणे भाति वस्तुगर्भं बृहद्वियत् ॥ सच्चिद्घने तथा नाना जगद्गर्भमिदं वियत् ॥' इयं जगत्प्रतीतिः सच्चिदानन्दप्रतीतिपुरःसरमेव । यदुक्तम् ' अदृष्ट्वा दर्पणं नैव तदन्तस्थेक्षणं यथा ॥ अमत्वा सच्चिदानन्दं नामरूपमतिः कुतः ॥ प्रथमं सच्चिदानन्दे भासमानेऽथ तावता ॥ बुद्धिं नियम्य नैवोर्ध्वं धारयेन्नामरूपयोः ॥ एवंच निर्जगद्ब्रह्म सच्चिदानन्दलक्षणम् ' इति ॥ १६ ॥ विभावयेद्ध्यायेत् ॥ १७ ॥ तर्हि स्वप्नान्तवत्स्वयमेव बोधो भवेदिति चेन्नेत्याह 'त्रयः स्वप्नाः' इति श्रुत्या

**श्रुत्या युक्त्यानुभूत्या च यत्सत्यं तद्ब्रवीमि ते ॥**
**आत्मा वा इदमग्रेऽभून्नान्यत्किंचित्कथंचन ॥ १९ ॥**

जाग्रद्भ्रमस्यापि स्वप्नत्वमुक्तं स्वप्नलक्षणोपेतत्वात् विद्यमानं वस्तुतत्त्वं तिरोधाय समुत्पन्नोऽन्यथाप्रतिभासः स्वप्न इति तल्लक्षणाज्जाग्रत्सुप्त्योरपि विद्यमानं ब्रह्मतत्त्वं तिरोधाय समुत्पन्नोऽन्यथाप्रतिभासो जीवत्वलक्षण इति लोकप्रसिद्धस्वप्नस्यैकत्वेऽपि लक्षणप्रसिद्धास्त्रयः स्वप्नाः श्रुत्योक्ताः अतोऽयमनादिस्वप्नभ्रमः स्वयं न निवर्तते । 'श्रवणायापि बहुभिर्यो न लभ्य' इति दैवशब्दहार्दम् ॥ १८ ॥ श्रुत्यनुकूलतर्केणानुभवेन च यत्सत्यं राद्धान्तः तत्ते ब्रवीमि । इदमिदानीं दृश्यं जगत्सृष्टेः पूर्वं आत्मैवासीत् कथंचन किमप्यन्यन्नासीत् । नन्वात्मगोचरौ शब्दप्रत्ययावास्तां लोके मृत्कार्यघटाद्युत्पत्तेः पूर्वं मृदेव न घटादि तथापि मृद्गोचरौ शब्दप्रत्ययौ विद्येते तद्वदत्रापि प्रसक्तौ शब्दप्रत्ययौ वैशब्देन व्यावर्तेते देहाद्यभावाज्जिह्वानिष्पाद्यस्य शब्दस्य मनोनिष्पाद्यप्रत्ययस्य चाभावात् । नन्विदमासीदिति सामानाधिकरण्येन जगद्विशिष्टत्वमात्मनः प्रतिभासते नीलोत्पलमिति सामानाधिकरण्ये उत्पलद्रव्यस्य नीलगुणविशिष्टत्वप्रतिभानात् । मैवम् । विशिष्टे सत्यग्रशब्दवैयर्थ्यप्रसङ्गात् इदानीं जगद्विशिष्ट आत्मा प्रतिभासत इत्यनुपपत्त्या स्थितिकालं परित्यज्य केवलमात्मानं वक्तुमग्रशब्देन सृष्टेः प्राचीनकाल उपादीयते । लोके स्वगतसजातीयविजातीयभेदा दृष्टास्तद्वदत्र प्रसक्तावन्यशब्देन स्वगतभेदो व्यावर्त्यतेऽन्यत्प्रकृतादात्मनः किंचिन्न किं त्वेक एव न वृक्षवन्नानात्मकः । नात्र वृक्षस्य पत्रादिवत्स्वगतभेदः । वैशब्देनात्मान्तरव्यावृत्तिः । योऽयमात्मा स एवैकः नान्यः कश्चित्तादृशः । न किंचिदिति विजतीयभेदो व्यावर्त्यते । अन्यत्प्रकृतादात्मनो विलक्षणं किंचिन्न । एतेनाण्वादयोऽपि निरस्ताः । ईदृशः स यदि तत्रापि जगदनुवर्तेत तदानीं व्यर्थोऽयमग्रशब्द इति चेत्सामानाधिकरण्यं तु बाधायामुपपद्यते यस्त्वदीयश्चोरः

स ईक्षणादिना शुद्धसत्त्वमायामुपाश्रितः ॥
सर्वज्ञत्वादिलक्ष्माऽभून्निमित्तं व्यष्टयधीश्वरः ॥ २० ॥

स स्थाणुरिति बाधदर्शनात्तद्वदत्रापि जगत्त्वेन प्रतिभासते तज्जगन्न किंत्वात्मैव । नन्विदानीं तत्त्वदृष्ट्यापि नेदं जगत्किंत्वात्मेति चेत् बाढं तथापि बुभुत्सोर्मंदस्य जगत्त्वप्रत्ययपदार्थानुभवतिरोधानेन भ्रमो मा भूदिति सृष्टेः प्राचीनकाल उपादीयते ॥ ननु कालस्यापि सृष्टयन्तर्भावात् कालवाचकोऽग्रशब्दो नोपपन्न इति चेत्परप्रसिद्धया परो बोधनीय इति न्यायात्परस्य बुभुत्सोः पूर्वसृष्टिवर्तमानसृष्टयोर्मध्ये प्रलयकालप्रसिद्धेस्तदीयभाषया बोधयितुमग्रशब्द उक्तः । अनेन न्यायेनात्माऽभूदिति शब्दद्वयं परप्रसिद्धया योजनीयम् । अन्यथा पुनरुक्तिपरिहाराय शब्दद्वयाङ्गीकारे सत्ताविशिष्ट आत्मेति ग्रहणेऽखण्डार्थत्वं हीयेत । नन्वत्र विराडात्मशब्देनोच्यते नेश्वरः स ईक्षणादिनेत्युक्तत्वादीक्षणादि शरीरिणो विराजो घटते नाशरीरिण इति चेदग्र 'आत्मा वा' इति निर्धारणादीश्वरोऽत्रात्मशब्दवाच्यो हीक्षणाद्यर्थवादरूपं 'आत्मगृहीतिरितरवदुत्तरात्' इति न्यायात् । सर्वोऽप्यर्थवादश्चेच्छ्रुतेर्विवक्षितार्थः कोऽपि न सिद्ध्येदिति चेज्जीवब्रह्मैक्यस्य विवक्षितत्वादित्यभियुक्तोक्तिः ॥१९॥ इत्यात्मतत्त्वं सूत्रितं तच्चाध्यारोपापवादाभ्यां प्रपञ्च्यते । ईदृशस्य जगद्भावापत्त्यसंभवात् 'इन्द्रो मायाभिः पुरुरूप ईयते' इति मायासहितस्योपादानस्य विवक्षितत्वान्मायाऽङ्गीकार्या । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं' इति श्रुतेः । प्रक्रियतेऽनयेति प्रकृतिरुपादानकारणं विद्याज्जानीयात् । मायिनं तदाश्रयत्वेन तद्वन्तं महेश्वरं विद्यात् । तु शब्दात्तयोः परस्परवैलक्षण्यम् । अङ्गीकृतायामपि तस्यां नान्यसद्भावः शङ्कनीयः । आत्मशक्तित्वेनावस्तुत्वेन च मायायाः पृथग्गणनानर्हत्वात् । नैवावस्तुभूतं चन्द्रबिम्बाद्यपेक्ष्य द्वौ चन्द्रौ वस्तुभूताविति बुद्धिमन्तो व्यवहरन्ति । स आत्मा शुद्धसत्त्वां मायामुपाश्रितः सन् सर्वज्ञत्वादिलक्षणो

उपादानं तामसीं च दधानः पाञ्चभौतिकम् ॥
अयं तत्पदवाच्योऽभूत्परं ब्रह्मात्र लक्ष्यकम् ॥ २१ ॥
धृत्वा मलिनसत्त्वां च जीवोऽज्ञत्वादिलक्षणः ॥
अभूत्त्वंपदवाच्योऽत्र कूटस्थब्रह्म लक्ष्यकम् ॥ २२ ॥
शक्तिः परा स्वतन्त्राऽस्य जगदेवं ततोऽभवत् ॥
विवर्तन्यायत इदमवशं रज्जुसर्पवत् ॥ २३ ॥
अत्र गुप्तैश्वरी शक्तिः सर्ववस्तुनियामिका ॥
अन्योन्यधर्मसांकर्याद्विप्लवोऽस्य न चेद्धि सा ॥ २४ ॥
प्रकृत्यधीनचेष्टस्य जीवस्यापि पुमर्थता ॥
शास्त्रदृष्ट्येन्द्रियार्थोत्थरागद्वेषावशत्वतः ॥ २५ ॥

जगन्निमित्तोऽभूत्स एव व्यष्ट्यधीश्वरः समष्ट्युपाधिकः ॥ २० ॥ तमःप्रधानां मायामुपाधित्वेन स्वीकुर्वाणः पाञ्चभौतिकं जगदुपादानमभूत् । अयं वाक्यस्य तत्पदवाच्यार्थः । सच्चिदानन्दाख्यो लक्ष्यार्थः ॥२१॥ मलिनसत्त्वां कामादिदूषितां मायामुपाधित्वेन स्वीकृत्याज्ञत्वास्मत्प्रत्ययशब्दालम्बनलक्षणो जीवस्त्वंपदवाच्यार्थः । अत्र कूटस्थं प्रत्यग्ब्रह्म लक्ष्यम्॥२२॥ अस्यात्मनोऽस्वतन्त्रा । 'पराऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुतेः । तत ईक्षणादिना शक्तिद्वारा वक्ष्यमाणप्रकारेण जगदभवत् । तदाह 'अधिष्ठानविषमसत्ताककार्यापत्तिर्विवर्तः' इति लक्षणाद्विवर्तन्यायादिदं दृश्यं नामरूपात्मकं परतन्त्रं रज्जुसर्पवत् ॥ २३ ॥ अत्र पृथिव्यादिभूतेषु भौतिकेषु च सर्ववस्तुनियामिकैश्वरी शक्तिर्गुप्ताऽस्ति । कुतः । सा न चेत्तर्हि जगतोऽन्योन्यधर्मसांकर्याद्विप्लवो नाशो भवितुं योग्यः । अतो नियतस्थितिमतां परस्परविरुद्धानामप्यसांकर्यम् ॥ २४ ॥ अत्रायं जीवो न स्वतन्त्रः 'सदृशं चेष्टते स्वस्याः' इति स्मृतेः प्रकृत्यधीनचेष्टत्वात् । तर्हि संसारोऽस्य दुर्वार

प्रपञ्चस्तदभावोऽस्मिन्नध्यारोपापवादतः ॥
प्रपञ्चोपशमे शान्ते शिवेऽद्वैते कथन्न्विमौ ॥ २६ ॥
बन्धमोक्षौ तथा जीवसर्वेश्वरभिदावपि ॥
कोशोपाधिपरित्यागान्न जीवो नापि चेश्वरः ॥ २७ ॥
स्वस्वरूपे परिज्ञाते न बन्धो नापि मोक्षणम् ॥
बन्धमोक्षप्रकारं ते वक्ष्ये संक्षेपतः शृणु ॥ २८ ॥
सच्चित्सुखात्मकोऽप्यात्माऽद्वितीयोऽजोऽजरोऽमरः ॥
स्वाश्रया या स्वविषया स्वमायाऽसौ तया भृशम् ॥ २९ ॥

इत्यत आह । शास्त्रदृष्टयेन्द्रियविषयोत्थरागद्वेषावशत्वेन मुक्तिः । 'इन्द्रियस्येन्द्रियार्थे ' इति स्मृतेः । अनुकूलविषये रागः प्रतिकूलविषये द्वेष इति प्राचीनकर्मसंस्काराधीनत्वं प्रकृतिः । सा विषयस्मरणादिना रागद्वेषावुत्पाद्यानवहितं पुरुषमनर्थे गम्भीरस्रोत इव बलात्प्रवर्तयति, शास्त्रं तु ततः प्रागेव रागादिप्रतिबन्धकेश्वरभजनादौ प्रवर्तयति, गम्भीरस्रोतःपातात्पूर्वमेव नावमाश्रित्य नानर्थं प्राप्नोति ॥२५॥ एतस्मिन्नात्मनि ' अतस्मिंस्तद्बुद्धिः' इत्युक्तलणादध्यारोपात्प्रपञ्चः । ' स एतमेव पुरुषं ब्रह्म ततमपश्यत्' इत्युक्तलक्षणादपवादात्प्रपञ्चाभावः । प्रपञ्चोपशमेऽत एव शान्तेऽद्वैते शिव आत्मनि कथं नु नामेमौ सवितर्यहोरात्राविव बन्धमोक्षौ, अपितु नैव ' जीवेश्वरभेदावपि नैव । जीवोपाधिभूतान्नमयादिकोशपरित्यागान्न जीवः मायोपाधिपरित्यागान्नापीश्वरः ॥२६॥२७॥ तथाच सच्चिदानन्दे स्वरूपे ज्ञाते न बन्धो नापि मोक्षः । तयोः कल्पितत्वात् । तथा गौडपादाः–' न विरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥ न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थता' इति ॥२८॥ अज इति जन्मप्रतिषेधः। अजर इत्यत्रान्तरविकारप्रतिषेधः । अमर इति विनाशप्रतिषेधः । स्वाश्रया स्वविषया च

स्वाभाविकस्वरूपात्स प्रच्युतोऽनात्मतां गतः ॥
देहाद्यनात्मनि प्राप्ताशेषानर्थः सुदुःखितः ॥ ३० ॥
अविद्याकामकर्माद्यैरिष्टप्राप्तिं च साधनैः ॥
काङ्क्षन्नरिष्टनाशं चालभमानोऽमृतं भृशम् ॥ ३१ ॥
आकृष्यमाणो रागाद्यैर्मकराद्यैरिवार्णवे ॥
मोमुह्यमानो मर्त्यादिनानायोनिषु संसरन् ॥ ३२ ॥
कथंचिद्दैवयोगेन लब्ध्वा जन्मोत्तमं यदा ॥
नित्यनैमित्तिकश्रौतकर्मभिः स स्वनुष्ठितैः ॥ ३३ ॥
ईश्वरार्थं व्यपगतरागाद्यन्तर्मलो यतिः ॥
दोषदृष्ट्यैहिकाद्यर्थविरक्तः साधनान्वितः ॥ ३४ ॥
ब्रह्मात्मभावं बुभुत्सुः श्रद्धाभक्त्यैव सद्गुरुम् ॥
उपेत्य विधिवत्तस्माद्वेदान्तश्रवणादिना ॥ ३५ ॥
तत्त्वमस्यादिवाक्यार्थमखण्डैकरसत्वतः ॥
विज्ञाय लक्षणावृत्त्या सोऽहमस्मीत्यभेदतः ॥ ३६ ॥

माया तया ॥२९॥ नित्यतृप्तादिस्वाभाविकस्वरूपात् ! देहाद्यनात्मनि तादात्म्याध्यासेनानात्मतां गतोऽतः प्राप्ताशेषानर्थः । ततोऽविद्यादिभिः सुतरां दुःखितः ॥३०॥ काम्यकर्मादिसाधनैरिष्टप्राप्तिमनिष्टनाशं चाकाङ्क्षन् दुःखनिवर्तकममृतमलभमानः ॥३१॥ रागाद्यैरितस्तत आकृष्यमाणो मर्त्यादियोनिषु संसरन् मोमुह्यमानः ॥३२॥ उत्तमं ज्ञानार्हं ब्राह्मणजन्म लब्ध्वेश्वरप्रीत्यै स्वनुष्ठितैरासक्त्यभिमानवर्जितैर्नित्यैर्नैमित्तिकैः श्रुत्युक्तकर्मभिर्विगतरागादिमनोमलः । यतिः कृतसंन्यासः ॥३३॥३४॥ ब्रह्मात्मभावं बोद्धुमिच्छुः । तस्माद्गुरोः सकाशात् ॥३५॥ सोऽहमात्मेत्यखण्डैकरसत्वेन लक्षणावृत्त्या वाक्यार्थं विज्ञाय शश्वच्छ्रवणादिनाऽपरोक्षीकृत्य ॥ ३६ ॥

प्रतिबन्धक्षयान्ते तु विमुक्तोऽज्ञानबन्धनात् ॥
निवृत्ताज्ञानतत्कार्यो जीवन्मुक्तो भवेद्ध्रुवम् ॥ ३७ ॥
कृतकृत्येन नाप्तव्यं श्रोतव्यं वाऽवशिष्यते ॥
व्यवहारेऽपि तद्दृष्टिः प्राप्ता चेतसा चिदन्वयात् ॥३८॥
चेष्टते यावदारब्धं तद्देहः शुष्कपर्णवत् ॥
परमानन्दपूर्णोऽसौ धर्मकर्मविवर्जितः ॥ ३९ ॥
दक्षो ज्ञोऽप्यन्यदृष्ट्या तु बालोन्मत्तजडोपमः ॥
तिष्ठत्येव स्वरूपे स दिवि भिन्नघटाभ्रवत् ॥ ४० ॥
त्रिधामस्वेक आत्मैवं ज्ञेयः स्मृत्यन्वयाच्छिवः ॥
गुणेशस्तद्व्यतीतस्य पुनर्जन्म न विद्यते ॥ ४१ ॥
आदेहपातमेवं चेत्स्वात्मरूपं न वेत्ति यः ॥
ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४२ ॥

त्रिविधप्रतिबन्धक्षयान्ते । तुशब्दो दैहिकप्रस्तुतप्रतिबन्धे । तद्दर्शनादितिन्यायादिह जन्मनि जन्मान्तरे वाऽज्ञानप्रतिबन्धाद्विमुक्तो मुक्तो भवेत् । यदि हि निवृत्तमज्ञानं तत्कार्यं च यस्य स मुक्तो भवेत् ॥३७॥ अस्य जीवन्मुक्तस्य दृष्टिर्बहिःप्राप्ता चेच्चिदन्वयात् । 'कदाचिद्व्यवहारे तु द्वैतं यद्यपि पश्यति । बोधात्मव्यतिरेकेण न पश्यति चिदन्वयात्' इति वार्तिकोक्तेः ॥ ३८ ॥ वातेन शुष्कपर्णमिवारब्धेन तद्देहश्चेष्टते ॥३९॥ दक्षश्चतुरः । ज्ञो ज्ञानी । दिवि द्योतने स्वरूपे ॥ ४० ॥ त्रिधामसु स्थूलसूक्ष्मकारणेषु यः स्वप्नान्द्राक्षं ततो न किंचिदवेदिषं स इदानीं जागर्मीति स्मृत्यन्वयाज्ज्ञेयः । यतो गुणेशः तत्त्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ ४१ ॥ आदेहपातमित्यत्र कठाः । 'इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः ॥ ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते' इति ॥ ४२ ॥ ज्ञेन ज्ञानिना सदृशोऽज्ञः

नोत्क्रामन्त्यसवो ज्ञस्य सुषुम्णामार्गतो ध्रुवम् ॥
समेति सोऽमृतत्वं हि तस्येन्द्रियमनांसि तु ॥ ४३ ॥
दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमृत्युकान् ॥
ब्रह्मज्येशहरीन्यान्ति नान्येषां मृत्युगामिनाम् ॥ ४४ ॥
कालचक्रमिदं सृष्टं तदर्थमजरं ध्रुवम् ॥
त्रिनेमि द्वादशारं च दांपत्येनार्कपुत्रकाः ॥ ४५ ॥
यत्र सप्तशतानीमे विंशतिश्चास्थिताः खलु ॥
बन्धमोक्षप्रकारोऽयं संक्षेपेणोदितो मया ॥ ४६ ॥
मोक्षो ज्ञानं विना न स्यान्न ज्ञानं सद्गुरुं विना ॥
सद्गुरुं नेशकृपया विना कोपीह विन्दति ॥ ४७ ॥
ईशप्रसादप्राप्त्यर्थं सत्त्वशुद्ध्यर्थमेव च ॥
नित्यनैमित्तिकश्रौतस्वधर्मानुष्ठितिः स्मृता ॥ ४८ ॥

कृतोपास्तिकः क्रममुक्त्यर्हः तत्सादृश्येन यः स्मरणात्तस्य प्राणा नोत्क्रामन्ति। नवद्वारतो निर्गमनमुत्क्रमणं। स उपासकः सुषुम्णया पुनरावृत्तिरहितं ब्रह्मलोकेऽमृतत्वमेति। 'शतं चैका च' इति श्रुतेः। 'न तस्य प्राणा उत्क्रामन्ति' इति सद्योमुक्तिश्रुतिः। 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे' इति ब्रह्मणा सह मुक्तौ। तस्येन्द्रियादीनि ॥ ४३ ॥ वागादीन्यग्न्यादिषु लयं यान्ति। 'गताः कलाः०' इति श्रुतेः ॥ ४४ ॥ तदर्थं कालचक्रं सृष्टं। 'त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः। द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य। आपुत्रा अग्ने मिथुनासो अत्र सप्तशतानि विंशतिश्च तस्थुः' इति श्रुतेः। शीतोष्णपर्जन्यरूपत्रिनेमि द्वादशमासा अरा यस्य अर्कपुत्रा दिनरात्रयः संवत्सराख्यचक्रस्य विंशत्यधिकसप्तशतानि ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

द्विपैकदेशमालम्ब्य यथान्धा द्विपवेदिनः ॥
अन्योन्यं कलहायन्ते शास्त्रौघोऽयं तथाऽल्पदृक् ॥४९॥
विज्ञाय तत्त्वं भवता मदुक्तेर्बुद्ध्वा सदैवोपनिषन्मतं सत् ॥
स्थेयं तदालोचन एव तेन मुक्तिः कृतार्थत्वमिहैव तेऽस्तु ॥५०॥

इति श्रीमद्दत्तपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्यां
ज्ञानकाण्डे प्रथमाष्टके तृतीयोऽध्यायः ॥ ३ ॥

द्विपो हस्ती ॥४९॥ सत् श्रुतियुक्त्यनुभवार्हम् ॥५०॥ इति श्रीमद्दत्तपुराणे सार्धत्रिसाहस्र्यां प्रथमाष्टके ज्ञानकाण्डे टीकायां तृतीयोऽध्यायः ॥३॥

---

## ॥ अथ कर्मेश्वरविप्रतिपत्तिर्नाम प्रथमाष्टके चतुर्थोऽध्यायः ॥ १ ॥ ४ ॥

अयं वाऽऽपीय भगवदुपदेशसुधारसम् ॥
श्रुतिद्वारा नातितृप्तः पप्रच्छ स यतिः पुनः ॥ १ ॥
भगवन्कर्म किं कार्यमुपास्यश्च क ईश्वरः ॥
श्रुता हि बहवोऽत्रेशाः कर्माणि च तथा पुनः ॥ २ ॥
पञ्चविंशतिसंस्काररूपं कर्मोदितं परैः ॥
अमृतत्वायाष्टचत्वारिंशत्संस्काररूपकम् ॥ ३ ॥
व्रततीर्थार्चनजपतपोदानादिरूपकम् ॥
सापेक्षमश्ववद्यज्ञादिश्रुतेरिति केचन ॥ ४ ॥
निर्विघ्नार्थं हरीशाद्या देवा अपि भजन्ति यम् ॥
मर्त्यैः स वक्रतुण्डोर्च्य इति गाणेशसंमतम् ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥

तुर्ये तु कर्मेश्वरविप्रतिपत्तिनिवृत्तये ।
नानामतानुवादोऽत्र क्रियते ह्यनसूयुना ॥ १ ॥

अयं प्रष्टा ॥ १ ॥ २ ॥ 'पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः॥ ते पवित्राश्च योग्याः स्युः' इत्येके । 'यस्यैतेऽष्टाचत्वारिंशत्संस्काराः स ब्राह्मणः सायुज्यं सरूपतां जयति' इत्यपरे ॥ ३ ॥ केचन सिद्धान्तिनः 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति ॥ ४ ॥ ईश्वरविषये निर्विघ्नार्थं गणेशं प्रथमतो निर्दिशति ॥ ५ ॥ 'सर्वं जगदिदं त्वत्तः' इत्यादि-

जगत्स्रष्ट्रादिहेतुः सा वरा श्रुत्युक्तदेवता ॥
गणानां त्वेति मन्त्रेण स्तुता गृत्समदर्षिणा ॥ ६ ॥
इत्युक्तं तत्पुराणेऽतो गणेशो ब्रह्मणस्पतिः ॥
महाकविर्ज्येष्ठराजः श्रूयते मन्त्रकृच्च सः ॥ ७ ॥
मन्त्रं वदत्युक्थ्यमेष प्रनूनं ब्रह्मणस्पतिः ॥
यस्मिन्निन्द्रादयः सर्वे देवा ओकांसि चक्रिरे ॥ ८ ॥
स प्रभुः सर्वतः पाता यो रेवान्यो अमीवहा ॥
अतोऽर्च्योऽसौ यश्चतुरो वसुवित्पुष्टिवर्धनः ॥ ९ ॥
वक्रतुण्डोऽपि सुमुखः साधोगन्तापि चोर्ध्वगः ॥
येऽमुं नार्चन्ति ते विघ्नैः पराभूता भवन्ति हि ॥१०॥
ये दूर्वाङ्कुरलाजाद्यैः पूजयन्ति शिवात्मजम् ॥
ऐहिकामुष्मिकान्भोगान्भुक्त्वा मुक्तिं व्रजन्ति ते ॥११॥
यस्योदयास्तसमये शिवाद्या अपि चाञ्जलिम् ॥
बध्नन्ति विश्वसाक्षी स प्रत्यक्षः श्रूयते रविः ॥ १२ ॥

श्रुतयोऽत्र ॥ ६ ॥ गणेश एव ब्रह्मणस्पतिरिति गणानान्त्वेत्यर्थतः पठति मन्त्रकृत्त्वे ॥ ७ ॥ प्रनूनं ब्रह्मणस्पतिरित्यर्थतः पठति । ओकांसि गृहाणि ॥ ८ ॥ रेवान् द्रव्यदाता अमीवहा रोगघ्नः । 'अम रोगे' इति स्मरणात् । तुरस्त्वरितफलदः .'तुर वेगे' 'इगुपध' इति कः । वसुवित्रिधिज्ञः ॥ ९ स न वक्रतुण्डः 'सुमुखश्च' इति स्मृतेः । वक्रं कुटिलं-तुण्डयति घातयतीति तथा । अधोगन्त्रा मूषकेण सहितोऽपि ऊर्ध्वमुत्कृष्टं ब्रह्म गच्छतीति तथा स्वानन्दवासी ॥ १० ॥ शिवात्मजं शंकरस्य पुत्रं 'विघ्ननाशिने शिवसुताय' इति श्रुतेः ॥ ११ ॥ यस्य सूर्यस्य ।

यदधीना कालगतिर्यदधीनाः क्रियाः समाः ॥
यन्मन्त्रेण द्विजत्वाप्तिर्यन्मन्त्रेण कृतार्थता ॥ १३ ॥
लौकिकाऽपि व्यवहृतिर्यत्प्रसादात्प्रवर्तते ॥
स्मर्यतेऽस्माद्विश्वसृष्टिः सवितुः श्रूयतेऽपि च ॥१४॥
जगतस्तस्थुषश्चात्मा सूर्यस्तं बहुधा जगुः ॥
मूर्तामूर्तं जगत्सर्वं प्राणापानात्मकं श्रुतम् ॥ १५ ॥
प्राणः सूर्योऽपरश्चन्द्रस्तयोः सर्वं प्रतिष्ठितम् ॥
श्रीसूर्यकिरणावेशाच्चन्द्रस्यापि च चन्द्रता ॥ १६ ॥
अतश्चन्द्रो न भिन्नोऽस्मात्स सूर्यः सकलात्मकः ॥
यं विना जगदान्ध्यं हि स देवः कैर्न पूज्यते ॥ १७ ॥
तमोऽमुं ग्रसतीत्येष दृष्टवादो न तात्त्विकः ॥
तस्माद्भक्तेष्टदो देवो वरोकश्चापराजितः ॥ १८ ॥

शिवो गणेशपितापि । वराहः 'यस्योदयास्तसमये सुरमुकुटनिघृष्टचरण-कमलोपि । कुरुतेऽञ्जलिं त्रिनेत्रः' इति ॥१२॥ यन्मंत्रेण सावित्र्या ॥१३॥ व्यवहृतिर्व्यवहारः । अस्मात्सूर्यात् । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति स्मर्यते श्रुत्या ज्ञाप्यते च ॥ १४ ॥ जगतो जंगमस्य तस्थुषः स्थावरस्य च सूर्य आत्मा तं 'इन्द्रं मित्रं वरुणम्' इति श्रुतयो बहुधा जगुः । श्रुतं प्रश्नोपनिषदि ॥ १५ ॥ अपरोऽपानश्चन्द्रः 'सलिलमये शशिनि रवेर्दीधितयो मूर्च्छिताः' इत्यागमात्सूर्यकिरणावेशादाप्यमण्डलस्य चन्द्रत्वम् ॥ १६ ॥ अस्मात्सूर्याच्चन्द्रो न भिन्नः ॥ १७ ॥ 'यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः' इति श्रुतेस्तमोऽमुं ग्रसतीत्येष दृष्टवादः मायाच्छादितात्मवत् न तात्त्विकः ॥ १८ ॥ ईशा शंकरेण वास्यमाच्छादनीयम् । परे ब्रह्मादयोऽ

ईशावास्यमिदं सर्वं चक्षोः सूर्यो अजायत ॥
इति श्रुतिरवाचातो महादेवः परावरः ॥ १९ ॥
अष्टमूर्तेरसौ सूर्यो मूर्तित्वे परिकल्पितः ॥
नेत्रं त्रिलोचनस्यैकमसौ सूर्यस्तदाश्रितः ॥ २० ॥
यस्य भासा सर्वमिदं विभातीति श्रुतेरिमे ॥
तमेव भान्तमीशानमनु भान्ति खगादयः ॥ २१ ॥
ईशानः सर्वविद्यानां भूतानां चेति च श्रुतेः ॥
वेदादीनामप्यधीशः स ब्रह्मा कैर्न पूज्यते ॥ २२ ॥
यस्य संहारकाले तु न किंचिदवशिष्यते ॥
सृष्टिकाले पुनः सर्वं स एकः सृजति प्रभुः ॥ २३ ॥
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ॥
इति श्रुतेर्महादेवः श्रेष्ठोऽर्च्यः सकलार्चितः ॥ २४ ॥
विश्वं भूतं भवद्भव्यं सर्वं रुद्रात्मकं श्रुतम् ॥
मृत्युंजयस्तारकोऽतः स यज्ञस्य प्रसाधनः ॥ २५ ॥

वरे निकृष्टा यस्मात् ॥ १९ ॥ 'मूर्तित्वे परिकल्पितः शशिभृत' इति वराहोक्तेः 'भूरम्भांस्यनलोऽनिलोम्बरमहर्नाथो हिमांशुः पुमानित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम्' इति पूर्वाचार्योक्तेः सोमसूर्याग्निलोचनस्यैकं नेत्रं सूर्यः ॥ २० ॥ खगाः सूर्याद्याः ॥ २१ ॥ 'ईशानः सर्वविद्यानाम्' इति श्रुतेः ॥ २२ ॥ २३ ॥ २४ ॥ 'विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् ॥ सर्वो ह्येष रुद्रः' इति श्रुतं यज्ञस्य प्रकृष्टं साधनं तद्विरुद्धस्य दक्षस्य मखादवगम्यते ॥ २५ ॥ ग्राह्योपेक्ष्यदोषवर्जिता समा दृग्यस्य । विषमाक्षत्वं त्रिनेत्रत्वं । श्मशानक्रीडाद्यशिवसहितोऽपि

विषमाक्षोऽपि समदृक्साशिवोऽपि शिवः स च ॥
वृषसंस्थोऽप्यतिवृषो गुणात्माप्यगुणोऽमलः ॥ २६ ॥
यदाज्ञामुद्वहन्त्यत्र शिरसा सासुराः सुराः ॥
अन्नं वातो वर्ष इतीषवो यस्यास्य विश्वपाः ॥ २७ ॥
भिषक्तमं त्वा भिषजां शृणोमीति श्रुतेरयम् ॥
स्वभक्तसंसारमहारोगहर्ताऽपि शंकरः ॥ २८ ॥
शिवोऽपि शक्तियुक्तश्चेत्प्रभुः कार्याय नान्यथा ॥
स्वमायया विनेशस्य परस्यानुभवात्मनः ॥ २९ ॥
न घटेतार्थसंबन्धस्ततो माया परावरा ॥
यस्याः प्रभावं प्रवक्तुं शिवाद्या अप्यलं बलम् ॥ ३० ॥
वैष्णवीयं महामाया सुरासुरमुनिस्तुता ॥
शय्यां देवमयीं कृत्वा शेतेऽसाविति गीयते ॥ ३१ ॥
सर्वे देवाश्च मुनयो विषमे यां स्तुवन्ति हि ॥
सृष्टिस्थितिविनाशानां हेतुरेका सनातनी ॥ ३२ ॥
विदुषोऽपि हठाच्चेतो महामोहाय यच्छति ॥
अभक्तानां बन्धहेतुर्भक्तानां मुक्तिदा च सा ॥ ३३ ॥

स्मर्तुः शिवः । अतिवृषो विधिनिषेधातीतः । अगुणोऽपि भक्तानुग्रहार्थं गुणात्मा मलनिवर्तकश्च ॥ २६ ॥ 'येषामन्नं वातो वर्षम्' इति रक्षार्थं त्रयो बाणा यस्य ॥ २७ ॥ भिषक्तमं महावैद्यम् । 'शंकरः शंकरस्याङ्घ्रिः शंकरोऽतिसुसेवितः । शंकरं तं यजेन्मर्त्यः स्वस्यासौ शंकरो भवेत् । चर्मास्थियुक्तोऽपि सदाशिवो भवो यैः सेवितस्तैः खलु सेवितोऽभवः' ॥२८॥ क्षमः सृष्ट्यादिकार्यसमर्थः ॥ २९ ॥ क्रियारूपार्थसंबन्धः ॥३०॥ ३१॥३२॥ 'ज्ञानिनामपि चेतांसि' इत्यादि ज्ञेयम् ॥ ३३ ॥ 'या देवी

सर्वेष्वपि हि भूतेषु चेतनेत्युच्यते ततः ॥
स्वात्मारामः शिवोऽप्येतां रत्यर्थमनुधावति ॥ ३४ ॥
माया चतुष्कपर्दाऽसौ युवतिर्नित्यनूतना ॥
सुपेशाश्च घृतास्याऽऽदौ वस्तेऽस्य वयुनान्यपि ॥३५॥
भक्तिः श्रद्धा धृतिर्ह्रीश्रीधीमेधाद्यैश्च सत्सु या ॥
तृष्णाऽलक्ष्म्यार्तिभीनिद्रातन्द्रारूपैरसत्सु च ॥ ३६ ॥
क्षणे क्षणे विमुह्यन्ति वशिनोऽप्यत्र योगिनः ॥
सैषाऽनिर्वचनीयाच्या या ह्यनादिरजा श्रुता ॥ ३७ ॥
विष्णोर्हास्यमसौ माया तदाधारा जडाऽधमा ॥
प्रध्वंसोऽस्या अनादेश्च विष्णोः पदविलोचनात् ॥३८॥
देवानां परमो विष्णुरवमोऽग्निरिति श्रुतेः ॥
अयं विष्णुरजोऽनादिरनन्तो विश्वकारणः ॥ ३९ ॥
सूरयस्तत्पदं श्रेष्ठं सदा पश्यन्ति नेतरे ॥
वीर्याणि तस्य कोऽप्यत्र न वेदोरुक्रमस्य च ॥ ४० ॥

सर्वभूतेषु चेतना ' इति स्मारयति ॥३४॥ ' चतुष्कपर्दा ' इति श्रुतिं प्रमाणयति । कपर्दा उत्कृष्टाः । सुष्ठु पेशो मोहकं रूपं यस्या आदौ घृतवत् मिष्टं मुखं यस्याः अस्य जीवस्य वयुनानि ज्ञानानि वस्ते आच्छादयति ॥ ३५ ॥ ३६ ॥ सत्त्वासत्त्वाभ्यामनिर्वचनीया । ' अजामेकां ' इत्यजत्वं श्रूयते नाविनाशित्वम् ॥३७॥ हासो मोहकारी माया । स आधारोऽधिकरणं यस्याः ' मामेव ये प्रपद्यन्ते' इति स्मृतेः । प्रध्वंसो नाशः ॥ ३८ ॥ ' अग्निर्वै देवानामवमो विष्णुः परमः ' इति श्रुतेः । अस्य जगतः कारणम् ॥ ३९ ॥ सूरयो धीमन्तः । ननु विश्वकारणश्चेत्कार्यं निष्पाद्य कदलीव

प्रागुत्पाद्य विधिं नाभेर्वेदान्दत्त्वा ततो जगत् ॥
उत्पादयत्यसावेव बुद्धिदीपो मुमुक्षुराट् ॥ ४१ ॥
भीत्याप्यधिकृता अस्मा उद्वहन्ति बलिं सुराः ॥
माययाश्नन्त्यन्यदत्तं सम्राज इव भूमिपाः ॥ ४२ ॥
यस्य भ्रूभङ्गमात्रेण त्रिलोकी नश्यति क्षणात् ॥
इच्छामात्रे पुनर्जाते सेश्वरोत्पद्यते च सा ॥ ॥ ४३ ॥
य आत्मभूतशत्रुः स क्रूरो यात्यधोगतिम् ॥
दुरत्ययामपि घ्नन्ति मायां यद्रूपचिन्तकाः ॥ ४४ ॥
अर्वाचीनाः सुराः केऽपि न विदुर्यं तदुद्भवाः ॥
स सर्वज्ञोऽपि चात्मानं कार्त्स्न्यान्नो वेद वेद वा॥४५॥

नश्येदित्यत आह । उरुः विस्तीर्णः क्रमः पादक्षेपो यस्य तस्य वीर्याणि कोपि न वेद । 'अथा को वेद यत आबभूव' 'विष्णोर्नु कं वीर्याणि' इति श्रुतेः ॥ ४० ॥ ततो विधिद्वारा । 'यो ब्रह्माणं विदधाति पूर्वं' इति श्रुतेः ॥ ४१ ॥ अधिकारे स्थापिता अपि यद्भीत्येन्द्राद्याः अस्मै आज्ञापालनरूपं बलिमुद्वहन्ति 'भीषास्माद्वातः पवते' इति श्रुतेः ॥ ४२ ॥ ॥ ४३ ॥ यः कोऽप्यात्मभूतस्य विष्णोः शत्रुः स क्रूरोऽधो याति 'असुर्या नाम ते लोकाः' इति श्रुतेः 'तानहं द्विषतः' इति स्मृतेश्च ॥ ४४ ॥ न विदुः । 'विदो लटो वा' इति झेर्जुसादेशः । श्रुतिश्च 'को अद्धा वेद क इह' इति मन्त्रद्वयरूपा । वेदेति चेदानन्त्यभङ्गः । न वेदेति चेत् सार्वज्ञ्यभङ्गः । 'स वेत्ति वेद्यं न तु तस्यास्ति वेत्ता' इति श्रुतेर्वेद्यं परिच्छिन्नं हीतरत् ईश्वरधाम्नो भूम्नोऽपरिच्छिन्नत्वात्स्वयं स्वात्मानं कथं जानीयात् । नहि शशविषाणाज्ञानं सार्वज्ञ्यवैभवं हन्ति यथा सर्वस्य दाहकोऽप्यग्निः स्वात्मानं दग्धुं न शक्नोति तथा सर्वज्ञोऽप्यात्माऽऽत्मानं कार्त्स्न्यान्न

यस्यैकपादियं माया त्रिपादस्यामृतं दिवि ॥
स देवदेवदेवेशः कथं नार्च्यस्त्रिविक्रमः ॥ ४६ ॥
इतरेऽप्यग्निवाय्विन्द्रमुखान्देवान्वदन्ति हि ॥
श्रौतीकुर्वन्ति ते स्वस्वपक्षं सर्वेऽपि यत्नतः ॥ ४७ ॥
विराडादिस्थावरान्ता ईश्वरा बहवः श्रुताः ॥
एतेषु कतमोऽर्च्योऽत्र मोक्षसिद्धिप्रदश्च कः ॥ ४८ ॥
प्रतिमापट्टयन्त्रेषु जलाग्न्यादिषु वा पुनः ॥
एतेषु कथमीशानो देवः सांनिध्यमृच्छति ॥ ४९ ॥
एह्येहीत्यस्य चाह्वानं गच्छेति च विसर्जनम् ॥
प्रतिमादौ स भगवान्कथमायाति गच्छति ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां ज्ञानकाण्डे प्रथमाष्टके कर्मेश्वर-विप्रतिपत्तिर्नाम चतुर्थोऽध्यायः ॥ ४ ॥

वेद आनन्त्यात् ॥ ४५ ॥ इयं ब्रह्माण्डरूपा । देवा इन्द्रियाणि तेषां देवा अग्न्यादयः तेषां देवो हिरण्यगर्भस्तस्येशः । त्रयो विक्रमा यस्य 'त्रीणि पदा विचक्रमे' इति श्रुतेः ॥ ४६ ॥ इतरे कर्मठाः 'अग्निर्मूर्धा दिवः' 'वायुर्वै गौतम तत्सूत्रं' 'इन्द्रो यातोऽवसितस्य राजा' इत्यादिभिः स्व-स्वपक्षान्श्रौतीकुर्वन्ति ॥ ४७ ॥ 'सन्त्यश्वत्थार्कवंशादेः कुलदैवतदर्शनात्' इति स्थावरान्ताः ॥ ४८ ॥ ४९ ॥ ५० ॥ इति श्रीमद्दत्तपुराणे सा० त्रि०वा० ज्ञानकाण्डे प्रथमाष्टके कर्मेश्वरप्रतिपत्तिर्नाम चतुर्थोऽध्यायः ॥४॥

इति श्रीदत्तपुराणे कर्मेश्वरविप्रतिपत्तिर्नाम प्रथमाष्टके चतुर्थोऽध्यायः ॥ १ । ४ ॥

---

## ॥ अथेश्वरोपासनाख्यः प्रथमाष्टके पञ्चमोऽध्यायः ॥ १ । ५ ॥

प्रमन्महेऽनुगृह्णातु भवानित्यर्थितः प्रभुः ॥
प्रत्युवाचाप्यशेषज्ञ आत्मतत्त्वप्रसिद्धये ॥ १ ॥
यथा कालत्रये नास्ति गुणे सर्पस्तथाप्यहेः ॥
गुण एवास्त्यधिष्ठानं तथाऽहं जगतः खलु ॥ २ ॥
रूपं रूपं बभूवायं प्रतिरूपः स्वमायया ॥
उपमासूर्यकेत्यादि यं सूत्रकृदवर्णयत् ॥ ३ ॥
एकं सद्विप्रा बहुधा वदन्तीति श्रुतिः पुनः ॥
इन्द्रो मायाभिः पुरुरूपश्चेति प्राह सोऽस्म्यहम् ॥ ४ ॥
सृष्ट्वोर्णनाभिवदिदं तदनुप्रविशाम्यहम् ॥
स एव मायया भ्रान्तो जीवः संसरतीह हि ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥

॥ उवाच पञ्चमाध्याये कर्मतत्त्वं श्रुतीरितम ॥
ईश्वरोपासनं चापि सद्गुरुर्मोक्षसिद्धये ॥ १ ॥

प्रमन्महे याचामहे । अपिशब्दान्नोपेक्षितवान् ॥ १ ॥ गुणे रज्जौ । निरधिष्ठानो न भ्रमः क्वचिदीक्ष्यते ॥ २ ॥ रूपं रूपं स्वमायया प्रतिरूपो बभूव । 'अत एव चोपमा सूर्यकादिवत्' इति सूत्रम् ॥ ३ ॥ 'एकं सद्विप्रा बहुधा वदन्ति' 'इन्द्रो मायाभिः पुरुरूप ईयते' इतिश्रुत्युक्तः स एवाहम् ॥ ४ ॥ तर्हि त्वत्तो जीवो भिन्नः । नेत्याह । 'यथोर्णनाभिः सृजते गृह्णते च' इति श्रुतेरभिन्ननिमित्तोपादानोऽहं इदं सृष्ट्वानुप्रविशामि । ननु न युक्तमिदं तवासंसारिणः सर्व-

तत्संसारार्तिनाशार्थं धर्मसेतून्बिभर्म्यहम् ॥
भूतेश्वरोऽव्ययात्मापि निर्मलोऽजोपि सन्नहम् ॥ ६ ॥

धर्मग्लान्योदितेऽधर्मे तन्निवृत्त्यै सतामपि ॥
गुप्त्यै स्वप्रकृतिं स्थित्वा संभवाम्यात्ममायया ॥ ७ ॥

ज्ञस्य बुद्धिपूर्वकमनेकशतसहस्रानर्थाश्रयं देहमनुप्रविश्य दुःखमनुभविष्यामीति संकल्पनं स्वातन्त्र्ये सत्यनुप्रवेशश्चेति । सत्यमेव न युक्तं स्यात् । स्वेनाविकृतेन रूपेणानुप्रविशेयं दुःखमनुभवेयमिति च । नह्येवं संकल्पः । तर्ह्यनुप्रवेशस्य का गतिरिति चेज्जीवो ह्यात्माभासमात्रं, बुद्ध्यादिमात्रसंसर्गजनित आदर्श इव प्रविष्टः पुरुषप्रतिबिम्बोऽचिन्त्योऽनन्तशक्तिमतो मम बुद्ध्यादिसंबन्धश्चेतनावभासो मत्स्वरूपविवेकाग्रहणनिमित्तः सुखी दुःखी मूढ इत्याद्यनेकविकल्पप्रत्ययहेतुश्छायामात्रेण जीवरूपेणानुप्रविष्टत्वात्स्वत आत्मनो मम दैहिकैः सुखदुःखादिभिर्न संबन्धः । यथा पुरुषास्यादय आदर्शोदकादि छायामात्रेणानुप्रविष्टा आदर्शोदकादिदोषैर्न संबध्यन्ते तद्वद्देहमपि। ‘सूर्यो यथा सर्वलोकस्य चक्षुः’ ‘ध्यायतीव लेलायतीव’ इति श्रुतेः । ननु वाचारम्भणमात्रश्चेज्जीवो मृषैव प्राप्तः न चेत् परलोकेहलोकादि कथं तस्य । नैष दोषः । सदात्मना सत्त्वाभ्युपगमात्सर्वं च नामरूपादि सदात्मना इव सत्यं विकारजातम्, त्वत्तस्त्वनृतमेव ‘वाचारम्भणम्’ इति श्रुतेः तथा जीवोपीति । यक्षानुरूपो हि बलिरिति न्यायः प्रसिद्धः । अतः शब्दात्मनः सर्वव्यवहाराणां विकाराणां च सत्यत्वं सतोऽन्यत्वे चानृतत्वमिति न कश्चिद्दोषस्तार्किकैरिहानुवक्तुं शक्यः । यथेतरेतरविरुद्धद्वैतवादाः स्वबुद्धिकल्पनामात्राः अतत्त्वानिष्ठा इति शक्यं वक्तुम् । एवं स्वकल्पितमायाभ्रान्तः स एवेह संसरति ॥ ५ ॥ ६ ॥ तन्निवृत्यै अधर्मनिवृत्तये । सतां साधूनां गुप्त्यै च प्रकृतिं वशीकृत्य ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नः

विरजो विशदोऽशोको विशुद्धः सर्वकारणः ॥
अव्यक्तोऽहमचिन्त्योऽहमनन्तोऽहं शिवोऽमलः ॥८॥

आदिमध्यान्तहीनोऽहं विभुः साक्षी तमःपरः॥
परमात्माहमेवेयं माया ब्रह्मादयोऽमराः ॥ ९ ॥

भूतं भव्यं भवच्चापि मत्तोऽन्यन्नेह किंचन ॥
पूज्योऽस्म्युत्तमदेहस्थः पूजकोऽधमदेहगः ॥ १० ॥

कार्यकारणतापूज्यपूजकत्वादि मायया ॥
मयीदं तात्त्विकं नैव केवलानुभवात्मनि ॥ ११ ॥

निर्मलोऽजोऽप्यसङ्गोऽयं मायया परिमोहितः ॥
स्वयंप्रकाशो भूमाऽपि देहाद्यास्थाय तन्मयः ॥ १२ ॥

सन् नित्यशुद्धंबुद्धमुक्तस्वभावोपि सन् त्रिगुणात्मिकया मायया देहवानिव जात इव च संभवामि ॥७॥ विरजस्त्वाद्विशदः प्रकाशशीलः । किं देवः। न । विशोकः देवास्त्वनात्मवित्त्वेन शोकभाजः । विशुद्धोऽपापविद्धः ॥८॥ ‘आदित्यवर्णं तमसः परस्तात्’ इति श्रुतेस्तमःसाक्षित्वेनावस्थितः । इयं माया ‘ब्रह्मादयश्च न मत्तः पृथक्’ इत्याग्रिमेणान्वेति ॥ ९ ॥ नन्वेकत्वे कथं भेदः प्रतीयत इत्यत आह–पूज्य इति ॥ १० ॥ अयं भेद उपाधिनिबन्धन इति भावः ॥ ११ ॥ बहोर्भाव इति विग्रहेण ‘पृथ्वादिभ्य’ इतीमनिच्प्रत्यये कृते ‘बहोर्लोपो भू च बहोः’ इति सूत्रेण बहोः परस्येमनिच्प्रत्ययस्यादेरिकारस्य लोपः स्याद्बहोः स्थाने च भूरादेशः स्यादित्युक्ते भूमन्निति निष्पन्नं तस्य भावार्थकेमनिच अध्यासेन देहाद्यास्थाय तन्मयः स्यात् ॥ १२ ॥ स्वज्ञानावरण-

स्वात्मन्यनात्मधर्मान्स्वज्ञानावृत्त्या वहत्यतः ॥
कर्तृत्वादि बिभर्तीच्छत्यत्र भोगान्परत्र च ॥ १३ ॥
जागरे परितृप्तोऽयं स्वप्नं तद्वासनार्दितः ॥
स्वापे तमोऽभिभूतश्च प्रलये वासनामयः ॥ १४ ॥
कदाचिद्दैवयोगेन व्यतिरिक्तं पुरत्रयात् ॥
अखण्डं सच्चिदानन्दमात्मानं तमसः परम् ॥ १५ ॥
अहंकारादिदेहान्तसाक्षिणं संस्मरत्ययम् ॥
परित्यक्ताखिलानर्थो भूमा स्वस्थो भवेत्ततः ॥ १६ ॥
एवं मायावशादेतौ बन्धमोक्षावतात्त्विकौ ॥
बन्धोऽपि कल्पितो बद्धदशायां भाति सत्यवत् ॥ १७ ॥
विज्ञानेनैव तन्नाशश्चित्तस्थैर्याच्च तद्भवेत् ॥
तदप्युपासनायोगात्सोऽपि सत्कर्मभिर्भवेत् ॥ १८ ॥
कर्मावश्यकमत्रैव ग्राह्यं काम्यादि नैव च ॥
पुनःपातश्रुतेश्चित्तशुद्ध्यभावाच्च नेतरत् ॥ १९ ॥
होमावुभौ पार्वणेष्टी पञ्चयज्ञा यथाविधि ॥
चातुर्मास्यं चाग्रयणं दैवं पित्र्यं च कर्म यत् ॥ २० ॥

भूताविद्यया देहाद्यनात्मधर्मानात्मनि वहति । अतः कर्तृत्वादि बिभर्ति ॥ १३ ॥ १४ ॥ पुरत्रयाद्देहत्रयात् । अखण्डं देशाद्यनवच्छिन्नम् ॥१५॥ परित्यक्ता अखिलानर्थाः कर्तृत्वादयो येन । भूमा आविर्भूताखण्डस्वरूपः ॥ १६ ॥ अतात्त्विकौ मिथ्याभूतौ ॥ १७ ॥ १८ ॥ १९ ॥ उभौ सायंप्रातः ॥ २० ॥ २१ ॥ ग्राम्यधर्मत्यागादि स्वव्रताचरणम् नियमा-

पोष्याणां पोषणं जातेष्ट्यादि नैमित्तिकं तथा ॥
स्नानसंध्यावन्दनाद्य आचरेत् गृहवान्द्विजः ॥ २१ ॥

स्वव्रताचरणागन्तुसाधनं च वनी पुनः ॥
वर्णी तु गुर्वग्निसेवावेदाभ्यासादिकं स्वकम् ॥ २२ ॥

शौचं भिक्षां जपं दण्डी नित्यमेकान्तसेवनम् ॥
पातिव्रत्यं चिरण्टी तु भर्तृचित्तानुसारिणी ॥ २३ ॥

विधवा पालयेच्छीलं ब्रह्मचर्यं व्यवस्थिता ॥
सर्वाश्रमाधिकारस्य ब्राह्मणस्य शमादिकम् ॥ २४ ॥

त्र्याश्रमाधिकृतस्योक्तं शौर्यादि क्षत्रियस्य च ॥
कृष्यादि द्व्याश्रमविशः कर्मान्यस्य तु सेवनम् ॥२५॥

कार्यं वर्णैः स्वकर्मैवं स्ववर्णाश्रमचोदितम् ॥
केवलं सत्त्वशुद्ध्यर्थमीशप्रीत्यै महाव्रतैः ॥ २६ ॥

यस्याग्निहोत्रादि लुप्तं विधिहीनमथापि वा ॥
आसप्तमांस्तस्य लोकान्हिनस्तीतीरितं यतः ॥ २७ ॥

द्यागन्तुकम् । वर्णी ब्रह्मचारी ॥२२॥ दण्डी भिक्षुः । चिरंटी सुवासिनी ॥ २३ ॥ शीलं सद्वृत्तं । सर्वे चत्वारः । 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् ॥ बाहुजातोरुजातानामयं धर्मो न विद्यते' इत्युक्तेः ॥२४॥ अन्यस्य शूद्रस्य त्रैवर्णिकसेवा ॥ २५ ॥ चोदनालक्षणेन धर्मेणेति यावत् । केवलमीशप्रीतिद्वारा सत्त्वशुद्ध्यर्थं कर्मानुष्ठानमित्यवगम्यते ॥२६॥ अकरणे दोषदर्शनार्थं श्रुतिमर्थतः पठति ॥ २७ ॥ वैगुण्यमङ्गवैकल्यम् । लोपः

कर्मवैगुण्यादिदोषे लोपादौ विधिवच्च तत् ॥
प्रायश्चित्तं चरेद्विद्वान्यथावन्नान्यथा शुचिः ॥ २८ ॥
प्रायो विनष्टिः संधानं चित्तिर्विध्यपराधके ॥
प्रोक्ता विनष्टिसंधानं प्रायश्चित्तिरितीह हि ॥ २९ ॥
कर्मप्लवो दृढो यस्तन्मन्यते श्रेय उत्तमः ॥
पर्येति स पुनर्मृत्युमित्युक्तिं संस्मरेद्बुधः ॥ ३० ॥
अग्निहोत्रादि हृच्छुद्धिद्वारा मुक्त्यै प्रचोदितम् ॥
शमादीन्साधयेद्विद्वांस्तदनुष्ठानपूर्वकम् ॥ ३१ ॥
साधनावधि तत्कार्यमुपात्तपरसाधनः ॥
ततः संन्यस्य शमवान्भवेन्नैष्कर्म्यसिद्धिभाक् ॥ ३२ ॥

कर्मानाचरणम् ॥ २८ ॥ 'प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः ॥ अपश्चात्तापिनः पापा निरयान्यान्ति दारुणान्' इत्युक्तेः प्रायश्चित्तं कार्यं तदाह । प्रायो नाम नाशः । चित्तिर्नाम संधानं 'विध्यपराधे प्रायश्चित्तिः' इति सूत्रात् 'प्रायस्य चित्तिचित्तयोः' इतीदन्तत्वमपि ॥२९॥ 'प्लवा ह्येते' इति श्रुतिं कर्मभराक्रान्तचित्तानां बोधार्थमर्थतः पठति । प्लवते कर्मफलेन सह कुण्डनाशे दधिवत् ॥ ३० ॥ 'तमेतं वेदानुवचनेन' इत्यर्थतः पठति । कर्मनिष्ठा ज्ञाननिष्ठेति द्वाभ्यामेकैव कर्मनिष्ठोच्यते गुणप्रधानभूतयोस्तयोः स्वातन्त्र्यानुपपत्तेः एकस्या एवाधिकारिभेदेन प्रकारभेदः । आरुरुक्षूणां चित्तशुद्धिद्वारा शमादिप्राप्तिपूर्वकं तदारोहार्थं तदुपायभूतकर्मनिष्ठा अग्निहोत्रादिति न्यायात् 'आरुरुक्षोर्मुनेर्योगम्' इति स्मृतेश्च शुद्धान्तःकरणानां ज्ञानभूमिकारूढानां शमादिसहितज्ञाननिष्ठा । 'शान्तो दान्त' इति श्रुतेः । शमदमाद्युपेतः स्यादिति न्यायात् 'योगारूढस्य तस्यैव' इति स्मृतेश्च । एवं चित्तशुद्ध्यशुद्धिरूपावस्थाभेदेन कर्मनिष्ठाज्ञाननिष्ठेति द्वैविध्यम्

उपात्तसाधनो भवत्या समासादितशुद्धधीः ॥
देवो भूत्वा यजेद्देवं प्रत्यग्ज्योतिपरास्थितम् ॥ ३३ ॥
सकामाय गणेशाद्याः पृथग्दृष्ट्या च भाविताः ॥
ददात्यशाश्वतान्कामान्संसरन्तः क्षुदादिना ॥ ३४ ॥
अर्चकस्य तपोयोगादर्चनस्यातिशायनात् ॥
आभिरूप्याच्च बिम्बानां सान्निध्यं कल्पयन्ति ते ॥३५॥
मच्चिदंशयुतास्ते तु फलदाः स्वाधिकारतः ॥
त आयान्ति परिच्छिन्ना गच्छन्ति च तथा पुनः ॥३६॥
गतिस्थित्यासनस्वप्नवर्जितोऽहं न तादृशः ॥
आत्माऽजः सर्वसंसारधर्मकर्मविवर्जितः ॥ ३७ ॥

॥३१॥ अतः सम्यक्चित्तशुद्धया ज्ञानोत्पत्तये शमादिसाधनावधि स्वाश्रमोचितं कर्म कार्यं। तत्पूर्वं त्यागे चित्तशुद्ध्यभावेन न ज्ञानोत्पत्तिः। उपात्तानि पराण्यन्तरङ्गभूतानि साधनानि येन स ततः परं 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति 'न कर्मणा' इति च श्रुतेः शमवान् तानि कर्माणि संन्यस्य नैष्कर्म्यसिद्धिभाग्भवेत्। न चित्तशुद्धिं विना कृताज्ज्ञानशून्यात्संन्यासान्मोक्षसिद्धिः। स्मृतिश्च 'नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति' इति। 'सर्वकर्माणि मनसा' इत्यादिना सर्वकर्मनिवृत्तिलक्षणा पारमहंस्या परिचर्या ॥ ३२ ॥ एवंभूतस्य परमहंसस्य ध्याननिष्ठया ब्रह्मभावप्रकारमाह। गृहीतसाधनोऽत एव शुद्धमतिः दैवीसंपत्त्या देवो भूत्वा प्रत्यग्ज्योतिरास्थितं मां ध्यायेत् ॥३३॥ 'ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतन्' इति क्षुदादिधर्मैः संसरन्तो नियतकार्येषु नियमेन प्रवर्तन्ते ॥ ३४ ॥ बिम्बानां प्रतिमानाम् ॥३५॥ तेषामीदृक् सामर्थ्यं मच्चिदंशात्। आह्वानादि तु मन्त्रप्रभावात्

प्रपञ्चोपशमः शान्तः शिवोऽद्वैतोऽजरोऽमरः ॥
सर्वं संन्यस्य निःसङ्गैरुपास्योऽहं महार्थदः ॥ ३८ ॥

विमुखाय क्रिया प्रोक्ताऽचरायेश्वरपूजनम् ॥
मुमुक्षवे केवलं मदुपास्तिस्तूत्तमोत्तमा ॥ ३९ ॥

अनुष्ठानप्रकारोऽस्याः श्रवणादिविधानतः ॥
बाह्योपचारैरन्यस्याः क्रियायाः कारकादिभिः ॥ ४० ॥

किंचित्पक्वकषायाणां हठयोगादियोजना ॥
तदभावेऽपि परया मद्भक्त्या सद्गतिर्नृणाम् ॥ ४१ ॥

एवं कर्माणि चोपास्तिः संक्षेपेण प्रदर्शिता ॥
निर्गुणोपास्तितः सर्वान्कामानाप्त्वाऽमृतो भवेत् ॥४२॥

मय्यासक्तमना नित्ययुक्तो मां य उपास्त इत् ॥
श्रद्धावान्सोऽपि मामेति पुनरावर्तते न सः ॥ ४३ ॥

स्थूलाक्षराल्लिपिज्ञानं शिशोरिव परात्मनः ॥
गुरूक्तार्चाकल्पनया हृत्स्थैर्याद्बोध उद्भवेत् ॥ ४४ ॥

॥ ३६ ॥ ३७ ॥ असङ्गैरहन्तादिरहितैः । महार्थदः मोक्षदः । विमुखाय पराग्दर्शिने ॥३८॥ अचराय स्थिरचित्ताय ॥३९॥ कारका देशकालमन्त्रतन्त्रप्रयाजादिरूपाः ॥४०॥ कषायो रागादिः । 'हकार उच्यते सूर्यष्ठाकारश्चन्द्र उच्यते' इति तद्देवताकेडापिङ्गलाभ्यामूर्ध्वाधोगतिरोधनेन प्रणापानयोगः ॥४१॥४२॥ मयि सर्वज्ञत्वादिविशिष्टे ऐकाग्र्येणाविष्टं मनो यस्य । नित्यं मदर्थकर्मानुष्ठानादिना युक्तः ॥४३॥ अर्चा प्रतिमा ॥४४॥

**सतोम्ब्वाद्येऽपि बिम्बस्य प्रतीतिर्न मलान्विते ॥**
**तथात्मनो न मलिने प्रतीतिः सा तु निर्मले ॥ ४५ ॥**
**अतो मद्भजनात्कामक्रोधाद्यन्तर्मलक्षतिः ॥**
**मत्प्रसादात्ततश्चान्तस्तमोनाशस्ततोऽमृतम् ॥ ४६ ॥**
**प्रतिष्ठां विन्दते योऽस्मिन्सोऽभयो योन्तरं मयि ॥**
**करोति तस्य भीः पूर्वे देवा अपि भयं ययुः ॥ ४७ ॥**

स्वच्छेम्ब्वाद्ये प्रतिबिम्बरूपेण सतो विद्यमानस्य बिम्बभूतस्य मुखादेः प्रतीतिः प्रत्यक्षा सा मलान्विते न तथाऽऽत्मनः प्रतीचो मलिने रागादियुते चित्ते न ॥ ४९ ॥ अत ईदृशाज्ज्ञानात्क्षतिर्नाशः ' तद्यथेषिकातूलमग्नौ प्रोतं दूयतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति । 'उपपापेषु सर्वेषु पातकेषु महत्सु च । प्रविश्य रजनीपादं ब्रह्मध्यानं समाचर' इति श्रुतिस्मृत्योः ॥४६॥ अन्वयव्यतिरेकाभ्यां ब्रह्मज्ञानाज्ञानतोऽभयभये प्रदर्श्येतेऽस्मिन्स्वप्रकाशापरोक्षात्मनि प्रकर्षेण संशयविपर्ययराहित्येन ब्रह्माहमस्मीत्यवस्थानं प्रतिष्ठा 'आतश्चोपसर्गे' इति कः स्त्रियां टाप् । तां विन्दते लभते सोऽभयः । यस्त्विहात्मनि सेव्यादिरूपं अन्तरं भेदं करोति पश्यति तस्य भीर्भयम् पूर्वे देवा अपि भयं ययुः इतरेषां का कथा । श्रुतिश्च 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति' 'भीषास्माद्वातः पवते' इत्याद्या । यदा यस्मिन्काले । हीति विद्वत्प्रसिद्धिः । एवेत्ययमेव निवृत्त्युपायो नान्यः । एष मुमुक्षुः । एतस्मिन् विद्वदनुभवगम्येऽदृश्ये इन्द्रियागोचरे । अनात्म्येऽनात्मीयस्वरूपतया स्वकीयत्वरहिते । निरुक्तं निर्वचनं शब्देनाभिधानं यत्र न तस्मिन् । निलीयतेऽस्मिन्निति निलयनमाधारः स न विद्यते यस्य तस्मिन्स्वमहिम्नि स्थित इत्यर्थः । अभयमद्वितीयम् 'द्वितीयाद्वै भयं भवति' इति श्रुतेः भयहेतुर्भेदः ।

तस्मात्त्यक्त्वाखिलान्धर्मान्मामेहि शरणं यते ॥
मत्प्रसादाद्विशुद्धोऽतो मोक्ष्यसे शान्तिमृच्छसि ॥४८॥
स्वस्त्यस्तु ते मदुक्तेस्त्वं सारमाधत्स्व शोधितम् ॥
मद्भक्तेष्वपि योगोऽयं प्रकाश्यो यत्नतस्त्वया ॥ ४९ ॥
इत्युक्त्वा भगवान्दत्तो लीलया द्राक् तिरोदधे ॥
स यतिः कृतकृत्योऽभूत्तदुक्त्यर्थविलोचनात् ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां प्रथमाष्टके ज्ञानकाण्डे कर्मतत्त्वं ईश्वरोपासनं सद्गुरुप्रसादो नाम पञ्चमोऽध्यायः ॥५॥

अभयं भेदरहितं यथा तथा प्रतिष्ठां विन्दते गुरूपसत्त्या श्रवणादि कृत्वा लभते स विद्वान् भयरहितं मोक्षरूपमद्वयं ब्रह्म प्राप्तो भवति । 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतेः । यदैष मुमुक्षुरेतस्मिन्ब्रह्मणि । उदपिशब्दार्थे । अरं उत् अल्पमप्यन्तरं भेदं कुरुते पश्यति अथ तदानीं तस्य संसारप्रयुक्तं भयं दुःखं भवेत् । दाढर्याय वाय्वादिनिदर्शनम् ॥ ४७ ॥ वर्णाद्यभिमान-कृशत्वाद्या देहधर्माः । क्षुत्पिपासादयः प्राणधर्माः । शोकाद्या मनोधर्माः तान् । यद्वा भगवद्भक्त्यैव तरिष्यामीति दृढविश्वासेनैव विधिकैंकर्यं त्यक्त्वा मदेकशरणो भव । आत्मनि चित्तोपरतिं निर्वाणलक्षणां शान्तिम् ॥४८॥ ॥४९॥५०॥ इति श्रीमद्दत्तात्रेयपुराणे सा० वा० प्र० ज्ञा० कर्म० नाम टीकायां पञ्चमोऽध्यायः ॥ ५ ॥ श्रीदत्तः ॥

इति श्रीदत्तपुराणे ईश्वरोपासनाख्यः प्रथमाष्टके पञ्चमोऽध्यायः॥५॥

## ॥ अथ शाण्डिल्याथर्वसंवादो नाम प्रथमाष्टके षष्ठोऽध्यायः ॥ १।६ ॥

ॐ इन्द्रोऽमदाय गुर्वीशवेदान्तभजने स्थितः ॥
स्वर्गेऽद्यापीतरेषां तु कथा का दभ्रवेदिनां ॥ १ ॥
आजीवितं त्रयः सेव्या वेदान्तो गुरुरीश्वरः ॥
पूर्वं ज्ञानाप्तये पश्चात्कृतघ्नत्वनिवृत्तये ॥ २ ॥
महानुशासनं चेत्थं मनस्यानीय तत्त्रयम् ॥
सिध्येदनेनेति मत्वा सन्माहात्म्यं यतिर्जगौ ॥ ३ ॥
सृष्ट्वेदं माययास्यान्तर्बहिःस्थोऽभवदत्रिजः॥
गूढः साक्षी ज्ञानगम्यः सोऽव्यात्सच्चित्सुखात्मकः ॥४॥
लीलात्मना योऽत्रिगृहेऽवतीर्णो दत्ताख्य उन्मत्तपिशाचवद्यः ॥
बालो युवा क्वापि जरन् जटाभृत्क्वचिद्दिगम्बरो व्यक्तपरीक्षितश्च ॥ ५ ॥

॥ ॐ श्रीगणेशाय नमः ॥
शाण्डिल्याथर्वसंवादो य औपनिषदः स च ॥
विशदीक्रियते सम्यगात्मयाथात्म्यसंविदे ॥१॥

अमदाय मदनिवृत्तये। दभ्रवेदिनामल्पज्ञानाम् ॥ १ ॥ २ ॥ सन्माहात्म्यं श्रीदत्तमाहात्म्यम् ॥ ३ ॥ इदं जगत्। अस्य जगतोऽन्तः प्रत्यग्रूपेण बहिर्ब्रह्मरूपेण चाकाशवद्बुद्ध्युपहितत्वाद्गूढः। कथं तर्हि गम्यत इत्यत आह। ज्ञायतेऽनेनेति ज्ञानं वाक्य ज्ञानं तेन गम्यः सोऽव्यादविद्यादिभ्यः पायात् ॥ ४ ॥ जरन् वृद्धः ॥५॥

त्यागी सुभोगी क्वचिदस्ति सङ्गी
योगी सुवासाः क्वचिदस्ति नग्नः ॥
तुष्टः कृशः पुष्ट इह क्वचिद्यो
दण्डी च भिक्षुः क्वचिदस्ति वर्णी ॥६॥
गृही वनी वर्णविरुद्धचेष्टः क्वचिच्च वर्णाश्रमधर्मयुक्तः ॥
इत्यादयो यस्य विचित्रचेष्टा देवर्षिहृद्वागयनं व्यतीताः ॥ ७ ॥
यो भक्तरक्षाक्षण एव यस्य वै सेवा स्मृतिर्भोज्यनिवेदनं धिया ॥
पूजाफलं योऽर्पयतीह दुर्लभं भक्तस्मृतौ सन्निधिकृत्क्षणे क्षणे ॥८॥
यस्यास्ति माहुरे निद्रा निवासः सह्यपर्वते ॥
भागीरथ्यां सदा स्नानं ध्यानं गन्धर्वपत्तने ॥ ९ ॥
कुरुक्षेत्रे चाचमनं धूतपापेश्वरे तथा ॥
विभूतिधारणं संध्या करहाटे श्रियः पुरे ॥ १० ॥
भिक्षा विठ्ठलपुर्यस्य सुगन्धिद्रव्यधारणम् ॥
भुक्तिः सारपुरे सायंसंध्या पश्चिमसागरे ॥ ११ ॥
स एष भगवान्दत्तः सदा वसतु मे हृदि ॥
हृद्धीन्द्रियादिव्यापारे सदा तत्स्मृतिरस्तु मे ॥ १२ ॥
विजय तेऽज यते जयते यतेरिह तमो हतमोऽतमो नमः ॥
हृदि कदाय पदाय सदा यदा तदुदयो नदयो न वियोनयः॥१३॥

॥ ६ ॥ ७ ॥ भक्तरक्षायां क्षण उत्सवो यस्य ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ द्रुतविलम्बितैः स्तौति। विशेषेण जयतीति तत्संबुद्धौ 'सत्यमेव जयति नानृतं' 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतं ब्रह्मणः सत्यत्वं विजयत्वं च तत्र कथं वाणीप्रवेश इत्यत आह । हे अज निर्विकार। हे यते स्वेच्छो-

उदयतेऽनयतेर्न यतेर्यदा
मनसि कामनिकामगतिस्तदा ॥
पदुदयो हृदयोकसि ते सिते
भवति योवति योगिवराऽवरान् ॥ १४ ॥

पात्तसंन्यासिरूप । एतेन नास्मदादिवत् कर्मोपात्तपारतन्त्र्यदेहवानिति सूचितम् । सगुणत्वाद्वाणीप्रवेशोपि । हते भक्तानां मोहतमसी येन तत्सं-बुद्धौ इदमेवावतारप्रयोजनम् । यतेः हृदि विद्यमानं तमो जयते ते पदाय नमः । एतेन भगवत्प्रसादाद्धार्दतमोजयः सुकर इति सूचितम् । तज्जय-रूपावरणशक्तिनिरासोत्तरमव्यवहितकाल एव कं स्वरूपसुखं ददातीति कदं तस्मै ते पदाय सदा नमः प्रह्वीभावोऽस्तु प्रह्वीभावो नाम स्वात्मनः परमात्मैकत्वसमर्थनम्। अत्र षष्ट्यर्थो राहोः शिर इतिवत्पदौपचारिको भेदः। तर्हि किमिति सर्वेऽनेन न मुच्यन्त इत्यत आह। यदा प्राक्पुण्यवशाद्भक्तहृदये तदुदयः पदोदयोऽहं ब्रह्मास्मीत्यपरोक्षानुभवो भवति तदा ‘ भिद्यते हृदय-ग्रन्थिः’ इति श्रुतेर्जन्मप्रदकर्माभावाद्वियोनयो विविधा योनय आसुरीप्रायास्ता न भविष्यन्त्यन्यथा भविष्यन्त्येव ‘इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः । ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते’ इति श्रुतेः । ‘तानहं द्विषतः क्रूरान्’ इति स्मृतेश्च ॥ १३ ॥ स पदुदयः कामनिरासेनेत्याह । भो योगिवर, अयतिः शिथिलाभ्यासी तथा न भवतीत्यनयतिः तस्य दृढाभ्यासस्य यतेर्मनसि यदा ‘ अहंकारचिदात्मानावेकीकृत्याविवेकतः । इदं मे स्यादिदं मे स्यातिदीच्छाः कामशब्दिताः ’ इत्युक्तलक्षणानां कामानां गतिर्यथेष्ट-विलासो नोदयते नोत्पद्यते तदा सिते सत्त्वप्रधाने हृदयौकसि हृदयरूपगृहे त्वद्भक्तस्येति शेषः । पूर्वोक्तः पदुदयो भवति । पूर्वं विद्यमानस्यापि विस्मृत-कण्ठचामीकरन्यायेनोदयरूपप्राप्तिर्बोध्यान्यथाऽनित्यत्वप्रसङ्गात् । ‘ यदा

भवति भावभवोवभवो यदा
भवति कामनिकामहतिस्तदा ॥
भवति मानवमानवदुत्तमे
भवतिरोधिरतो विरतोत्तमे ॥ १५ ॥

तव सतां वसतां मनसाऽनसा प्रपद्योः पद्यो रजसाञ्जसा ॥
सुसहितः स हितस्तव तावता यदवतारवता जनतावता ॥१६॥

सर्वे प्रभिद्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवति' इति श्रुतेः । स कथंभूतः । अवरान्मन्दप्रज्ञानपि अविद्याकामकर्मभ्यो रक्षति ' तेषामेवानुकम्पार्थम्' इति स्मृतेः ॥ १४ ॥ कामजयस्तु भक्त्यैवेत्याह । भवति त्वद्विषये सात्त्विकाष्टलक्षणभावस्य भक्तेर्भव उदयः भवति साधौ भवतीति शेषः । 'भवद्युष्मत्सतोस्त्रिषु' इत्यभिधानात् । अवभवः भवनिवर्तकः सः । मानवेषु ये मानवन्तस्तपआदिना श्रेष्ठास्तेषूत्तमे भगवद्भक्ते कामनिकामहतिः मिथ्याप्रत्ययभूतहृदयग्रन्थिभेदो भवति तदा विरतोत्तमे तृणीकृतब्रह्मलोके तस्मिन्साधौ भवद्भक्ते जन्ममरणादिरूपभवतिरोधानं भवति । मिथ्याभूताहंममादिलक्षणप्रपञ्चो नश्यतीत्यर्थः । अः वासुदेवस्तत्प्रसादात् । यद्वा अतः कामहतेर्हेतोः ॥ १५ ॥ सा च भक्तिः सत्सङ्गाद्भवतीत्याह हे भगवन्, अनसा वेगवत्तरशकटरूपेणापि मनसाभ्यासवशाद्वशीकृतेन तव ते प्रपद्योर्नितरां वसतां पद्योः रजसा यः सुसहितः युक्तः स तव हितः प्रियो भक्तः । यद्यस्मादवता जगद्रक्षता अवतारवता मत्स्याद्यवतारधारिणा भवता तादृशजनता जन्मादिभयादविता रक्षिता । 'तेषामहं समुद्धर्ता' इति स्मृतेः ॥१६॥ सत्सङ्गोपि निष्कामकर्मानुष्ठानादित्याह । कृतस्य कर्मणः फलं विहाय नित्यं नैमित्तिकं च

**कृतफलं तु विहाय विहायसा समभजं भजतामज तामसात् ॥**
**मिलति तारकमत्र कमत्रसत्पदरजो भ्रमहारि महारिसत् ॥१७॥**
**तदजरामर कोशविलक्षणं सदज धीगुणवेत्तृ कलक्षणम् ॥**
**भुवनहेत्वघहृत्त्रिपुराधिकं तव न जातु पदं कुपुराधिकम् ॥ १८ ॥**

फलाभिसंधिं त्यक्त्वा चित्तशुद्धिपर्यन्तमनुष्ठेयं ततो न्यासः अकरणे प्रत्यवाय-श्रवणादुपात्तदुरितक्षयार्थमनुष्ठेयत्वश्रवणाच्च । तुशब्दः काम्यनिषिद्ध-व्यावर्तकः । एवं सति कृतं कर्म न बन्धाय 'कुर्वन्नेवेह कर्माणि' इति श्रुतेः ' त्यक्त्वा कर्मफलासङ्गम् ' इत्यादिस्मृतेश्च । हे अज, निष्कामकर्मानुष्ठान-पूर्वकं विहायसा समं व्यापकं त्वां भजतां भक्तानां तामसात् संसारात्तारकं अत्रसतां त्रासाद्यकुर्वतां स्थितप्रज्ञानां पदरजो मिलति । तत्कथं-भूतम् । देहात्मभ्रमहारि महार्यविद्यादिशत्रुभूतं ॥ १७ ॥ एतदु-पायोपेयं पदं तटस्थस्वरूपलक्षणाभ्यामाह द्वाभ्याम् । अजरामरेति निर्विकारत्वं । तदन्नमयादिविलक्षणं सत्त्रिकालाबाधं । जाग्रदादिहेतवो ये धीगुणास्तद्वेत्तृ अवस्थात्रयसाक्षिभूतं कलक्षणमानन्दरूपं भुवनहेतु जगत्का-रणं भजतामघहृत् त्रिपुराधिकं देहत्रयातीतं तव पदं जातु कदापि असज्ज-डदुःखस्वरूपस्थूलसूक्ष्मकारणाख्यपुरसंबन्ध्याधयोऽस्य सन्तीतीदृङ् न भवति तद्वदर्थेऽत्र कन् ॥ अत्रैव गायत्र्यर्थो दर्श्यते । कोशविलक्षणं निरुपाधिकं सदिति तदर्थः १, भुवनहेत्विति सर्गाद्युपलक्षकसर्वप्रपञ्चोत्पाद-कत्वलक्षणाशेषद्वैतभ्रमाधिष्ठानज्ञापकसवितृपदार्थः २, कलक्षणमिति बुद्धि-ग्राह्यनिरतिशयसुखात्मकवरेण्यपदार्थः ३, अघहृदित्यविद्यादिदोषभर्जकत्य-क्ताशेषानर्थात्मकभर्गपदार्थः ४, त्रिपुराधिकमिति व्यापकोक्त्याऽखण्डचिदे-करसात्मकदेवपदार्थः ५, त्रिपुराधिकं जातु नेति देहत्रयगतज्वरास्पृष्टत्वेन निर्गुणचिन्तनरूपध्यानक्रियार्थः ६, पदमिति यदर्थः ७, अः वासुदेवस्ततो जातः अजो जीव इत्यस्मदर्थः ८, तद्धीगुण इति धीपदार्थः ९, तद्वेत्त्रिति

विविधभेदपरं सम दृश्यते विविधवेदपरं कमदृश्य ते ॥
पदमिदं सदु चिद्घनमुद्धियाऽसदनिदं प्रजहात्यघनुद्धि या ॥१९॥

अज नमोऽजनमोहनमोह नः प्रिय नियोजय तेन यतेन ते ॥
य इह वेदनिर्वेदनि वेद वेत्त्यजपदं जपदन्तपदं पदम् ॥ २० ॥

एवं स्तुत्वा निजप्रज्ञापरिणामावधीश्वरम् ॥
माहात्म्यं वक्तुमाजह्वे श्रीदत्तस्य तदीरितः ॥ २१ ॥

चोदनक्रियार्थः १०, एवं सर्वसाक्षिकं सर्वद्वैतभ्रमाधिष्ठानं परमानन्दरूपं निरस्तसमस्तानर्थं स्वप्रकाशचिद्रूपं ब्रह्म चिन्त्यमिति समुच्चयार्थः । एवं-सति ब्रह्मणः स्वविवर्तजडप्रपञ्चस्य रज्जुसर्पन्यायेनाध्यारोपापवादाभ्यां समानाधिकरणरूपमेकत्वमुक्तं भवति ॥ १८ ॥ हे सम वैषम्यनैर्घृण्यादि-दोषरहित । हे अदृश्यातीन्द्रिय सजातीयादिभेदशून्य । क्रियोपास्तिज्ञान-प्रतिपादकवेदपरं इदं स्वप्रकाशापरोक्षरूपं ईदृगात्मा स एव ब्रह्मेत्युत्तरेण संबध्यते । कं आनन्दरूपम् । सत्कालत्रयाबाधम् । चिद्घनं चिदेकरसं ते पदम् । अघं नुदतीत्यघनुत् । या बुद्धिः असद्देहादि अनिदं आत्मवैलक्षण्यं प्रपञ्चजातं प्रजहाति मिथ्यात्वेन निराकरोति तयोद्धिया उ उत्कृष्टयाऽग्र्यया बुद्ध्या दृश्यतेऽपरोक्षतयानुभूयते ।'दृश्यते त्वग्र्यया बुद्ध्या'इति श्रुतेः ॥१९॥ पदप्राप्तिं प्रार्थयन्स्तोत्रमुपसंहरति । जनान्मोहयति स चासौ मोहः स न विद्यते यस्य तत्संबुद्धौ, हे अज, हे प्रिय, यतानां नियतानामिन्द्रियाणा-मिन प्रभो, ते तव तेन पूर्वोक्तपदेन नः नितरां योजयेति विदेहकैवल्यमपि याचितम् । स्तोत्रफलमाह । त्रिकाण्डात्मकवेदनिर्वेदनि निर्वेदनमस्यास्तीति तथाभूतं स्तोत्रं यो वेद स पदं योगिगम्यं जपतामन्ते हृदि पदं स्थानमस्य तत् पदं ब्रह्म वेत्ति ॥ २० ॥ तेन दत्तेनेरितः प्रेरितः ॥ २१ ॥ अथ-

अथ शाण्डिल्यनामासीद्ब्रह्मर्षिर्वै महामुनिः ॥
वेदवेदाङ्गशास्त्रज्ञः स्वाश्रमोचितकर्मकृत् ॥ २२ ॥

भक्त्या परमयोपास्तश्रीदत्तपदपङ्कजः ॥
संज्ञानगर्भवैराग्योपरत्याढ्योऽपि दैवतः ॥ २३ ॥

विद्यामलभमानोऽसौ चतुर्वेदेषु तर्कतः ॥
भूत्वा भिन्नमतिः स्मृत्वा गुरुद्वारा श्रुतीरिताम् ॥ २४ ॥

विद्याप्राप्तिमथर्वाणमुपसन्नो महामतिम् ॥
सोऽभिवाद्याह भगवन्ब्रह्मविद्यामधीहि मे ॥ २५ ॥

वरां निगूढां सत्सेव्यां श्रेयोऽवाप्स्याम्यहं यया ॥
शास्ति स्निग्धं विनीतं हि श्रीगुरुर्गुह्यमप्युत ॥ २६ ॥

शब्दो मङ्गलार्थः । 'अथशब्दः पूर्वमेव मङ्गलार्थः स उच्यते । स ब्रह्म परमं ज्ञेयं स्मरणात्सर्वतः शुभम्'इति । मन्त्रद्रष्टृत्वान्महर्षिः ॥ २२ ॥ परमयाऽव्यभिचारिण्या । वैराग्यं द्विविधमुक्तमाचार्यैः- 'नैर्वेद्यं ज्ञानगर्भं द्विविधमभिहितं तत्र वैराग्यमाद्यं प्रायो दुःखात्रलोकाद्भवति गृहसुहृत्पुत्रवित्तैषणादेः ॥ अन्यज्ज्ञानोपदेशात्'इति । उपरतिः संन्यासः ॥ २३ ॥ अपरोक्षसाक्षात्कारलक्षणां विद्यां तर्कतोऽलभमानः । 'नैषा तर्केण मतिरापनेया' 'आचार्यवान्पुरुषो वेद'इति श्रुत्युक्तां गुरुद्वारा विद्याप्राप्तिम् ॥ २४ ॥ अधीहि मे मदर्थं स्मर ॥ २५ ॥ मोक्षदत्वाद्वरां, अनन्यलभ्यत्वान्निगूढां, सद्भिर्मुमुक्षुभिः सेव्यां, श्रेयो मोक्षं यया विद्यया । ग्रन्थे विद्याशब्दो गौण आयुर्वै घृतमितिवत् । शास्त्युपदिशति । अकथितत्वाद्द्विकर्मकत्वम् । स्निग्धं स्नेहादिगुणवन्तम् ॥ २६ ॥ हे सोम्य, हे शान्त, त्यागपूर्वकं श्रद्धादियो-

इति शिष्येण सोऽथर्वा संपृष्टः प्राह सोम्य ताम् ॥
श्रद्धाभक्तिध्यानयोगादवेहि त्यागपूर्वकम् ॥ २७ ॥
त्रिकालं बाधराहित्यं जगद्बाधैकसाक्षिकम् ॥
सत्यत्वमस्य विज्ञेयं ब्रह्मणोऽविक्रियस्य हि ॥ २८ ॥
विदिताविदितान्यत्वं त्रिपुटीपरिवर्जितम् ॥
स्वयंप्रकाशरूपं तज्ज्ञानलक्ष्मास्य केवलम् ॥ २९ ॥

गात्तामवेहि 'संन्यस्य श्रवणं कुर्यात्' इति विधानात् । ननु संन्यासो द्वेधा विद्वत्संन्यासो विविदिषासंन्यासश्चेति । संन्यासोत्तरं श्रवणविधानं चेत्कथं विद्वत्संन्याससिद्धिरिति चेदुच्यते । कर्मफलानासक्तिमात्रं संन्यासः । ननु स्वरूपेण आरुरुक्षोः कर्मसंन्यासेऽन्तःकरणशुद्ध्यभावाज्ज्ञानानुत्पत्तेः । स्मृतयश्च 'अनाश्रितः कर्म०' 'आरुरुक्षोर्मुनेः०' 'कर्मेन्द्रियाणि संयम्य' इत्याद्याः ॥ २७ ॥ 'बाधः किंसाक्षिको ब्रूहि न त्वसाक्षिक इष्यते' इति न्यायघटनाद्बाधराहित्यम् ॥ २८ ॥ इन्द्रियान्तःकरणैर्विदिताज्जाग्रत्स्वप्नवेद्यादविदितादज्ञानाच्चान्यत्वं ज्ञातृज्ञानज्ञेयवर्जितं साक्षादपरोक्षं स्वरूपमस्य ज्ञानलक्षणम् ॥ अत्रायं प्रयोगः—आत्मा स्वयंप्रकाशः संवित्कर्मतामन्तरेणापरोक्षत्वात्संवेदनवत् । नच विशेषणासिद्धो हेतुः। आत्मनः संवित्कर्मत्वे कर्मकर्तृभावविरोधप्रसङ्गात् । स्वस्वरूपेण कर्तृत्वं विशिष्टरूपेण कर्मत्वमित्यविरोध इति चेद्गमनक्रियायामप्येकस्यैव रूपेण कर्तृत्वं विशिष्टरूपेण कर्मत्वमित्यतिप्रसङ्गात् । नच साधनविकलो दृष्टान्तः संवेदनान्तरापेक्षायामनवस्थानात् । तर्कमते घटो घटज्ञानेन भासते घटज्ञानमनुव्यवसायीति संवेदनवत्स्वप्रकाशे दृष्टान्तः साधनविकल इति चेन्न । ज्ञानस्य ज्ञानान्तरेण भासनाभावात् । एवं सदेव चिच्चिदेव सत् ॥२९॥ विभुत्वान्न देशतः परिच्छेदः । एकत्वान्न कालतः । सर्वात्मत्वान्न

देशतः कालवस्तुभ्यां परिच्छेदो यतोऽस्य नो॥
विभोरेकस्य चानन्तलक्ष्म सर्वात्मकस्य च ॥ ३० ॥

सत्यं ज्ञानमनन्तं चेत्युक्तं तद्ब्रह्मलक्षणम् ॥
इदमेकं चाद्वितीयं यत्सदा भेदवर्जितम् ॥ ३१ ॥

तच्छब्दलक्ष्येऽस्मिन्नोतं प्रोतं चैतत्तदाश्रयम् ॥
यस्मिञ्ज्ञाते सर्वमिदं विज्ञातं भवति ध्रुवम् ॥ ३२ ॥

अस्याभिन्ननिमित्तोपादानत्वं चैक्यसिद्धये ॥
प्रकृत्यधिष्ठात्रैक्यं च प्रतिज्ञातमनेन हि ॥ ३३ ॥

अन्यथा सर्वविज्ञानमेकविज्ञानतः कथम् ॥
सूत्रे प्रतिज्ञादृष्टान्तानुपरोधादितीरितम् ॥ ३४ ॥

वस्तुतश्च । आनन्त्यमेवानन्दलक्षणं 'यो वै भूमा तत्सुखम्' इति श्रुतेः ॥३०॥ चशब्द एवार्थः। एकं चाद्वितीयमित्यैक्यावधारणद्वैतप्रतिषेधात्सजातीयादिभेदवर्जितम् । तृतीयाध्यायस्यैकोनविंशतिश्लोकटीकोक्तमत्रानुसंधेयम् ॥ ३१ ॥ नन्वीदृशं ज्ञेयं चेदुपनिषदां निर्विषयत्वमित्यत आह। तत्त्वमसीति वाक्यान्तरगततत्पदलक्ष्यं । तस्य प्रतीचोऽभेददर्शनायापरोक्षद्योतकेदंशब्दस्य सप्तम्या सामानाधिकरण्यं । ईदृशे ब्रह्माणि जगत्पटे तन्तव इवौतं प्रोतं। अस्यैकस्य विज्ञानात्सर्वविज्ञानम् ॥३२॥ अस्य ब्रह्मण एकत्वसिद्धयै अभिन्ननिमित्तोपादानत्वं स्वप्राधान्यात्स्वोपाधिप्राधान्याच्च निमित्तोपादानत्वश्रवणात् । 'इदꣳ सर्वमसृजत । 'तदात्मानꣳ स्वयमकुरुत' तत्सृष्ट्वा तदेवानुप्राविशत्'इति श्रुतेः । अत्र तृतीयाध्यायैकविंशतिश्लोकटीकानुसंधेया ॥३३॥ 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति सूत्रे ॥३४॥

सच्चिदानन्दैकरसं परं ब्रह्मामृतं तु तत् ॥
आत्मशक्तिप्रधानः सन्सर्वज्ञो निखिलेश्वरः ॥ ३५ ॥
देवः सर्वान्तरात्मैको भूतावासो निगूढकः ॥
योगैकगम्यो यो विश्वं सृजत्यवति हन्ति च ॥ ३६ ॥
अन्तर्यामी च मायावी स तु तच्छब्दवाचकः ॥
योऽस्मत्प्रत्ययशब्दाभ्यालम्बः कामादिदूषकः ॥ ३७ ॥
तद्व्योमवत्सर्वगतमद्वितीयं निरञ्जनम् ॥
सन्मात्रं निष्कलं शान्तमप्रमेयमजं शिवम् ॥ ३८ ॥

भेदाभावादखण्डैकरसं यदीदृशं स एवात्मशक्तिप्राधान्यादीश्वरः विद्योपाधितः सर्वज्ञः नियन्तृत्वात्सर्वेश्वरः ॥ ३५ ॥ द्योतनाद्देवः, जीवरूपेणानुप्रविष्टत्वात्सर्वान्तरात्मा, वास्तवभेदाभावाद्देवः, सर्वाश्रयत्वाद्भूतावासः । अत्रायं प्रयोगः–यो ह्येकः प्रकाशकः स आत्मा भवितुमर्हति सर्वान्तरत्वात् । यो ह्येवंविधो न भवति स सर्वान्तरोपि नैव भवति यथाहंकार इति केवलव्यतिरेकी । तर्ह्ययं कथं न ज्ञायते तत्राह—निगूढः । 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते' इति श्रुतेः । गूढश्चेत्कथं ज्ञेयस्तत्राह । योगो ध्यानयोगस्तेन गम्यो ज्ञेयः । तस्य तटस्थलक्षणं त्रिभिरर्थवादैराह विश्वमिति ॥ ३६ ॥ 'यः पृथिव्यां तिष्ठन्'इति श्रुतेर्नियमनाख्यश्चतुर्थोऽर्थवादः । चशब्दात्प्रवेशात्मकः पञ्चमोऽर्थवादः । स परोक्षत्वादिलक्षणः तच्छब्दवाचकः । सत्यादिलक्षणो लक्ष्यार्थ एवमुक्तः । यश्चास्मत्प्रत्ययशब्दयोरालम्बः मलिनसत्त्वोपाधित्वात्कामादिदूषितः ॥ ३७ ॥ तद्ब्रह्माकाशवत्सर्वव्यापि उपाधिभ्यां प्रत्यक्परूपावस्थितमपि लक्ष्यदृष्ट्याऽद्वितीयम् । अत एव निरञ्जनं मायावरणशून्यं सत्तयानुस्यूतं प्राणादिकलारहितम् । 'षोडशकलः सोम्य पुरुषः' इति श्रुतिस्तु पदार्थशोधनपरा । प्रत्यक्षादिप्रमाणैरप्रमेयं जन्मादिविकाररहितम् ॥ ३८ ॥ अन्तःकरणावच्छिन्नबोधः किंचिज्ज्ञ-

अयं त्वंपदवाच्योऽन्तःकरणच्छिन्नबोधकः ॥
देहेन्द्रियमनःप्राणाहंकारेभ्यो विलक्षणः॥ ३९ ॥
साक्षी विशुद्धः कूटस्थः प्रत्यक्त्वंपदलक्ष्यकः ॥
धीदीपो निर्विकारो धीवृत्तिव्याप्योऽपि केवलः ॥४०॥
प्रत्यक्परोक्षादिवैरं तयोर्हित्वा चिदात्मताम् ॥
गृहीत्वा लक्षितां शुद्धां भूमैक्यज्ञानतो भवेत् ॥ ४१ ॥
वाग्धीनिवृत्त्यानाप्त्या च फलव्याप्तिर्निवारिता ॥
एवमात्मस्थमात्मानं योगेन श्रवणादिना ॥ ४२ ॥
जानात्यैक्यं स मुक्तः सन्कृतकृत्यो भवेद्ध्रुवम् ॥
आत्मविज्ञानेन सोम्य शोकस्यान्तं गमिष्यसि ॥ ४३ ॥
इदं श्रद्धत्स्व माशोचीः शोकस्यान्तं गमिष्यसि ॥
अत्र योगं प्रवक्ष्यामि येनात्माऽऽशु प्रसीदति ॥ ४४ ॥
योगः स्यात्प्रत्यगात्मैक्यमष्टावङ्गानि तस्य तु ॥
देहेन्द्रियादौ विरक्तिर्यमो मिथ्यात्ववीक्षणात् ॥ ४५ ॥

त्वादिलक्षणः त्वंपदवाच्यार्थः । देहादिविलक्षणः साक्षी प्रत्यग्रूपस्त्वंपदलक्ष्यार्थः ॥ ३९ ॥अनापन्नविकारतया बुद्ध्यादिप्रकाशकः बुद्धिवृत्तिव्याप्यो न फलव्याप्यः ॥ ४० ॥ तर्हि तत्त्वंपदार्थयोर्विरोधे कथमखण्डतेत्यत आह लक्षणया । भूमाऽपरिच्छिन्नः ॥ ४१ ॥ ' यतोवाच ' इति श्रुत्या फलव्याप्तिर्निवारिता न वृत्तिव्याप्तिः । ' मनसैवानुद्रष्टव्यम् ' । ' दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुतेः । योगेन चित्तैकाग्र्यसंपादनेन ॥ ४२ ॥ आत्मविज्ञानेनापरोक्षसाक्षात्कारेण ' तरति शोकमात्मवित् ' इति श्रुतेः ॥ ४३ ॥ आत्मा मनः । प्रसीदति शान्तिमाप्नोति ॥ ४४ ॥ प्रत्यग्ब्रह्मणोरैक्यं योगः । देहादौ मिथ्यात्वदर्शनपूर्वकं विरक्तिर्यमः ॥ ४५ ॥ स्वस्यात्मनश्च तत्त्वेना-

स्वात्मतत्त्वेऽनुरक्तिर्नियमः सत्यत्वनिश्चयात् ॥
बाह्यार्थौदासीन्यतोऽन्तर्दृष्टिस्थापनमासनम् ॥ ४६ ॥

पूरश्चिदन्वयादानं कुम्भकस्तत्स्थिरीकृतिः ॥
रेचको मायिकत्यागः प्राणायामस्त्रिधोदितः ॥ ४७ ॥

प्रत्याहारो गोस्वभावदृष्ट्यार्थासक्त्यभावदृक् ॥
धारणा स्वात्मनिष्ठा स्याद्धीतदुर्भावनं दृढा ॥ ४८ ॥

ध्यानं ब्रह्माहमस्मीति दृक्प्रवाहोऽन्यवर्जनात् ॥
देहात्मवत्परात्मत्वदृक् समाधिर्हि सुस्थिरा ॥ ४९ ॥

परिपक्वकषायाणां योगोऽयं शीघ्रमुक्तिदः ॥
किंचित्पक्वकषायाणां योगोऽयं शीघ्रमुक्तिदः ॥ ५० ॥

नुरक्तिर्नियमः । शब्दादिविषयौदासीन्येनान्तर्दृष्टिस्थापनमासनं नोपवेशनम् ॥ ४६ ॥ चिदन्वयेनात्मतत्त्वग्रहणं पूरकः न नासापीडनम् । गृहीततत्त्वस्य स्थिरीकरणं कुम्भकः न वायुरोधः । मायिकनामरूपत्यागो रेचकः । एवं त्रिधा प्राणायामः ॥ ४७ ॥ गवामिन्द्रियाणां विषयग्रहणपर्यालोचनेन विषयेष्वनासक्तिः प्रत्याहारः । विगताऽसंभावनादिर्यथा तथा दृढा धारणा नतु नाभ्यादिदेशे चित्तसंबन्धः ॥ ४८ ॥ अन्यस्य मायामयविकारस्य वर्जनपूर्वकं ब्रह्माहमित्यन्तर्दृष्टिप्रवाहसांतत्यं ध्यानं न मूर्तिचिन्तनम् । देहात्मत्ववत्परात्मत्वदृग् ज्ञानं समाधिः । सुस्थिरेति दृग्विशेषणं ॥ ४९ ॥ परिपक्वकषायाणां रागादिरहितानाम् ॥ ५० ॥ छ ॥ इति श्रीमद्दत्तात्रेय-

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां प्रथमाष्टके ज्ञानकाण्डे शाण्डिल्याथर्वसंवादे सम्यगात्मयाथात्म्यो नाम षष्ठोऽध्यायः ॥६॥ श्रीदत्तः ॥

पुराणे० सा० त्रि० संहितायां० वासु० प्रथमाष्टके ज्ञानकाण्डे शाण्डिल्या-थर्वसंवादे सम्य० टीकायां षष्ठोऽध्यायः ॥ श्रीदत्तः ॥

इति श्रीदत्तपुराणे सम्यगात्मयाथात्म्यो नाम प्रथमाष्टके षष्ठोऽध्यायः ॥ १।६ ॥

---

# अथ हठयोगकथनं नाम प्रथमाष्टके सप्तमोऽध्यायः ॥ १।७ ॥

द्वे विरूपे विभोरत्राक्लेशोत्पादनमात्मना ॥
अहिंसा सत्यं यथार्थसद्वागन्यार्थनिस्पृहा ॥ १ ॥
अस्तेयं ब्रह्मचर्यं स्यात्सदा मैथुनवर्जनम् ॥
दया भूतानुग्रहोऽत्रैकरूपत्वं सदार्जवम् ॥ २ ॥
क्षमाऽप्रियादिसहनं धृतिर्नाशेऽप्यविक्रिया ॥
मिताहारो हितस्निग्धचतुर्थांशोनभोजनम् ॥ ३ ॥
मृज्जलाभ्यां बहिःशौचं ध्यानमन्तर्यमा इमे ॥
तपः कृच्छ्रैर्देहशुद्धिस्तोषो दैवाप्ततोषणम् ॥ ४ ॥

॥ ॐ श्रीगणेशाय नमः ॥

सोपायो हठयोगोऽत्र साङ्गोपाङ्गो यथाक्रमम् ॥
कथ्यते सप्तमाध्याये शाण्डिल्याथर्ववादतः ॥ १ ॥

विभोरात्मनोऽत्र जगति विसदृशे स्थावरजंगमात्मके रूपे । तत्रेश्वरबुद्ध्यात्मना देहेन वाचा मनसापि क्लेशानुत्पादनमहिंसा । यथार्थमृदुवाक् सत्यम् । तृणपर्यन्तं परद्रव्यस्यास्पृहाऽस्तेयमित्यग्रिमेणान्वेति ॥ १ ॥ अष्टाङ्गमैथुनवर्जनं ब्रह्मचर्यम् । भूतमात्रेऽनुग्रहो दया । सन्मार्गे वर्तित्वेन सदैकरूपत्वं आर्जवम् ॥ २ ॥ सुखादेर्न कोऽपि दातेति परकृताप्रियादिसहनं जिह्वादंशकदन्तेष्विव दोषदृष्ट्यकरणं क्षमा । स्त्रीपुत्रादिवियोगे द्रव्यहानौ च शोकाद्यविकारतासंपादनं धृतिः । चतुर्थांशोनहितकरभक्षणं मिताहारः ॥ ३ ॥ ध्यानं श्रीदत्तस्य ॥ ४ ॥ उपनिषद्भागश्रुतेर्विचारः

आस्तिक्यं वेदविश्वासो विचारः श्रवणं श्रुतेः ॥
दानं स्वार्थार्पणं पात्रे पूजा विष्णौ कृतार्पणम् ॥ ५ ॥
कुकर्मलज्जा ह्रीर्बुद्धिः श्रद्धा वेदोक्तकर्मसु ॥
विधिवद्विष्णुपर्वैकादश्युपोषणकं व्रतम् ॥ ६ ॥
वेदाविरुद्धगुर्वाप्तमन्त्राभ्यासो जपस्त्रिधा ॥
वाचिकोऽसन्मानसः सन् रहस्यो मध्यमो जपः ॥७॥
दशैते नियमा अष्टासनानि स्वस्तिकं त्विदम् ॥
जानूर्वन्तः पदौ कृत्वा समाङ्गेनोपवेशनम् ॥८॥
गोमुखं दक्षगुल्फोऽन्यपृष्ठपार्श्वे परोऽन्यथा ॥
स्वान्योरुपादविन्यासाद्वीराख्यं चाथ पद्मकम् ॥९॥
पृष्ठतो व्यस्तपाणिभ्यां व्यस्तोरुस्थाङ्घ्रिधारणम् ॥
अन्योन्यगुल्फयोगेन जानुस्थकरपल्लवैः ॥ १० ॥

श्रवणम्। पात्रे दातृतारकाय श्रोत्रियादिलक्षणाय न्यायार्जितस्वार्थार्पणं दानम्। यत्करोषीति शासनेन विष्णौ सर्वकर्मसमर्पणं पूजा ॥ ५ ॥ विष्णुपर्वाणि जयन्त्यः ॥ ६ ॥ वेदाविरुद्धस्य गुरुप्रसादलब्धमन्त्रस्य पुरश्चर्यापूर्वकमभ्यासो जपः। वाचिकोऽन्यैः श्रुतोऽल्पफलः। ओष्ठचलनादिरहितो मानसोऽनन्तफलः। परैरश्रुतो मध्यमफलः ॥ ७ ॥ जानूर्वोरन्तरे पादाग्रे कृत्वा समशरीरधारणेनोपवेशनं स्वस्तिकासनं ॥ ८ ॥ दक्षिणपादगुल्फो वामपृष्ठपार्श्वे वामो दक्षिणपृष्ठपार्श्वे (सं)स्थाप्य एतद्गोमुखासनम्। दक्षिणवामोरुसंनिधौ वामदक्षिणपादविन्यासाद्वीरासनम् ॥ ९ ॥ दक्षिणवामहस्ताभ्यां पृष्ठतो गताभ्यां व्यस्तोरुस्थाङ्घ्रिधारणं दक्षिणवामोरुस्थवामदक्षिणपादाग्रधारणं पद्मासनम्। सीवनीपार्श्वे गतान्योन्यगुल्फयोगेन जानुस्थापिताङ्गुलिभिरुपलक्षितं ॥ १० ॥

सिंहासनं व्यात्तवक्त्रं पूज्यं नासाग्रदृष्टिकम् ॥
योनिमेढ्रोर्ध्वस्थगुल्फं सिद्धं भ्रूमध्यदृग्वरम् ॥ ११ ॥
मायूरं दण्डवद्व्योम्नि भूहस्तं नाभिकूर्परम् ॥
भद्रं स्यात्सीवनीपार्श्वयुक्कराप्ताङ्घ्रिगुल्फकम् ॥ १२ ॥
स्यादासनजयात्सर्वजयोऽशक्तौ शवासनम् ॥
सार्धत्रिहस्तो देहोऽयं गुदमेढ्रान्तमध्यकः ॥ १३ ॥
ततो नवाङ्गुलं कन्द आनाभेरुद्गता अतः ॥
द्वासप्ततिसहस्राणि मुख्या नाड्यश्चतुर्दश ॥ १४ ॥
एतासामुत्तमास्तिस्र आसामेकाप्यनुत्तमा ॥
पिङ्गला दक्षनासान्ता सूर्येशा दिनसंज्ञिता ॥ १५ ॥
इडापि वामनासान्ता निट्संज्ञा चन्द्रपा सुखा ॥
सुषुम्णा ब्रह्मरन्ध्रान्ता कालभोक्त्र्यमृतत्वदा ॥ १६ ॥

नासाग्रदृष्टिकं विदारितास्यं सिंहासनम् । योनेरण्डाधो द्व्यङ्गुलप्रदेशे एको गुल्फः मेढ्रस्य लिङ्गस्योर्ध्वं एक इति सिद्धासनं श्रेष्ठमिदम् ॥११॥ भूलग्नौ हस्तौ यस्मिन्नाभिदेशे कूर्परौ यस्मिन्दण्डवद्व्योम्नि वर्तमानं मायूरम् । सीवनीपार्श्वयुजौ कराभ्यां पृष्ठत आप्तौ गृहीतौ संलग्नौ अङ्घ्री तयोर्गुल्फौ यस्मिंस्तद्भद्रासनम् ॥ १२ ॥ चिरं सुखोपवेशनमासनजयः । गुदमेढ्रमध्यप्रदेशे देहमध्यः ॥ १३ ॥ आनाभेर्नाभिपर्यन्तं कन्दः । अतः कन्दात् ॥ १४ ॥ तिस्र इडापिङ्गलासुषुम्णाख्याः । पिङ्गलायाः सूर्य ईशः । दिनसंज्ञा सा वहमानाऽशुभा उग्रकार्यसिद्धिदा ॥ १५ ॥ इडायाश्चन्द्रः पतिः । निशासंज्ञा सा वहमाना शुभसौम्यसिद्धिदा । 'दिवा न पूजयेल्लिङ्गं रात्रौ नैव च पूजयेत् । सर्वदा पूजयेल्लिङ्गम्' इत्युपलक्षिता सुषुम्णाकालभोक्त्री ॥१६॥

तन्मूले कुटिला शक्तिर्मोक्षविघ्नप्रदाऽसताम् ॥
नाभ्यूर्ध्वं प्राणोऽधोऽपानः समानो नाभिमण्डले ॥१७॥
चरत्युदानः कण्ठे च व्यानः सर्वशरीरगः ॥
त्वगादिषु च नागाद्याख्यस्त्रोऽग्निर्नाभिमध्यगः ॥१८॥
नृणां वृत्तो विहङ्गानां चतुरस्रश्चतुष्पदाम् ॥
कृत्वाग्नेरूर्ध्वमम्भोऽन्नं प्राणोऽधरस्थो धमत्यमुम् ॥१९॥
स दीप्तोऽन्नं पचेदङ्गे व्यानं सारोऽस्य यच्छति ॥
निश्वासोच्छ्वासकृत्प्राणोऽपानो विण्मूत्रहापकः ॥२०॥
उदानोऽङ्गोन्नयनकृत्समानः शोषणादिकृत् ॥
तथोद्गारोन्मीलनक्षुत्तन्द्राव्याप्तिकराः परे ॥ २१॥
चले प्राणे चलं चित्तं निश्चले निश्चलं तयोः ॥
नष्ट एकतरे नाशो द्वयोरपि स योगतः ॥२२॥

कुण्डलिनीचालनमाह । तन्मूले सुषुम्णामूले तन्मुखं मुखेनाच्छाद्य स्थिता असतामभ्यासरहितानां द्वाराभावान्मोक्षविघ्नकरी । नाभेरधः अपानश्चेष्टते ॥१७॥ त्वग्रसमांसास्थिशिरासु नागकूर्मकृकरदेवदत्तधनंजयाः ॥१८॥ नृणां नाभिदेशे त्रिकोणोग्निः । पक्षिणां वृत्तः पीताशितमम्भोन्नं चामाशयगतं अग्नेरूर्ध्वं कृत्वा । अमुमग्निम् ॥१९॥ स जाठरोऽग्निः पक्कान्नरससारं अङ्गे सर्वाङ्गयुक्ते देहे । अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः । इन्द्रियजीवनार्थं नयति ॥२०॥ उदानः वागादीनां प्रबोधकाले उन्नयनकृत् मरणोत्तरं लिङ्गदेहोन्नयनकृच्च 'अथैकयोर्ध्व उदान' इति श्रुतेः । नाग उद्गारं कूर्मो नेत्रोन्मीलननिमीलने कृकरः क्षुतं देवदत्तस्तन्द्रादि धनंजय उष्णत्वेन शरीरव्याप्तिं करोति ॥२१॥२२॥ इडापिङ्गलाभ्यां वहनं प्राण-

न ज्ञानं जीवति प्राणे मनस्यपि लयं नयेत् ॥
द्वयं गच्छति मोक्षं स योगी नान्यः कथंचन ॥२३॥

नात्यश्नतोऽनश्नतोऽपि सुप्तस्यैष न जाग्रतः ॥
युक्तचेष्टाहारनिद्रागतेर्योगो भवेत्सुखः ॥ २४ ॥

क्षाराम्लतिक्तकटुरूक्षकदन्नशाक-
स्त्र्यग्न्यध्वभाङ् न लभतेऽकुशलोऽस्य सिद्धिम् ॥
शुण्ठीसितासुमनशालिसदन्नमुद्ग-
चक्षुष्यशाकघृतदुग्धसदम्बु पथ्यम् ॥ २५ ॥

दैवी संपत्स्वधर्मस्थो निश्चिन्तो गुरुसेवकः ॥
सद्देशे मठिकामध्ये रक्षिते निरुपद्रवे ॥ २६ ॥

जीवनं, संकल्पादि मनो जीवनं तदभावस्तन्मरणम् ॥२३॥ अत्र स्मृति-र्नात्यश्नत इत्यादिः। 'द्वौ भागौ पूरयेदन्नैस्तृतीयं च तथाम्बुना॥ वायुसंच-रणार्थाय चतुर्थमवशेषयेत्' इति युक्ताहारत्वम् ॥२४॥ सर्वे क्षारा अम्लं चिञ्चादि तिक्तं कारवेल्लादि कटु मरीच्यादि रूक्षमचिक्कणं कदन्नं यावना-लादि शाकमचक्षुष्यं ॥ वैद्यके 'सर्वं शाकमचक्षुष्यं चक्षुष्यं शाकपञ्चकम्। प्रायः सर्वाणि शाकानि विष्टम्भीनि गुरूणि च॥ रूक्षाणि बहुवर्चस्कानि' इत्यादि । स्त्रीभाङ् मैथुनकृत् । अग्निसेवा सेकादिः । अध्वभाग्गमनशीलः । अकुशलोऽभ्यासानभिज्ञः । अस्य योगस्य पथ्यमाह । सिता शर्करा सुमना गोधूमाः । सदन्नं नीवारयवश्यामाकादि । चक्षुषे हितं चक्षुष्यं 'तस्मै हितं' इति यत् । तच्च 'जीवन्तीवसुमत्स्याक्षी मेघनादा पुनर्नवा' इति । कोशातकी पटोलकमपि ॥ २५ ॥ अल्पो मठो मठिका अल्पी-यसि कन् । 'अल्पद्वारमरन्ध्रगर्तविवरम्' इत्यादि ॥ २६ ॥ २७ ॥ षोड-

भक्त्येष्टदेवं नत्वाऽऽदौ सूपविष्टः सुदिङ्मुखः ॥
कुशाजिनांशुकेष्वेव प्राणायामान्समभ्यसेत् ॥ २७ ॥
चन्द्रेणापूर्य वायुं षट् दशमात्रं हनुं हृदि ॥
कृत्वा चतुःषष्टिमात्रं कुंभयित्वा विरेचयेत् ॥ २८ ॥
शनैः कुम्भार्धकालेन पश्चादाकर्षितोदरः ॥
त्यजेत्सूर्येणाथ तेन पीत्वान्येन तथा पुनः ॥ २९ ॥
पञ्चवृद्ध्यान्ह्यह्न्यशीत्यन्तैस्त्रिसंध्यमसुयामकैः ॥
त्रिमासोर्ध्वं प्राणजयः सिध्येत्केवलकुम्भकः ॥ ३० ॥
ध्येयोऽत्र तारो हृदीक्ष्यं भ्रूमध्ये चेन्दुमण्डलम् ॥
दार्ढ्याय लाघवायाङ्गमुत्थस्वेदेन मर्दयेत् ॥ ३१ ॥
शुद्ध्यै क्रियाश्चित्रकुम्भाः सिद्ध्यै मुद्राश्च कीर्तिताः ॥
प्राणायामैरुभे तेपि साध्य आरोग्यमप्युत ॥ ३२ ॥
समासीनो यतास्योऽन्तः प्राणं दक्षिणया त्यजेत् ॥
सारं लगति हृत्कण्ठकपोलावध्यसौ यथा ॥ ३३ ॥
लोहकारस्य भस्त्रावच्छक्त्याऽऽश्वापूर्य रेचयेत् ॥
वामां मध्यानामिकाभ्यां धृत्वा जाते श्रमे विधेः ॥३४॥

शमात्रमापूर्य चतुरङ्गुलान्तरेण हृदि । पश्चादाकर्षितमिति पश्चिमतानं उड्डियानः । वेगात् कृते रेचके बलहानिप्रसङ्गात् ॥ २८॥२९ ॥ दिने दिने त्रिसंध्यं। पञ्चवृद्ध्याऽशीत्यन्तैः ॥ ३० ॥ अत्र कुम्भके । तारः प्रणवः ॥ ३१ ॥ कफवातपित्तशुद्ध्यै धौत्यादिक्रियाः । योगसिद्ध्यै अष्टकुम्भका दश मुद्राश्च। उभे शुद्धिसिद्धी ॥ ३२ ॥ सारं सशब्दं असौ वायुः ॥३३॥ भस्त्रामाह । श्रमे जाते पिङ्गलया पीत्वा पूरकविधिना

पीत्वा प्राणं कुम्भयित्वा धृत्वाङ्गुष्ठेन दक्षिणाम् ॥
वामया रेचयेन्मन्दं तथाऽथ प्राग्वदाचरेत् ॥ ३५ ॥
द्विनाड्यभ्यासाद्यामार्धं शक्तिर्मार्गं ददात्यरम् ॥
भस्त्रेयं सर्वदोषघ्नि रुकूपापघ्न्यपि सिद्धदा ॥ ३६ ॥
शिश्नानाभ्यन्तस्थकन्दं सति वज्रासने पदौ ॥
धृत्वा दृढं प्रपीड्यारं भस्त्रां सिद्धासनस्थितः ॥ ३७ ॥
समाकुञ्चितनाभिर्द्राक्कुर्याच्छक्तिश्चलत्यतः ॥
यामार्धाभ्यासतो धैर्यान्मध्यनाड्यां समुद्गता ॥ ३८ ॥
ऊर्ध्वाकृष्टा भवेत्किंचिच्छक्तिर्नाडीमुखं त्यजेत् ॥
ततः स्वतो व्रजत्यूर्ध्वं प्राणोऽतस्तां विचालयेत् ॥३९॥
चालनात्सर्वसिद्ध्याप्तिर्मण्डलाद्योगिनो न तु ॥
रुग्भ्योऽभयं यमाच्चापि नेतोऽन्यन्नाडिशोधनम् ॥ ४० ॥
चालितायामपि प्राणो बद्धा चेद्रसना सुखम् ॥
व्रजत्यूर्ध्वं सिद्धिपूर्वं राजयोगपदप्रदः ॥ ४१ ॥
जिह्वामूलशिरां छित्वा रोममात्रं प्रवर्धयेत् ॥
पथ्यासैन्धवचूर्णैर्गां चालयेद्दोहयेत्पुनः ॥ ४२ ॥
दिने दिने छेदनाद्यैस्त्र्यध्वगा वर्धते कला ॥
षण्मासादिति जिह्वाधः शिराबन्धो विनश्यति ॥ ४३ ॥

प्राणमित्यग्रिमेणान्वेति ॥ ३४॥३५ ॥ अरं शीघ्रम् ॥ ३६ ॥ प्रपीड्य संताड्य ॥ ३७ ॥ परिधानयुक्त्या समाकुञ्चिता नाभिर्येन ॥ ३८॥३९ ॥ मण्डलाच्चत्वारिंशद्दिनतः ॥ ४०॥४१ ॥ पथ्या हरीतकी । गां जिह्वाम् ॥ ४२ ॥ कला जिह्वा । त्र्यध्वगा भ्रमध्यगा ॥ ४३ ॥ खे आज्ञाचक्रे

मुद्रा स्यात्खेचरी त्र्यध्वे योजितावाङ्मुखी कला ॥
रसस्वादोऽमृतप्राप्तिस्ततः प्राणमनोजयः ॥ ४४ ॥
सहृज्जिह्वा चरत्यस्य खे कदापि स्पृशन्ति नो ॥
विषार्तिरुग्जराक्षुत्तृण्निद्रातन्द्रामृतिक्रियाः ॥ ४५ ॥
बिन्दुस्त्र्याश्लेषितस्यापि न क्षरत्यूर्ध्वमेति सः ॥
चलितश्चेद्योनिमुद्रा बद्धो मुक्तः स भोग्यपि ॥ ४६ ॥
सुधान्तः स्रवतीन्दोस्तां ग्रसत्यर्कस्ततो जरा ॥
अधःशीर्षोर्ध्वपात्तिष्ठेद्धह्वाहारः शनैःशनैः ॥ ४७ ॥
याममात्रं ततः सिद्धिर्व्यस्तेयं करणीष्टदा ॥
वलीपलितवेपघ्नी मृत्युहन्त्री सुधाप्रदा ॥ ४८ ॥
योनिस्थवामगुल्फो ना कराक्तप्रसृतान्यपात् ॥
कुम्भं कुर्यात्पुनर्व्यस्तं क्षयगुल्मादिरुग्लयः ॥४९॥
पूर्ववत्प्रसृतं पादं कृत्वोरौ कृतम्कुम्भकः ॥
क्लेशहीनो ज्ञानवांश्च नाभौ प्राणधृतेररुक् ॥५०॥
मनोजयश्च नासाग्रे पादाङ्गुष्ठेऽङ्गलाघवम् ॥
भ्रूमध्ये चामृतप्राप्तिरारोग्यं तुन्दपार्श्वयोः ॥ ५१ ॥

॥ ४४॥४५ ॥ स्त्र्यालिङ्गितस्य रेतश्चलितं चेद्वज्रोल्या बद्धं ब्रह्मरन्ध्रमेति ॥ ४६ ॥ इन्दोस्तालुतः अर्कोऽग्निः ॥ ४७ ॥ व्यस्ता विपरीता ॥ ४८ ॥ ना पुरुषः । पुनर्व्यस्तं विपरीतं यथा तथा । इयं महामुद्रा ज्ञेया ॥ ४९ ॥ एतौ महाबन्धमहावेधौ ॥ ५० ॥ तुन्दमुदरम् ॥ ५१ ॥

विषज्वरान्तस्तु दन्ते वायुपानाच्च जिह्वया ॥
श्रमतृड्व्याधिदाहान्तः कल्याणी वाक् सुधाशनम् ॥५२॥
स्वास्थ्येऽग्नौ दीप्तेऽङ्गसादे नाडीशुद्धावनामये ॥
नादः स्फुटत्वे सुदृष्ट्योः सिद्धिर्बिन्दौ जिते सति ॥५३॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां
त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां
प्रथमाष्टके ज्ञानकाण्डे साङ्गोपाङ्गहठयोगकथनं
नाम सप्तमोऽध्यायः ॥ ७ ॥

सर्वत्र न मुखतो रेचकः ॥ ५२ ॥ शोभने मुखे जाते सतीत्येवं सर्वत्र ॥ ५३ ॥ इति प्रथमे टीकायां सप्तमोऽध्यायः ॥

---

## ॥अथ योगकथनं नाम प्रथमाष्टकेऽष्टमोऽध्यायः॥१।८॥

इदं श्रेष्ठं भजेत्तस्य सिद्धयेत्केवलकुम्भकः ॥
न तस्य दुर्लभं किंचित्सोऽजेयः कैरपीह हि ॥ १ ॥
देहे पादादिमूर्धान्ते स्थिता लोकाश्चतुर्दश ॥
हृत्संयमात्तत्र तत्र तत्तल्लोकविदीरिता ॥ २ ॥
अर्थज्ञानं तारकायां नासाग्रे चेन्द्रलोकवित् ॥
तदधो वह्निलोकस्य चक्षुषोः सर्वलोकवित् ॥ ३ ॥
श्रोत्रे च यमलोकस्य तत्पार्श्वे नैर्ऋतस्य वित् ॥
पृष्ठे वरुणलोकस्य वायुलोकस्य च श्रुतौ ॥ ४ ॥
कण्ठे कुबेरलोकस्य वामेक्षिण शिवलोकवित् ॥
दक्षे परमलोकस्य ब्रह्मलोकस्य मूर्ध्नि वित् ॥ ५ ॥
तत्तज्जन्तुध्वनौ तत्तद्भूतज्ञानं च कर्मणि ॥
प्राग्जातिविच्चान्यचित्ते स्फुटं तच्चित्तवृत्तिवित् ॥ ६ ॥
सूर्येन्द्वोर्लोकभज्ञानं ध्रुवे तद्गतिदर्शनम् ॥
स्वार्थे पुरुषविद्वीर्ये मारुत्यादिबलस्य वित् ॥ ७ ॥
कायरूपेऽप्यदृश्यस्य कायव्यूहस्य नाभितः ॥
अतीतानागतज्ञानं स्याद्धर्माधर्मयोर्गले ॥ ८ ॥

श्रीः ॥ श्रेष्ठं श्रीदत्तरूपम् ॥ १ ॥ तत्तल्लोकज्ञानम् ॥ २ ॥ तारकाक्षिकनीनिका ॥ ३ ॥ ४ ॥ परमस्य विष्णोः ' विष्णुः परमः ' इति श्रुतेः ॥ ५ ॥ ६ ॥ ७ ॥ अतीतानागतज्ञानं भूतभविष्यज्ज्ञानं।वर्तमानमपि गले इत्यग्रिमेणान्वेति॥ ८ ॥

क्षुत्तृण्नाशः कूर्मनाड्यां स्थैर्यं तारे च सिद्धदृक् ॥
कायखे खगतिस्तत्तत्सिद्धयस्तत्र तत्र च ॥ ९ ॥
प्रत्याहारस्त्वाहरणमर्थचारी गवां बलात् ॥
आत्मान्वयेन दृष्टिश्च फलत्यागश्च कर्मणः ॥ १० ॥
वैरस्यं चेन्द्रियार्थेषु प्रतिमर्म च हृत्स्थितिः ॥
प्रत्याहारः पञ्चधैवं धारणापि च पञ्चधा ॥ ११ ॥
हृत्प्राणधारणा हृद्धीधारणाऽध्यात्मधारणा ॥
तन्मूर्तिधारणा क्ष्मादौ हार्दखेऽन्यखधारणा ॥ १२ ॥
वज्राङ्कुशध्वजाब्जाङ्कयुग्रक्ताब्जाभपत्तलम् ॥
नखमाणिक्यभाध्वस्तभक्तहार्दतमस्ततिम् ॥ १३ ॥
गूढगुल्फं कूर्मपृष्ठोल्लसत्पादोपरिस्थलम् ॥
परिपुष्टसुजङ्घोरुं विशालजघनस्थलम् ॥ १४ ॥
पृथुश्रोणिं च काकुत्स्थं चारुनाभिं दलोदरम् ॥
कपाटवक्षसं दीर्घमांसलोरगवद्भुजम् ॥ १५ ॥
सुचिह्नचिह्नितकरं कम्बुकण्ठं स्मिताननम् ॥
स्निग्ध्यधावल्ययुक्ताक्षं चलत्पिङ्गजटाधरम् ॥ १६ ॥
चन्द्रकान्तं प्रभुं कृष्णभ्रूश्मश्रुकनीनिकम् ॥
भावशुद्धद्विजाकीर्णं प्रसन्नमुखपङ्कजम् ॥ १७ ॥
सिद्धासनसमासीनं वराभयदसत्करम् ॥
क्षणेक्षणेऽपि स्वभक्तस्मृतिगामिनमीश्वरम् ॥ १८ ॥

तत्र तत्राण्वादौ । अणिमादिसिद्धिः ॥९॥१०॥११॥ क्ष्मादौ पञ्चभूतेषु ॥१२॥१३॥१४॥१५॥१६॥१७॥१८॥१९ ॥ सदा 'सर्वैकान्याकिम्'

अनुग्रहाख्यहृत्स्थेन्दुज्ञापितस्मितचन्द्रिकम् ॥
सदाखण्डसमाधिख्यं दत्तात्रेयं दिगम्बरम् ॥ १९ ॥
आसेचनकमूर्तिं तं सदापादादधृदामुखम् ॥
ध्यायेत्समाहितो योगी निवृत्ताखिलवृत्तिकः ॥ २० ॥
इदं तु सगुणध्यानं स्वेच्छोपात्तचिदात्मनः ॥
निर्गुणं केवलं ह्यस्यं सच्चित्सुखमयं परम् ॥ २१ ॥
ध्यातृध्यानध्येयरूपः समाधिः सविकल्पकः ॥
जीवात्मपरमात्मैक्यावस्था त्रिपुटिवर्जिता ॥ २२ ॥
परिपूर्णानन्दरूपा शुद्धचिद्रूपिका परः ॥
पश्चात्स्मृत्यनुमेयात्मार्थवृत्तय इहानुगाः ॥ २३ ॥
अन्तर्लीनसहृत्प्राणोऽपश्यन्नचलदृग्बहिः ॥
मुद्रेयं वैष्णवी शून्या शून्यलक्ष्मपदप्रदा ॥ २४ ॥
तद्वान्दृढासनो दक्षकर्णे रुद्धबिलो ध्वनिम् ॥
त्रिग्रन्थिभेदं शृणुयात्सुसूक्ष्मं स समाधिभाक् ॥ २५ ॥

इति दाप्रत्ययः 'सर्वस्य सोऽन्यतरस्यां दि' इति सर्वशब्दस्य सभावः । आसेचनकं अत्याह्लादकं 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' इत्युक्तेः ॥ २० ॥ २१ ॥ २२ ॥ एतावन्तं कालं समाहितोऽभवमिति स्मरणादनुमीयते यद्यत्स्मर्यते तत्तदनुभूतमिति व्याप्तेरात्मा विषयो यासां ता वृत्तयः समाध्युत्तरमनुगतास्तत्कालप्रयत्नाभावेऽपि पूर्वाभ्यासानुवृत्तित्वात् ॥ २३ ॥ २४ ॥ तद्वान्वैष्णवीमुद्रायुक्तः । रुद्धबिलः षण्मुखीमुद्रायुक्तः । ब्रह्मविष्णुरुद्राख्यास्तिस्रो ग्रन्थयस्तद्भेदकम् ॥ २५ ॥ लीना-

अर्धोन्मीलितदृक्स्वस्थो नासाग्राक्षो वशी भजेत् ॥
लीनार्केन्दुः परं तत्त्वं तद्बाह्यान्तरवर्जितम् ॥ २६ ॥
एवमभ्यासयोगेन खेचरीमुद्रयापि च ॥
मनःस्थिरीभावरूपाऽवस्था सिद्ध्येन्मनोन्मनी ॥२७॥
शक्तिमध्ये मनः कृत्वा शक्तिं चापि मनोगताम् ॥
मनसा मन आलोक्य योगी नित्यं सुखी भवेत् ॥२८॥
आकाशमध्य आत्मानमात्मन्याकाशमेव च ॥
कृत्वाकाशमयं सर्वं चिन्तयेन्न किमप्यतः ॥ २९ ॥
बाह्यचिन्ता न कर्तव्या तथैवान्तराचिन्तनम् ॥
परित्यज्याखिलां चिन्तां चिन्मयं भावयेत्परम् ॥३०॥
योगेनेत्थं लीयमानं मनो ब्रह्मणि लीयते ॥
कर्पूरोऽग्नाविवाब्धौ च लवणं ख इवान्यखे ॥ ३१ ॥
ज्ञेयं सर्वप्रतीतं च तज्ज्ञानं मन उच्यते ॥
मनोलयो ज्ञानवस्तुपरित्यागात्ततोऽमृतम् ॥ ३२ ॥
योगो ज्ञानं च मनसो नाशस्य द्वौ क्रमौ परौ ॥
योगो हृद्वृत्तिरोधोऽत्र ज्ञानं सम्यगवेक्षणम् ॥ ३३ ॥

र्केन्दुः श्वासोच्छ्वासरहितः ॥२६॥ २७ ॥ २८ ॥ २९ ॥ चिदित्यत्रानन्दादयः प्रधानस्येति गुणा ग्राह्याः । ते चानन्दो ब्रह्म विज्ञानं ब्रह्म नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुश्चित्प्रत्यगेकरस इति विधेया गुणाः 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ॥ अनाद्यनन्तम्' इति 'यत्तदद्रेश्यमग्राह्यमगोत्रमचक्षुःश्रोत्रं तदपाणिपादम्' इत्याद्या निषेध्याः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

चित्तवृत्तिनिरोधस्तु मनःस्पन्दोपशान्तिदः ॥
मनःस्पन्दोपशान्त्यायं संसारः प्रविलीयते ॥ ३४ ॥
शास्त्रसज्जनसंपर्कवैराग्याभ्यासयोगतः ॥
धैर्येण चास्यया पूर्ववासनातानबाद्धठात् ॥ ३५ ॥
सद्भक्त्या भगवद्ध्यानाच्चिरमेकान्तमोदितात् ॥
अखेदमनिलाभ्यासात्परतत्त्वैकचिन्तनात् ॥ ३६ ॥
ॐकारोच्चारणाद्दीर्घं घण्टिकाक्रमणाद्वा ॥
शक्तिसंचालनात्प्राणमनःस्पन्दो निरुध्यते ॥ ३७ ॥
इतरत्र न कर्तव्या मनोवृत्तिर्मनीषिणा ॥
उक्ताभ्यासेन विज्ञेयं तद्विष्णोः परमं पदम् ॥ ३८ ॥
द्वादशाङ्गुलपर्यन्तं नासाग्रे विमलाम्बरे ॥
संविद्दृशि प्रशाम्यन्त्यां हृत्प्राणस्पन्दरोधनम् ॥ ३९ ॥
भ्रूमध्ये तारकालोकनाशादन्त उपागते ॥
केतने चेतने बद्धे हृत्प्राणस्पन्दरोधनम् ॥ ४० ॥
ओमित्येव यदुद्भूतं ज्ञानज्ञेयात्मकं शिवम् ॥
विभावयेन्निर्विकल्पस्तेन प्राणो निरुध्यते ॥ ४१ ॥
चिरकालं धियैकान्तं व्योमसंवेदनाद्दृढम् ॥
निर्वासनमनोधृत्या सुखात्प्राणो निरुध्यते ॥ ४२ ॥
इत्यथर्वोदितो योगः संक्षेपेणात्र दर्शितः ॥
विशेषाभ्यासापेक्षायां मूले सम्यग्विलोक्यताम् ॥ ४३ ॥

आस्या आसनस्थितिः ॥३५॥३६॥ गवा जिह्वया ॥३७॥३८॥३९॥
केतने भ्रूमध्ये ॥४०॥ यतः प्रतीचः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

लीनः सपञ्चविपलद्विपलं ब्रह्मरन्ध्रगः ॥
प्राणः प्राणायाम एष वर्धमानस्ततः परः ॥ ४४ ॥

प्रत्याहारः पलैः पञ्चविंशत्यानिन्द्रियार्थवित् ॥
धारणा पञ्चनाडीभिर्ध्यानं षष्टिघटीमितम् ॥ ४५ ॥

समाधिर्द्वादशदिनसाध्यः परमदुर्लभः ॥
वासनाजालहा धर्ममेघः सर्वकृतान्तकृत् ॥ ४६ ॥

यमेन दशधा नूनं दशधा नियमेन च ॥
आसनाद्येन षट्केन योगोऽष्टाङ्गोऽयमुच्यते ॥ ४७ ॥

एतेनाष्टाङ्गयोगेन मनोनाशेन योगिराट् ॥
वासनातानवेनाशु तत्त्वज्ञानेन मुच्यते ॥ ४८ ॥

योगो हृद्वृत्तिरोधो हीत्युक्तमत्र महर्षिणा ॥
पातञ्जलाभिधो योगः सुखस्तेनात्र सूचितः ॥४९॥

स हृद्वृत्तिनिरोधाख्यः सुखोपि बहुसंमतः ॥
प्रसंगेनेह संक्षेपाज्ज्ञानसिद्ध्यर्थमुच्यते ॥ ५० ॥

'क्षणमेकं क्रतुशतस्यापि' इति श्रुतेः । 'धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः । वर्षत्येष यतो धर्मामृतधाराः सहस्रशः ॥ अमुना वासनाजाले निःशेषं प्रविलापिते ॥ समूलोन्मूलिते पापपुण्याख्ये कर्मसंचये' इत्यभियुक्तोक्तेः कृतस्य कर्मणोन्तकः ॥ ४६ ॥ ४७ ॥ 'आत्माऽसङ्गस्ततोऽन्यत्स्यादिन्द्रजालं तु मायिकम् ॥ इत्यचञ्चलनिर्णीते कुतो मनसि वासना' इति वक्तुं तत्त्वज्ञानेनेत्युक्तम् ॥ ४८ ॥ ४९ ॥ ५० ॥ इति श्रीमद्-

इति श्रीमद्दत्तात्रेयपुराणे त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां प्रथमाष्टके ज्ञानकाण्डेऽष्टमोऽध्यायः ॥ ८ ॥

त्तात्रेयपुराणे त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां ज्ञानकाण्डे प्रथमाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥ प्रथमाष्टकः संपूर्णः ॥

इति श्रीदत्तपुराणे योगकथनं नाम प्रथमाष्टके अष्टमोऽध्याय ॥ १ । ८ ॥

इति श्रीदत्तपुराणे प्रथमाष्टकः समाप्तः ॥

---

# अथ दत्तपुराणे द्वितीयाष्टकप्रारम्भः ॥

## ॥ अथ योगविवरणं नाम द्वितीयाष्टके प्रथमोऽध्यायः ॥ २ । १ ॥

**ॐ प्रवरेतरहृद्वृत्तिनिरोधो योग उच्यते ॥**
**संप्रज्ञातेतरौ योगौ धर्मौ चित्तस्य पञ्च च ॥ १ ॥**
**भुवो मूढक्षिप्तविक्षिप्तैकाग्र्यविनिरुद्धकाः ॥**
**तिस्रो बन्धाय मुक्त्यै द्वे योगिनामीशसेविनाम् ॥ २ ॥**

॥ श्रीगणेशाय नमः ॥

सम्यग्दर्शनाभ्युपायो हि योगः 'श्रोतव्यो मन्तव्य' इति वेदविहितत्वात् 'त्रिरुन्नतꣳ स्थाप्य समꣳ शरीरम्' इत्याद्यासनकल्पनापुरःसरं श्वेताश्वतरादौ श्रुतत्वात् 'तां योगामिति मन्यन्ते स्थिरामिन्द्रियधारणाम्' इति स्थिरेन्द्रियधारणाया योगसाध्यत्वात् 'अथ तत्त्वदर्शनोपायो योगः' इत्याद्युक्तेरत्र पञ्चपञ्चाशता श्लोकैर्योग उच्यते। अस्य स्वातंत्र्येण शास्त्रत्वाद्यथार्थव्याख्याने ग्रन्थविस्तरभिया पृथग्व्याख्याचिकीर्षया टीका संकुच्यते। प्रवराः सात्त्विक्यः क्षान्तिवैराग्याद्यास्ताभ्य इतरा या हृद्वृत्तय इत्युच्यन्ते संप्रज्ञात इतरोऽसंप्रज्ञात इति च द्वौ योगौ चित्तस्य धर्मौ ज्ञातव्यौ पञ्च भुव इत्यग्रिमेण संबध्यते ॥ १ ॥ योगार्थचित्तभूमिका आह। मूढा निद्रालस्यप्रमादमयी आसुरी। क्षिप्ता विषयेन्द्रियसंयोगजन्यसुखवती दैवी। क्षिप्ताया विशिष्टा विक्षिप्ता कदाचिद्वैराग्योपरत्यादियुक्ता कदाचिद्विषयासक्तता। ऐकाग्र्यमनन्यवृत्तिका। विनिरुद्धा सर्ववृत्तिशून्या चेति चित्तस्य पञ्च भुवः। तत्राद्यभुवोर्योगशङ्कापि नैव। तृतीयायां कादाचित्कादपि योगस्यासंभवान्मूढानां तिस्रो भुवो बन्धायैव भवन्ति चतुर्थीपञ्चम्यौ द्वे मुक्तये भवतः ईशसेविनां योगिनां यमादिनियम-

शान्तोग्रमूढवृत्त्यूने चित्ते नित्यैकरूपिणः ॥
स्वरूपेऽवस्थितिर्द्रष्टुर्वृत्तिसारूप्यमन्यतः ॥ ३ ॥

क्लिष्टाक्लिष्टभिदा पञ्च वृत्तयोऽत्र प्रमाणकाः ॥
वेदानुमानप्रत्यक्षरूपाद्याथ विपर्ययः ॥ ४ ॥

मिथ्याज्ञानमतद्रूपप्रतिष्ठं क्लेशयुक्तथा ॥
शब्दज्ञानानुपाती तु वस्तुशून्यो विकल्पकः ॥ ५ ॥

अभावप्रत्ययालम्बा निद्रा सा तु तमोमयी ॥
अनुभूताऽसंप्रमोषः स्मृतिस्तासां निरोधनम् ॥ ६ ॥

वतामेव नान्येषां बहिर्मुखानाम् 'ईश्वरप्रणिधानाद्वा' इत्युपक्रम्य 'तज्जपस्तदर्थभावनम्' इति प्रणवजपमुपदिश्य 'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' इति निर्विघ्नतया योगसिद्धेरुक्तत्वादीशसेविनामित्युक्तम् । श्रुतिस्मृत्यादिष्वपि योगसिद्ध्यर्थमीश्वरसेवनमुक्तं 'युञ्जते मन उत युञ्जते धियः' 'योगिनामपि सर्वेषाम्' इत्यादि ॥ २ ॥ वैराग्यक्षान्त्यौदार्याद्याः शान्ताः, कामक्रोधलोभयत्नाद्या उग्राः, आलस्यभ्रान्तितन्द्राद्या मूढाः, एताः सत्त्वादिवृत्तयस्ताभिरूने चित्ते सदैकरूपिणः पुरुषस्य द्रष्टुः साक्षित्वेनावस्थितस्य दृग्रूपस्य स्वरूप एवावस्थितिः । अतोऽन्यतो वृत्तिमत्त्वे तस्य वृत्तिसारूप्यं जपापुष्पादिनेव स्फटिकस्य ॥ ३ ॥ ताश्च वृत्तयः क्लिष्टाक्लिष्टभेदेन पञ्च । तत्राद्या शब्दानुमानप्रत्यक्षप्रमाणरूपा । द्वितीया विपर्ययाख्या वक्ष्यमाणक्लेशयुक्ता रज्जुसर्पवन्मिथ्याज्ञानरूपा । तृतीया शशशृङ्गवद्वस्तुशून्या शब्दज्ञानानुपातिविकल्परूपा ॥ ४ ॥ ५ ॥ चतुर्थी अभावप्रत्ययालम्बनरूपा तमःप्रचुरा । पञ्चमी अनूभूतविषयास्तेयरूपा स्मृतिः ॥ ६ ॥ वैराग्याभ्यासाभ्यां तासां

वैराग्याभ्यासतस्तत्र विरजोवृत्तिहृत्स्थितौ ॥
यमाद्यनुष्ठानरूपो यत्नोऽभ्यासश्चिरं स तु ॥ ७ ॥
सत्कारसेवितो नित्यं दृढः स्याच्चापराजितः ॥
सत्काराः स्युर्ब्रह्मचर्यश्रद्धाविद्यातपोमुखाः ॥८॥
यतमानं हृन्मलान्तो गतैष्यमलनिश्चयः॥
व्यतिरेको हृदि लयोत्कण्ठैकेन्द्रियसंज्ञकम् ॥ ९ ॥
वशीकारो दृष्टादृष्टार्थवैतृष्ण्यं चतुर्विधम् ॥
वैराग्यमाद्यं पुंज्ञप्तेर्गुणवैतृष्ण्यमुत्तमम् ॥ १० ॥
स्थूलस्यैकाग्र्यं वितर्को विचारोऽल्पस्य चिन्तनम् ॥
आनन्दः स्थूलविषयी सत्त्वप्रत्यक्षविन्मतेः ॥ ११ ॥

पञ्चवृत्तीनां निरोधनं योगः । तत्र वैराग्याभ्यासमध्ये रजोगुणवृत्तिविरहितायां उपलक्षणात्तामसीवृत्तिरहितायां च हृत्स्थितौ यमाद्यष्टाङ्गयोगानुष्ठानरूपो यो वक्ष्यमाणो यत्नः सोऽभ्यास इत्युच्यते ॥ ७ ॥ सच चिरकालं वक्ष्यमाणब्रह्मचर्यादिसत्कारसेवितश्चेद्विघ्नाद्यैरपराजितो दृढो भवेत्। ब्रह्मचर्यमष्टाङ्गमैथुनवर्जनम् । श्रद्धाऽऽस्तिक्यबुद्धिः विद्या औपनिषदज्ञानं । तपः कृच्छ्रादि आलोचनं वा तत्प्रभृतयः सत्कारा उच्यन्ते ॥ ८ ॥ अपरं वैराग्यमाह । तच्च द्विविधं । तत्र प्रथमं चतुर्धा भेदभिन्नं तावदुच्यते । रागद्वेषादिचित्तमलनाशकं प्रथमं । गतैष्यमलनिश्चयावधारणं व्यतिरेकसंज्ञं द्वितीयं । हृदि लयोत्कण्ठारूपं तृतीयम् ॥ ९ ॥ ऐहिकामुष्मिकविषयवैतृष्ण्यं चतुर्थं । एव चतुर्विधमेकम् । अपरं तु पुरुषज्ञप्तेर्गुणवैतृष्ण्यं वितर्काद्यनुगृहीतं उत्तमं स्यात् ॥१०॥ स्थूलस्यैकाग्र्यसंपादनं वितर्कः । अल्पस्य चिन्तनं विचारः । बुद्धिः स्थूलविषयिसत्त्वप्रत्यक्षविज्ञानमानन्दः ॥ ११ ॥ बुद्धेः पुरुषेण सहैक्याद्यो-

पुंस्त्वैक्यादस्मितायोगात्साक्षात्तद्ध्यानजं त्विति ॥
परिपक्कास्त्रिपुटयैते संप्रज्ञातस्तदन्वयात् ॥ १२ ॥
वृत्त्यभावे विरामस्तत्प्रत्ययो विरतिः परा ॥
तदभ्यासादिः संस्कारविशेषः सात्त्विकोऽपरः ॥१३॥
अयं विदेहप्रकृतिलयानां भवहेतुकः ॥
गोभूताहंकृतिमहत्प्रकृत्यात्मात्मचिन्तकः ॥ १४ ॥
मन्वन्तराणां दशकमारभ्यात्र विलीयते ॥
दशोत्तरे गुणं नैति लीनो यो निर्गुणे पुनः ॥ १५ ॥
श्रद्धायत्नक्रमध्यानसमाधिप्रज्ञकादिकः ।
उपायप्रत्ययोऽसंप्रज्ञातोऽन्येषां तु योगिनाम् ॥ १६ ॥
मृदुमध्याध्युपायास्ते नव तत्सिद्धयेऽपि च ॥
आसन्नस्तीव्रविरतेस्तारतम्यात्तथान्यतः ॥ १७ ॥

ऽस्मिताख्यो योगस्तध्यानजः सोऽस्मिताख्यः एते वितर्कादयः परिपक्वा भवन्ति चेत् त्रिपुट्या तदन्वयात्संप्रज्ञातसिद्धिः ॥१२॥ विरामप्रत्ययाभ्यासादिः संस्कारविशेषोऽसंप्रज्ञातः ॥१३॥ अयं विदेहप्रकृतिलयानां पुनर्जन्महेतुको भवति । तत्प्रपञ्च्यते गोभूतेति । गाव इन्द्रियाणि तत्प्रभृतिचिन्तको यथाक्रमं मन्वन्तरदशकमारभ्योत्तरोत्तरं दशगुणं गवादिषु विलीयते । तर्ह्यपुनरावृत्तिलक्षणा मुक्तिः कथमित्यत आह । यो निर्गुणे ब्रह्मणि लीयते स पुनर्नागच्छति ॥ १४॥१५ ॥ स च निर्गुणे लयकारकोऽसंप्रज्ञात इतरेषां योगिनां श्रद्धादिपूर्वक उपायप्रत्ययो भवति ॥ १६ ॥ ते चोपाया मृदुमध्याधिमात्रत्वेन नव भवन्ति । तेषां तारतम्येन सिद्धयोपि नव । अयं च तीव्रवैराग्यस्यासन्न एव भवति अन्येषां वैराग्यानुसारेण तारतम्यं योज्यम् ॥ १७॥ ईश्वरे प्रकर्षेण निधानं कृतस्य कर्मणः समर्पणं

ईश्वरप्रणिधानाद्वा पुंविशेषः स ईश्वरः ॥
अविद्यादिक्लेशकर्मफलाशयविवर्जितः ॥ १८ ॥

सर्वज्ञबीजं निःशेषमनवच्छिन्नसद्गुरौ ॥
प्रणवस्तद्वाचकस्तज्जपस्तदर्थस्य भावनम् ॥१९॥

ततः प्रत्यक्त्वचैतन्यज्ञानं विघ्नात्ययस्ततः ॥
व्याधिस्त्यानभ्रान्तिदृष्टिप्रमादालस्यसंशयाः ॥ २० ॥

भूम्यलाभमनोस्थैर्ये विरतिर्योगघातकाः ॥
तन्मूलाश्चित्तविक्षेपदौर्मनस्यव्यथादयः ॥ २१ ॥

तन्नाश ईशभक्त्यैव सुख्यकिक्षेमिपापिषु ॥
मैत्रीदयाप्रीत्युपेक्षाभावनाद्धृत्प्रसादनम् ॥ २२ ॥

प्राणरेचनधृत्या वा प्रवृत्तिर्वाऽर्थवत्यपि ॥
यद्यशोका वा हृत्पद्मे ज्योतिष्मत्यथवा हृदि ॥ २३ ॥

तस्माद्वाप्यासन्नो ज्ञेयः । क ईश्वर इत्यपेक्षायामाह । विद्यादिवर्जितः पुरुषविशेष ईश्वरः ॥ १८ ॥ यस्मिन्नपरिच्छिन्ने सतां ब्रह्मादीनां गुरौ निरतिशयं सर्वज्ञबीजं तस्य वाचक ओंकारस्तेन तस्येश्वरस्य भावनारूपो जपः कार्यः ॥ १९ ॥ ततो जपात्प्रत्यग्रूपं यच्चैतन्यं तस्य विज्ञानं भवेत्ततो विघ्नाभावः । के ते विघ्ना इत्यत आह व्याधीति ॥ २० ॥ एते योगघातकास्त एव मूलं येषां ते चित्तविक्षेपादयः ॥ २१ ॥ सुखिषु मैत्री दुःखिषु दया क्षेमिषु प्रीतिः पापिषूपेक्षेत्येवं भावनाच्चित्तप्रसादो भवेत् ॥ २२ ॥ प्राणायामेन वा हृत्प्रसादनं । सगुणविषयवृत्तिर्हृदि प्रकटिता ज्योतिष्मती वा हृत्प्रसादकर्त्री ॥ २३ ॥ यद्वा विरक्तेषु चित्ते

वीतरागिस्थिते निद्रास्वप्नज्ञानावलम्बिते ॥
बाढं ध्यायत्यभीष्टं वा स्थूलाद्यण्वन्तवस्तु वा ॥ २४ ॥
मणिवद्ग्राह्यग्रहणग्रहीतृस्थविवृत्तिहृत् ॥
या तदञ्जनता प्रोक्ता समापत्तिश्चतुर्विधा ॥ २५ ॥
सवितर्कात्र शब्दार्थविद्विकल्पैर्विमिश्रिता ॥
स्मृतिशुद्धौ विरूपे वार्थैकभासापरानया ॥ २६ ॥
सविचारान्या च सूक्ष्मार्थोक्तास्याः सूक्ष्मकार्थता ॥
आप्रधानं तु ता एव समाधिः स्यात्सबीजकः ॥ २७ ॥
निरूहस्वास्थ्ये त्वध्यात्मप्रसादोऽत्र ऋतंभरा ॥
प्रज्ञा श्रुतानुमानान्यार्थशेषार्थत्वतो भृशम् ॥ २८ ॥
संस्कारस्तद्भवो ह्यन्यबाधकस्तन्निरोधने ॥
सर्वप्रज्ञानिरोधाद्धि स्यान्निर्बीजः समाधिरुत् ॥ २९ ॥

स्थापिते यद्वा निद्रास्वप्नसाक्षित्वज्ञानावलम्बिते चित्तेऽभीष्टदेवप्रतिमां ध्यायति वा स्थूलादिक्रमेणाण्वन्तवस्तु ध्यायति वाऽनायासेन चित्तप्रसादः ॥ २४ ॥ ग्राह्यग्रहणग्रहीतृस्थं यत्क्षीणवृत्तिकं चित्तं तदञ्जनता चतुर्विधा समापत्तिः ॥ २५ ॥ तत्र शब्दार्थज्ञानमिश्रिता सवितर्काख्या प्रथमा । स्मृतिशुद्धौ सत्यां विरूपा स्वरूपशून्येवार्थमात्रभासा द्वितीया निर्वितर्का ॥ २६ ॥ अनया निर्वितर्कयैव तृतीया सविचारा सूक्ष्मविषया । चतुर्थी निर्विचारा चोक्तप्राया ज्ञेया । अस्या निर्विचारायाः सूक्ष्मार्थताऽलिङ्ग-पर्यवसानं सूक्ष्मविषयत्वं ता एवाप्रधानं सबीजसमाधिः ॥ २७ ॥ निरूह-स्वास्थ्ये निर्विचारवैशारद्येऽध्यात्मप्रसादो ज्ञेयः । अत्र समाधौ प्रज्ञा ऋतंभरा निर्बाधा ब्रह्मैकाकारा भवति नान्यत्र ॥ २८ ॥ तज्जन्यः संस्कारोऽन्यार्थबाधकः । तन्निरोधे सर्वप्रज्ञानिरोधान्निर्बीजः समाधिः ॥ २९ ॥

क्रियातपोजपेशार्चाः सिद्ध्यै क्लेशहराश्च ते ॥
पञ्चाविद्यास्मितारागद्वेषश्चाभिनिवेशकः ॥ ३० ॥
आद्यान्यहेतुर्विच्छिन्नसुप्तोदारकृशाः परे ॥
अनित्याशुचिदुःखानात्मस्वविद्यान्यभावना ॥ ३१ ॥
यद्दृग्दर्शनशक्त्योस्तु तादात्म्यमिव साऽस्मिता ॥
स्यात्सुखानुशयी रागो द्वेषो दुःखानुशय्यथ ॥ ३२ ॥
स्वारस्यवाही ज्ञस्यापि तथारूढस्तु पश्चिमः ॥
प्रतिप्रसवहेयास्ते सूक्ष्मास्तद्वृत्तयः पुनः ॥ ३३ ॥
ध्यानहेया मलसमाः क्लेशमूलः क्रियाशयः ॥
स्वदृष्टादृष्टजननवेदनीयो यथायथम् ॥ ३४ ॥
सति मूले तद्विपाको जात्यायुर्भोगजोऽत्र सः ॥
पुण्यापुण्यनिदानत्वाद्धर्षतापफलः स्मृतः ॥ ३५ ॥

तत्सिद्धये क्रियाद्यास्ते क्लेशहरा अपि भवन्ति तेऽविद्यायाः पञ्च क्लेशाः ॥ ३० ॥ आद्याऽविद्यान्येषामस्मितादीनां हेतुः विच्छिन्नास्तिरस्कृता उदारा स्पष्टाः कृशाः क्षीणा अनित्यादिषु यथासंख्यं नित्यादिभावनैवाविद्या ज्ञेया ॥ ३१ ॥ दृग्दर्शनशक्त्योर्बुद्धितत्त्वं तादात्म्यमिव यत्सैवास्मिता सुखानुशयी सुखानुस्मरणजन्यः ॥ ३२ ॥ ज्ञस्य बुधस्यापि स्वारस्यवाही संस्कारवाही पश्चिमोऽभिनिवेशाख्यः पञ्चमक्लेशः ॥ ३३ ॥ प्रतिलोमपरिणामद्वारा ते हातुं योग्याः । यतस्ते वस्त्रलग्नमलसमाः । कर्माशयो धर्माधर्मादिरूपः क्लेशमूलः दृष्टमैहिकमदृष्टं पूर्वजन्म ताभ्यां वेदनीयः ॥३४॥ क्लेशरूपे मूले सति जात्यादिरूपं तत्फलम् ॥३५॥ परिणामताप-

परिणामतापसंस्कृतिदुःखैर्गुणदोषवैराच्च ॥
सर्वं विवेकिनामकमेव हि हेयं त्वनागतं दुःखम् ॥३६॥
द्रष्टृदृश्ययोर्हेयहेतुः संयोगो दृश्यमत्र तु ॥
क्रियाप्रकाशसंबन्धशीलं भूतेन्द्रियात्मकम् ॥ ३७ ॥
क्रमाद्भोगापवर्गार्थं गुणपर्वचतुष्टयम् ॥
विशेषसामान्यलिङ्गमात्रालिङ्गानि चेति हि ॥ ३८ ॥
द्रष्टा चिन्मात्रः शुद्धोपि प्रत्ययेनानुपश्यवत् ॥
दृश्यं तु द्रष्टृभोगार्थं कृतार्थस्याप्यदृश्यकम् ॥ ३९ ॥
दृश्यं तदन्यसामान्यात्तत्प्रत्येकेमृतं स्वतः ॥
संयोगः स्वस्वामिशक्तिस्वरूपप्राप्तिहेतुकः ॥ ४० ॥
अविद्या संयोगहेतुस्तदभावे न संयुजिः ॥
ततो मुक्तदृशेर्मोक्ष उपचारोऽयमात्मनि ॥ ४१ ॥

संस्कारदुःखैर्गुणवृत्तिविरोधाच्च विवेकिनां विषयसुखमपि दुःखम् ॥ ३६ ॥ संयोगो भोक्तृभोग्यरूपेण सान्निध्यम ॥ ३७ ॥ शब्दादिपञ्चतन्मात्रात्मिकाः सत्त्वादेः सामान्यावस्थाः आकाशादिरूपा विशेषा महत्तत्त्वं लिङ्गमात्रावस्था परा लिङ्गमात्रैवं गुणपर्वचतुष्टयम् ॥ ३८ ॥ द्रष्टा पुरुषः चिन्मात्रोपि बुद्धिवृत्तितो जपासान्निध्यात्स्फटिकवदद्रव्यानुपश्यवत् अलिप्त एव वस्तुत इति भावः । कर्तृत्वाभिमानवासनातोऽस्य परिच्छिन्नस्य द्रष्टुर्भोगार्थमिदं दृश्यं तत्तु कृतार्थस्यादृश्यमेव । एवार्थेऽपिः ॥ ३९ ॥ यस्येदगनुभवः स एव मुक्तो नान्य इत्येकमुक्त्या सर्वमुक्तिरिति पक्षः प्रत्युक्तः । भोक्तृभोग्यसंयोगस्तु पुरुषो भोक्ता प्रधानं भोग्यं इति कारणीभूतः ॥ ४० ॥ अत्र संयोगहेतुरविद्यैवातस्तां प्रयत्नेन जह्यात्तज्जये न संयोगः मोक्षस्य नित्यत्वादात्मन्ययमुपचारः ॥४१॥ याऽविप्लवात्रिच्छिन्ना विवेकस्य ख्यातिरुदयः

हानोपायोऽविप्लवा या त्विवेकख्यातिरुत्तमा ॥
योगिनस्तस्य तु प्रज्ञा सप्तधा प्रान्तभूमिका ॥ ४२ ॥

आविवेकाज्ज्ञानदीप्तिर्योगाङ्गैरशुचिक्षये ॥
यमा अहिंसासद्ब्रह्मचर्यास्तेयापरिग्रहाः ॥ ४३ ॥

ते देशकालसमयजात्यच्छिन्ना महाव्रताः ॥
लोभक्रुण्मोहजास्ते तु कृतानुमतमोदिताः ॥ ४४ ॥

दुःखज्ञानानन्तफला मृदुमध्याधिमात्रकाः ॥
नियमाः शौचसंतोषदेवभक्तितपांसि तु ॥ ४५ ॥

वितर्कभावने चिन्त्यं प्रतिपक्षविभावनम् ॥
स्वाग्रेऽवैरं त्वहिंसायां सत्ये सिद्धे फलागमः ॥४६॥

स एवाविद्याहानोपायः तस्य योगिनः सप्तधा प्रान्तभूमिका आद्याभिश्चतसृभिः कार्यविमुक्तिः शिष्टाभिश्चित्तविमुक्तिः । सप्तभूमयो वासिष्ठ उक्ताः ॥ ४२ ॥ यमादियोगैरशुचिक्षये सति विवेकपर्यन्तं ज्ञानदीप्तिः अष्टाङ्गयोगं वक्तुं तावद्यमानाह । अहिंसाद्याः पञ्च यमाः सत्सत्यम् ॥ ४३ ॥ गवादेर्हिंसा नाजादेरिति जात्यवच्छिन्ना । तीर्थे हिंसा दुर्वारा नान्यत्रेति देशावच्छिन्ना । श्राद्धादिसमये हिंसा वर्ज्या नान्यदेति कालावच्छिन्नेत्यादि सर्वत्र यथायथमूह्यम् । अहिंसादयो देशकालजात्यनवच्छिन्ना एव महाव्रता भवन्ति ॥ ४४ ॥ शौचादयः पञ्च नियमाः ॥ ४५ ॥ हिंसादिवितर्कभावने तत्प्रतिपक्षभावनमहिंसादिरूपं चिन्त्यम् । तत्फलमाह । अहिंसायां प्रतिष्ठायां स्वसंनिधौ शाश्वतिकविरोधानामप्यवैरं सत्ये सिद्धे क्रियाफलम्

वीर्यं वार्णित्वेऽस्तेयेऽर्थागमोऽन्त्ये जन्मवेदनम् ॥
शौचात्स्वाङ्गजुगुप्सान्यासंसर्गस्त्वान्तराल्लघु ॥ ४७ ॥

सौमनस्येन्द्रियजयहृत्स्थैर्यात्मदृगर्हता ॥
संतोषाद्वरसौख्याप्तिस्तपसोऽक्षाङ्गिसिद्धिरुत् ॥ ४८ ॥

स्वाध्यायादिष्टदेवाप्तिः समाधिर्देवभक्तितः ॥
आस्यास्थिरसुखं यत्नविरामाच्छेषचिन्तया ॥ ४९ ॥

द्वन्द्वाभावस्ततोऽथास्वायामो वायुगतिक्षतिः ॥
रेचकैः पूरकैः कुम्भैर्देशकालप्रमाणतः ॥ ५० ॥

दीर्घः परिवृढः सूक्ष्मस्त्रय एते चतुर्थकः ॥
बाह्यान्तर्विषयाक्षेपी ततः सत्त्वावृतिक्षतिः ॥ ५१ ॥

॥ ४६ ॥ ब्रह्मचर्ये वीर्यलाभः अस्तेये सर्वधनलाभः अन्त्येऽपरिग्रहस्थैर्ये जन्मकारणबोधः बाह्याच्छौचात्स्वाङ्गजुगुप्साऽन्यासंसर्गश्च ॥ ४७ ॥ आन्तराच्छौचाल्लघु शीघ्रमेव सौमनस्येन्द्रियजयो हृत्स्थैर्यात्मदर्शनयोग्यता च संतोषादुत्तमसुखलाभः। तपःसिद्धेः शरीरेन्द्रियसिद्धिः ॥ ४८ ॥ सिद्धात्प्रणवादिस्वाध्यायादिष्टदेवप्राप्तिः। देवभक्त्या समाधिसिद्धिः। पूर्वमुक्ताया अपि प्रसङ्गकथनतो न पुनरुक्तिदोषः। शेषध्यानादृढप्रयत्नतश्चासनस्थितेर्यात्स्थिरसुखं तदासनमुच्यते ॥ ४९ ॥ आसनस्थैर्यात्सुखदुःखादिद्वन्द्वैः देहानभिघातः। ततो वायुगतिक्षयः श्वासनिरोधनं प्राणायामः देशकालप्रमाणतो रेचकुम्भपूरात्मकः ॥ ५० ॥ बाह्यान्तर्विषयाक्षेपकश्चतुर्थः। ततः सत्त्वावरणक्षयः ॥५१॥ आवरणक्षयानन्तरं

ततो हृद्धारणायोग्यं चित्तवृत्तानुकारवत् ॥
प्रत्याहारस्वार्थायोगे तत इन्द्रियवश्यता ॥ ५२ ॥
नाभ्यादिदेशे हृत्स्थैर्यं धारणाभीष्टचिन्तया ॥
प्रत्ययैकाग्रता तत्र ध्यानं ज्ञेयं तदेव तु ॥ ५३ ॥
रूपशून्यमिवार्थैकभासमङ्गसमाधिकः ॥
संयमस्त्रयमेकत्र प्रज्ञालोकस्तु तज्जयात् ॥ ५४ ॥
विनियोगस्तस्य भूमिष्वन्तरङ्गमिदं त्रयम् ॥
बहिरङ्गं त्वबीजस्य सिद्धिदः क्लेशहृत्स च ॥ ५५ ॥
इति द्वितीये प्रथमः ॥

धारणाक्षमं मनो भवति । स्वविषयविरहे इन्द्रियवश्यता प्रत्याहारः ॥५२॥ धारणामाह । नाभ्यादीति । धारणा तत्र धारणायां या प्रत्ययैकाग्रता तदेव ध्यानम् ॥५३॥ अङ्गसमाधिर्योगस्याष्टममङ्गं । धारणादित्रयं संयमः ॥५४॥ यमादिचतुष्टयं निर्बीजस्य बहिरङ्गं संयमोन्तरङ्गं स च निर्बीजः ॥५५॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां द्वितीयाष्टके ज्ञानकाण्डे योगप्रकरणं नाम प्रथमोऽध्यायः ॥ ॥ श्रीदत्त ॥

इति श्रीदत्तपुराणे योगप्रकरणं नाम द्वितीयाष्टके प्रथमोऽध्यायः ॥ २ । १ ॥

---

## अथ योगफलक्रममुक्त्यादिकथनं नाम द्वितीयाष्टके द्वितीयोऽध्यायः ॥ २।२ ॥

सुषुम्णाज्ञो नरः स्त्री वा युवा बालो जरन्नपि ।
योगाभ्यासेऽधिकारी स्यादभ्यासात्सिद्धिभागपि ॥१॥
सर्वेऽप्याश्रमिणो वर्णा योगाभ्यासेऽधिकारिणः ॥
भिक्षुर्विशेषान्नियतं ब्रह्मचर्यादि तस्य यत् ॥ २ ॥
यतेर्यस्योदरे भिक्षोर्योगाभ्यासेन जीर्यते ॥
गृहिणा दत्तमन्नं स तं तारयति नेतरः ॥ ३ ॥
योगी यस्य गृहे भिक्षुर्याति धन्यस्तदाश्रमः ॥
स भिक्षुर्यद्गृहे भुंक्ते तत्र भुंक्ते हरिः स्वयम् ॥ ४ ॥
यतः पराङ्मुखो भिक्षुस्ततो देवाः पराङ्मुखाः ॥
तस्माद्देयं किमप्यस्मै देवर्षिपितृतृप्तिदम् ॥ ५ ॥
यतयेऽन्नं ग्रासमात्रमाद्यन्तजलदानयुक् ॥
दत्तं चेन्मेरुजलधितुल्यं तदिति हि स्मृतम् ॥ ६ ॥

॥ श्रीगणेशाय नमः ॥

दशमे पूर्वोक्तयोगफलं प्रोक्तं समासतः ।
क्रममुक्त्यादिकं सर्वं जगज्जन्मादिकं तथा ॥१॥

योगे वयोजात्याद्यपेक्षा नास्तीत्याह द्वाभ्याम् ।सुषुम्णासरणिज्ञः । जरन्वृद्धः ॥१॥ २॥ तं गृहिणम्॥३॥४॥ यतो गृहात्॥५॥ अन्नं मेरुतुल्यं जलं समुद्र-

वासोऽन्नं च मितं देयं यतये सोऽधिकं यदि ॥
आदत्ते स्तेन एव स्यात्पापोऽन्नरसलोलुपः ॥ ७ ॥

धूर्तः शठो यतिर्भोगी शौचं ध्यानं विहाय यः ॥
व्रात्यवद्वर्तते सोऽज्ञो दुःखभागुभयत्र हि ॥ ८ ॥

संन्यासित्वं लोके सुदुर्लभं प्राप्य तद्योऽत्र ॥
तस्मात्प्रच्यवते चेद्याति चिरं दुर्गतिं स चान्यत्र ॥ ९ ॥

विशेषाद्यतिना तस्माद्योगाभ्यासेन चात्मनः ॥
प्राक्सिद्धरूपमाप्तव्यमधःपातोऽन्यथाऽस्य हि ॥ १० ॥

सत्योऽद्वैतोऽपि जीवोऽयमात्मांशोऽजोप्यविक्रियः ॥
अप्रमेयोऽव्ययोऽच्छेद्योऽदाह्योऽक्लेद्यो ह्यशोषकः ॥ ११ ॥

**तुल्यम्** ॥६॥ मितं देहनिर्वाहमात्रोपयोगि नाधिकं देयम् । स यतिर्यद्यधिकमा**दत्ते** तर्हि स्तेन एव । तथान्नरसलम्पटः पाप एव । रसासक्त्या विषयासक्तिसंभवात् ॥७॥ अन्यथाऽऽचारत्वे दण्डमाह । धूर्त इति । इह भोगवैभव**प्राकट्ये** लोकनिन्दातः परत्र शास्तुर्यमाच्चैवमुभयत्रापि क्लेशभाक् ॥ ८ ॥ **प्राक्सिद्धं** रूपं नतु स्वर्गवन्नूतनम् । 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतेः ॥९॥ ॥ १० ॥ सत्यो निर्बाधोऽद्वैतो द्वैतसंबन्धवर्जितः अयं स्वयंप्रकाशापरोक्षरूपः । अजो जन्मादिविक्रियारहितः । अप्रमेयः शब्दातिरिक्तप्रमाणागम्यः **व्ययः** कार्यं कदलीफलवत् स्वनाशकं न विद्यते यस्य सोऽव्ययः **अमूर्तत्वा**दच्छेद्योऽदाह्योऽक्लेद्योऽशोष्यश्चैवंभूत आत्मनोंश इवांशो जीवः **प्राणादिसं**घातधारकः ॥ ११ ॥ स्वरूपभूतात्मनो बोधो यस्य

स्वात्मावबोधः स्वारामो ध्रुवोऽसंगोऽपि केवलः ॥
मलिनोऽभूदविद्यांशैर्मलच्छन्नसुवर्णवत् ॥ १२ ॥

योगोज्ज्वलितविद्वह्नौ दग्ध्वाऽऽत्मानं स पूर्ववत् ॥
स्वरूपं शुद्धमाप्नोति हेमाग्नाविव लोहवत् ॥ १३ ॥

आत्मास्मीत्युपगन्तव्यं न प्रतीकं यतो न सः ॥
कार्योत्कर्षादात्मदृष्टिः प्रतीकेऽङ्गे तु तन्मतिः ॥ १४ ॥

स्वस्मिन्नेवारामः क्रीडा यस्य ध्रुवः शाश्वतोऽसङ्गो देहाद्यसंस्पृष्टः केवलः सर्वसंबन्धशून्य ईदृशोऽप्यविद्यांशैः कामादिभिर्मलच्छन्नसुवर्णवन्मलिनोऽभूत् । तटस्थाभिप्रायेणेदमुक्तं न वस्तुतः ॥ १२ ॥ ध्यानयोगोज्ज्वलितज्ञानाग्नौ हेम सुवर्णं लोहयुक् हीनधातुमिश्रम् ॥ १३ ॥ यो ध्याने ग्रहीतव्यः स किमहमिति ग्रहीतव्योऽथवा मदन्य इत्यत आह अहमात्मास्मीत्युपगन्तव्यं 'त्वं वा अहमस्मि भगवो देव तेऽहं वै त्वमसि देवत' इति जाबालैरात्मत्वेनोपगम्यमानत्वात् आत्मेति तूपगच्छन्ति ग्राहयन्ति चेति न्यायादुपदेष्टारः शिष्यान्प्रति तत्त्वमसीति ग्राहयन्ति स्वयमहं ब्रह्मास्मीत्युपगच्छन्तीति सूत्रार्थः ॥ 'अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद' ॥ मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ॥ 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' इति श्रुतिभ्यो भेददर्शिनां दोषश्रवणादात्मेत्येवेश्वरे मनो दधीतेति भावः । अस्तु नामेदं प्रतिकोपासनायां, प्रतीके आत्मदृष्टिविधाने को दोष इत्यत आह । नेति । आत्मास्मीत्युपगन्तव्यमित्युक्तं तद्वत्प्रतीकमात्मदृष्ट्या नोपगन्तव्यं । यतः स उपासकः प्रतीकरूपो नैव प्रतीकानां ब्रह्मविकारत्वाद्ब्रह्मत्वेपि नहि नामादिजातस्य विकारस्य ब्रह्मस्वरूपैक्ययोगो वक्तुं शक्यतेऽतो न प्रतीके आत्मदृष्टिः कार्या । तथादित्यादिप्रतीके उत्कर्षोद्ब्रह्मदृष्टिः क्षत्तरि

इत्यात्माधिगमाभ्यासात्सर्वकर्म विदो बुधः ॥
आदेहपातमारब्धभोग एवाधिकारिणः ॥ १५ ॥
चित्ते गोवृत्तिविलयस्तस्य प्राणेऽस्य चात्मनि ॥
विद्याप्रकाशितहृदा स यात्याद्यं सुषुम्णया ॥ १६ ॥

राजदृष्टिरिवावश्यं कार्यान्यथा विपर्ययप्रसङ्गात् । नहि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यात् तथाङ्गे उद्गीथादौ तन्मतिरादित्यादिदृष्टिः कार्या । यत आदित्यादिमतिभिः संक्रियमाणेषूद्गीथादिषु कर्मसिद्धिः श्रूयते ॥ 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति विद्यायाः कर्मसमृद्धिहेतुत्वश्रवणात् ॥ १४ ॥ इत्येवंप्रकारेणात्माधिगमे यः श्रवणादिरूपोऽभ्यासः । न सकृज्ज्ञानेन साक्षात्कारः । 'आवृत्तिरसकृदुपदेशात्' इति न्यायाद्दर्शनपर्यवसानानि हि श्रवणादीन्यावर्तमानानि दृष्टार्थानि भवन्ति अवघातादीनि तण्डुलनिष्पत्तिपर्यवसानानीवातोभ्यासादात्मसाक्षात्कारे विदः सर्वकर्मणामारब्धातिरिक्तानां क्षयः । 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादितरस्याप्येवमसंश्लेषः पाते तु' इति ज्ञानिनः सुकृतदुष्कृतयोर्विनाशस्योक्तत्वात् । तथा हि 'अनारब्धकार्ये एव तु पूर्वे तदवधेः' इत्यनारब्धकार्ययोः पापपुण्ययोर्विद्यासामर्थ्यात्क्षयोप्युक्तस्तथाप्यादेहपातं प्रारब्धमवतिष्ठते ॥ 'तस्य तावदेव चिरम्' इति श्रुतेः भोगेन त्वितरे आरब्धकार्ये क्षपयित्वा विद्वान्स्वरूपेण कैवल्यमश्नुते । ये पुनरधिकारस्थानापन्ना इन्द्राद्या आधिकारिकास्तेषां यावदधिकारं भोग एव ॥ १५॥ ततो मोक्षमुपक्रमते चित्ते गवामिन्द्रियवृत्तीनां लयः वाङ्मनसि दर्शनादिति न्यायात् तस्य चित्तस्य प्राणेऽस्य प्राणस्यात्मनि च ततो विद्यासामर्थ्यप्रका-

१ अत्र 'सर्वकर्मक्षयो विदः' इति पाठः स्यादिति ग्रंथकृट्टीकापर्यालोचनयानुमीयते ।

न शुक्लगत्यपेक्षाऽस्य विदो रश्म्यनुसारिणः ॥
नेदं लभ्यं संसरतोऽज्ञस्य कर्मानुयायिनः ॥ १७ ॥
कृतिनो यान्त्यर्चिराद्यैरस्वतन्त्राः परे त्वधः ॥
तद्भ्रमो मायिके पादे दत्तलोके विदो गतिः ॥ १८ ॥
पूर्वसिद्धं चिदानन्दैकरसं भूम निष्कलम् ॥
स्वरूपं ज्ञानयोगेन गतो नावर्तते पुनः ॥ १९ ॥
सत्यवैकुण्ठकैलासलोकानामप्युपर्ययम् ॥
दत्तात्रेयाख्यलोकोऽस्ति प्रसिद्धोऽमृतसंज्ञितः ॥ २० ॥

शितहृदा हार्दानुगृहीतया सुषुम्णयाऽऽद्यं सर्वकारणकारणं वक्ष्यमाणं दत्तलोकाख्यं ब्रह्म याति क्रममुक्त्या । यद्यपि 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते' इति श्रुतं तथापि इदं क्रममुक्त्या विवक्षितम् ॥ १६ ॥ अस्य विदः शुक्लगत्यपेक्षा न । मरणे शुक्लादिकालापेक्षा न । आतिवाहिकैर्नीयमानानां रश्म्यनुसारित्वादतश्चायनेपि हि दक्षिण इति न्यायात् इदमाद्यं सर्वकारणकारणं ब्रह्माज्ञस्य तत्त्वज्ञानविधुरस्यानिष्टेष्टमिश्रकर्मानुयायिनोऽविद्यादिभिः संसरतो न लभ्यमधिकाराभावात् ॥ १७ ॥ कृतिनः समुच्चयोपासका अर्चिराद्यैः क्रममुक्त्यर्थं ब्रह्मलोकं यान्ति । परे कर्मिणो ब्रह्मलोकादधस्ततोप्यधो नरके पापिनः तिर्यगादियोनीर्यान्ति । 'पादोऽस्य विश्वा भूतानि' इति श्रुत्युक्ते मायिके पादे तेषां कर्मपरतन्त्राणां पुनःपुनर्जन्ममरणादिरूपो भ्रम एव न मुक्तिं प्रत्याशापीति विदो दत्तः परमात्मा स एव लोक्यत इति लोकस्तत्र गतिः सोहं दत्त इत्यभेदप्रतिपत्त्यावस्थानम् ॥ १८ ॥ ननु गतिश्चेदागत्यापि भवितव्यमित्यत आह । यत्पूर्वसिद्धं नतु नाकवन्नवीनमुत्पाद्य यच्चिदानन्दैकरसं भूमाऽपरिच्छिन्नं निष्कलं षोडशकलारहितं स्वरूपं तदेव ज्ञानयोगेन यो गतः स पुनर्नावर्तते 'न स पुनरावर्तत' इति श्रुतेः ॥ १९ ॥ क्वायं लोक इत्यत आह । सत्येति

न यत्र शुग्जरा मृत्युः क्रियाभोगोपि यत्र नो ॥
मोहोऽवस्था न च द्वैतमगम्योऽयं सुरैरपि ॥ २१ ॥
अध्यात्मयोगमार्गेण लभ्योयं ब्राह्मणेन हि ॥
श्रुत्यामृतं दिवीत्युक्तो दत्तलोकोऽयमेव सः ॥ २२ ॥
तल्लोकप्राप्तयेऽथर्वा कृपया दीनवत्सलः ॥
शाण्डिल्याय जगौ ज्ञानं पूर्वोक्तं सुगमं स्फुटम् ॥ २३ ॥
पुनः पप्रच्छ शाण्डिल्यो भगवन्नक्षरं त्विदम् ॥
अविक्रियं परं ब्रह्म सन्मात्रं निष्कलं शिवम् ॥ २४ ॥
जायतेऽस्मात्कथमिदं रक्ष्यते लीयते च तत् ॥
सोब्रवीच्छृणु शाण्डिल्यारूपस्य ब्रह्मणोऽस्य तु ॥ २५ ॥
निष्कलं सकलं मिश्रं त्रीणि रूपाण्युपाधितः ॥
अखण्डं सच्चिदानन्दं निष्कलं यन्निरञ्जनम् ॥ २६ ॥
शिवं सूक्ष्मं सर्वगतमनन्तं विश्वतोमुखम् ॥
अनिर्देश्यं निष्कलाख्यं रूपमस्योत्तमोत्तमम् ॥ २७ ॥
त्रिगुणा मूलप्रकृतिर्मायाविद्येति चोच्यते ॥
शक्तिः सहोत्था तद्युक्तो देवोऽसौ कृष्णपिङ्गलः ॥२८॥

॥ २० ॥ स किंलक्षण इत्यत आह । नेति । तर्हि देवानामिह गतिरस्ति चेन्नेत्याह अगम्य इति ॥ २१ ॥ तर्हि केनायं लभ्यत इत्याहाध्यात्मेति । ननु क्वास्य प्रसिद्धिरित्यत आह श्रुत्येति ॥ २२ ॥ २३ ॥ निष्कलत्वान्न निमित्तं । अक्रियत्वान्नास्य परिणामः ॥२४॥२५॥ उपाधितो निष्कलादि-त्रीणि रूपाणि तत्राद्यं निष्कलमाहाखण्डमिति ॥ २६ ॥ अनिर्देश्यं प्रमाणैर्निर्देष्टुमशक्यम् ॥ २७ ॥ माया शुद्धसत्त्वप्रधाना तस्याः सद्वितीयत्वं वारयति । सहोत्था शक्तिरिति । कृष्णपिङ्गलः शबलः

महेश्वरो य ईष्टे तन्मिश्ररूपं प्रकीर्तितम् ॥
स तु ज्ञानेन तपसा तप्यमानो ह्यकामयत् ॥ २९ ॥
बहु स्यां च प्रजायेयमित्यस्मात्तपसोऽभवत् ॥
ॐकारोऽस्य तिस्रो मात्रा ऋषिछन्दांसि देवताः ॥३०॥
बीजानि शक्तयो वर्णावस्थास्थानानि च स्वराः ॥
गुणाग्निवेदसवनतत्त्वात्मानस्त्रयस्त्रयः ॥ ३१ ॥
तदाढ्योऽयं जगद्बीजं यत्परापरसंज्ञकम् ॥
तद्वाचकोसौ भगवान्मायावी व्यापकः परः ॥ ३२ ॥

॥ २८ ॥ स तु मिश्ररूपः ॥ २९ ॥ अहमेव बहु स्यां भवेयं 'तदात्मानꣳस्वयमकुरुत' इति श्रुतेः । स्वकीयबहुभवनविचाररूपतपसः ॐकारोऽभवत् । अस्योंकारस्य ब्रह्माभिन्नस्य तिस्रोऽकारोकारमकाराख्या मीयन्ते विश्वाद्याः पादाभिधेया आभिरिति मात्रा अभेदेनावस्थिताः 'सोयमात्माध्यक्षरमोंकारोऽधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार' इति श्रुतेः ॥ यथा प्रस्थादिना यवा मीयन्ते तथा मात्राभिर्ध्यातृभिर्ऋष्यादिस्मरणपूर्वकं सोयमात्मा जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखस्थूलभुग्वैश्वानरः प्रथमः पाद इति विभागश उक्ताः पादा ज्ञेयाः । अग्निवाय्वादित्या ऋषयः गायत्रीत्रिष्टुब्जगत्यश्छन्दांसि ब्रह्मविष्णुरुद्रा देवताः ॥ ३० ॥ श्रींह्रींक्लींबीजानि द्रव्यज्ञानक्रियाः शक्तयः रक्तश्वेतकृष्णवर्णाः जाग्रत्स्वप्ननिद्रावस्थाः नेत्रकण्ठहृदयस्थानानि उदात्तानुदात्तस्वरितस्वराः रजःसत्त्वतमोगुणाः दक्षिणगार्हपत्याहवनीयाग्नयः प्रातर्मध्यंदिनसायंसवनानि भूर्भुवःस्वस्तत्त्वानि विश्वतैजसप्राज्ञात्मानः ॥ ३१ ॥ स ओंकारो वाचको यस्य सः ॥ ३२ ॥ ॥ ३३ ॥ भवन्तीति भावाः सर्वे जीवा इति यावत् । सर्वभूतानि

सर्वभूतहृदाविष्टो मायया क्रीडतीह सः ॥
सृजत्यवति हन्तीशः स ब्रह्मा स हरिः शिवः ॥ ३३ ॥

देवा इन्द्रादयो भावाः सर्वभूतानि पञ्च च ॥
स्थूलान्यपि च सूक्ष्माणि भौतिकानि स एव हि ॥३४॥

तत्त्वानि जन्तवः सर्वे पुरस्तादच्युतः स च ॥
पश्चाद्दक्षिणतश्चापि स एवोत्तरतो विभुः ॥ ३५ ॥

उपरिष्टादधस्ताच्च स एव किल सर्वतः ॥
भूतं भव्यं भवच्चापि स एवेदं न चेतरत् ॥ ३६ ॥

देवस्यास्यात्मक्रीडस्य विभोर्भक्तानुकंपिनः ॥
दत्तात्रेयाभिधा मूर्तिः सुरूपा या दिगंबरा ॥ ३७ ॥

पृथिव्यादीनि पञ्चीकृतानि । सूक्ष्माण्यपञ्चीकृतानि भौतिकानि भूतविकाराः सर्वशरीराणि चतुर्दशभुवनानि च स एव मिश्ररूपः ॥ ३४ ॥ तत्त्वानि पञ्चविंशतिसंख्याकानि जन्तवश्चतुर्विधशरीराभिमानिनो जीवाः स एव व्यापक इति स्फुटयति पुरस्तादित्यादि । श्रुत्यन्तरे 'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ॥ अधश्चोर्ध्वं च प्रसृतं ब्रह्मैव' इति ॥ यतो विभुर्व्यापकोऽतः सर्वगत एव ॥ ३५ ॥ एवं भूतादिकमपि स एव नान्यत् 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्' इति श्रुत्यन्तरात् ॥ ३६ ॥ एवं सर्वात्मनो देवस्य द्योतमानस्य प्रकाशान्तरानपेक्षस्य स्वयंप्रकाशशीलस्यात्मन्येव स्वरूप एव क्रीडा सृष्ट्यादिव्यापारो यस्य । पुनश्च विष्णोः सर्वविकारजातव्यापकस्याकाशकल्पस्य भक्तानुकंपिनो या दत्तात्रेयाख्या दिगम्बरा सुरूपा मूर्तिः ॥ ३७ ॥ सैषाऽस्य सकलं रूपं । कथंभूतं

इन्दीवरदलप्रख्या चतुर्बाहुरघापहा ॥
सैषाऽस्य सकलं रूपमासेचनकगात्रयुक् ॥ ३८ ॥
शाण्डिल्यः प्राह भगवन्सन्मात्रमिदमुत्तमम् ॥
परं ब्रह्मात्मा महेशो दत्तात्रेय इति प्रभो ॥ ३९ ॥
कस्मादुच्यत आख्याहि कृपया दीनवत्सल ॥
अथर्वोवाच सोम्येदं बृहत्सर्वं चराचरम् ॥ ४० ॥
बृंहयत्युत्तमं तस्मात्परं ब्रह्मेति गीयते ॥
यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ॥ ४१ ॥
यच्चास्य संततो भावस्तेनात्मेति च गीयते ॥
मह्यते चेशशब्देन शक्त्येष्टेऽखिलमेव यत् ॥ ४२ ॥

आसेचनकानि गात्राण्यवयवास्तैर्युज्यत इत्यासेचनकगात्रयुक् । आसेचनकं नाम यस्य दर्शनात् तृप्तेरन्तो नास्ति तत् ॥ 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्'इति कोशात् ॥३८॥ प्रश्नान्तरं भगवन्निति । इदं सन्मात्रं चेत् कुतो ब्रह्मात्मा महेशः दत्तात्रेय इति चोच्यते तत्कथयेति पृष्ट आहाथर्वा देवदत्तस्य पुत्रपौत्राद्युपाधित इवेदं सर्वमित्याह बृहदित्यादिना ॥३९॥४०॥ 'बृह बृहि वृद्धौ' इति धातोरत्र निरतिशाया वृद्धिरभ्युपगन्तव्या नान्या ब्रह्मणः सदेकरूपत्वात् । आत्मशब्दार्थमाह । यद्यस्मात्कारणात्सुषुप्तिकालेऽयं जीवः परं ब्रह्माप्नोति यच्च स्वप्नकाले जाग्रद्वासनाविशिष्टो गिरिनद्यादिरूपं सर्वं मनसा आदत्ते तत्तत्पदार्थेभ्योऽवच्छिद्य वासनारूपं गृह्णाति । यद्यस्मादिह जागरे स्त्र्यन्नपानादि विचित्रभोगान् इन्द्रियैर्भुङ्क्ते एवमुपाधिविशिष्टस्य त्रीणि निर्वचनानि सन्ततो भाव इति निरुपाधिकस्य ॥ ४१ ॥ यस्मादात्मनः संततः सातत्येन व्यापको भावः स्वभावोऽखण्डैकरसस्तेन निर्वचनचतुष्टयेनात्मेति गीयते ॥ मह्यते सर्वैः पूज्यते शक्त्याखिलमीष्टे वा महेशः

सर्वाधीशोऽखिलात्मा च महेश इति गीयते ॥
मयाऽहं तेऽत्रये दत्त इत्युक्तेः स तथोच्यते ॥ ४३ ॥
इति श्रीमद्दत्तात्रेयपुराणे सा० त्रि० सं० वा० ज्ञा०
द्वितीयाष्टके द्वितीयोऽध्यायः ॥ २ ॥

॥ ४२ ॥ मयाहं तेऽत्रये दत्त इति स्वात्मदानाद्दत्तात्रेय इत्युच्यते ॥ ४३ ॥
इति द्वितीयाष्टके टीकायां द्वितीयोऽध्यायः ॥ २ ॥

इति श्रीदत्तपुराणे द्वितीयाष्टके द्वितीयोऽध्यायः ॥ २ ॥ २ ॥

---

## अथ भूतभौतिकसर्गो नाम द्वितीयाष्टके तृतीयोऽध्यायः ॥ २।३ ॥

ॐ वसूत्सुकेन मुनिना सामान्येनोदितोऽप्ययम् ॥
दत्तात्रेयावतारोऽत्र विशेषाद्वर्ण्यते स्मृतः ॥ १ ॥
सच्चिदानन्दरूपो यः परशक्तिः स सर्ववित् ॥
मायाऽभूत्तस्मादेतस्मादात्मनोऽस्या महांस्ततः ॥ २ ॥
अहंकारोऽस्मात्तन्मात्राण्यतोऽभूद्भूतपञ्चकम् ॥
आकाशवातदहनपानीयवसुधाभिधम् ॥ ३ ॥

॥ श्रीगणेशाय नमः ॥

उक्त एकादशेऽध्याये भूतभौतिकसर्गकः ॥
अध्यारोपात्मकोऽलभ्यो ह्यपवादप्रसिद्धये ॥१॥

वसूत्सुकेन जगन्निवासभूतभगवत्तत्परेणाथर्वमुनिना स्मृतः स्मृतिमागतः ॥१॥ परा शक्तिर्यस्य । 'परास्य शक्तिर्विविधैव श्रूयते' इति श्रुतेः । तस्मान्निस्तत्त्वा कार्यगम्या जगदुपादानभूता मायाऽभूत् । तस्या मायायाः सकाशाज्ज्ञानक्रियाशक्त्यात्मकं महत्तत्त्वमभूत् । अत्र सर्वत्र 'तदात्मानं स्वयमकुरुत' इतिश्रुतेरन्त्यकार्यपर्यन्तं परमात्मन एवाभिन्ननिमित्तोपादानत्वान्मायाभात्रापन्नादात्मनो महानित्युत्तरोत्तरं ज्ञेयम् ॥२॥ ततो महतोऽहंकारः । अस्मादहंकारात्पञ्चतन्मात्राणि सूक्ष्मभूतान्यपञ्चीकृतानि अत एभ्यः सूक्ष्मभूतेभ्यः आकाशवाताग्निजलभूसंज्ञकं भूतपञ्चकम् ॥ ३ ॥ तच्चै-

एकोत्तरर्द्धि शब्दादिगुणाढ्यं च पृथक् पृथक् ॥
तेषां सत्त्वगुणांशेभ्यः पञ्च ज्ञानेन्द्रियाणि च ॥ ४ ॥

श्रोत्रत्वङ्नेत्ररसनघ्राणाख्यान्यभवन्क्रमात् ॥
मनोधीचित्ताहंकारास्तत्सत्त्वगुणसंहतेः ॥ ५ ॥

मनो विमर्शरूपं धीर्निश्चयात्माभिमानकः ॥
अहंकारोऽनुसंधायि चित्तमन्तःकृतिस्त्वियम् ॥ ६ ॥

वाक्पाणिपत्पायुलिङ्गाख्यं क्रियेन्द्रियपञ्चकम् ॥
तेषां रजोगुणांशेभ्यः क्रमात्तेषां तथा पुनः ॥ ७ ॥

संहत्या चाभवत्प्राणो वृत्तिभेदात्स पञ्चधा ॥
प्राणोऽपानः समानश्चोदानो व्यानः क्रियात्मकः ॥८॥

कोत्तरवृद्ध्या शब्दादिगुणयुक्तम् । यदुक्तं वार्तिककृद्भिः ' शब्दैकगुणमाकाशं शब्दस्पर्शगुणो मरुत् ॥ शब्दस्पर्शरूपगुणैस्त्रिगुणं तेज उच्यते ॥ शब्दस्पर्शरूपरसगुणैरापश्चतुर्गुणाः ॥ शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा मही' इति ॥ तेषामाकाशादीनां पृथक्पृथक् सत्त्वगुणांशेभ्यः श्रोत्रत्वङ्नेत्ररसनघ्राणाख्यानि पञ्चज्ञानेन्द्रियाण्यभवन् । तेषामाकाशादीनां सत्त्वगुणांशैक्यान्मनोबुद्धिचित्ताहंकाराख्यमन्तःकरणं जातम् ॥ ४ ॥ ॥ ५ ॥ विमर्शरूपं संकल्पाख्यं मनः । निश्चयात्मिका बुद्धिः । अभिमानात्मकोऽहंकारः । अनुसंधानरूपं चित्तम् । इदमन्तःकरणमुच्यते ॥ ६ ॥ क्रमात्तेषामाकाशादीनां पृथक् पृथग्रजोगुणांशेभ्यः वागादिपञ्चकर्मेन्द्रियाणि ॥ ७ ॥ पुनस्तेषामाकाशादीनां रजोगुणांशैक्यात् प्राणोऽभूत्स वृत्तिभेदात्प्राणादिपञ्चनामकः । स च क्रियात्मकः ॥ ८ ॥ कर्मेंद्रियपञ्चकं ज्ञानेन्द्रिय-

कर्मज्ञानेन्द्रियप्राणपञ्चकैर्मनसा धिया ॥
देहो लिङ्गाभिधोऽज्ञानावृतिकारणकार्यकः ॥ ९ ॥
द्विधा कृत्वैकैकभूतं चतुर्धैकार्धमस्य च ॥
स्वस्वेतरार्धसंयोगात्पञ्चीकरणमुच्यते ॥ १० ॥
तद्भोगायतनं स्थूलं शरीरं गुणतस्त्रिधा ॥
दैवं सत्त्वाधिकं मर्त्यं राजसं तिर्यगन्यकम् ॥ ११ ॥
रोमत्वङ्मांसनाड्यस्थि भुवोऽद्भ्यो मूत्ररेतसी ॥
स्वेदोऽस्रलालेऽग्नेः क्षुत्तृण् निद्रा तन्द्रा रतिर्गतिः ॥१२॥
लौल्यं निरोधः प्रसाराकुञ्चने मरुतोऽथ खात् ॥
कामक्रुड्लोभमोहा भीस्तदाढ्येयं जडा तनुः ॥ १३ ॥
सूक्ष्मा सप्तदशाङ्गापि सुखदुःखगमादियुक् ॥
तथाऽज्ञानं कारणाख्यं शरीरत्रयमस्य पूः ॥ १४ ॥

पञ्चकं प्राणपञ्चकं च तैः विमर्शात्मकेन मनसा निश्चयात्मिकया बुध्या चाऽज्ञानावरणकार्यरूपो लिङ्गाख्यो देहः। अत्र बुद्धावहंकारस्य मनसि चित्तस्य चान्तर्भावः ॥ ९ ॥ पञ्चीकरणमाह—द्विधेति । एकैकं भूतं द्विधा द्विधा कृत्वा पुनरस्य भूतस्यैकैकमर्धं चतुर्धा कृत्वा स्वस्वेतरार्धभागसंयोजनात्तेषां पञ्चानामपि पञ्चपञ्चत्वम् ॥ १० ॥ तत्पञ्चीकृतभूतोत्थं सत्त्वाधिकं दैवं देवयोनिसंज्ञकं । राजसं रजःप्रधानं मर्त्यं । अन्यकं तमःप्रधानं पश्वादि तिर्यक् ॥११॥ रोमादिकं भुवो जातं मूत्रादिकमद्भ्यो जातं क्षुदादिकमग्नेर्जातं गत्यादिकं वायोर्जातं कामादिकं खादाकाशाज्जातम्। तैरेतैर्विकारैराढ्या युक्तेयं स्थूला तनुर्जडाऽनात्मत्वात् ॥ १२ ॥ १३ ॥ या पूर्वोक्ता सप्तदशावयवात्मिका सूक्ष्मा तनुः सैव सुखदुःखाद्यनुभवयुक्। यद्यपि स्थूलशरीरं

शुद्धसत्त्वप्रकृत्यां यो बिम्बितः स महेश्वरः ॥
जीवो मलिनसत्त्वायां तामस्यां भूतपञ्चकम् ॥ १५ ॥
सर्वज्ञ ईशः समष्टिर्जीवोऽज्ञो व्यष्टिसंज्ञितः ॥
एवं विक्षेपकार्याख्या सृष्टिर्जातेश्वराज्ञया ॥ १६ ॥
ब्रह्माण्डं पञ्चभूतेभ्यस्तत्र लोकाश्चतुर्दश ॥
यथास्वं प्राणिनोऽत्रायं स्थूलदेहो विराड्विभोः ॥ १७ ॥
पादाधोऽतलमस्योर्ध्वं वितलं सुतलं तथा ॥
गुल्फे महातलं जङ्घादेशे जान्वोस्तलातलम् ॥ १८ ॥
ऊर्वो रसातलं कट्यां पातालं भूश्च नाभिगा ॥
कुक्षौ भ्रुवोर्हृदूर्ध्वं स्वर्महः कण्ठे जनो मुखे ॥ १९ ॥

भोगायतनं तथापि सूक्ष्मसंबन्धेनैव तत्र भोगसाक्षात्कारः मृतशरीरे तथात्वादर्शनात् । अज्ञानं कारणशरीरम् । इदं त्रयमस्य संसारिणः पुरमुच्यते ' तस्य त्रय आवसथाः ' ' पुरत्रये क्रीडति यश्च जीवः ' इति च श्रुतेः ॥ १४ ॥ बिम्बितः प्रतिबिम्बत्वेन फलितः । मलिनसत्त्वायां प्रतिबिम्बितो जीवः । तमःप्रधानायां पञ्चभूतानि ॥ १५ ॥ ईश्वरो विशुद्धसत्त्वोपाधिकत्वात्सर्वज्ञः समष्ट्युपाधिकश्च मलिनसत्त्वोपाधित्वाज्जीवः किंचिज्ज्ञो व्यष्ट्यभिमानी एवमीश्वराज्ञयेक्षणवशादियं विक्षेपशक्तिकार्यसंज्ञिता सृष्टिर्जाता ॥ १६ ॥ पञ्चीकृतेभ्यः पञ्चभूतेभ्यः । तत्र ब्रह्माण्डे यथास्वं यथायथं स्वर्गे देवा अन्तरिक्षे पक्षिणः भूमौ नराद्या भूचराः जले मत्स्याद्याः पातालेऽसुररक्षांसि सर्पाश्चेति विराट्संज्ञकविभोः स्थूलदेहः ॥ १७ ॥ अस्योर्ध्वं पादोर्ध्वम ॥ १८ ॥ अतलमारभ्य पातालान्ताः सप्त लोका आपादाधःकट्यन्तेषु ज्ञेयाः । आनाभिमस्तकान्तं भूरादिसत्यान्ताः सप्त

भ्रुवोस्तपो मूर्ध्नि सत्यं प्राणो वायुस्तनुर्मही ॥
लोकाङ्गस्य रदास्तारा माया हास्यं निशादिने ॥ २०॥

निमेषोन्मेषौ कटाक्षः सृष्टिः कुक्षिरपां पतिः ॥
नाड्यो नद्यो द्रुमाः केशा वृष्टी रेतोऽस्थि पर्वतः ॥२१॥

विराजः स्थूलदेहोऽयं चराचरजगन्मयः ॥
दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमृत्युकाः ॥ २२ ॥

ज्ञानकर्मेन्द्रियाण्यन्तःकरणानि शशी गुरुः ॥
हरोऽजश्चेति लिङ्गात्माऽव्याकृतं कारणं च तत् ॥ २३ ॥

यद्यदङ्गाभिधा येऽत्र व्यष्टौ ते तत्तदङ्गपाः ॥
दृष्ट्वोभयत्राप्याविष्टेष्वेषु कार्याक्षमावुभौ ॥ २४ ॥

लोकाः एवं स्वमानेन सप्तवितस्त्यात्मको विराड्देहः । आवहादिवायुर्विराजः प्राणः लोका अङ्गानि यस्य तस्य विराजस्तारा नक्षत्राणि दन्ताः निशा निमेषो दिनमुन्मेषः ॥ १९॥२०॥ पर्वत इति जातावेकवचनम् । पर्वता अस्थीनि ॥ २१ ॥ एवं चराचरविकारोऽयं विराजः स्थूलदेहः कथित इति शेषः । दिगादयो दश ज्ञानकर्मेन्द्रियाणि । कः प्रजापतिः चन्द्रो मनः गुरुर्बृहस्पतिः ब्रह्मा वा बुद्धिः रुद्रोऽहंकारः अजो नारायणश्चित्तम् । इदं विराजो लिङ्गशरीरं अव्याकृतं 'तद्धेदं तर्ह्यव्याकृतमासीत्' इति श्रुत्युक्तं कारणशरीरम् ॥२२॥२३॥ अत्र विराजि या या दिगादयः श्रवणाद्यङ्गसंज्ञका देवतास्तास्ता व्यष्टौ प्रतिशरीरं तत्तदङ्गानां श्रवणादीनां देवताः । उभयत्र व्यष्टौ समष्टौ च मायावशाज्जितमायत्वात्सर्वज्ञ ईशः । स चात्मैवाविद्यावशादविद्याधीनत्वाज्जीवः प्राणधारणात्सकामकर्मादिदूषितः ॥ २४ ॥

स्वांशेनाविशदात्मातो जातौ कार्यक्षमावुभौ ॥
मायावशात्स सर्वज्ञो जीवोऽविद्यावशात्स च ॥ २५ ॥
सृष्ट्वैवं कर्मणोऽज्ञानां भोगार्थं शश्वदीश्वरः ॥
स्रष्टृविष्णुहरात्मा स सृष्टिस्थित्यन्तकारणः ॥ २६ ॥
विश्वोऽध्यात्मं विराट् चाधिभूतं कृष्णोऽधिदैवतम् ॥
जाग्रदध्यात्मं रक्षाधिदैवं सत्त्वं च भूतकम् ॥ २७ ॥
हिरण्यगर्भोऽधिभूतं को दैवं तैजसोऽपरम् ॥
रजोऽधिभूतं चाध्यात्मं स्वप्नः सर्गोऽधिदैवतम् ॥२८॥
प्राज्ञोऽध्यात्मं दैवमीशो व्याकृतं चाधिभूतकम् ॥
निद्राध्यात्मं क्षयो दैवमधिभूतं तमोगुणः ॥ २९ ॥
अधिदैवतमध्यात्ममधिभूतमिति त्रिधा ॥
भ्रमाद्भात्येकमेवेदमित्यूह्यं श्रवणादिषु ॥ ३० ॥
ताराङ्गानीमान्येतेषां व्यस्तोपास्त्या पृथग्गतिः ॥
समस्तोपास्तितो दत्तलोकप्राप्तिर्हि सुस्थिरा ॥ ३१ ॥
सुमङ्गलं विराड्रूपं चराचरजगन्मयम् ॥
योगिनो यदुपास्त्या तु कैवल्यं धाम यान्ति तत् ॥३२॥

२५ ॥ २६ ॥ भूतकमधिभूतम् ॥२७॥ को ब्रह्माधिदैवतम् । तैजसोऽपरमध्यात्मम् ॥ २८ ॥ अधिदैवमीशः । क्षयः प्रलयोऽधिदैवतम् ॥२९॥ इदं न तात्त्विकमित्याह—अधीति । श्रवणादिषु श्रवणादिकाले । यद्वा 'श्रोत्रमध्यात्ममित्युक्तं श्रोतव्यं शब्दलक्षणम् । अधिभूतं तदित्युक्तं दिशस्तत्राधिदैवतम्' इतीन्द्रियादिषूह्यम् ॥ ३० ॥ तारयतीति तारः प्रणवस्तस्याङ्गानि । शैब्यप्रश्ने काठके माण्डूक्ये चेयमुपास्तिरुक्ता । दत्त एव लोकः परं ब्रह्म ॥ ३१ ॥ तच्छब्देन पारोक्ष्यात्क्रममुक्तिर्ज्ञापिता ॥ ३२ ॥ ब्रह्मा

ब्रह्माऽऽस्यं बाहुतः क्षत्रमूर्वोर्विड् वृषलः पदः ॥
विष्णोर्जज्ञे निजगुणकर्मवृत्तिविभागशः ॥ ३३ ॥

उद्भित्सर्गः पुरा षोढा चाष्टाविंशतिधा परः ॥
तिर्यक्सर्गो नृसर्गोऽथ दैवसर्गस्ततोऽष्टधा ॥ ३४ ॥

विराड्रूपस्य नाभ्यब्जाद्विष्णोरास विधिः स च ॥
पुत्रान्लब्धश्रुतिः सृष्टयै मानसांश्चतुरोऽसृजत् ॥ ३५ ॥

सनत्कुमारसनकसनन्दनसनातनाः ॥
कुमारा ब्रह्मनिष्ठाः स्युस्तेऽतोऽभूत्कुपितो विधिः ॥३६॥

ब्राह्मण आस्यं मुखम्। 'ब्राह्मणोऽस्य मुखमासीत्' इति श्रुतेः। अतएव 'ब्राह्मणभोजने ब्रह्मणि हुतम्' इति ब्राह्मणभोजनेन यज्ञसिद्धिरप्युक्ता। विट् वैश्यः। वृषलः शूद्रः। सत्वगुणेन विप्रः। रजसा क्षत्रम्। रजस्तमोभ्यां वैश्यः। तमसा शूद्रः। एषां 'शमो दमस्तपः शौचम्' इत्यादिकर्माणि ज्ञेयानि ॥ ३३ ॥ वनस्पत्यौषधिलतात्वक्सारवीरुद्द्रुमसर्गः प्रथमं षड्विधो जातः। गौरजो महिषः कृष्णः सूकरो गवयोरुरुरविरुष्ट्रश्चाष्टौ द्विशफाः। खरोऽश्वोऽश्वतरो गौरः शरभश्चमरीत्येकशफाः। शृगालो वृको व्याघ्रो मार्जारः शशः शल्लकः सिंहः कपिर्गजः कूर्मो गोधेति द्वादश पञ्चनखाः। जलचरः खगश्चेत्यष्टाविंशतिधा पितृसुरगन्धर्वदेवसिद्धयक्षरक्षश्चारणाश्चेत्यष्टधा देवसर्गः ॥३४॥ स च विधिः विष्णुप्रसादाल्लब्धा श्रुतिर्येन स सृष्टयै पुत्रान्सनकादीनसृजत् ॥ ३५ ॥ कुमविद्यां मारयन्ति ते कुमाराः वयसापि पञ्चहायना इव ॥३६॥

कुपितस्याभवद्रुद्रो ललाटादुग्रसृष्टिकृत् ॥
तस्मै दत्वा वरं धात्रा तपसेऽथ स योजितः ॥३७॥
शान्तस्वान्तस्य कस्याथो मनसो देहतोऽप्यमी ॥
पुत्राः सुतपसो जाता मरीच्यत्र्यङ्गिरः क्रतुः ॥३८॥
भृगुः पुलस्त्यः पुलहो रुचिर्दक्षो वसिष्ठकः ॥
नारदश्चोरसो धर्मः पृष्ठतोऽन्यो हृदो भ्रुवोः ॥ ३९ ॥
कामः क्रोधोऽधराल्लोभश्छायायाः कर्दमो मुखात् ॥
वाग्वेदाश्चतुरास्येभ्यः साङ्गोपाङ्गाः सविद्यकाः ॥४०॥
सर्गर्द्धिं ध्यायतो युग्मं कस्याङ्गादभवत्स्वराट् ॥
आद्यो मनुः स महिषी शतरूपेति दंपती ॥ ४१ ॥
जनयामासतुः पुत्रौ पुत्रीश्च ग्राम्यधर्मतः ॥
प्रियव्रतोत्तानपादौ भूपौ तावासतुः सुतौ ॥४२॥
आकूतिर्देवहूतिश्च प्रसूतिश्चेति कन्यकाः ॥
धीरूपशीललक्ष्म्याढ्याः सर्गोऽयं ववृधे ततः ॥ ४३ ॥

रोदनाद्रुद्रः 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इति स रुद्रः ॥ ३७ ॥ ततः क्रोधापगमाच्छान्तं स्वान्तं यस्य। कस्य ब्रह्मणः ॥३८॥ पृष्ठतोऽन्यो ऽधर्मः । हृदो मनसः कामः । भ्रुवोर्मध्यात्क्रोधः । अधरोष्ठाल्लोभः । मुखाद्वाक् चतुरास्येभ्यः पूर्वादिक्रमेणर्गादयः ॥ ३९ ॥ ४० ॥ सर्गवृद्धिं चिन्तयतोऽस्य ब्रह्मणः । युग्मं स्त्रीपुंसौ । तत्रैकः स्वेनैव राजतेऽसौ स्वराट् आद्यः स्वायंभुवाख्यो मनुः । अपरा शतरूपा सैव तन्महिषी ॥ ४१ ॥ ग्राम्यधर्मतः मैथुनतः ॥ ४२ ॥४३॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां
द्वितीये तृतीयः ॥२॥३॥

त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां ज्ञानकाण्डे टीकायां द्वितयाष्टके
भूतभौतिकसर्ग अध्यारोपापवादात्मकस्तृतीयोऽध्यायः ॥ ३ ॥

इति श्रीदत्तपुराणे सार्धत्रिसाहस्र्यां संहितायां
द्वितीयाष्टके तृतीयोऽध्यायः ॥ ३ ॥

---

॥ अथ मनुपुत्र्युद्वाहानसूयात्रिमाहात्म्यं नाम द्वितीयाष्टके चतुर्थोऽध्यायः ॥ २ । ४ ॥

तं नु प्राप्य रुचिं सोदादाकूतिं कर्दमाय च ॥
देवहूतिं प्रसूतिं च मनुर्दक्षाय कर्मिणे ॥ १ ॥

आकूत्यां दक्षिणायज्ञौ श्र्यजांशौ दंपती रुचेः ॥
दक्षात्प्रसूत्यां पुत्र्योदात्कश्यपाय त्रयोदश ॥ २ ॥

धर्माय चाग्नये स्वाहां तारेशे सप्तविंशतिम् ॥
स्वधां पितृभ्यः स सतीं शंकराय विधीरितः ॥ ३ ॥

स्वरूपानन्दसंतुष्टादपि भोगपराङ्मुखात् ॥
अलब्धकामया पत्न्या स्वव्रतक्षामयार्थितात् ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥
द्वादशे मनुपुत्रीणामुद्वाहो वंशवर्णनम् ॥
अनसूयात्रिमाहात्म्यमवतारप्रयोजनम् ॥ १ ॥

स्त्रीकामनया सिद्धक्षेत्रे तपश्चरन्तं कर्दमं प्राप्य मनुर्ब्रह्माज्ञया तस्मै देवहूतिं ददौ। रुचिं प्राप्य तस्मा आकूतिं कर्मिणे कर्मठाय दक्षाय प्रसूतिं चादात् ॥ १ ॥ आकूत्यां रुचेः श्र्यजांशौ लक्ष्म्या विष्णोश्च कलाभूतौ अतएव सोदरात्रपि दंपती ॥२॥ तारेशे चन्द्राय कन्याः सप्तविंशतिम्। विधीरितो ब्रह्मणाऽस्मै देहीति प्रेरितः नतु स्वबुद्ध्या ॥१॥ पातिव्रत्येन कृशयाऽलब्धसंतानकामया पत्न्याङ्गसङ्गं कुर्विति प्रार्थितात्स्वानन्दतुष्टादत एव भोगानिरपेक्षात् ॥४॥ पत्नीमुदे योगेनाञ्चितं प्राप्तं विमानदासी-

योगाश्रितमहैश्वर्यात्कृतलीलाच्च कर्दमात् ॥
नव कन्या देवहूत्यां कपिलाख्योऽभवत्सुतः ॥ ५ ॥

मरीचये कर्दमोऽदात्कलाख्यां कश्यपो यतः ॥
अत्रये चानसूयां यत्पुत्राः श्रीभगवन्मुखाः ॥ ६ ॥

श्रद्धां चाङ्गिरसे यस्या जीवौतथ्यमुखाः प्रजाः ॥
हविर्भुवं पुलस्त्याय ह्यगस्त्याद्याश्च यत्प्रजाः ॥ ७ ॥

पुलहाय गतिं चास्याः कर्मश्रेष्ठादयः प्रजाः ॥
क्रियां च क्रतवे यस्या वालखिल्याभिधाः प्रजाः ॥८॥

वसिष्ठायोर्जां च चित्रकेत्वाद्या यत्प्रजास्तथा ॥
चितिं चाथर्वणे सोऽदाद्यस्या दध्यङ्मुखाः प्रजाः ॥ ९ ॥

ख्यातिं च भृगवे यस्याः प्रजा धातृमुखा इति ॥
पुत्रीर्विधीरितोऽदात्स ब्रह्मर्षिभ्यो विधानतः ॥१०॥

कर्दमः कृतकृत्योऽथ प्राप्य वीतैषणो द्रुतम् ॥
सल्लिङ्गं वैष्णवं स्वस्थो विजहार परात्मदृक् ॥ ११ ॥

शतवस्त्रभूषान्नपानशरीरपाटवादि महैश्वर्यं येन तस्मात्कृतः देवोद्यानादिषु लीलाविलासो येन । तस्मात्कर्दमात् ॥ ५ ॥ कन्यादानं तत्संततिं चाह पञ्चभिः । यतः कलायाः कश्यपोऽभूत् । श्रीभगवन्मुखाः श्रीदत्तप्रमुखाः ॥६॥ यतः श्रद्धायाः ॥७॥८॥९॥ विधीरितो ब्रह्मणा प्रेरितः ॥१०॥ कृतमैहिकं कृत्यं येन सः । अतः विशेषेण इता गताः पुत्रलोकवित्तैषणा यस्य स कर्दमः सत् साधु वैष्णवं लिङ्गं संन्यासं स्वे रूपे तात्पर्येण तिष्ठतीति स्वस्थः विजहार सर्वं संन्यस्य जगामेत्यर्थः ॥ ११ ॥ अम्बां मातरं देवहू-

तद्वियोगातुरामम्बामृषिसेवाहताशुभाम् ॥
सर्वसाधनसंपन्नां सांख्याचार्य उपादिशत् ॥ १२ ॥

विष्ण्वंशः कपिलस्तत्त्वज्ञानं यन्मुक्तिदं लघु ॥
येनात्मा पञ्चविंशाख्यो गम्यते पुरुषः परः ॥ १३ ॥

नित्यमुक्तोऽपि सिध्देशस्त्रैलोक्येऽन्तर्बहिर्मुनिः ॥
अव्याहतगतैश्वर्यश्चरत्यद्यापि सूरतः ॥ १४ ॥

देवहूतिस्तदादेशाद्गता ब्राह्मीं स्थितिं ध्रुवाम् ॥
तत्पुत्र्योऽपि महाभागा ऋषिपत्न्योऽभवन्हि याः ॥१५॥

जायायुता मरीच्याद्याः पितृशासनतत्पराः ॥
सृष्टिप्रवर्तका आसन्सर्वे सुतपसोऽमलाः ॥ १६ ॥

तिम् । सांख्याचार्यः कपिलः ॥ १२ ॥ आत्मनः पृथक्त्वेन चतुर्विंशतितत्त्वानां ज्ञानं गम्यतेऽपरोक्षतयानुभूयते ॥ १३ ॥ अनावृतत्वान्नित्यमुक्तः अव्याहतमकुण्ठितं गतं गतिः । नपुंसके भावे क्तः । ऐश्वर्यं च यस्य । अद्यापीत्यनेनावतारासमाप्तिर्दर्शिता ॥१४ ॥ ब्राह्मीं स्थितिं विदेहमुक्तिम् । भगानामैश्वर्याणां समूहो भागं महद्भागं यासां ताः महाभागाः ॥ १५ ॥ जायायुता इत्यनेन सृष्ट्यर्थं कृतदारपरिग्रहा इति सूचितम् । श्रुतिश्च ‘ पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुनः’ इति पत्न्या जायात्वं वदति । एवं दशपुत्रपर्यन्तं पत्युः पतित्वं ततः पुत्रत्वं चोक्तम् ‘ दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि’ इति ॥ १६ ॥ धर्मोपि सना-

एतेभ्य एव सर्गोऽत्र विस्तृतोऽयं सनातनः ॥
धर्मोऽपि यदनुष्ठानात्प्रीणाति पुरुषं परम् ॥ १७ ॥

अज्ञानेनावृतज्ञाना मोज्ञात्संभोगतत्पराः ॥
धर्मतत्त्वमविज्ञाय शश्वद्यान्ति गतागतम् ॥ १८ ॥

असत्त्वाभानरूपस्य द्विविधावरणस्य च ॥
नाश आत्मैक्यबोधेन विक्षेपान्तस्ततोऽमृतम् ॥ १९ ॥

इति निश्चित्योपदेष्टुमजोऽद्वैतोऽप्यवातरत् ॥
योगपूर्वात्मविज्ञानं कृपणेभ्यो दयालुराट् ॥ २० ॥

अन्वर्थकोऽत्रिर्भगवान्द्वितीयो विधेः सुतो ब्रह्मविदस्य पत्नी ॥
पुत्री द्वितीया खलु कर्दमस्य पुत्रस्तयोर्दत्त इहाद्वितीयः ॥२१॥

निष्कल्मषं चित्तगतं तपस्तदत्र्याह्वयं मूर्तमिवास्य धातुः ॥
आविर्बभूवोत्तममीक्षणाद्यं ज्ञानीश्वरं चेति जगाद वेदः ॥ २२ ॥

तनो विस्तृतः 'एष सेतुर्विधरणः' इति श्रुतेर्धर्मस्येश्वराभिन्नत्वात्सनातनत्वं यदनुष्ठानाद्धर्मानुष्ठानात्प्रीणाति लोक इति शेषः ॥ १७ ॥ अज्ञानस्यावरकत्वादन्तरस्थितत्वाज्ज्ञानमावृतमिव राहुग्रस्तदिवाकरेन्दुवज्ज्ञानस्यात्मरूपत्वादावरणासंभवः । गतागतं उपाधिनिमित्तकं जन्ममरणम् ॥१८॥ आत्मा नास्तीत्यसत्त्वरूपं आत्मा न भातीत्यभानरूपं एवं द्विविधावरणस्य आत्मनोः प्रत्यक्परयोरैक्यबोधेन नाशस्ततः परं प्रारब्धभोगेन विक्षेपनाशस्ततोऽमृतं विदेहकैवल्यम् ॥ १९ ॥ २० ॥ अद्वितीय आत्मा ॥ २१ ॥ निष्कल्मषं सात्त्विकं मूर्तमिव मूर्तिमदिव ॥२२॥ अत्रेर्ज्ञानीश्वरत्वं प्राह–यदेति । आसुरो

**यदासुरः सूर्यमपि प्रकाशमाविध्यदेतं तमसात्मशक्त्या ॥**
**ब्रह्मेव माया तमविन्ददत्रिर्नान्ये समर्था इति विश्रुतं हि ॥२३॥**
**श्रीशाकलाम्नायऋचो महर्षियः पञ्चमं मण्डलमभ्यपश्यत् ॥**
**यत्रात्मभूताग्निमुखामरेन्द्राः प्रशंसिता ये ह्युभयर्द्धिमूलाः ॥२४॥**

**रुग्णान्विलोक्याद्ययुगे त्र जन्तूंस्त-**
**प्त्वातपो यस्त्वृच आयुराख्यम्॥**
**लब्ध्वोपवेदं समगाद्भिषग्रा-**
**डत्रिः कृते वैद्य इति प्रसिद्धिम् ॥२५॥**

**यो मन्दबोधाय मनुप्रणीतां ज्ञात्वा स्मृतिं वेदमतां निगूढाम् ॥**
**चक्रे परां स्पष्टतरां सुधर्मां त्रयीरितार्थानुसृतां दयालुः ॥२६॥**
**स्वयं निरीहोपि मुदोपयेमे विधीरितो ब्रह्मविदां वरीयान् ॥**
**बुधोऽनसूयां सुधिय सुशीलां सुलक्षणां भ्रातृमतीं सुरूपाम् ॥२७॥**
**श्रीकर्दमाख्येन महर्षिणेदं साध्व्यां स्वपत्न्यां खलु देवहूत्याम् ॥**
**उत्पादितं सत्तपसोऽतिधन्यं कन्यास्वरूपेण महाफलं सत् ॥२८॥**

भूपृष्ठगतो राहुः । ब्रह्मेव मायेत्यनेनातात्त्विकमेवेदम् 'राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादनात्' इति पूर्वाचार्योक्तेः । हीति श्रुतिप्रसिद्धेः । श्रुतिश्च 'यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः'॥ अत्रयस्तमन्वविन्दन् न ह्यन्ये शक्नुवन्'इति ॥ २३ ॥ ऋचः शाकलशाखायाः । तथाचानुक्रान्तं पञ्चमे मण्डलेऽनुक्तगोत्रमात्रेयं विद्यादिति 'अबोध्यग्निः समिधा जनानां' इत्यग्निलिङ्गादग्निमुखत्वं उभयर्द्धिरैहिकामुष्मिकफलसमृद्धिः ॥ २४ ॥ आद्ये कृतयुगे । भिषग्राट् वैद्यराजः ॥ २५ ॥ निगूढां गहनार्थां । त्रयीरितार्थानुसृतां वेदार्थानुसारिणीम् ॥ २६ ॥ ब्रह्मविद्वरीयानित्यनेन स्वत उत्थानाभावेऽपि परत उत्थानसत्त्वाद्वृत्तिमत्त्वाल्लोकसंग्रहार्थं 'जीवतो वाक्यकरणात्' इति शास्त्रपालनं युक्तमेव ॥ २७ ॥ २८ ॥ तप एवार्थो यस्य सः ॥२९॥

यां वै विधेः सूनुरयं महर्षिर्निष्कल्मषस्वीयतपःप्रभावात् ॥
अत्रिस्तपोर्थः खलु वेदवेत्ता समुद्वहे ब्रह्मपरो महात्मा ॥ २९ ॥

पराङ्मुखत्वं न कदापि यस्याः स्वप्नेपि कश्चिन्न गतोऽतिथिर्हि ॥
भूत्वापि नग्नान्नमदात्सुरेभ्य आतिथ्यमस्याः किमु वाच्यमग्र्यम् ३०

देवीभिरुत्कर्षभियातिसाध्व्या यस्याः सुरेन्द्रा विधिविष्णुशर्वाः॥
व्रतस्य भङ्गाय समीरितास्ते पुत्रीकृता धर्मबलाद्यया‌ऽमी ॥३१॥

पतिव्रताधर्मपरा वयं स्म
एवं सगर्वाः सुरवर्यनार्यः ॥
सावित्र्युमामाः स्वसमीपमाप्ता
यया स्वदीप्त्या कलुषीकृताः स्युः ॥ ३२ ॥

पतिव्रतायाः खलु विप्रपत्न्याः शापेन नष्टं बहुकालमर्कम् ॥
देवेडितायाः खलु जीवगुप्त्यै समुद्गतिं प्रापयदेव भूयः ॥३३॥

माण्डव्यशापेन मृतं रुजार्तं या कौशिकं तत्सहधर्मिणीड्या ॥
पश्यत्सु देवेष्वखिलेषु भूयो द्विजं सजीवं व्यकृणोत्सुसत्वा ॥३४॥

सुरेभ्यो ब्रह्मविष्णुशंकरेभ्यः ॥ ३० ॥ धर्मबलात् पातिव्रत्यप्रभावात् अपुत्रा अपि पुत्रभावं नीताः एतत्सर्वमग्रे स्फुटीभविष्यति ॥३१॥ पतिव्रताधर्मपरा वयं भवाम इति सदा मन्यमाना अत एव सगर्वाः आप्ताः प्राप्तास्तास्तुच्छीकृताः ॥३२॥ विप्रपत्न्याः कौशिकपत्न्याः । जीवगुप्त्यै जीवानां रक्षणाय । समुद्गतिं उदयम् ॥ ३३ ॥ सहधर्मिणी पत्नी तयेड्या स्तुत्या । सुष्ठु सत्वं पातिव्रत्यबलं यस्याः ॥३४॥ काजेशा ब्रह्मविष्ण्वीशाः । युयुजुः योजयामासुः ।

यदीहितालोचनहृष्टचित्ताः
काजेश्वरास्ते तनया भवन्तु ॥
साध्वीति चाशीर्भिरनुत्तमाभि-
रिन्द्रादयो यां युयुजुः सुराग्र्याः ॥ ३५ ॥

जातालं मृदुला यदर्थमचला लीलाविलोलोऽचलो
भीत्यास्या अनिलोऽनलोपि विमलोऽर्कश्चाभवच्छीतलः॥
कालः कालयितुं स्वकालमबलं लोकं न चालं बलं
कः साध्व्या अमलं विशालमचलं ज्ञातुं प्रभुर्मङ्गलम्॥३६॥

यत्सौन्दर्यं चन्द्रतुल्यं मतं चे-
दद्धानन्तं संततं भासमानम् ॥
यत्पुत्रोऽपीन्दुस्तु वृद्धिक्षयार्तः
सौन्दर्याढ्योपि त्रियामाप्रदीपः ॥ ३७ ॥

दयाक्षमाशान्तिमुखैर्गुणैर्यो
युक्तोपि विष्णुर्भगवान्परेशः ॥
ययानुजत्वं खलु पुत्रतां च
संप्रापितोऽतः किमु वाच्यमन्यत् ॥ ३८ ॥

॥ ३९ ॥ अचला भूमिः कालः स्वावसरं उद्दिश्याप्यबलं मर्त्यलोकं काल-यितुमपि प्रभुः समर्थो न ॥ ३६ ॥ अनन्तं नित्यं त्रियामाप्रदीपः रात्रौ प्रहरत्रयपर्यन्तमेव प्रकाशशीलो न सदा । त्रियामेति रात्रिनाम ॥ ३७ ॥ कपिलावतारेणानुजत्वं श्रीदत्तरूपेण पुत्रतां च ॥३८॥ अस्तोदययुक्तत्वात्

तेजस्विताऽर्कस्य च वर्ण्यते चेत्
सा कौशिकस्त्रीरितशापकाले ॥
याता कुतोऽस्तोदयसंयुतस्य
तेजस्वितास्या अनिशं ततोऽर्च्या ॥ ३९ ॥

मन्ये धन्येयं न योषा विशेषा
मूर्ता जाता केवला चित्कलाऽत्र ॥
सौन्दर्याद्यं सद्गुणाश्चान्यथा तु
प्राण्यप्राप्ताः सर्वतोऽस्याः कुतोऽमी ॥ ४० ॥

स्वभक्तिवृद्ध्या अगुणोपि विष्णुः
समीहितुं वै सगुणं पुरस्तात् ॥
स्वात्मानमेतामजडां स्वयोनि-
मकल्पयन्मामिव पूर्वमात्मा ॥ ४१ ॥

स्वरूपसाम्राज्यविधातुरत्रे-
रेषानसूया महिषी सुपूज्या ॥
यथार्थतो वर्णयितुं न कोऽपि
समर्थ एतामतुलां त्रिलोक्याम् ॥ ४२ ॥

सतीशापकाले निलीयमानत्वान्न सूर्य उपमार्हः ॥ ३९ ॥ मूर्ता मूर्तिमती ॥४०॥ पूर्वमात्मा मां मायामिवात्रापि वैषम्यं मायाया जडत्वमस्या अजडत्वम् ॥ ४१ ॥ सच्चिदानन्दस्वरूपसाम्राज्यकर्तुर्महिषी अभिषिक्तपत्नी कोपि

ब्रह्माजेशानां या जाता माता महाभागा ॥
मन्ये मान्येयं सा प्रत्यक्षा चित्कला साङ्गा ॥ ४३ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां ज्ञानकाण्डे द्वितीयाष्टके मनुपुत्र्युद्वाहानुसूयात्रिमाहात्म्यदत्तावतारकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

ब्रह्माप्यन्योपि कश्चन ॥ ४२ ॥ साङ्गा साकारा ॥४३॥ इति द्वि० टी० चतुर्थोऽध्यायः ॥ ४ ॥

इति श्रीदत्त० मनुपुत्र्युद्वाहानुसूयात्रिमाहात्म्य० नाम द्वितो० चतुर्थो० ॥ २ । ४ ॥

---

## ॥ अथ श्रीदत्तात्रेयाद्यवतारो नाम द्वितीयाष्टके पञ्चमोऽध्यायः ॥ २ । ५ ॥

तावालोक्यादिशन्नत्रौ द्वितीयं पुत्रमन्वितम् ॥
द्वितीयया मौनिपुत्र्या विनीतमनसूयया ॥ १ ॥
कुलाद्रिमृक्षं ब्रह्मज्ञवरीयांश्च विधीरितः ॥
पत्नीयुतोऽत्रिः पुत्रार्थं त्र्यधीशोपास्तये ययौ ॥ २ ॥
निर्वैरे शान्तबाधेऽद्रौ सर्वकालसुखावहे ॥
नानासत्फलपुष्पद्रौ स्वमृते स तपोऽतपत् ॥ ३ ॥
तार्क्ष्यासनस्थोऽब्दशतं संयतात्माऽनिलाशनः ॥
निर्द्वन्द्वः सुतरां दध्यावेकं तादृक् प्रजाप्तये ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥

त्रयोदशेऽनसूयात्रितपस्तुष्टास्तयोः सुताः ॥
ब्रह्मविष्णुमहेशाना अभवन्निति वर्ण्यते ॥१॥

कलापेक्षयाऽनसूया द्वितीया । द्वितीयेति सहधर्मिण्यपि । ऋक्षनामकं कुलाद्रिं विधिप्रेरणयैव संतानार्थं ब्रह्मविद्वरीयसोऽत्रेरुत्थानं त्रिगुणनियन्तुरुपासनाय ॥१॥२॥ प्रशान्तदावादिबाधे स्वमृते स्वादुजलेऽद्रौ धनं विना वा भक्तिश्रद्धावत्त्वात्। गारुडे 'श्रद्धया धार्यते धर्मो बहुभिर्नार्थराशिभिः॥आकिंचना हि मुनयः श्रद्धावन्तो दिवं गताः' इति ॥३॥गरुडासनस्थ एकपादेन स्थितः । अनिलाशनो वायुभक्षः।एकमद्वितीयं विष्णुम् ॥४॥ प्राणायामैधसा काष्टेन

प्राणायामैधःसमिद्धतपोग्न्युत्तापिताखिलम् ॥
प्रापुरत्रिं कविष्णवीशाः स्वस्वचिह्नान्विताः शिवाः ॥५॥

तत्प्रभावहृतध्यानः स बहिर्गतदृक् शनैः ॥
हंसतार्क्ष्यवृषस्थांस्तान्दृष्ट्वा प्रीतोऽस्तुवन्नतः ॥ ६ ॥

अव्यक्तमचिन्त्यं त्वां नौम्यविकार्यम् ॥
अग्राह्यमतर्क्यं नित्यं विभुमेकम् ॥ ७ ॥

देवं वरधीरं त्वानन्यमपारम् ॥
सर्गाब्धिसुतीरं धीलभ्यमदूरम् ॥ ८ ॥

समिद्धो यस्तपोग्निस्तेनोत्कृष्टं तापितं अखिलं ब्रह्माण्डं येन तमत्रिं स्वस्वचिह्नैः श्रीवत्सादिभिः । शिवा आनन्दरूपाः ॥५॥ तेषामैश्वरेण प्रभावेण हृतमाकृष्टं ध्यानं यस्यात एव प्रत्यक्तं विहाय बहिर्गता दृग् यस्य सः नतः नम्रः ॥६॥ तनुमध्यावृत्तैस्तौति । अविकार्यं स्थूलदेहराहित्यात् । अचिन्त्यं ध्यानानर्हं सूक्ष्मदेहस्याप्यभावात् । तत्र हेतुः अव्यक्तं कैश्चिदपि प्रमाणैर्न व्यज्यत इत्यव्यक्तस्तं अन्तःकरणस्याप्यभावात् । 'न तस्य कार्यं करणं च विद्यते' 'नायं कुतश्चिन्न बभूव कश्चित्' इति श्रुतेः । अत एवाग्राह्यमतर्क्यं च ईदृशं ब्रह्मेत्याह । नित्यं सत्यं नित्यत्वातिरिक्तसत्यत्वाभावात् । विभुं व्यापकमनन्तं एकमखण्डं चिदेकरसं । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः ॥ ७ ॥ देवं इन्द्रियान्तःकरणद्योतकं वरधियं ईरयति प्रेरयति तथा प्रत्यगभिन्नत्वादनन्यं अनन्तत्वादपारं 'अतो ज्यायांश्च पूरुषः' इति श्रुतेरध्यासाधिष्ठानत्वात्सृष्टितीरत्वम् । तटस्थलक्षणमिदं 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुतेरनन्यत्वेन वृत्तिव्याप्यत्वाददूरमन्तर्मुखानाम् ॥ ८ ॥ अनादित्वादुत्पत्तिर्निवारिता ।

श्रीविष्णुमनादिं त्रीशं जगदादिम् ॥
विश्वभ्रमसंधिं नष्टाप्तजनाधिम् ॥ ९ ॥
कूटस्थनिजैकांशोद्भावितविश्वम् ॥
कर्षन्तमनेकां मायामिह विश्वम् ॥ १० ॥
सर्वज्ञमनन्तं व्यस्तं च समस्तम् ॥
सर्वं गुणवन्तं सत्यं भगवन्तम् ॥ ११ ॥
संस्ते गुणभेदात्काद्यात्मविभेदाः ॥
सृष्ट्यादिनिदानस्त्वं चानभिमानः ॥ १२ ॥
लीलानुसेवाशीलानुयुगं वा ॥
पातापि न लिप्तो ज्ञातास्य न लिप्तः ॥ १३ ॥
वाक्चित्तपरैको ध्यातोऽत्र मयैकः ॥
यूयं त्रय आप्ताः को वोऽत्र स आप्तः ॥ १४ ॥

विश्वभ्रमः सम्यङ्निर्धार्यतेऽस्मिन्निति तथाऽध्यासाधिष्ठानत्वात् । नष्टः स्वजनाधिर्येन ॥ ९ ॥ अविकृतस्यैकांशेन कल्पितं विश्वं येन । 'पादोऽस्य विश्वा भूतानि' इति श्रुतेः कूटस्थेति संबुद्धिर्वा । इह जगति जीवरूपेण विशतीति विश्वस्तम् ॥१०॥११॥ हे सन् काद्या ब्रह्माद्या गुणत आत्मभेदाः ॥१२॥ अनुयुगं प्रतियुगम् हे लीलाविग्रह सेवनशीलास्य जगतः पातापि त्वं न लिप्तो भवसि असङ्गोदासीनत्वात् । इत्थंभूतस्य तव ज्ञाता कृतेन कर्मणा लिप्तो न भवेत् । स्मृतिश्च 'न च मां तानि कर्माणि निबध्नन्ति'। 'न मां कर्माणि लिम्पन्ति' इत्यादि ॥१३॥ हे अवाङ्मनसगोचर, तावन्मयैको ध्यातः । आप्ता आगताः वः युष्माकं मध्ये मया ध्यातः आप्तो हितशंसी कः ॥ १४ ॥ ते देवाः हे सत्यसंकल्प, ते हृद्यं संकल्पितं नासत्यं भवितु-

ऊचुस्त ऋषे सत्संकल्प न तेऽसत् ॥
ह्यं हि य एको ध्यातः स इतः कः ॥ १५ ॥

मादृक्सुतलब्ध्यै वृत्तश्रमसिद्ध्यै ॥
दत्तोऽद्य मयात्माऽयं ते सकलात्मा ॥ १६ ॥

एवं दत्वा वरं सद्यो देवा अन्तर्हितास्त्रयः ॥
अथावतरदग्रेऽत्रेर्दत्तात्रेयश्चतुर्भुजः ॥ १७ ॥

आद्योऽवतारोऽजस्यायं विभोर्लीलाविहारिणः ॥
यद्ध्यानात्पापमुक्तः सन् याति श्रेय इति श्रुतम् ॥१८॥

दृष्ट्वा स्वं चारुसर्वाङ्गं प्रतीतावपि दंपती ॥
आशङ्कितान्तरौ ज्ञात्वा त्र्यधीशः प्राह सर्ववित् ॥ १९॥

आदितोऽर्भसुखार्थेच्छा विद्यते वां हि तद्द्रुतम् ॥
प्रभवन्तु मदंशोत्थाः सुपुत्राः सुयशस्कराः ॥ २० ॥

एवं लब्धवरः सोऽत्रिस्तं नत्वा जायया सह ॥
स्वाश्रमं तदनुज्ञातो ययौ तद्गतमानसः ॥ २१ ॥

मर्हति । हि यस्माद्यस्त्वया ध्यातः स इतोऽस्मत्तः कोऽन्यो भवितुमर्हति । न कोऽपि । वयमेकरूपा इत्यर्थः ॥ १५ ॥ वृत्तश्रमसिध्यै संजातश्रमफलसिद्धये तुभ्यमयं ममात्मा मया दत्तः ॥ १६ ॥ अन्तर्हिता गुप्ताः ॥ १७ ॥ ॥१८॥ दर्शनात्प्रतीतौ हृष्टौ अपि लालनाद्यसंभवेनेषच्छङ्कितमानसौ ज्ञात्वा ॥ १९ ॥ अर्भसुखं बालसुखं तस्येच्छा वां युवयोर्विद्यते ॥ २० ॥ २१ ॥

चतुर्भुजावतारोऽयं शाण्डिल्याद्या यदर्चकाः ॥
निःश्रेयसं गताश्चाथावतारोऽस्यान्य उच्यते ॥ २२ ॥

नारदस्त्वेकदाऽऽतिथ्यं पातिव्रत्यं च वीक्ष्य सत् ॥
अत्रिप्रियायाः सावित्रीश्रीशाभ्यः प्रशशंस तत् ॥ २३ ॥

तदा रुष्टाः प्रैरयंस्ताः पतीन्स्वाधीनभर्तृकाः ॥
अनसूयासत्त्वहृत्यै सासूया देवता अपि ॥ २४ ॥

भूत्वाऽतिथयोऽत्रेर्वेश्मैत्य दिनान्ते ॥
ईशाः सति नोऽन्नं देहीत्यवदंस्ते ॥ २५ ॥

नग्ना यदि भूत्वाऽन्नं दास्यसि हृष्टा ॥
गृह्णीम उ नो चेद्यामस्त्वयि रुष्टाः ॥ २६ ॥

साऽऽश्रुत्य तदर्थ्यं मत्वाऽर्भवदेतान् ॥
नग्नाऽभवदैक्षत्तानेव नु पोतान् ॥ २७ ॥

दैवात्स्नुतदुग्धं दत्त्वेष्टमथो तान् ॥
प्रास्वापयदुच्चैः सुश्रावितगीतान् ॥ २८ ॥

चतुर्भुजोऽयमाद्योऽवतारः । अथापर उच्यते ॥ २२ ॥ २३ ॥ 'कन्दुकेनेव कान्तेन क्रीडेत्स्वाधीनभर्तृका' इत्युक्तलक्षणस्य विद्यमानत्वात्। स्वाधीनभर्तृका इव ॥ २४ ॥ दिनान्ते मध्याह्नेऽत्रेर्गृहमागत्य भो सति । नोऽस्मभ्यं देहीत्यवदन्याचन्ते स्म ॥२५॥ नग्ना दिगंबरा इति बाह्यार्थः । आभ्यन्तरार्थस्तु मायावरणरहिता भूत्वेति ॥ २६ ॥ तद्याचितं अर्थ्यं अर्थादनपेतं न त्वनर्थकारकमिति मत्वा आश्रुत्याङ्गीकृत्य एतान् देवानर्भवद्बालवन्मत्वा नु क्षिप्रं पोतानर्भकान् ॥ २७ ॥ इष्टं पर्याप्तम् ॥ २८ ॥ कृतं

अत्रिः कृतकृत्योऽप्येत्यापि वनात्तत् ॥
श्रुत्वाऽखिलमीशान् ज्ञात्वाऽस्तुवदेतान् ॥ २९ ॥
देव्योऽप्यृषिवाक्यादाप्ताः पतिकामाः ॥
स्वस्वेडनभिज्ञा ह्रीता हतकामाः ॥ ३० ॥
साऽथाऽस्तुवदीशानासन्निजरूपैः ॥
व्यक्ताः खलु तल्पे तेऽप्यर्भकरूपैः ॥ ३१ ॥
स्त्रीभिः सह ताभ्यां दत्त्वेष्टवरं ते ॥
स्वं स्वं पदमीयुस्तस्थुस्तु सुतास्ते ॥ ३२ ॥
सैष द्विभुजोऽन्योऽजस्याप्यवतारः ॥
योऽत्रास्ति दलादालर्कादिसुतारः ॥ ३३ ॥
अन्योऽप्यवतारः षड्बाहुरुदारः ॥
वच्म्यर्थिविदूरं सद्योग्यविदूरम् ॥ ३४ ॥
भर्तृनाशमिनोद्गत्या श्रु ( ज्ञा ) त्वा माण्डव्यशापतः ॥
कौशिकस्त्री शशापार्कं तदान्ध्यात्पीडितं जगत् ॥ ३५ ॥

कृत्यमाह्निकं येन ॥ २९ ॥ देव्यस्त्रिदेवपत्न्यः ऋषिवाक्यान्नारदवचनात् बाल्यापन्नत्वात्स्वस्वपतिरूपानभिज्ञाः अत एव ह्रीता लज्जिताः । हतो नष्टः कामः स्वोत्कर्षरूपो यासां ताः ॥ ३० ॥ साऽनसूया ॥ ३१ ॥ स्वपदं स्वस्थानम् ॥ ३२ ॥ 'सोचि लोपे चेत्पादपूरणं' इति पादपूरणार्थं लोपः । दलादनालर्कादीन् सुखेन तारयतीति तथा ॥ ३३ ॥ स्वात्मदानेन गर्भवासादिस्वीकरणात् उदारः कामिनाम् । अर्थिनां च बहिर्मुखानां विशेषेण दूरः । सतां योगिनां चाविदूरः तेषामात्मभूतत्वात् तं वच्मि ॥३४॥ इनोद्गत्या सूर्योदयतः ॥३५॥ कादिदेवा ब्रह्माद्याः । सतीबोधाय

अत्र्याश्रमं कादिदेवा गत्वा नत्वा सभार्यकम् ॥
आनिन्युः कौशिकगृहं सतीबोधाय कातराः ॥ ३६ ॥

अनसूयोवाच साध्वि त्वच्छापान्नोदितोऽप्यसौ ॥
तत्कल्पोऽत्रास्य मा भीस्ते सूर्यमाश्वानयोद्गतिम् ॥३७॥

तदाऽप्युदयमेहीना ३ इत्युक्तोऽसौ तदोदितः ॥
कौशिकस्तु मृतो द्राक् तमनसूयाप्यजीवयत् ॥ ३८ ॥

तदा हृष्टाः सुराः साध्वि कुक्षौ तेऽवतरन्त्वजाः ॥
कविष्ण्वीशा इति वरं दत्वा ते त्रिदिवं ययुः ॥ ३९ ॥

स्वधामैत्यात्रिणाऽप्यूर्ध्वरेतसा मूर्तिमद्धृदा ॥
ध्यात्वाऽकर्माशया ईशा न्यस्ता जायान्तरे परे ॥४०॥

वरप्रभावाद्धृत्वाऽपि गर्भवत्तानसूत सा ॥
मार्गे प्रदोषे पूर्णायां बुधेऽजोऽवातरन्मृगे ॥ ४१ ॥

कौशिकपत्नीं बोधयितुम् ॥३६॥ असौ आदित्यः । तद्धेतोः अस्य जगतः कल्पः प्रलयः ते भीर्भयं माऽस्तु । आशु सूर्यं उदयमानय ॥ ३७ ॥ इना ३ इति दूराद्धूते प्लुतिः ॥ ३८ ॥ अजा जन्मातीता अपि ब्रह्मविष्ण्वीशाः ॥ ३९ ॥ स्वधाम स्वाश्रमम् । त्रयाणामपीश्वरत्वात्कर्माशयरहिताः । यदाह पतञ्जलिः 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति । हृदा मनसा न्यस्ताः स्थापिताः नतु ग्राम्यधर्मतः ॥ ४० ॥ तथा चेत्कथं गर्भधारणमत आह । देववरप्रभावात् । मृगे मृगशीर्षनक्षत्रे ॥ ४१ ॥ अज

ज्योतिर्मय आत्मा योऽजो भगवान्त्सः ॥
स्वं दर्शयितुं प्रागुक्तैक्यमुभाभ्याम् ॥ ४२ ॥
स्रग्भाजनवाद्योच्छूलाब्जसुचक्रैः ॥
युक् षड्भुज आस प्रादुः स्मितवक्त्रः ॥ ४३ ॥
ज्ञात्वा तदभीष्टं भूयोऽर्भकरूपैः ॥
तस्थावथ हृष्टौ तौ तैश्च सुरूपैः ॥ ४४ ॥
दत्ताख्योऽग्र्यःस्वयं विष्णुः कांशश्चन्द्रोऽन्वयार्धिकृत् ॥
चण्डोऽप्यनुग्रहपरो दुर्वासाश्च हरांशजः ॥ ४५ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां
ज्ञानकाण्डे द्वितीयाष्टके पञ्चमोऽध्यायः ॥ २ । ५ ॥

इत्युत्पत्तिर्निवारिता । क्रियया ज्ञानेन वा न प्राप्तिरिति ज्योतिरात्मपदाभ्यामाप्तिर्निवारिता । आत्मनोऽसङ्गत्वात्तुषापाकरणेनावघातेनेव न विकृतिः आत्मनः पूर्णत्वान्निरञ्जनत्वादतिशयाधानेन मलापाकरणेन वा न संस्कृतिः । परिशेषाद्भक्त्यैव लब्ध इत्याह । प्राक् पूर्वं वरदानकाले ॥ ४२ ॥ य एको ध्यातः स इतः क इत्युक्तस्यैक्यं त्रयाणामेकत्वं उभाभ्यामनसूयात्रिभ्यां दर्शयितुं षड्भुजः प्रादुरास । स्रक् अक्षमाला भाजनं कमण्डलुः वाद्यं डमरुः उत्कृष्टं शूलं अब्जं कमलं सुचक्रं सुदर्शनम् ॥ ४३ ॥ तयोरभीष्टं बालत्वम् ॥ ४४ ॥ कांशो ब्रह्मांशः । अन्वयर्द्धिकृद्वंशवृद्धिकरः । चण्डोऽत्यन्तकोपनोऽपि ॥ ४५ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्यां ज्ञानकाण्डे द्वितीयाष्टके श्रीदत्तात्रेयावतारकथनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

इति श्रीदत्तपुराणे सार्धत्रिसाहस्र्यां संहितायां
द्वितीयाष्टके पञ्चमोऽध्यायः ॥ २ । ५ ॥

---

# अथ दशावतारचरितं नाम द्वितीयाष्टके षष्ठोऽध्यायः ॥ २ । ६ ॥

निहोता यः स्वभक्तेभ्यो दत्त आन्वीक्षिकीं प्रभुः ॥
को जानातीह तत्कर्मप्रयोजनगुणादिकम् ॥ १ ॥

योगीन्द्रवदान्यः साक्षाद्भगवान्यः ॥
श्रीदत्त इहान्यः कस्तत्सममान्यः ॥ २ ॥

सोमो द्रुहिणांशो वंशर्द्धिकृदेषः ॥
भूत्वाऽत्र रसात्मा सर्वौषधिपोषः ॥ ३ ॥

मत्स्याद्यवतारा विष्णोर्जनतारा: ॥
जाता य ईशांशस्तत्कारणमंशः ॥ ४ ॥

राजर्षिरम्बरीषाख्यः सौरिर्भागवतोत्तमः ॥
एकादशीव्रतपरः सर्वदा विष्णुचिन्तकः ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥ ॐ ॥

दशावतारचरितं समासेन चतुर्दशे ॥
व्यासतो मत्स्यकूर्माख्यावतारौ कथितौ खलु ॥

अग्निरूपेण देवान्नितरामाह्वयतीति निहोता । आन्वीक्षिकीमात्मविद्यां को जानाति न कोऽपि । 'यो अस्याध्यक्षः परमे व्योमन्सो अङ्ग वेद यदि वा न वेद' इति श्रुतेः ॥१॥ तत्समोऽन्यः को नु मान्यः । कोऽपि नेत्यर्थः ॥ २ ॥ द्रुहिणांशो ब्रह्मांशः ॥ ३ ॥ ये जनतारा विष्णोरवतारा जातास्तत्कारणं शापरूपेणेशः अंशः दुर्वासा अभूत् ॥४॥ तदेवाह । सौरिः

तद्‌गृहं दक्षिणे देशे दुर्वासा द्वादशीदिने ॥
प्रातरेत्यार्पयाऽलं मे भोजनं चेत्युवाच तम् ॥ ६ ॥
राजर्षिः प्राह तं सिद्धमन्नमाश्वद्य पारणा ॥
अतः कृत्वाऽऽह्निकं शीघ्रमेहि मे त्वं प्रियोऽतिथिः॥७॥
तथेत्युक्त्वाऽपि दुर्वासा नदीं गत्वा परीक्षितुम् ॥
चिरं तदाऽऽतिथेयत्वं चक्रे कर्म समाहितः ॥ ८ ॥
नैतावन्तं कालमाप्तः स यायात्पारणाक्षणः ॥
व्रतभङ्गस्तेन शस्ता भुक्तिर्हित्वा मुनिं न मे ॥ ९ ॥
काऽपि हानिर्नांबुपानादिति मत्वा पपौ जलम् ॥
तदैत्य पीतं दुर्वासा दृष्ट्वा तं कुपितोऽब्रवीत् ॥ १० ॥
हित्वा क्षुधितं मां राजर्ष्यधम त्वम् ॥
पीतं तत एहि श्रेष्ठोऽप्यधमत्वम् ॥ ११ ॥
रे त्वं नु कुवृत्तः प्रेष्ठव्रतमत्तः ॥
पापोऽसि हि वृत्तः शापं वह मत्तः ॥ १२ ॥

सूर्यवंशीयः ॥५॥ अलं पर्याप्तमन्नम् ॥ ६ ॥ ॥ ७ ॥ अतिथिषु साधुराति-थेयः 'पथ्यतिथि' इति ढञ् तस्य भावस्तत्त्वम् ॥८॥ आप्त आगतः स ऋषिः। पारणाकालः यायाद्यातुं शक्नुयात् 'शकि लुङ्च' इति शक्यर्थे लिङ् । मुनिं विहाय भुक्तिर्भोजनं न शस्तम् ॥९॥ अम्बुपानात्तीर्थजलपानान्न काऽपि। जलपानेनापि पारणासिद्धेः हानिः । जलं पीतं दृष्ट्वा कुपितस्तमब्रवीत् । यद्वा पीतं पानमस्यास्तीति पीतः 'पीता गावो भुक्ता ब्राह्मणाः' इति महाभाष्ये दर्शनात् तं दृष्ट्वा कुपितस्तस्मा इति शेषः ॥ १० ॥ श्रेष्ठोऽपि त्वमधमत्व-मेहि ॥ ११ ॥ न्विति वितर्के । कुत्सितं वृत्तं यस्य सः । प्रेष्ठस्य प्रियतमस्य

मत्स्यादिवियोनीर्याहीति तदुक्तिम् ॥
श्रुत्वाऽपि स दध्यौ विष्णुं कृतमुक्तिम् ॥ १३ ॥
तर्ह्येत्य नु विष्णुः प्राहाप्यभविष्णुः ॥
तं मेऽर्पय शापं भक्ते न च तापम् ॥ १४ ॥
प्रेष्ठा मम भक्ता ये मद्व्रतसक्ताः ॥
नार्हा इह युक्ता जन्यै य उ मुक्ताः ॥ १५ ॥
ब्रह्मण्य उताहं युष्मद्व्रतवाहम् ॥
मां योजय शक्तं शापेन न भक्तम् ॥ १६ ॥
श्रुत्वेति तदुक्तं ज्ञात्वाऽपि स युक्तम् ॥
शापं हरयेऽदात्तं सोऽप्यज आदात् ॥ १७ ॥
मत्स्योऽब्धिविहारः पूर्वो ह्यवतारः ॥
जातः श्रुतिहारः पूज्यो मनुतारः ॥ १८ ॥

विष्णोर्व्रतेन मत्तः त्वं पापो वृत्तो जातोऽस्यतो मत्तः शापं वह ॥ १२ ॥ मत्स्याद्या विविधा योनीः । कृता स्वभक्तमुक्तिर्येन तम् ॥ १३ ॥ तर्हि ध्यानसमय एव नु क्षिप्रं भविष्णुर्भूष्णुर्न भवतीत्यभविष्णुः आगत्यापि प्राह तं शापं मे देहि । भक्ते तापं न देहि ॥ १४ ॥ प्रेष्ठाः प्रियतमाः 'प्रियो हि ज्ञानिनोऽत्यर्थम्' इति स्मृतेः । ये मुक्तास्ते जन्यै जन्ममरणप्रबन्धाय युक्ता न भवन्ति ॥ १५ ॥ युष्माकं व्रतं वहतीति तं मां शापेन योजय भक्तं न योजय ॥ १६ ॥ युक्तं युक्तियुक्तं अदाद्दत्तवान् । तं शापमजोऽप्यादात् स्वीचकार ॥ १७ ॥ दशभिः श्लोकैः संक्षेपतो मत्स्याद्यवतारानाह । वेद-मार्गणार्थमब्धौ विहारो यस्य स वैवस्वतमनुतारकः । श्रुतयो हारवद्भूषणानि यस्य समुद्राच्छ्रुतिहर्ता वा स मत्स्यः प्रथमोऽवतारः ॥ १८ ॥ धराया भूमेः

नष्टामरबाधः कूर्मोऽथ धराधः ॥
गत्वा वहतीशः क्ष्मां योऽप्यमृतेशः ॥ १९ ॥

भूभृत्स हिरण्याक्षघ्नोऽत्र तृतीयः ॥
भूदार उदारो यज्ञो भजनीयः ॥ २० ॥

भृत्योक्त्यनुसारी पूर्वासुरवैरी ॥
नाम्नाऽपि नृसिंहः साक्षाच्च नृसिंहः ॥ २१ ॥

यो वामनवेषः सन् पञ्चम एषः ॥
याच्ञोपधिबद्धस्तेनो बलिरद्धा ॥ २२ ॥

दूराट्क्षयकामः स्याद्भार्गवरामः ॥
क्ष्मादो गुरुदासः षष्ठोऽब्धिनिवासः ॥ २३ ॥

राट् सप्तम आसीद्रामो वनवासी ॥
पित्रुक्त्यनुसारी रक्षोलयकारी ॥ २४ ॥

वर्ण्यष्टम इष्टः कृष्णो हतदुष्टः ॥
यः षोडशनारीसाहस्रविहारी ॥ २५ ॥

**धरस्य** मन्दराचलस्य वाऽधोभागं गत्वा क्ष्मां भूमिं वहति । अमृतस्य **पीयूषस्य** मोक्षस्य वा ईशः ॥ १९ ॥ यज्ञः यज्ञात्मा । भूदारो वराहः **भूर्दारा यस्येति** वा ॥ २० ॥ नुर्जीवस्य सिंमविद्यां हन्तीति नृसिंहः ॥ २१ ॥ **स्तेनो** देवभागापहर्ता तेन उ तेनैव याच्ञोपाधिना याच्ञाव्याजेन बलिः **अद्धा** साक्षाद्बद्धः ॥२२॥ दुष्टराजक्षयकामः क्ष्मादो भूदानकर्ता कश्यपायेति **शेषः** । गुरुदासः पितृभक्तः ॥ २३ ॥ राट् राजा पितृवाचोऽनुसारी ॥२४॥ **वर्णी** ब्रह्मचारी ॥ २५ ॥ अयं विद्यमानो नवमो बुद्धः । कोऽसौ यं कोऽपि

बुद्धो नवमोऽयं विस्तारितमायम् ॥
यं कोऽपि न वेद सोऽप्यावृतिमर्दः ॥ २६ ॥

म्लेच्छक्षयकर्ता कल्की वृषभर्ता ॥
विप्रो भविताऽर्थ्यः शूरो दशमोऽर्च्यः ॥ २७ ॥

अन्येऽप्यवताराः सद्धर्मसुताराः ॥
तत्कर्मगुणाद्यं को वेत्त्यनवद्यम् ॥ २८ ॥

आत्मैवमधीशो योऽजोऽव्यय ईशः ॥
मायावशतोऽर्थ्यान्कायानभजद्यान् ॥ २९ ॥

ते सात्वतपुष्ट्यै न स्वीयसुतुष्ट्यै ॥
पूर्णो गतकामः कोऽप्यस्य न कामः ॥ ३० ॥

जन्मास्य सुदिव्यं कर्मापि च भव्यम् ॥
तत्त्वादिह वेत्ता सत्त्वावृतिभेत्ता ॥ ३१ ॥

रागादिविमुक्तः साङ्गाजनिभक्तः ॥
जन्यार्तिविमुक्तः सन्यात्यजमाप्तः ॥ ३२ ॥

कारुणिक इति न वेद स भजकावरणनाशकः ॥ २६ ॥ वृषभर्ता धर्मपालकः । अर्थ्यः प्रार्थनीयः ॥ २७ ॥ अन्ये कपिलाद्याः । अनवद्यं श्रेष्ठं ॥ २८ ॥ अर्थ्यान् प्रार्थनीयान् यान्कायानवतारानभजत् ते भक्ततुष्ट्यर्थमेव पूर्णत्वादाप्तकामत्वान्न स्वतुष्ट्यर्थम् ॥ २९ ॥ ॥ ३० ॥ दिव्यमलौकिकं जन्म कर्म च भव्यं मङ्गलकारकं यस्तत्त्वतो जानाति स एवावरणभङ्गकर्ता ॥ ३१ ॥ साङ्गाजनिभक्तः साकारभगवद्भक्तः यः जन्मादिपीडामुक्तोऽतएव सन्साधुरतएवाप्त ईश्वरवल्लभः सः अजं जन्मादिहीनं परात्मानमभेदेन याति

एवं सुलभोऽयं त्यक्त्वाम्रुमुपायम् ॥
नारं श्रितमायं यात्येतदपायम् ॥ ३३ ॥
स्वस्य प्रकृतिर्यास्मिन्हेतुरवार्या ॥
रागाद्यवशस्तां जह्याच्चिरमाप्ताम् ॥ ३४ ॥
सूपायदुरापः शापात्स सुखापः ॥
मुक्त्या अनुवेलं यद्भक्तिरिहालम् ॥ ३५ ॥
तस्यांशसुलीलां वक्ष्येऽमृतमूलाम् ॥
संक्षेपत एषाप्याविद्यकशोषा ॥ ३६ ॥
एकाग्रहृदं कं शङ्खासुर एत्य ॥
हृत्वाखिलवेदान्लीनोऽभवदब्धौ ॥ ३७ ॥
तर्ह्येत्य विधात्रा संप्रार्थितविष्णुः ॥
भूत्वाप्यथ मत्स्योऽब्धिं प्राप स जिष्णुः ॥ ३८ ॥

॥ ३२ ॥ एवमयं स्वप्रकाशापरोक्षरूप आत्मा सुलभोस्ति । अमुं भजनादिरूपमुपायं अनादृत्य श्रितमायं नराणां समूहो नारं जन्मादिरूपमपायं याति ॥ ३३ ॥ या शास्त्रसज्जनसंबन्धं विनाऽनिवार्या स्वस्य पूर्वसंस्कारजा पश्चादिसदृशी प्रकृतिः सैवास्मिन्पूर्वोक्तापाये हेतुः । तर्हि विधिप्रतिषेधवैयर्थ्यं प्राप्तमत आह । विषयस्मरणादिना रागादीनुत्पाद्यानवरतं तस्याः प्रवर्तमानत्वाद्यतनशीलो रागादिरहितस्तां जह्यात् ॥ ३४ ॥ सूपायैर्मननादिभिर्यो दुरापः स शापनिमित्तेनावतीर्णत्वादिह सुखापोऽभूत् । अनुवेलं क्रियमाणा यद्भक्तिरेव मुक्त्यै अलम् ॥ ३५ ॥ मोक्षकारणभूतां तस्यावताराणां शोभनलीलां संक्षेपतो वक्ष्ये । संक्षिप्तापि सैषाऽविद्याकामकर्मजन्मादिदोषशोषणकारिणी ॥ ३६ ॥ मत्स्यावतारमाह–एकेति चतुर्भिः । एकाग्रचित्तं ब्रह्माणम् ॥ ३७ ॥ तर्ह्येव तदैव । जिष्णुर्जयशीलः ॥ ३८ ॥ समग्रं साङ्गोपा वेदं

हत्वाऽसुरमुग्रं वेदं च समग्रम् ॥
उद्धृत्य च गां स स्रष्ट्रेऽर्पयदर्यः ॥ ३९ ॥
लब्धाखिलवेदः स्रष्टा गतखेदः ॥
अत्रासृजदेतत्प्राग्वत्स च तद्वित् ॥ ४० ॥
दुर्वासऋषेर्यच्छापादमरेन्द्राः ॥
रत्नानि पयोब्धौ यातानि विदित्वा ॥ ४१ ॥
मन्त्राद्वशदैत्या देवा हृतकामाः ॥
क्षीराब्धिमथास्ते सर्वेऽमृतकामाः ॥ ४२ ॥
ते मन्दरमन्थाः सर्पेशगुणा हि ॥
मन्थेऽध इतेऽजं प्रोचुर्न उ पाहि ॥ ४३ ॥
देवोपि वरेण्यो भूत्वा कमठोऽधः ॥
साद्रिं स दधौ गां पृष्ठे हृतबाधः ॥ ४४ ॥
रत्नानि तदाब्धेर्जातानि विषं प्राक् ॥
लोकान्तकमीशो भेजे दयया द्राक् ॥ ४५ ॥

जलमग्नां गां भूमिं चोध्दृत्य ब्रह्मणे समर्पयत् ॥ ३९ ॥ प्राग्वद्यथापूर्वं 'धाता यथापूर्वमकल्पयत्' इति श्रुतेः । तद्विद्वेदोक्तसृष्टिरचनाज्ञः ॥ ४० ॥ कूर्मावतारं वक्तुं तावत्कारणमाह । दुर्वासःशापाद्रत्नानि पयोब्धिपतितानि ज्ञात्वा तदाज्ञया मन्त्रेणैव वशीकृता दैत्या यैस्तेऽमृतेच्छवः ॥ ४१ ॥ ॥ ४२ ॥ मन्दराचलो मन्थो येषां ते सर्पेशो वासुकिर्गुणो रज्जुर्येषां ते मन्थेऽधोगते सत्यजं विष्णुं नः पाहीत्यूचुः ॥ ४३ ॥ कमठः कूर्मः । गां भूमिम् ॥ ४४ ॥ विषं कालकूटं लोकसंहारकं दृष्ट्वा दययेशो महादेवो भेजे सिषेवे । अपिबदित्यर्थः ॥ ४५ ॥ तेन तस्योपि स के मस्तके परं द्वितीयमुत्कृष्टं वा इन्दुं

तस्मोपि स केऽधाद्रत्नं परमिन्दुम् ॥
तेनापि न शान्तः के चामरसिन्धुम् ॥ ४६ ॥

श्रीकौस्तुभशाङ्गब्जान्विष्णुरिनोऽश्वम् ॥
धन्वन्तरिकल्पद्रू गोगजवेश्याः ॥ ४७ ॥

प्रापेन्द्र उ दैत्यैर्लब्धोऽमृतकुम्भः ॥
तद्वञ्चितदेवान्वीक्ष्यामृतनाभः ॥ ४८ ॥

मोहिन्यथ भूत्वा लब्ध्वाऽमृतमेभ्यः ॥
मद्यं प्रददौ सा हृद्यं त्वमृतेभ्यः ॥ ४९ ॥

देवालिगराहोश्चिच्छेद कमार्या ॥
खेटोऽमृतपोऽभूत्केन्द्वन्तरनार्यः ॥ ५० ॥

मत्ता असुरास्तेऽन्योन्यं त्वथ जघ्नुः ॥
देवाः कृतकृत्या नाकं ह्यनुजग्मुः ॥ ५१ ॥

रत्नभूतं के मस्तके अमरसिन्धुं गङ्गां चाधात् ॥ ४६ ॥ श्रीर्लक्ष्मीः कौस्तुभो मणिः शार्ङ्गं चापः अब्जः पाञ्चजन्यः शङ्ख एतान्विष्णुः प्राप । विष्णवे दत्ता इति यावत् । इनः सूर्य उच्चैःश्रवसमश्वं प्राप । धन्वन्तरिं कल्पवृक्षं गां कामधेनुं गजमैरावतं वेश्या अप्सरसश्चेन्द्रः प्राप । तैर्दैत्यैर्वञ्चितान् देवान् अमृतनाभो विष्णुर्वीक्ष्याथ स्वयं मोहिनी भूत्वाऽमृतं लब्ध्वैभ्यो दैत्येभ्यो मद्यं सुरां ददौ । हृद्यममृतममृतेभ्यो देवेभ्योऽदात् । योग्यं योग्याय दातव्यमिति न्यायात् ॥ ४७ ॥ ॥ ४८ ॥ ॥ ४९ ॥ केन्द्वन्तः सूर्यचन्द्रमध्ये देवपङ्क्तिगराहोः कं शिरः आर्या मोहिनी शिरश्चिच्छेद । सोऽनार्यः खलः खेटो ग्रहोऽभूत् ॥ ५० ॥ ५१ ॥ कुभागः

राहूस्तु कुभागो भास्वच्छशिमर्दः ॥
पर्वण्यमुमत्रिर्वेदावृतिमर्दः ॥ ५२ ॥

रत्नानि तु यानि श्रीचन्द्रमुखानि ॥
अब्धेर्मथनात्प्राक् स्वर्गे निहितानि ॥ ५३ ॥

इन्द्रार्पितमालावज्ञाकुपितस्य ॥
शापादतिभीष्मात्तान्यत्रिसुतस्य ॥ ५४ ॥

अब्धौ पतितानि प्राप्तान्यृषिसूक्तेः ॥
नव्यानि न चातः पाराशरसूक्तेः ॥ ५५ ॥

आत्रेय उ चन्द्रोऽप्यब्धेर्मुहुरासीत् ॥
अब्जाभिध एवं लक्ष्म्यादिरिहासीत् ॥ ५६ ॥

भूच्छायास्थः पक्षवर्जितयुतमासषट्करूपे वा पर्वणि अमुं ग्रहं आवृतिमर्दो ज्ञानदोऽत्रिर्वेद । अत्र श्रुतिः पूर्वमुदाहृता ॥ ५२ ॥ ननु श्रीरब्धिजा भृगुजा चेति श्रूयते, चन्द्रोप्येवं मनोजोऽत्रिजोऽब्धिजश्च तत्र किं सत्यमित्यत आह । श्रीचन्द्रमुखानि रत्नान्यब्धेर्मथनात्प्राक् स्वर्गे निहितानि तान्येव दुर्वाससेन्द्रायार्पितायाः प्रसादरूपाया मालायाः परित्यागरूपा यावज्ञा तया कुपितस्यात्रिसुतस्यातिभयंकराच्छापात् ॥ ५३ ॥ ५४ ॥ क्षीराब्धौ पतितानि । पुनः प्रसादितदुर्वासऋषिसूक्तेरब्धिमथनात्प्राप्तानि । अतो न नव्यानि । कुतः । पाराशरस्य पुराणकर्तुर्व्यासस्य तथैव वचनात् । यद्वा पराशरसूक्तिर्विष्णुपुराणे प्रसिद्धा ततोऽवगम्यते ॥ ५५ ॥ 'चन्द्रमा मनसो जातः' इति श्रुत्युक्त एव ब्रह्मांशभूतश्चन्द्रोऽत्रिपुत्रो जातस्तेनात्रेय इति गीयते । स एव स्वर्गे रत्नभूतोऽपि समुद्रमथनाज्जात इति गौणव्यवहाराद्ब्जः एवमन्यत्राप्यतिदेशः ॥ ५६ ॥ गां भूमिं त्रायत इति गोत्रः पर्वतः भूर्वा गोत्रा

अद्याप्यवतारः कूर्मोऽस्ति हि गोत्र-
स्तादृक्च वराहो दंष्ट्रोद्धृतगोत्रः ॥ ५७ ॥

इति श्रीदत्तपुराणे दशावतारचरितं नाम
द्वितीयाष्टके षष्ठोऽध्यायः ॥ २।६ ॥

दंष्ट्रयोध्दृता गोत्रा वा येन सः । संगत्यै द्वौ श्लोकौ क्षिप्तौ ॥ ५७ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां ज्ञानकाण्डे द्वितीयाष्टके दशावतारचरितकथनं नाम षष्ठोऽध्यायः ॥ ६ ॥

इति श्रीदत्त० दशावतारचरितं नाम द्वितीयाष्टके
षष्ठोऽध्यायः ॥२ । ६ ॥

---

## ॥ अथ वराहनारसिंहावतारौ नाम द्वितीयाष्टके सप्तमोऽध्यायः ॥ २।७ ॥

**सेमावात्मसमौ मत्वा युयुत्सुः पार्षदौ प्रभुः ॥**
**शापं शान्तकुमारेभ्यः स्वेच्छयाकल्पयद्दिवि ॥ १ ॥**

**एकदाऽव्याहतस्वैरगता विष्णुं दिदृक्षवः ॥**
**सनकाद्या हि वैकुण्ठं प्रापुर्भागवतोत्तमाः ॥ २ ॥**

**प्रविशन्तो निषिद्धास्ते जयेन विजयेन च ॥**
**क्रुद्धाः शापं ददुस्ताभ्यां भवेतामसुराविति ॥ ३ ॥**

॥ श्रीगणेशाय नमः ॥

वराहनारसिंहाख्यावक्तारौ सहेतुकौ ॥
उक्तौ पञ्चदशेऽध्याये तल्लीलापि समासतः ॥

**स्वबाहुकण्डूपशमाय** युयुत्सुः स भगवान्विष्णुरिमौ जयविजयाख्यौ **पार्षदौ** आत्मसमौ युद्धयोग्यौ मत्वा तावदाभ्यां स्वरूपाभ्यां एतौ संमुखं न स्थास्यत इति शान्तकुमारेभ्यः सनकादिभ्यो निमित्तभूतेभ्यो **दिवि** वैकुण्ठे ताभ्यां शापमकल्पयत् । ननु वैकुण्ठस्थयोस्तयोः कथं विषमबुद्धिर्यतः शापो लब्धः, शान्ता अपि कुमाराः कथं वा क्रुद्धा इत्यत आह— **प्रभुः स्वेच्छयेति** । सर्वमपि संपादयितुं समर्थः । अतएव वैकुण्ठगतयोस्तयोः पतनं नाश्चर्यकारकम् ॥ १ ॥ **अव्याहतं** कुत्राप्यप्रतिहतं **स्वैरं** स्वच्छन्दं **गतं** गतिर्येषां ते । नपुंसके भावे क्तः । **दिदृक्षवो** द्रष्टुमिच्छवः ॥ २ ॥ **ताभ्यां** जयविजयाभ्यां । **क्रुद्धाः** 'क्रुधद्रुह' इति चतुर्थी ॥ ३ ॥ ताभ्यां जय-

ताभ्यां क्षमापितास्ते तु विष्णुना च पुनर्जगुः ॥
त्रिजन्मान्ते पुनर्विष्णुप्रसादादिह वां गतिः॥ ४ ॥
ततस्तौ कश्यपाद्दित्यां क्रूरौ जातौ सुरद्विषौ ॥
संध्यायां रतियोगाच्च हठाद्दित्याः फलं त्विदम् ॥ ५ ॥
दित्यानुतप्तयाप्येष संस्तुतः कश्यपोऽब्रवीत् ॥
पुत्रौ विष्णोः सद्गतिगौ पौत्रस्ते वैष्णवो भवेत् ॥ ६ ॥
जातौ हिरण्यकशिपुहिरण्याक्षाभिधौ ततः ॥
त्रिलोकीं लोकपालांश्च पीडयामासतुर्भृशम् ॥ ७ ॥
विधिं पराजिता देवाः शरणं जग्मुरातुराः ॥
चिन्ताविष्टस्य नासातः कस्य पोत्री तदापतत् ॥ ८ ॥
यज्ञवाराहमतुलं रूपं दृष्ट्वाखिलाः सुराः ॥
अजोऽयमिति मत्वा तं सूक्तैः संतुष्टुवुर्भृशम् ॥ ९ ॥

विजयाभ्यां विष्णुना च क्षमापितास्ते कुमारा इह वैकुण्ठे वां वयुयोर्गतिर्भविष्यति ॥ ४ ॥ ननु साध्व्यां दित्यां एवंभूतौ कथं जातावत आह । सपत्नीनां पुत्रवैभवं विलोक्य पुत्रार्थं संध्याकाले रतियोगाद्दित्या इदं फलं लब्धम् । ननु विद्वान्कश्यपोऽपि कामुकवत्कथं निषिद्धकाले तस्यां रतोऽभूदत आह—हठात् शास्त्रतः पुनर्वारितापि गतत्रपा वृषलीव बलात्पतिमाचकर्ष । स पश्चाग्निप्रत्याख्यानदोषभिया सक्तोऽभूदिति भावः ॥ ५ ॥ भवेत् भविता ॥ ६ ॥ भृशमत्यर्थम् ॥ ७ ॥ ताभ्यां पराभूता अतएवातुरा देवा विधिं शरणं जग्मुः । कस्य ब्रह्मणः । पोत्री वराहः ॥ ८ ॥ अजो विष्णुः ॥९॥ ईशे शंकरेऽनीशत्वं गते क्षितिमुद्धर्तुमक्षमे सतीत्यर्थः । चतुर्मुखे ब्रह्मणि च विमुखे पराङ्मुखेऽसमर्थे इति यावत् । स्वाधारजले मग्ना क्ष्मा भूमिः यदास्तौषीत्तदा हरिः स्तब्धरोमा रोमाञ्चिततनुरभूत् । वराहोऽपि

ईशेऽनीशत्वमापन्ने विमुखे च चतुर्मुखे ॥
मग्नास्तौषीत्क्ष्मा तदापि स्तब्धरोमाभवद्धरिः ॥ १० ॥

दीनानाथपतिस्तुष्टो दीनां गां दंष्ट्रयोद्धरन् ॥
तद्देवताहरं क्रूरं हिरण्याक्षं ददार ह ॥ ११ ॥

संस्थाप्य पूर्ववद्भूमिं तदाधारो ययौ शमम् ॥
क्रुद्धोनुजे हतेऽथान्यो द्युलोकमजयत्क्षणात् ॥ १२ ॥

अन्तर्बहिर्दिवा नक्तं न देवान्न मृगाच्च नुः ॥
सजीवान्नापि निर्जीवादवध्यत्वं गतो विधेः ॥ १३ ॥

तद्भार्या गर्भिणी जाता कयाधूर्भाग्यवत्यथ ॥
तां लब्धान्तर इन्द्रोऽपि धृत्वा हन्तुं समुद्यतः ॥ १४ ॥

तदैव नारदोऽभ्येत्य गर्भोऽयं वैष्णवस्त्वया ॥
स्वक्षेमकृन्न हन्तव्य इत्यूचे सोपि तां जहौ ॥ १५ ॥

स्तब्धरोमा वाराहरूपं स्वीचकारेति भावः ॥ १० ॥ गां भूमिमुद्धरन्नूर्ध्व-माहरन् तस्या भूम्या अधिष्ठातृदेवताया हरं हर्तारं नतु जडां भूमिम् ॥ ११ ॥ स्वयं तस्या भूम्या आधारभूतः सन् शमं शान्तिं ययौ इति वराहावतारोप-संहारः ॥ अथ नृसिंहावतारं वक्तुमुपक्रमते—क्रुद्ध इति । अन्यो हिरण्य-कशिपुः । द्युलोकं स्वर्गम् ॥ १२ ॥ नुर्मनुष्यात् विधेर्ब्रह्मणो वरदानात् प्रारब्धयोगाद्वाऽवध्यत्वममरणत्वं गतः ॥ १३ ॥ गर्भस्य वैष्णवत्वाद्भाग्यवती । अन्तरं हिरण्यकशिपोस्तपोगमनरूपमवकाशम् ॥ १४ ॥ स्वक्षेमकृत्स्वमुक्ति-साधकः । हे इन्द्र, स्वस्य तव क्षेमकृत्स्वप्रभोर्विष्णोः सकाशात्तव हितकर्तेति यावत् ॥ १५ ॥ वैष्णवोत्तमस्य भागवतधर्मोपदेष्टुर्नारदस्य पूर्वजन्मनि वैष्णवत्वं

वैष्णवोत्तमसामर्थ्यं किं वाच्यं गर्भगोऽप्यहो ॥
आददे वैष्णवीं दीक्षां गर्भोऽप्यसुरवीर्यजः ॥ १६ ॥

ततः सा सुषुवे पुत्रं महाभागवतं शुभम् ॥
स्वपितुर्जातमात्रेण येनास्यं कलुषीकृतम् ॥ १७ ॥

ततः प्रह्लादनामासौ ववृधेऽरिभयंकरः ॥
काले काव्येनोपनीतः शिक्षितोऽप्यभजद्धरिम् ॥ १८ ॥

तर्जनादरणाद्यैः स न बिभेतीति तत्पिता ॥
श्रुत्वा विषीदंश्चान्येषु वैष्णवाचारशिक्षणात् ॥ १९ ॥
स्वशत्रुपक्षपातीति पुत्रं मत्वाऽसुराधमः ॥
विहाय पुत्रसंबन्धं तं निहन्तुं मनो दधौ ॥ २० ॥
भृगुपाताग्नितोयाद्यैर्मृत्यवे कल्पितोऽपि सः ॥
सर्वाधीशमहाविष्णुपदसेवी ममार नो ॥ २१ ॥
तदा तं प्राह रे दुष्ट लोकशास्तुर्ममाग्रतः ॥
किंबलो निर्भयोस्येतं ध्यायसे स क्क तिष्ठति ॥ २२ ॥

प्राप्तस्य गर्भस्य श्रोतुर्वा सामर्थ्यं गर्भस्थस्याप्युपदेशप्रत्यायकरूपं गर्भवासत्वेपि मुनेः स्वेष्टादानरूपं वाऽसुरवीर्यजस्येदृक्त्वे किमुतान्येषां वाच्यम् ॥१६॥ कलुषीकृतं दैन्यं नीतं सुतेजस्त्वात् ॥१७॥ काव्येन शुक्रपुत्रेण शण्डामर्केण ॥१८॥ तर्जनं भीषणं आदरणं सान्त्वम् । आदिशब्दाद्दानताडने ग्राह्ये । अन्येषु दैत्यपुत्रेषु ॥ १९ ॥ तं प्रह्लादम् ॥२०॥ भृगुपातोऽद्रितटतः पातः ॥ २१ ॥ किं बलं सहायो यस्य स किंबल एतं शत्रुत्वेन बुद्धिस्थं विष्णुम् । शत्रुनामग्रहणस्य निषेधादेतच्छब्देन निर्देशः ॥ २२ ॥ फलं

श्रुत्वापि परुषं वाक्यं प्रह्लादो भयवर्जितः ॥
सर्वभूतसमः प्राह पितरं चिन्तयन्हरिम् ॥ २३ ॥

बलं बलवतां विष्णुस्तं विना कस्य किं बलम् ॥
स सर्वत्र स्थितोऽधीशो यं लब्ध्वास्य कुतो भयम् ॥२४॥

यदि सर्वगतोऽस्त्यैष स्तम्भेऽस्मिन्विद्यते न वा ॥
इत्युक्तो जनकेनासावत्राप्यस्तीत्युवाच तम् ॥ २५ ॥

ततः क्रुद्धस्तदा दैत्यः पदा स्तम्भं जघान ह ॥
तदाऽऽविरास भृत्योक्तमृतं कर्तुं ततो हरिः ॥ २६ ॥

सिंहास्यं मनुजाकारं करालं तं नखायुधम् ॥
चित्रं दृष्ट्वाऽसुरस्तन्द्रापिहिताक्षोऽप्ययुध्यत ॥ २७ ॥

हरिः खिन्नानृषीन्देवान्भृत्यं च प्रेक्ष्य पीडितम् ॥
वरदोक्त्यविरोधात्तं दधौ हन्तुमपि च्युतम् ॥२८॥

कठोरं पितरं हरिमिति चिन्तयन् हरिं वा ध्यायन् ॥ २३ ॥ ॥ २४ ॥ यदि सर्वगतोऽस्त्येष स्तम्भेऽस्मिन्विद्यते किमिति पित्रा पृष्टः प्रह्लादोऽप्यत्रास्तीत्याह ॥ २५ ॥ पदा पादेन । भृत्यस्य प्रह्लादस्यात्रास्तीत्युक्तं सत्यं कर्तुं, भृत्यस्य वा कश्यपस्य पुत्रौ विष्णोः सद्गतिगावित्युक्तं सत्यं कर्तुं, सनत्कुमारादीनां भृत्यानां वा विष्णुप्रसादादिह वां गतिरिति सत्यं कर्तुं, भृत्यस्य वा ब्रह्मणो वरदानं न देवान्न मृगाच्च नुरित्युक्तं सत्यं कर्तुं वा, ततः स्तम्भादाविरभूत् ॥ २६ ॥ ॥ २७ ॥ हरिणा बलाद्धतोपि प्रसह्य तद्धस्तात्प्रच्युतं दृष्ट्वा देवाः खिन्ना अभूवन् । तथाविधांस्तान् दृष्ट्वा वरदस्य ब्रह्मण उक्त्यविरोधेन तं मारयितुं च्युतमपि पुनर्भगवान्दधौ ॥ २८ ॥

नखैर्ददार कृत्वोर्वोस्तद्वक्षोद्वारमध्यतः ॥
संध्यायां स दधौ चण्डस्तदन्त्रं माल्यवद्गले ॥ २९ ॥

हाहाकृतं च तत्सैन्यं जघान ववृषुः सुराः ॥
पुष्पाण्यप्सरसोऽन्ये च ननृतुश्च जगुस्तदा ॥ ३० ॥

अदृष्टपूर्वचित्रोग्ररूपं शेकुर्न वीक्षितुम् ॥
दृष्टकामा अपि सुराः श्रीश्च भीमोच्चनिःस्वनम् ॥ ३१ ॥

तैः प्रेषितोऽथ प्रह्लादः सटाक्षिप्तभमुग्रगुम् ॥
दृष्ट्वा करालमप्याह निर्भयो नृहरिं नमन् ॥ ३२ ॥

हरे प्रशममेह्यद्य नायं कल्प उपस्थितः ॥
स्वभक्ताञ्छक्रतो गुप्तान्कृपयेक्षितुमर्हसि ॥ ३३ ॥

त्रिलोकशीर्षरोगोऽयं हतो दिष्ट्या न ते प्रभो ॥
दुःसहः सोऽपि पापोऽद्य साक्षान्मुक्तः करेण ते ॥३४॥

नखैरसजीवैरनिर्जीवैः कृत्वा ऊर्ध्वाधोभागवारणायोर्वोर्धृत्वान्तर्बहिर्वारणाय द्वारमध्यत इत्युक्तम् । संध्याशब्देन दिवारात्रिनिवारणम् । एवंच सति वरदानस्याविरोधः । माल्यवन्मालावत् ॥२९॥ अप्सरसो ननृतुरन्ये गन्धर्वाश्च जगुः ॥३०॥ भीमो भयंकर उच्चो निस्वनः शब्दो यस्य तं द्रष्टुं श्रीरपि न शशाक ॥ ३१ ॥ सटाभिर्जटाभिः क्षिप्तानि भानि नक्षत्राणि येन तं उग्रा गौर्दृष्टिर्यस्य तं करालं भीषणं तमपि प्राह ॥ ३२ ॥ प्रशमं शान्तिम् । कल्पः प्रलयः ॥ ३३ ॥ सोऽपि मत्पितापि साक्षात्ते करेण हतोऽतो मुक्त

पामरेऽनुग्रहो योऽसौ मन्ये प्राक्पुण्यराशिजः ॥
अन्यथेशास्य पापस्य मोक्षशङ्का कुतो हरे ॥ ३५ ॥

कृपालो ते नमोऽद्य त्वं प्रसन्नो भव सुव्रत ॥
देवान्पूर्ववदाश्वास्य स्वाधिकारे नियोजय ॥ ३६ ॥

एवं भक्तार्थितो विष्णुर्ययौ शान्ति तदामराः ॥
तस्मै नत्वा तदाज्ञप्ताः सर्वे स्वं स्वं पदं ययुः ॥ ३७ ॥

तिरोदधेऽपि भगवांस्तद्रूपं तारमैच्छिकम् ॥
प्रह्लादोऽपि तदाज्ञप्तः पित्र्यं राज्यं शशास सन् ॥३८॥

आबाल्यं नारदादेशाद्धर्मे भागवते रतः ॥
भूत्वाप्यनात्मवित्त्वेन शान्ति न परमां ययौ ॥ ३९ ॥

औदासीन्येन स वनं पर्यटन्मृगयामिषात् ॥
भाग्याद्ददर्श सह्याद्रौ कावेर्यां निद्रितं भुवि ॥ ४० ॥

एवेदं दिष्ट्या शोभनम् ॥ ३४ ॥ ३५ ॥ ३६ भक्तेनार्थितः प्रार्थितः ॥ ३७ ॥ ऐच्छिकं भक्तेच्छयाऽऽविष्कृतं तारं प्रणवमयं तेन नृसिंहेनाज्ञप्तः पितुरागतं पित्र्यं । तस्य सौराज्यदर्शनार्थमाह । सन्सौम्यस्वभावः ॥ ३८ ॥ नारदादेशान्नारदोपदेशात् ॥ ३९ ॥ शान्त्यभावादौदासीन्येन निद्रितं कंचित्पुरुषं ददर्श ॥ ४० ॥ 'यत्तदद्रेश्यम्' इत्यादिश्रुतेः क्रियाकारका-

कर्माद्यैर्वर्णलिङ्गाद्यैरप्रतर्क्यं रजस्वलम् ॥
नत्वा प्राहावधूतं तं निगूढामलतेजसम् ॥ ४१ ॥

कथं भोगीव धत्तेऽस्वः पीनां तनुमनुद्यमः ॥
उद्योगात्स्वं ततो भोगो भोगात्पीना तनुर्भवेत् ॥४२॥

शयानोऽनुद्यमोऽनीहो भवानिह तथाप्यसौ ॥
पीना तनुः कथं सिद्धो भवान्वदतु चेत्क्षमम् ॥ ४३ ॥

विद्वान्दक्षोपि चतुरश्चित्रप्रियकथो भवान् ॥
दृष्ट्वापीह जनांश्चित्रकर्मणो वर्तते समः ॥ ४४ ॥

देर्वर्णाश्रमादेर्भगवति निषिद्धत्वादप्रतर्क्यं केवलतर्कस्य दुष्टत्वात् 'अणीयान्ह्यतर्क्यमणुप्रमाणात्' 'नैषा तर्केण मतिरापनेया' इति श्रुतेः श्रुत्यनुकूलतर्कगम्यमिति भावः। रजस्वलं धूलिधूसरं प्रच्छन्नरूपमत एवान्यैः पामरैरवधूतं तिरस्कृतं। कुतः। नितरां गूढं स्वशक्त्या छन्नं अमलं रागादिमलनिवर्तकं स्वयंप्रकाशं तेजो यस्य तं नत्वा लीनो भूत्वा प्राह ॥ ४१ ॥ अस्वो निर्धनोपि भवान्केन कथं प्रकारेण भोगवानिव पीनां तनुं धत्ते। उद्योगादिति चेदत्र शक्तोपि भवाननुद्यमो लक्ष्यते, उद्योगं विना तनुः पुष्टा न भवति किं, नेत्याह—उद्योगात्पौरुषात्स्वं धनप्राप्तिः ततो धनप्राप्त्या भोगो भोगेन तनुः पीना पुष्टा भवेत् ॥ ४२ ॥ भवांस्तु तद्विपरीत इत्याह—शयान इति। अनीहो निश्चेष्टो निरिच्छो वा इदं वक्तुं क्षमं चेद्भवान् जिज्ञासवे मह्यं वदतु ॥ ४३ ॥ अनुद्यमत्वे कारणान्तरं पृच्छति—अज्ञानेनानैपुण्येनाचातुर्येण वा भवतोऽनुद्यमत्वं न लक्ष्यते। यतो भवान्विद्वान्ज्ञानी दक्षो निपुणश्चतुरश्चित्राः प्रियाश्च कथा यस्येदृशोऽपीह लोके विचित्रकर्मणो जनान्दृष्ट्वापि समो रागद्वेषादिशून्यो वर्तते। अतर्क्यमिदं

इत्थं श्रीभगवांस्तेन प्रह्लादेनात्रिनन्दनः ॥
संपृष्टः प्राह संतुष्टः कृपालुः प्रहसन्निव ॥ ४५ ॥
श्रीनृसिंहोऽवतीर्णोऽत्र यदर्थं स त्वमेव हि ॥
दैत्यजोऽपि मुनिच्छात्र शृणु भागवतोत्तम ॥ ४६ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां ज्ञानकाण्डे द्वितीयाष्टके वराह-नृसिंहावतारलीलाकथनं नाम सप्तमोऽध्यायः ॥ ७ ॥

भवच्चरितम् ॥४४॥ सगुणसाक्षात्कारेऽपि ज्ञानाभावात्प्रहसान्निव ॥ ४५ ॥ मुनिच्छात्रो नारदशिष्यः ॥ ४७ ॥ इति द्वितीये सप्तमोऽध्यायः ॥ ७ ॥

इति श्रीदत्त० वराहनारसिंहावतारौ नाम द्वितीयाष्टके सप्तमोऽध्यायः ॥ २।७ ॥

# अथ प्रह्लादाद्युपदेशो नाम द्वितीयाष्टकेऽष्टमोऽध्यायः ॥ २।८ ॥

॥ ॐ ॥ मन्दः स्वज्ञो भ्रमंस्तृष्णानद्येमं लोकमागतः ॥
कर्मयोगेन मुक्तिस्वर्मोक्षद्वारं यदृच्छया ॥ १ ॥
निवृत्तोऽस्म्यत्र यततां व्यत्ययं वीक्ष्य शर्मणे ॥
आत्मनोऽस्य सुखं रूपं क्लिष्टे नष्टे स्वयंप्रभम् ॥ २ ॥
ज्ञात्वा संस्पर्शजान्भोगान्दुःखान्स्वप्स्यामि दैवभुक् ॥
विस्मृत्यामुं जनः स्वार्थं सन्तं यात्युग्रसंसृतिम् ॥ ३ ॥

॥ श्रीगणेशाय नमः ॥

स्वहृदयं वक्तुं तावल्लोकगतिमनुसरन् स्वस्थितिमुपदिशति। मन्दस्तत्त्वज्ञानोद्योगेऽलसः सुतरामज्ञः विषयरूपया तृष्णानद्या नानायोनिषु भ्रमन्निमं मनुष्यलोकं स्वर्मोक्षनरकद्वारभूतं। यद्यपीदृक्त्वं भगवति नास्ति तथापि शिष्यबोधार्थमुपक्रमे न दोषः ॥ १ ॥ अत्र शर्मणे सुखाय यततां व्यत्ययं फलतो दुःखं वीक्ष्य सुखयत्नतो निवृत्तोऽस्मि यतोऽस्यात्मनः सुखमानन्द एव रूपं। 'आनन्दमयोऽभ्यासात्' इति न्यायात्। तर्हि कथं नानुभूयत इत्यत आह। क्लिष्टे नष्टे। जातावेकवचनम्। अविद्यास्मितारागद्वेषाभिनिवेशाख्येषु पञ्चसु क्लेशेषु नष्टेषु तत् स्वयमेव प्रकाशते स्वयंप्रभत्वात् ॥ २ ॥ यस्मादेवं तस्मात्संस्पर्शजानिन्द्रियसंयोगजनितान्विषयान्भोगान्दुःखरूपान्ज्ञात्वा दैवभुक् दैवमेव प्रापकमिति निश्चितवान्सन्सुखेनैव स्वप्स्यामि। निरुद्यमोऽस्मीति भावः। तर्हि जनोऽप्येवं कथं न वर्तेत इत्यत आह। जनो लोकः सन्तं स्वस्मिन्विद्यमानमपि अमुमपरोक्षत्वेनावस्थितमपि सुखरूपं

स्वार्थं मायावृतं त्यक्त्वा तदर्थ्यन्यत्र धावति ॥
शैवालछन्नकं त्यक्त्वा यथांब्वर्थी मरीचिकाम् ॥ ४ ॥
अभाग्यस्य क्रिया मोघाः सुखप्राप्त्यै प्रयोजिताः ॥
तत्साफल्येऽप्यसद्भिः किं कार्यं मर्त्यस्य कृच्छ्रजैः ॥५॥
कामार्थेच्छोर्मोहशोकरागद्वेषश्रमादयः ॥
यतोऽजितात्मनो नैति निद्रापि भयशङ्कया ॥ ६ ॥
प्राणार्थेच्छा हि मधुकृच्छिक्षितेन मयोज्झिता ॥
राजार्थिहिंस्रचोरद्विट्कालेभ्यो न बिभेम्यतः ॥ ७ ॥

स्वार्थे अविद्यावशाद्देहाद्यध्यासेन विस्मृत्योग्राऽविद्या कामादिभिर्भयंकरी चासौ संसृतिश्च तां याति ॥ ३ ॥ असत्त्वाभानरूपया मायया आवृतं स्वरूपभूतं प्रत्यक्त्वेनावगम्यं स्वार्थं त्यक्त्वा तदर्थी सन्नन्यत्र स्रक्चन्दनवनितादौ पराक्त्वेनावस्थिते पारतन्त्र्यादिदोषदूषिते क्षणलवविरसेऽनित्ये धावति। अत्र दृष्टान्तः। यथा तृषितोंब्वर्थी जलाभिलाषी शैवालेन जलनील्या छन्नं कमुदकं समीपस्थमपि त्यक्त्वा मृगतृष्णां याति तद्वत्। अत एव सुखप्राप्तये यत्नो नानुष्ठेयः। दुःखवत्सुखमप्यप्रार्थितं दैववशाल्लभ्येतैव ॥४॥ ननु यत्नेनापि कदाचिन्न लभ्यते किमित्यत आह—अभाग्यस्येति। अभाग्यस्य दैवहतकस्य सुखप्राप्तये प्रकर्षेण पुरुषकारेण योजिता अपि सुखप्राप्त्युपायभूताः क्रिया मोघा निरर्थकाः। काकतालीयन्यायेन कदाचित्तत्साफल्येऽपि असद्भिर्मृगतृष्णावन्मिथ्याभूतैः कृच्छ्रजैः क्षणभङ्गुरैश्च मर्त्यस्य किं कार्यं। न किमपि ॥५॥ कामार्थाभिलाषिण एव शोकादयो भवन्ति। यतोऽजितात्मनोऽनवस्थितचित्तान्प्रति मामेते घातयिष्यन्तीति भयशङ्कया निद्रापि नागच्छति ॥ ६ ॥ अतो मया महाहेर्मधुकृतश्च शिष्यभूतेन प्राणस्यार्थस्य चेच्छाऽभिलाष उज्झितः परित्यक्तः। अत

निरिच्छः परितुष्टात्मा यदृच्छालाभतोऽस्मि सन् ॥
बहुकालं शये नो चेद्विद्वान् धैर्यान्महाहिवत् ॥ ८ ॥

भूर्यल्पं स्वादु वाऽस्वादु कदन्नं मानवर्जितम् ॥
समानं क्वापि भुञ्जेह्नि निशि भुक्त्वापि वा नवा ॥ ९ ॥

हरत्यन्यः पतिं हत्वा कृच्छ्राप्तं मधुवद्धनम् ॥
शिक्षितं मधुकृत्तोऽतो विरक्तोऽस्म्यपरिग्रहः ॥ १० ॥

इच्छापरित्यागाद्धेतोः राजा दण्डादिना द्रव्यापहर्ताऽर्थिनो याचकाः चोरा धनमुषः एतेऽर्थविषयकभीतिदाः । हिंस्रा घातुका व्याघ्रादयः द्विषोऽभिघातिनः कालो रोगादिनिमित्ततः प्राणवियोजकहेतुरेते प्राणविषयकभीतिदाः एभ्यो न बिभेमि भयहेतुत्वाभावात् ॥७॥ शिक्षणं विभजते । निरिच्छोऽपि यदृच्छालाभतः परितुष्टोऽस्मि । यदि यदृच्छालाभो न जातश्चेद्दैवमेव प्रापकमिति धैर्येण विद्वान् सन्नजगरवत् बहुकालं शय इत्यजगराच्छिक्षितम् ॥ ८ ॥ मधुकराच्छिक्षितमाह । भूरि प्रभूतं अल्पमाहारपर्याप्तं वा स्वादु मिष्टमस्वादु विरसं वा कदन्नं भुञ्जे मानविवर्जितमवमानपूर्वकं दत्तं समानमातिथ्यपूर्वकं दत्तं वा भुञ्जे । क्वापि यत्र क्वापि जने वने वा भुञ्जे । कदाचिद्भोजनोत्तरं केनचिच्छ्रद्दधानेन दत्तं चेत् ' सायंप्रातर्द्विजातीनां भोजनं स्मृतिचोदितम्' इत्यादिलक्षणां परिसंख्यामपि त्यक्त्वा पुनर्भुञ्जे । कदाचिद्दिवा रात्रावपि न भुञ्जे ॥९॥ संग्रहोऽपि नाशायैवेति मधुकृत एव शिक्षितमित्याह । कृच्छ्रैः कष्टैराप्तं संपादितं धनं यत्नतो ज्ञात्वा तत्पतिं हत्वान्यश्चोरादिर्धनं मधुवद्धरतीति मधुकृत्तः शिक्षितमतोऽपरिग्रहो विरक्तश्चास्मि ॥१०॥

दैवात्तं चर्म वल्कं वा वस्त्रं क्षौमं वसे न वा ॥
क्वचिच्छये ऽश्मभस्मादौ कशिपौ वा जने वने ॥ ११ ॥
क्वचित्स्नातोऽलंकृतोऽहं स्रग्वी सुवसनो न वा ॥
रथेभाश्वैश्चरे क्वापि मुनिवत्क्वापि मुग्धवत् ॥ १२ ॥
नाहं निन्दे न च स्तौमि स्वभावविषमं नरम् ॥
एतेषां श्रेय आशास उतैकात्म्यमथात्मनि ॥ १३ ॥
ब्रह्मासक्तो ब्रह्मनिष्ठो ब्रह्मात्मा ब्रह्मधीरहम् ॥
संस्कृते ब्राह्मणेऽन्त्ये वा समदृग्गवि शुन्यपि ॥ १४ ॥
समासमाभ्यां विषमसमे पूजत ओदनम् ॥
नाद्यादित्यज्ञगृहिणो दोषो न समदृग्यतेः ॥ १५ ॥
स्वरूपेऽवासनस्तिष्ठाम्यान्वीक्षिक्यानया दिवि ॥
योमुमिच्छेत्तु तस्यायमुपायो विदुषः सुखः ॥ १६ ॥

अत्रापि कथं निर्वाह इत्यत आह । दैवाल्लब्धं वल्कलं क्षौमं दुकूलं । मुग्धवन्मूर्खवत् ॥ ११ ॥ १२ ॥ निन्दादिकमप्युपाधिकत्वान्मया त्यक्तमित्याह । नेति । एतेषां स्वभावविषमाणामन्येषां च श्रेयः क्षेममाशासे । आत्मनि व्यापके परमेश्वरे ॥ १३ ॥ ब्रह्मण्यासमन्तात्सक्तः ब्रह्मणि निष्ठा तात्पर्येण स्थितिर्यस्य ब्रह्मण्यात्मा मनो धीश्च यस्य । अन्त्येऽन्त्यजे । समं ब्रह्मैव द्रष्टुं शीलं यस्य ॥ १४ ॥ 'समासमाभ्याम्' इत्यादिगौतमोक्तेर्ब्राह्मणादिषु समदृक्करणं दोष इत्यत आह । अज्ञगृहिणोऽयं दोषः यतेरन्नभोजनाभावेऽपि समदृक्त्वादिहैव सर्गजयत्वान्न दोषः ॥ १५ ॥ एवं सन् वासनारहितोऽहं स्वरूप एव तिष्ठामि न बहिर्वृत्त्या ॥ १६ ॥ एवंभूतत्वेन स्थितौ योगमाह । चित्तौ भेदग्राहक-

हुनेद्विकल्पं चित्तौ तां मनस्यर्थभ्रमे तु तत् ॥
वैकारिके तं मायायां तां स्वस्मिन्विरमेत्ततः ॥ १७ ॥
शुद्धः सोऽहं परात्मैक इति दार्ढ्ये विमुच्यते ॥
हृदयं मे सुगुप्तं ते प्रोक्तं तत्त्वं विचारय ॥ १८ ॥
इतीशेनोपदिष्टः स ज्ञात्वाऽऽत्मानं प्रपूज्य च ॥
तदाज्ञप्तो ययौ राज्यं कुर्वन्नपि स दैवभुक् ॥ १९ ॥

मनोवृत्तौ विकल्पं हुनेध्दुतं भावयेद्विलापयेदित्यर्थः । तां चित्तिमर्थरूपो भ्रमो यस्मिंस्तस्मिन्मनसि तन्मनो वैकारिकेऽहंकारे तं वैकारिकं समहत्तत्त्वं मायायां तां च स्वशब्दवाच्ये सर्वकारणकारणे सर्वविलापावधिभूते वासुदेवे परमात्मनि हुनेत्ततो विरमेत् 'स ह तूष्णीं बभूव तमेव धीरो विज्ञाय' इति श्रुतिभ्यः । श्रुतिरपि 'यच्छेद्वाङ्मनसी प्राज्ञ' इत्यादिः ॥ १७ ॥ शुद्धः स्वरूपेणावस्थितः । आत्मनोऽनादित्वान्न तस्योत्पत्त्यादिना विकारित्वं प्राप्तिश्च क्रियया ज्ञानेन वा भवति । आत्मनः स्वयंज्योतिष्ट्वात्सात्मनि नोपयुज्यते । विकृतिस्तुषापाकरणेन वावघातादिना वा सस्यस्येव स्यादात्मनोऽसङ्गत्वान्निरुपाधित्वाच्च सापि न संस्कृतिरप्यतिशयाधानेन मलापाकरणेन वा स्यादात्मनः पूर्णत्वान्निरञ्जनत्वान्निर्मलत्वात्साप्यात्मनि नोपयुज्यतेऽतः शुद्ध एव परश्चासावात्मा च प्रत्यगभिन्नश्चैकः सजातीयादिभेदशून्योऽहमस्मीत्यनुभवदार्ढ्ये विमुच्यते विमुक्त इव भवति बन्धस्यातात्त्विकत्वात् । इदं सप्तदशश्लोकात्मकं परात्मनो मे हृदयं हृद्यते परात्मा येनातएव कर्मोपासनापेक्षयास्य वरिष्ठत्वात्सुगुप्तं रहस्यतमं तदेतत्तत्त्वं सावधानतया विचारय सुगुप्तत्वाद्दुर्विनीताय न देयम् । तदुक्तं 'नैतद्देयं दुर्विनीताय जातु ज्ञानं गुप्तं तद्धि सम्यक् फलाय ॥ अस्थानेपि स्थाप्यमाना हि वाचां देवी कोपान्निर्दहेत्तं चिराय' इति श्रीदत्तहृदयम् ॥ १८ ॥ आत्मानमन्तर्यामिणं श्रीदत्तं स्वरूपभूतं प्रत्यगभिन्नमात्मानं वा ॥ १९ ॥ ननु राज्यं कुर्वतः

राज्यश्रीपुत्रदाराढ्योऽप्यलिप्तः स्वात्मदृक् सदा ॥
भुक्त्वारब्धं चिरं राज्यं दत्वा पुत्रे विरोचने ॥ २० ॥
मुक्तसङ्गश्चचार क्ष्मां समदृक्स गुरूक्तवत् ॥
विरोचनोऽपि पितृवत्पित्र्यं राज्यं शशास तत् ॥ २१ ॥
तत्पुत्रो बलिनामाभूद्धृतस्वर्गोऽपि येन च ॥
अदित्यां कश्यपाज्जाता देवा इन्द्रादयोऽपि तान् ॥२२॥
जित्वा तदधिकारांश्च स स्वयं समाधितिष्ठति ॥
स्वर्गान्निराकृता देवाः श्रीविष्णुं तुष्टुवुर्हरिम् ॥ २३ ॥
देवप्रार्थनया तुष्टो भगवान्वामनाभिधः ॥
पयोव्रतफलं दातुं पुत्रोऽदित्या अजोऽप्यभूत् ॥ २४ ॥
पित्रा सुसंस्कृतो देवैर्भूषितो वामनो बलिम् ॥
ययाचे त्रिपदक्ष्मां तं स शुक्रेणापि वारितः ॥ २५ ॥

कर्तृत्वादिना लेपः स्यादित्यत आह । राज्यादियुक्तोऽप्यलिप्तः । अत्र हेतुः सदा स्वात्मदृक् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ तयाऽदित्या पयोव्रतं कृतं अतः अदित्यै पयोव्रतफलं दातुं अजोऽपि स वामनाभिधस्तस्याः पुत्रोऽभूत् ॥ २४ ॥ पित्रा कश्यपेनोपनयनादिना संस्कृतः सावित्रीं सविता बृहस्पतिर्ब्रह्मसूत्रं कश्यपो मेखलां भूः कृष्णाजिनं वनस्पतिः सोमो दण्डं कौपीनाच्छादने माता द्यौश्छत्रं ब्रह्मा कमण्डलुं सप्तर्षयो दर्भपवित्राणि अक्षमालां सरस्वती कुबेरो भिक्षापात्रं अन्नपूर्णा भगवती पार्वती भिक्षां च ददौ । एवं देवैर्भूषितः स्वपदेन त्रिपदमानां भूमिं त्रिभिः क्रमैर्विश्वकायोऽयं त्रींल्लोकान्क्रमिष्यतीति तस्मात् काल एव दद्यात् काले न दद्यात्सत्यानृते मिथुनीकरोतीति निवारितोऽपि ॥ २५ ॥ एकेन पदविक्रमेण

संकल्प्यादाद्विराड्भूत्वा वामनोऽपि तदा भुवम् ॥
व्याप्यैकेन पदान्येन गङ्गापित्रा च गां स्तुतः ॥ २६ ॥

तृतीयं बद्धबलिना सिद्ध्यै तन्मूर्ध्न्यधात्पदम् ॥
निन्ये तं सुतलं मुक्तं प्रह्लादप्रार्थितो बलिम् ॥ २७ ॥

राज्यं तत्सुतबाणाय देवेभ्योऽदाद्दिवं स्वयम् ॥
द्वारपोऽभूद्बलेस्तस्मै दास्यत्यैन्द्रं पदं हरिः ॥ २८ ॥

एवंप्रभावः श्रीदत्तो यदात्मानमनीश्वराः ॥
ज्ञातुं सुरासुराद्याद्या मनुष्याणां तु का कथा ॥ २९ ॥

कदाचित्पिङ्गलो नागो दृष्ट्वामुं मारहुस्थितम् ॥
कृष्णधात्रीतले वेदं पठन्तं व्रात्यवेषतः ॥ ३० ॥

भूमिं व्याप्यान्येनापरपदविक्रमेण गां स्वर्गं ब्रह्मलोकपर्यन्तं च व्याप्य । कथंभूतेन गङ्गापित्रा । अण्डकटाहलग्नपादतो गङ्गा निर्गतेति श्रूयते । आनृण्याय वारुणपाशबद्धबलिना संकल्पसिद्ध्यै स्तुतो वामनस्तन्मूर्ध्नि तृतीयं पदमधात् । ततः स्वपादस्पर्शतो मुक्तं तं सुतलं निन्ये । ननु बद्धस्यापि देवशत्रोः कुतो मुक्तिः कृताऽत आह । प्रह्लादप्रार्थितः येन पादक्षालनपूर्वकं सर्वस्वमपि ते दत्तं स कथं बन्धार्ह इति प्रह्लादेन बलेः पितामहेन महाभागवतेन प्रार्थितः ॥ २६ ॥ २७ ॥ राज्यं भौमं दास्यति सावर्णिकेऽन्तरे ॥ २८ ॥ यदात्मानं यत्स्वरूपं ज्ञातुमनीश्वरा असमर्थाः ॥ २९ ॥ अत्रार्थे कश्चिदितिहासः । कदाचिदिति । असुरा न जानन्तीत्यत्र प्रह्लादनिदर्शनम् । अहयो न जानन्तीत्यत्र ब्रह्मवादछन्दःप्रवर्तकपिङ्गलनिदर्शनमिदम् । सुरा न जानन्तीत्यत्र साध्यदेवनिदर्शनं वक्ष्यति । व्रात्योऽसंस्कृत-

पप्रच्छ भवतः कोऽयमाश्रमो वर्णगर्हितः ॥
वर्णित्वं ते न कौपीनमौञ्जीदण्डादिवर्जित ॥ ३१ ॥

न गृहित्वं चाग्निहोत्रद्विसूत्रादिविवर्जित ॥
वनित्वं ते न चागन्तुसाधनादिविवर्जित ॥ ३२ ॥

न भिक्षुत्वं शिखाग्राम्यभोगयुक्त दिगम्बर ॥
केनोपदिष्टो मार्गोऽयं नग्न स्त्रीमद्यलालस ॥ ३३ ॥

प्रभुः प्राह तमुक्तान्यः पञ्चमोऽयं ममाश्रमः ॥
योऽविकल्पेनात्मरूपं विश्वं पश्येदभेददृक् ॥ ३४ ॥

वैराग्ययुक्तो वीतारिस्तस्यायं पञ्चमाश्रमः ॥
त्वया श्रुतो न वै तं हि जानीयुर्ब्राह्मणाः समाः ॥ ३५ ॥

इत्थं श्रुत्वा सोऽनसूयागर्भरत्नमिदं महः ॥
इति मत्वातिखिन्नस्तं प्रार्थयामास दीनवाक् ॥ ३६ ॥

स्तत्सदृशवेषेण वर्णगर्हितः चतुर्भिर्वर्णैर्निन्दितः । नन्वहं ब्राह्मणपुत्रः कथं ममाश्रमो वर्णगर्हित इत्यत आह । रे कौपीनाजिनदण्डादिवर्जित, ते ब्रह्मचारित्वं न लक्ष्यते लक्षणाभावात् ॥३०॥३१॥ अग्निहोत्रयज्ञोपवीतद्वयषट्कच्छवस्त्रपरिधानादिराहित्यान्न ते गृहित्वम्। शमदमाद्यागन्तुकसाधनाभावान्न वनित्वम् ॥३२॥ नग्नेति संबोधनं वा। स्त्रीविशेषणं वा। नग्नस्त्रीमद्येषु लालसात्यन्तकामो यस्य तत्संबुद्धौ ॥ ३३ ॥ त्वदुक्तेभ्य आश्रमेभ्योऽन्य इतरः। तस्याधिकारिणमाह—य इति ॥ ३४ ॥ ॥ ३५ ॥ तदा दत्तोऽयमिति तं ज्ञातवानित्याह—इत्थमिति ॥ ३६ ॥ रुशती अकल्याणी मे मया

कुत्सिता रुशती धाष्टर्याद्वागुक्ता मेऽनयानघ ॥
भर्त्सितोऽसीश मां शाधि दौरात्म्यं मे क्षमस्व भोः ॥३७॥

इति क्षमाप्य विश्वेशं संप्राप्तानुग्रहो विभुम् ॥
अभिवाद्य प्रसन्नात्मा स्वाश्रमं पिङ्गलो ययौ ॥ ३८ ॥

तथैव साध्यदेवेभ्यो भगवानाह हृद्धिया ॥
धृतिसत्यशमाद्यैर्हृद् ग्रन्थिं छित्त्वा शमं नयेत् ॥ ३९ ॥

गर्वाक्रोशान्यावमानद्रोहकामादयोऽर्थहाः ॥
त्याज्याः क्रूरारुन्तुदासद्वाक् च सह्या ततोऽव्यथः ॥४०॥

तद्वत्सन्मुन्यसच्चोरसङ्गी रङ्गात्पटो यथा ॥
स्वयं सहिष्णुर्नो कुर्यान्निन्दाघातादि दैवभाक्॥ ४१ ॥

हे अनघ, निरुपाधे दौरात्म्यं दुष्टस्वभावताम् ॥ ३७ ॥ संप्राप्तोऽपरोक्ष-साक्षात्कारलक्षणोऽनुग्रहो येन । अत एव प्रसन्नः शान्त आत्मा मनो यस्य ॥ ३८ ॥ यथा पिङ्गलेन पृष्टं तथा पृष्टवद्भ्यः साध्यदेवेभ्यो भगवान् रहस्यमाह । धिया सात्त्विकया धृत्या च सात्त्विकया 'बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च' इति स्मृतेः । सत्येन शमदमादिना चाहंकार-चिदात्म्यैक्यदृढप्रत्ययरूपं ग्रन्थिं छित्वा हृदन्तःकरणं शमं नयेत् ॥ ३९ ॥ गर्वादयो यतोऽर्थहा अनर्थकराः अतस्त्याज्याः । अरुंतुदा मर्मस्पृक् परैः प्रयोजिता अपि वाक् सोढुं योग्या स्वयं च तादृशी वर्जनीया । ततः सहनादव्यथो व्यथारहितो भवेत् ॥ ४० ॥ तद्वन्मुनिसङ्गी मुनिवत् असत्सङ्गी असद्वत् चोरसङ्गी चोरवच्च भवेत् । रङ्गसङ्गात्पट इव परैर्निन्दितोऽपि स्वयं सहनशीलः सन् परनिन्दाघातादि न कुर्यात् । यतो दैवभुक् दैवं भोक्तव्यं मयेति भावयेत् ॥ ४१ ॥ सद्गुजा सत्सङ्गेन । सत्यादिलक्षणा

वाक्सेव्या व्याहृत्या सत्या प्रिया धर्म्या च सद्युजा ॥
चिन्त्योऽभावो नान्यरन्ध्रं नेक्ष्यं देयं प्रतिश्रुतम् ॥४२॥

सुहृत्सेव्योऽधमो नैव श्रद्धेयं श्रेय आत्मनः ॥
समो निन्दाप्रशंसादौ तथोत्कर्षापकर्षयोः ॥ ४३ ॥

प्रहृष्टं शोकराहित्यं दुर्वृत्ताच्च निवर्तनम् ॥
श्रेयोमार्गोऽयमादेय इतीशः प्राह तेऽभजन् ॥ ४४ ॥

एवं सुरर्षिप्रमुखा भगवद्भावमद्वयम् ॥
प्रसादेनैव संप्राप्ता भक्तिगम्यस्य चात्मनः ॥ ४५ ॥

परोऽसौ पुरुषो भूमा भक्त्या लभ्यो ह्यनन्यया ॥
क्रमेण पुण्यशीलेन सता नान्येन दुष्कृता ॥ ४६ ॥

वाक् सेव्या नेतरा । परस्याभावो नाशो न चिन्त्यः । परच्छिद्रं न प्रेक्ष्यम् । द्विजादिभ्यो दातुं प्रतिश्रुतं देयम् ॥ ४२ ॥ उत्तम एव सुहृत्सेव्यो नाधमः ॥ ४३ ॥ आदेय आदातुं योग्यः । ते देवा अभजन्सेवितवन्तः वितण्डादिराहित्येन ॥ ४४ ॥ ज्ञानयोगमुपसंहरति—एवमिति । कैवल्याख्यं भगवद्भावं न त्वैश्वर्यादिविशिष्टं नश्वरं सम्यगसंभावनादितिरस्कारेण प्रसादेनैवेति निर्धारणात् भगवत्प्रसादमन्तरेण भक्तिगम्यस्यास्यात्मनो भावो दुर्लभ इति सूचितं । श्रुतिश्च 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ॥ यमेवैष वृणुते तेन लभ्यः' इति ॥ ४५ ॥ अन्येन दुष्कृता न लभ्यः 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ॥ नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्' इति श्रुतेः ॥ ४६ ॥ 'स्मरणं वन्दनं सख्यं सेवनं

स्मरणेऽस्यार्जुनोऽलर्को वन्दने दास्य आयुरित् ॥
सख्ये रामो विष्णुदत्तः सेवने यदुरर्चने ॥ ४७ ॥
कीर्तने वेदधर्मा च श्रवणे दीपको हरेः ॥
एते चान्ये च बहवः सर्वस्वात्मनिवेदने ॥ ४८ ॥
यो यो यां यां कृती भक्तिं वृणुते तस्य तस्य सः ॥
तां तां स्थिरीकृत्य दत्ते हृद्यमर्थं त्र्यधीश्वरः ॥ ४९ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां द्वितीयाष्टके प्रह्लादाद्युपदेशो नामाष्टमोऽध्यायः ॥२।८॥ इति ज्ञानयोगः समाप्तः ॥

चार्चनं हरेः ॥ कीर्तनं श्रवणं दानं नवधा भक्तिरीरिता' ॥ अधुनैकैकभक्तिस्वीकारेणापि कृतार्थतेति सदाचारेण द्रढयति ॥ ४७ ॥ ४८ ॥ वृणुते स्वीकरोति ॥ ४९ ॥ इति द्वितीयेऽष्टमष्टीकायां संपूर्णः ॥ ८॥ इति ज्ञानकाण्डं संपूर्णम् ॥ श्रीदत्तः ॥

॥ इति श्रीदत्तपुराणे द्वितीयाष्टकः
ज्ञानकाण्डं च संपूर्णम् ॥

---

## ॥ अथोपासनाकाण्डं ॥ तृतीयाष्टकप्रारम्भः ॥

———:0:———

### अथोपासनाकाण्डे उपासनाविधिनिरूपणं नाम तृतीयाष्टके प्रथमोऽध्यायः ॥ ३।१ ॥

ॐ ॥ श्रीः ॥

प्रयतेः सुलभो भक्त्याऽयमात्मा पुरुषः परः ॥
इति वेदादिनोक्तं तद्भक्तिर्मुख्याऽधुनोच्यते ॥ १ ॥
निर्विकल्पं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ॥
ये मंदास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥ २ ॥

॥ श्रीगणेशाय नमः ॥

हरिः ॐ ॥ 'परोऽसौ पुरुषो भूमा भक्त्या लभ्यस्त्वनन्यया' इत्याद्युक्तमुपासनाकाण्डं द्वयोरप्यपेक्षितत्वाज्ज्ञानकाण्डकर्मकाण्डयोर्मध्ये विन्यस्तं तद्व्याख्यायते—प्रयतेरिति । कैवल्यार्थमेव प्रकर्षेण यतत इति प्रयतिस्तस्यायमपरोक्षोऽव्यक्तात्परत्वात्परः सर्वपूरणात्पुरुष आत्मानुरक्त्याख्यभक्त्या सुलभ इति वेदस्मृतिपुराणैर्यस्मादुक्तं तस्मात्सर्वसाधनमुख्या भक्तिरधुना चतुर्भिरष्टकैरुच्यते ॥ १ ॥ ननु 'ज्ञात्वा देवं सर्वपाशाद्विमुक्तिः' 'ब्रह्मविदाप्नोति । परम्' इति ज्ञानादेव मुक्तिश्रवणात्किं भक्त्येत्यत आह—निर्विकल्पमिति मन्दार्थमेवमयमुद्यम इति न मन्तव्यम् । 'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ॥ श्रद्धया परयोपेतास्ते मे युक्ततमा मताः' इति स्मृतौ सगुणोपासकस्य युक्ततमत्वात् 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ॥ अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते' इति निर्गुणोपासकस्य कष्टतमत्वोक्तेः सर्वैरप्यादरणीयमिदं सगुणोपासनमित्याह ।

वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ॥
तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥ ३ ॥
इत्युक्तेर्नवधा भक्तिर्वाच्यात्र स्मरणात्मिका ॥
श्रेष्ठाथ्यान्यत्र च व्याप्ता हृच्छुध्द्यास्य पदप्रदा ॥ ४ ॥
सहस्राङ्गात्मकर्माख्यभगवत्स्मरणात्सदा ॥
कृतं कर्माप्यकर्मैव येनैष द्राग्विमुच्यते ॥ ५ ॥
कृत्वेश्वरे परां भक्तिं भगवत्कीर्तनादपि ॥
सद्भक्तो मायिकं पाशं छित्वा याति स सद्गतिम् ॥ ६ ॥
तद्गुणश्रवणाच्चापि श्रद्धावानबहिर्मुखः ॥
समाहितोऽनसूयुर्ना क्षिप्रं नैष्कर्म्यसिद्धिभाक् ॥ ७ ॥
वज्राङ्कुशध्वजाब्जाङ्कभगवत्पादसेवनात् ॥
भित्त्वा मायावृतिं सत्त्वशुद्धो याति परं पदम् ॥ ८ ॥
जलेष्टास्रं कनिष्ठिक्या लिखित्वा तारमन्तरे ॥
पत्रेष्वष्टाक्षरं चैकं हृत्स्थमावाह्य तत्र षट् ॥ ९ ॥

प्राचां प्रमाणं सविकल्पकं निर्विकल्पमिति द्वाभ्याम् । अनीश्वरा असमर्थाः । सविशेषं सगुणम् ॥ २ ॥ तन्निर्गुणम् ॥ ३ ॥ अन्यत्र कीर्तनादिषु । अस्योपासकस्य ॥ ४ ॥ सहस्रं मुखाद्यङ्गानि आत्मानो विग्रहाः कर्माणि चरितानि आख्या नामानि च यस्य ॥ ५ ॥ ६ ॥ अबहिर्मुखोऽन्तर्निष्ठः । नैष्कर्म्यसिद्धिर्विज्ञानम् ॥ ७ ॥८॥ अष्टास्रमष्टदलं तारं प्रणवं ॐनमो नारायणायेत्यष्टाक्षराण्यष्टदलेषु एकमद्वितीयं ब्रह्म उपास्तिकालेऽपि तदभिन्नोऽहमिति भावयेदित्येकपदेन सूचितम् ॥ ९ ॥

प्रदर्श्य मुद्रा ऋष्यादीन्स्मृत्वा विन्यस्य चोंकृतेः ॥
मात्राः शाखाङ्गेषु भूखवाताग्न्यब्बीजतो हृदा ॥ १० ॥

दत्वोपचारान्गन्धादीन् जपित्वाऽष्टसहस्रकम् ॥
तर्पयित्वा चाष्टशतमृष्यादीनेकवारतः ॥ ११ ॥

पुनः संपूज्य विन्यस्य तं स्वात्मन्युद्वसेत्परम् ॥
त्रिसंध्यमर्चनं त्वेवं यतेरन्यस्य चोच्यते ॥ १२ ॥

लब्ध्वा पूर्वं स्वगृह्योक्तं द्विजत्वं भक्तिमाञ्छुचिः ॥
ज्ञात्वा धनर्णसिद्धारिचक्रसिद्धं मनुं गुरोः ॥ १३ ॥

शङ्खचक्रगदापद्मधेनुगरुडाख्याः देवान्मुदं रान्तीति मुद्राः । प्रणवस्यान्तर्यामी भगवानृषिः परात्मा देवता दैवीगायत्री छन्दः इति स्मृत्वा ॥ १० ॥ अं उं मं इत्यङ्गुलीषु हृदयादिषु च विन्यस्य । लं० गन्धं० हं० पुष्पं० यं० धूपं० रं० दीपं० वं० नैवेद्यं चेति बीजतो मानसोपचारैः संपूज्याष्टोत्तरसहस्रं प्रणवं जपित्वा ॐ तर्पयामीत्यष्टोत्तरशतवारं तर्पयित्वा ऋष्यादीनेकवारं तर्पयित्वा पुनः पूर्ववत्संपूज्य स्वात्मनि विसृजेत् । अन्यस्य भिक्षुव्यतिरिक्तस्य ॥ ११ ॥ १२ ॥ अकचटतपयशा वर्गाः । स्वनामाद्याक्षरवर्गं द्विगुणीकृत्य देवाद्याक्षरवर्गे संयोज्याष्टभक्तावशिष्टमेकत्र स्थापयेत् । देववर्गस्याप्येवं कुर्याद्योऽधिकः सर्णिदेवः । सदा ऋणी ग्राह्यः । द्वादशस्वरसहितकादिषट्त्रिंशद्व्यञ्जनानि ग्राह्याणि । नाक्षत्रव्यावहारिकान्यतरनामाद्याक्षरमारभ्य देवेष्टमन्त्राद्याक्षरपर्यन्तं सिद्धसाध्यसुसिद्धारिक्रमेण पुनः पुनर्गणनया सिद्धादि ज्ञेयम् । ‘ सिद्धः सिध्यति कालेन साध्यः सिध्यति वा न वा ॥ सुसिद्धो ग्रहणादेव ह्यरिर्मूलं निकृन्तति’ ॥ मतान्तरे – ‘सिद्धो यथोक्तजाप्येन साध्यो द्विगुणजाप्यतः’ इत्याद्याकरतो विशेषोऽवगन्तव्यः ॥ १३ ॥

लब्ध्वाऽर्णसंख्यालक्षां प्राक् पुरश्चर्यां यथाविधि ॥
कृत्वाऽनेनार्चयेदर्चां नियतो नित्यकर्मकृत् ॥ १४ ॥
लौहीं वा संस्कृतां शैलीं विभोः सास्त्रां सलक्षणाम् ॥
सोऽपि लब्ध्वाखिलान्कामान्देहान्ते तन्मयो भवेत् ॥१५॥
पुरा नारायणं ब्रह्मा सत्यक्षेत्रे दयानिधिम् ॥
प्रणतोऽपृच्छदेकं किमुपास्यं दैवतं परम् ॥ १६ ॥
स प्राह मामकं धाम यद्दत्तात्रेयसंज्ञितम् ॥
सदानन्दात्मकं शुद्धं सात्त्विकं तारकं परम् ॥ १७ ॥
विश्वरूपं जगद्योनिं तदेवोपास्व दैवतम् ॥
लकारं वह्निसंयुक्तं सतुण्डाक्षरबिन्दुकम् ॥ १८ ॥
तदर्चने मनुं विद्धि छन्दो गायत्रिकास्य च ॥
सदाशिव ऋषिर्देवो दत्तात्रेयश्चतुर्भुजः ॥ १९ ॥
मनुरेकाक्षरोऽस्यायं जाप्यो गर्भादितारणः ॥
तारः श्रीदुर्गा क्रों भूमिदत्तैकाक्षरयुङ्मनुः ॥ २० ॥
षडक्षरो योगदोऽयं सर्वसंपत्समृद्धिकृत् ॥
ऋष्यादिः पूर्ववन्न्यासो बीजैः शाखा हृदादिषु ॥ २१ ॥

मन्त्राक्षरतुल्यलक्षसंख्याजपान्मन्त्रपुरश्चरणं इदं मालामन्त्रातिरिक्तमन्त्रविषयं । लौहीं धातुमयीं शैलीं पाषाणमयीं सास्त्रां सायुधाम् ॥ १४ ॥ ॥१५॥ एतदर्थं तापिन्युक्तमन्त्रान् विष्णुब्रह्मसंवादमुखेन कथयति–पुरेति । सत्यक्षेत्रे ब्रह्मलोके ॥ १६ ॥ १७ ॥ वह्नी रेफः । बिन्दुयुक्तं तुण्डाक्षरं आं ॥ १८ ॥ मनुं मन्त्रम् ॥ १९ ॥ तारः प्रणवः । श्रीं बीजं च दुर्गा । ह्रीं चतुर्थं क्रों । पंचमं लं ग्लौं वा । एकाक्षरं द्राम् ॥ २० ॥ पूर्ववच्छिव-

दत्तात्रेयं शिवं शान्तमिन्द्रनीलनिभं विभुम् ॥
आत्ममायारतं देवमवधूतं दिगम्बरम् ॥ २२ ॥

भस्मोद्धूलितसर्वाङ्गं जटाजूटधरं विभुम् ॥
चतुर्बाहुमुदाराङ्गं प्रफुल्लकमलेक्षणम् ॥ २३ ॥

ज्ञानयोगनिधिं विश्वगुरुं योगिजनप्रियम् ॥
भक्तानुकम्पिनं सर्वसाक्षिणं सिद्धसेवितम् ॥ २४ ॥

इत्यौपनिषदं दत्तं ध्यात्वैकाग्र्यं मनुं जपेत् ॥
स वाञ्छितफलं भुक्त्वा परत्र श्रेय आप्नुयात् ॥ २५ ॥

सैकाक्षरं चतुर्थ्यन्तं दत्तात्रेयं नमोन्वितम् ॥
अष्टार्णमन्त्रं गायत्रं विद्धि द्रां बीजमस्य तु ॥ २६ ॥

चतुर्थी कीलकं शक्तिर्नम आर्षः सदाशिवः ॥
दत्तात्रेयपदस्यार्थः सत्यानन्दचिदात्मकः ॥ २७ ॥

प्रह्वीभावो नमोर्थस्तु पूर्णानन्दैकविग्रहः ॥
तारं सबिन्दुं तुण्डार्णं दुर्गां क्रों तुर्यमेहि च ॥ २८ ॥

दत्तात्रेयेति संबुद्ध्या स्वाहान्तं द्वादशाक्षरम् ॥
सर्वकामदुघं विद्धि गायत्रं भो शिवार्षकम् ॥ २९ ॥

र्षिर्गायत्रीछन्दः श्रीदत्तो देवतेति। शाखा अङ्गुष्ठाद्याः कराङ्गुल्यः ॥२१॥ २२ ॥ २३ ॥ २४ ॥ औपनिषदं उपनिषदुक्तम् श्रेयो मोक्षम् ॥२५॥ एकाक्षरं पूर्वोक्तम ॥ २६ ॥ चतुर्थी दत्तात्रेयायेति ॥ २७ ॥ तारं प्रणवम्। सबिन्दुं तुण्डार्णं आँ ततो ह्रीं तुर्यं क्रोमिति ॥ २८॥२९॥

वराभयदहस्तं यो भजेदाभ्यां महाव्रतः ॥
सर्वान्कामानिहैवाप्त्वा सोऽमृतो भवति ध्रुवम् ॥३०॥
ॐ बीजं स्वाहात्र शक्तिः संबुद्धिः कीलकं क्रमात् ॥
द्वाभ्यां हृदि च के द्वाभ्यां शिखायां क्रियया न्यसेत् ॥ ३१ ॥
संबुद्धिभ्यां स्कन्धचक्षुर्द्वयेस्त्रेन्त्येन तन्मयः ॥
चतुर्बीजैः सक्रियाख्यान्त्याभ्यां न्यासं करादिषु ॥३२॥
कृत्वा यजेद्देवदेवं यन्त्रन्यस्तमभीष्टदम् ॥
दत्तात्रेय हरे कृष्ण उन्मत्तानन्ददायक ॥ ३३ ॥
दिगम्बर मुने बाल पिशाचज्ञानसागर ॥
आनुष्टुभः शिवार्षोऽयं षड्भुजात्रेयदैवतः ॥ ३४ ॥
द्वाभ्यां द्वाभ्यां हृच्छिरसोः शिखायामेकतो गले ॥
द्वाभ्यामेकैकेन दोर्द्दग्द्वये द्वाभ्यां तथास्त्रके ॥ ३५ ॥
विन्यस्य जपिता दोषमुक्तः सर्वोपकारकृत् ॥
तारं वायुं क्लां कामं क्लं हां दुर्गां हूं च विद्धि सौः ॥ ३६ ॥
दत्तात्रेयं चतुर्थ्यन्तं स्वाहान्तं षोडशाक्षरम् ॥
वायुस्थाने तु वाग्बीजं नमोन्ते योजयाथवा ॥ ३७ ॥

वरदहस्तमभयहस्तं च । महाव्रतो दृढभक्तिः ॥ ३० ॥ द्वाभ्यां बीजाभ्यां हृदि तथा द्वाभ्यां शिरसि एहीति क्रियया शिखायां दत्तात्रेयेति संबुद्धिभ्यां स्कन्धोपलक्षिते कवचे नेत्रयुग्मे च स्वाहेत्यस्त्रे चैवं करन्यासोऽपि ॥ ३१॥ ३२ ॥ दत्तेत्यानुष्टुभः ॥ ३३ ॥ ३४ ॥ दत्तात्रेयेति हृदि हरे श्रीकृष्णेति शिरसि उन्मत्तेति शिखायां आनन्ददायक दिगम्बरेति कण्ठे मुने इति बाह्वोः बालेति नेत्रयोः पिशाचज्ञानसागरेत्यस्त्रे करयोरप्येवम् ॥ ३५ ॥ तारं प्रणवं वायुं यं कामं क्लीं दुर्गां ह्रीं वाग्बीजं ऐं ॥ ३६ ॥ ३७ ॥

स्वाहैकत्र नमोऽन्यत्र शक्तिर्बीजं च कीलकम्॥
तारश्चतुर्थी गायत्री मंत्रराजः शिवोदितः ॥ ३८॥

हृदि द्वे के त्रीणि शिखायां चैकं कवचे दृशोः ॥
चतुर्थीमन्त्यमस्त्रे च विन्यस्य जपकामदम् ॥ ३९॥

सच्चिदानन्दस्वरूपी सुखी मुक्तो भवत्यतः ॥
सिद्धगन्धर्वादिसङ्गी लक्षजाप्यष्टसिद्धिभाक् ॥ ४० ॥

त्रिदेवलोकसंचारी कोटिजापी च दत्तवत् ॥
दशकोटिजपी साक्षाज्जरामरणवर्जितः ॥ ४१ ॥

द्व्यष्टकोटिजपी सिद्धः परकायगतादिकृत् ॥
मन्त्रशक्तिरियं श्लोका अभिगीता इहाप्यमी ॥ ४२ ॥

खड्गस्तम्भो जलस्तम्भः सेनास्तम्भस्तथैव च ॥
इच्छासिद्धिर्वशित्वं च दिक्पालैः सह भाषणम् ॥ ४३ ॥

वायुवद्गतिरित्याहुराह्लादित्वं च चन्द्रवत् ॥
अग्निवत्सर्वभक्षत्वं नित्यतृप्तत्वमेव च ॥ ४४ ॥

एकत्र पूर्वमन्त्रे तारः प्रणवः ॥ ३८ ॥ द्वे बीजे हृदि त्रीणि शिरसि एकं शिखायां द्वे कवचयोस्तथा नेत्रयोश्चतुर्थी कवचेऽन्त्यमस्त्रे च न्यसेत् ॥ ३९॥ ४० ॥ ४१ ॥ परकायगतं परकायप्रवेशः ॥ ४२ ॥ ४३ ॥ ४४ ॥

सर्वभाषापरिज्ञानं सर्वचित्तावबोधनम् ॥
वापीकूपसमुद्राणां पर्वतानां च चालनम् ॥ ४५ ॥
दत्तात्रेयमयः स्वच्छो भवेत्स व्यासवत्कविः ॥
इतीदं षोडशार्णस्य माहात्म्यं तत्प्रयत्नतः ॥ ४६ ॥
प्राणो देयो मनश्चक्षुश्छित्त्वा देयं शिरो वपुः ॥
न देयः षोडशार्णोऽसौ सच्छिष्याय महात्मने ॥ ४७ ॥
महागुणवते देयः कुप्येत प्रभुरन्यथा ॥
मालाकमण्डलू वाद्यत्रिशूले शङ्खचक्रके ॥ ४८ ॥
दधानमत्रिमरदं दत्तात्रेयं त्र्यधीश्वरम् ॥
ध्यात्वेत्थं विधिवन्मन्त्रजाप्युक्तफलभाग्भवेत् ॥ ४९ ॥
ॐ नमो भगवान्दत्तात्रेयः स्मरणमात्रसंतुष्टो ॥
महाभयनिवारणो महाज्ञानप्रदः ॥ ५० ॥
चिदानन्दात्मा बालोन्मत्तपिशाचवेषो ॥
महायोग्यवधूतोऽनसूयानन्दवर्धनोऽत्रिपुत्रः ॥ ५१ ॥
ॐ भवबन्धविमोचनो ह्रीं सर्वविभूतिदः
क्रों असाध्याकर्षण ऐं वाक्प्रदः ॥ ५२॥
क्लीं जगत्त्रयवशीकरणः सौः सर्वमनःक्षोभणः
श्रीं महासंपत्प्रदो ग्लौं भूमण्डलाधिपत्यप्रदः ॥ ५३ ॥
द्रां चिरजीवी वषड्वशीकुरु वौषडाकर्षय
हुं विद्वेषय फडुच्चाटय ठः ठः ॥ ५४ ॥

४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ विधिवत्पुरश्चरणपूर्वकम् ॥ ४९ ॥ ॐ
मित्यादिमालामन्त्रः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥

स्तम्भय खें खें मारय नमः संपन्नय
स्वाहा पोषय परमन्त्रपरयन्त्रपरतन्त्राणि ॥ ५५ ॥

छिन्धि ग्रहान्निवारय व्याधीन्विनाशय
दुःखं हर दारिद्र्यं विद्रावय देहं पोषय ॥ ५६ ॥

चित्तं तोषय सर्वमन्त्रस्वरूपः
सर्वतन्त्रस्वरूपः सर्वपल्लवस्वरूपः ॥ ५७ ॥

ॐ नमो महासिद्धः स्वाहान्तो मालामन्त्रः ॥
प्रथमान्तांश्चतुर्थ्या द्विः क्रियाश्च व्याहरेत् ॥ ५८ ॥

विष्णुनोक्ता इमे मन्त्रा ब्रह्मणे कामधेनवः ॥
प्रयोगग्रहभूतारिकुदृग्रुक्तापभीतिहाः ॥ ५९ ॥

कामिनोऽभीष्टफलदा देवसांनिध्यकारकाः ॥
तद्वच्च वज्रकवचं दत्तनामसहस्रकम् ॥ ६० ॥

एषामन्यतमेनेशं यो वैदिकविधानतः ॥
उपास्ते चित्तशुद्ध्या स मुच्यतेऽत्र परत्र वा ॥ ६१ ॥

५६ ॥ ५७ ॥ प्रथमान्तांश्चतुर्थ्यन्तान्ब्रूयात्क्रियापदानि च द्विवारं ब्रूयात् ॥ ५८ ॥ मन्त्रादिपरकृतप्रयोगः ग्रहा भूताश्च प्रसिद्धाः कुदृक् दृष्टिदोषः अरिः शत्रुः रुक् रोगः तापस्त्रिविधः भीर्दृष्टादृष्टभयं चैषां नाशकाः ॥५९॥ वज्रकवचं रुद्रयामलोक्तम् ॥ ६० ॥ वैदिकविधानेनातान्त्रिकेण ॥ ६१ ॥ वन्दनभक्तिमाह—दत्तेति । समे ब्रह्मणि दृग् यस्य न परिच्छिन्ने भौतिके

दत्तात्रेयनिवासं तदाचण्डालश्वगोखरम् ॥
ब्रह्मादिस्तम्बपर्यन्तं समदृक् प्रणमेत्सुधीः ॥ ६२ ॥

चालको भासकोऽस्त्येषां सच्चिदात्मा स्वयंप्रभः ॥
अस्तिभातिप्रियत्वेन भगवानेव नापरः ॥ ६३ ॥

यथाधिपे वशा भृत्या निर्माना ईश्वरे तथा ॥
विदध्यात्स्वात्मनो दास्यं निरीहं द्वैतदर्शने ॥ ६४ ॥

सख्योः सख्यं यथा लोके निरपेक्षं तथाऽऽत्मनः ॥
परात्मनापि सततं समाधेः प्राक् प्रकल्पयेत् ॥ ६५ ॥

कर्तृत्वादि न मय्येके शुद्धे देहादिसाक्षिणि ॥
इतीक्षणमसंदिग्धं सर्वस्वात्मनिवेदनम् ॥ ६६ ॥

अतीत्य वरदेशादीन् काश्यां संतोष्य दीपकः ॥
वेदधर्मगुरुं रुग्णं कष्टेन हि महामतिः ॥ ६७ ॥

देहादौ ॥ ६२ ॥ समत्वे हेतुमाह–चालक इति । नापरः प्राणादिः । 'ऊर्ध्वं प्राणमुन्नयति' इति मन्त्रत्रयेण कण्ठे तथैवोक्तत्वात् ॥ ६३ ॥ दास्यभक्तिमाह–यथेति । तन्मर्यादामाह–द्वैतेति । अद्वैतदर्शने तदसंभवात्॥ ६४॥ सख्यभक्तिमाह––सख्योरिति ॥ ६५ ॥ सर्वस्वात्मनिवेदनमाह—कर्त्रिति । कर्तृत्वाद्यभावे हेतुमाह–एक इति । एकत्वात् ततः कल्पितं साक्षित्वं 'ततो विपापो विरज' इत्यादिशुद्धसत्वमीक्षणं पर्यालोचनम् ॥ ६६ ॥ वरं दातुं प्रवृत्ताञ्छंकरादीनतिक्रम्य ॥ ६७ ॥ गुरुर्वेदधर्मा शिष्याय दीपकाय यत्प्राह

श्रीदत्तलीलाश्रवणं ययाचे तुष्ट एव सः ॥
गुरुः शिष्याय यत्प्राह मुक्त्यै तत्सार उच्यते ॥ ६८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां उपासनाकाण्डे तृतीयाष्टके प्रथमोऽध्यायः॥

तत्सारभूतोऽयमितिहासो मुक्त्यर्थमेवोच्यते ॥ ६८ ॥ इति तृतीयाष्टके टीकायां प्रथमोऽध्यायः समाप्तः ॥ १ ॥

॥ इति श्रीदत्तपुराणे उपासनाविधिनिरूपणं नाम
तृतीयाष्टके प्रथमोऽध्यायः ॥ ३ । १ ॥

---

## ।थ श्रीदत्तात्रेयावतारकर्मादिकथनं नाम तृतीयाष्टके द्वितीयोऽध्यायः ॥ ३ । २ ॥

हरिः ॐ ॥ इच्छन्ति यत्कृपां सर्वे तल्लीलात्रोपवर्ण्यते ॥
भार्गवोऽभूद्द्विजः कश्चित्तत्पुत्रो जडवत्सुधीः ॥ १ ॥
तत्पिताह सुताधीष्व वेदान्मुक्त्यै चराश्रमान् ॥
स प्राह प्राक् तताधीताः सर्वा विद्याः क्रियाः कृताः ॥ २ ॥
भोगा भुक्ता लक्षयोनिराड्भृत्यत्वादि चोषितम्॥
तत्सर्वं संस्मरे योगभ्रष्टत्वात्पौर्वदेहिकम् ॥ ३ ॥
न स्पृशामि त्रयीधर्मं भान्ति मे विगुणाः क्रियाः ॥
जातबोधस्य मे वेदैः किं कार्यं वशिनो यतेः ॥ ४ ॥
पुराऽऽसं ब्राह्मणो ब्रह्मविचारपरिनिष्ठितः ॥
सत्सङ्गाभ्यासवैराग्यैरेकान्तित्वमुपागतः ॥ ५ ॥
दैवान्मृतस्य बोधात्प्राग्लुप्ताभ्यासान्न मे स्मृतिः ॥
बुद्ध्वेह सुप्तोत्थितवत्स्वात्मानं हि दृढव्रतः ॥ ६ ॥

॥ श्रीगणेशाय नमः ॥

दत्तात्रेयावतारः सप्रसङ्गोऽस्यैव कर्म च ॥
प्रोक्तमष्टादश वेदधर्मतच्छिष्यवादतः ॥ १ ॥

सुधीरपि स्वेच्छया जडवत् ॥ १ ॥ तत्पिता तमाह । प्राक् पूर्वजन्मनि । हे तत तात ॥ २ ॥ राट्त्वं राजत्वं भृत्यत्वं च । योगभ्रष्टस्य स्मृतिलोपाभावः सुतरां प्रसिद्धः ॥ ३ ॥ विगुणा निष्फलाः ॥ ४ ॥ पूर्वजन्माह-- पुरेति ॥ ५ ॥ पूर्वस्मृतिलाभे दृष्टान्तमाह --- सुप्तोत्थितवदिति ॥ ६ ॥

प्राप्तोऽस्मीह परां शान्तिमचलो ह्यब्धिवत्स्वदृक् ॥
नाशो नाद्य त्रिभूमिस्थयमिनः किमुतान्यतः ॥ ७ ॥

तच्छ्रुत्वा तं पिता प्राह क्षणसत्सङ्गनिर्वृतः ॥
पुत्रेदृशोऽसि चेत्त्वादृग् यथा भूयां तथादिश ॥ ८ ॥

बिभेमि कर्मनिगडान्नेक्षेऽत्रान्यत्र वा सुखम् ॥
पुत्रः प्राहार्जुनादिभ्यः श्रीदत्तेन पुरोदितः ॥ ९ ॥

योगस्तं दुःखसंयोगवियोगं शृणु तात मत् ॥
प्रतिष्ठाने कौशिकाख्यो द्विजः पूर्वार्जितादभूत् ॥ १०

कुष्ठी रुग्णोऽपि तद्भार्याऽभजत्तं देववत्सदा ॥
स्नानवस्त्राङ्गसंवाहप्रियवाग्भोजनौषधैः ॥ ११ ॥

श्लेष्ममूत्रपुरीषासृक्क्षालनैः साधुलेपनैः ॥
स तथा सेव्यमानोऽपि सत्यातीव विनीतया ॥ १२ ॥

परां मुक्तिलक्षणाम् । आद्यास्तिस्रो भूमयः शुभेच्छाविचारणातनुमानसाख्याः तासु तिष्ठतीति साधक इति यावत् । तस्य यमिनो नाशो न किमुत चतुर्थ्यादिभूमिगतस्य ॥ ७ ॥ हे पुत्र, तवेव दृश्यत इति त्वादृग्येन प्रकारेण भूयां तथोपादिश ॥८॥ ननु पुत्रेण पिता कथमुपदेश्य इति चेत् ‘ कविर्यः पुत्रः स ईमाचिकेत यस्ता विजानात्स पितुष्पिता’ इति श्रुतेः ज्ञानिनः पुत्रस्य पितुरपि पितृत्वोक्तत्वान्न दोषः । अहं त्वज्ञानी अतो बालः यतः कर्मनिगडाद्बिभेमि। अधिकारं विनोपदेशानर्हत्वमिति चेत्तत्राह—नेक्ष इति ॥ ९-१२॥

निर्भर्त्सयति तां चण्डः क्रूरो वेश्यागतान्तरः ॥
बीभत्समपि तं देवं मेने सा पतिदेवता ॥ १३ ॥

पराधीनोऽप्येकदा स वेश्यां दृष्ट्वाऽवदत्प्रियाम् ॥
धर्मज्ञे मे हरत्येषा चित्तं तन्वि घटस्तनी ॥ १४ ॥

तद्धाम नय माऽशक्तं मरिष्ये सुभगे न चेत् ॥
कामो वामो न मोक्तुं तं कोऽपि शक्नोति भामिनि॥१५॥

तच्छ्रुत्वा साभवद्धृष्टा कुलीना सुभगा सती ॥
बद्ध्वा परिकरं शुल्कं भूर्यादाय निधाय तम् ॥ १६ ॥

स्कन्धे मन्दं ययौ रात्रौ ध्वान्ते विद्युत्त्विषा सुधीः ॥
शूले चोरभ्रमात्प्रोतो माण्डव्यो भूभृता विधेः ॥ १७ ॥

ध्वान्तेऽज्ञानात्कौशिकाङ्घ्रिचालितः प्राह दुःखितः ॥
येनाहं दुःखितो यातु मृत्युं सोऽर्कोदयादिति ॥ १८ ॥

तच्छ्रुत्वोचे सती खिन्ना नोदेष्यत्यर्क इत्यहो ॥
शप्त्वैवं पूरयित्वा स्वभर्तृकामं गृहं ययौ ॥ १९ ॥

चण्डोऽत्यन्तकोपनः ॥ १३ ॥ रोगेण पराधीनः । घटस्तनी करिकुम्भकुचा ॥ १४ ॥ सुभगे इति कटाक्षेण संबोधयति । कामो विपरीतः । कोऽपि ब्रह्मापि कुमार्या पुत्र्या संगतत्वात् ॥ १५ ॥ शुल्कं वेश्याप्रीतये धनम् ॥ १६ ॥ चोरोयऽमिति भ्रान्त्या । विधेर्दैवात् ॥ १७ ॥ १८ ॥ भर्तृकामं वेश्योपभोगरूपम् ॥ १९ ॥ अतः कालव्यवस्थाऽभावात् । समाः

तच्छापान्नोदितः सूर्यस्ततस्त्रस्तं जगत्त्रयम् ॥
कालव्यवस्था नष्टेऽर्के नातो लुप्ताः क्रियाः समाः॥२०॥
इह भीतं जगद्ध्वान्तात्स्वर्गे देवा उपोषिताः ॥
वृष्ट्यादिनानुगृह्णीमो मर्त्यास्तेऽप्यध्वरैश्च नः ॥ २१ ॥
भुक्त्वापि लोलुपा येऽस्मद्दत्तं यागैर्यजन्ति नो ॥
इज्यन्त उपसर्गैस्तेऽतिवृष्ट्याद्यैः सुदारुणैः ॥ २२ ॥
नापराधोऽधुनात्रैषां कालाभावान्नृणामिति ॥
विचार्य शरणं देवाः कं गत्वा तन्न्यवेदयन् ॥ २३ ॥
ध्यात्वा मुहूर्तं ब्रह्मापि देवांस्तान्प्राह सर्ववित् ॥
सूर्यो भीतः सतीशापादुपायः कल्प्यतेऽत्र तु ॥ २४ ॥
तेजसैति शमं तेजो यथा सत्या सती तथा ॥
पतिव्रताग्रगण्यात्रेरनसूया तपस्विनी ॥ २५ ॥
वधूः प्रसादिता सैव कार्यं वः साधयिष्यति ॥
इत्युक्तास्ते ययुः साकं धात्राऽत्रेरुटजं शुभम् ॥ २६ ॥

सर्वा वैदिक्यो लौकिक्यश्च ॥ २० ॥ इह भुवि देवा ऊचुर्वृष्ट्यादिनेत्यादिना तेऽनुगृह्णन्तीति शेषः ॥ २१ ॥ लोलुपा भोगलम्पटाः ॥ २२ ॥ अधुनात्र यज्ञाद्यननुष्ठाने। कं ब्रह्माणं तद्यज्ञलोपादि ॥ २३ ॥ स्वसृष्टं सर्वं वेत्तीति सर्ववित् ॥ २४ ॥ तेजो नक्षत्रादिरूपश्चिद्धातुः। तेजसा सूर्यतेजसा विशिष्टेन परमत्यर्थं शममुपशान्तिं यथोपैति तथा श्रेष्ठतमया। सत्या सती शमं यास्यतीदृश्यनसूयेत्याह ॥ २५ ॥ अत्रेर्वधूर्भार्या मम वधूः स्नुषा वा। अत्रेरुटजं पर्णशालाम् ॥ २६ ॥ कौशिकधाम गृहं।

आसाद्यात्रिं च तत्पत्नीं साध्वीं सर्वे च सत्कृताः ॥
प्रापुः कौशिकधामाहानसूया सत्कृता सतीम् ॥ २७ ॥
देवेभ्योऽप्यधिकस्ते किं स्वभर्ता तन्मुखेक्षणात् ॥
नन्दस्यपि तदर्थं ते कच्चिद् धृद्धाकृतनुक्रिया ॥ २८ ॥
पतिशुश्रूषयानृण्यं त्रिवर्गाप्तिश्च योषितः ॥
क्लेशेन महता साध्वी स्वाचारात्पतिलोकगा ॥ २९ ॥
स्त्रीणां पृथक्क्रिया कापि नैवातः सेवयेशितुः ॥
पुण्यार्धहारिणी सार्धं भर्त्रा पत्यादिलोकगा ॥ ३० ॥
अतस्त्वया सदा कार्या पातिव्रत्ये मतिः सति ॥
ऐहिकामुष्मिकार्थोऽतः स्त्रीणां भर्ता हि सद्गतिः ॥३१॥
पातिव्रत्यान्मयाप्यार्ये प्राप्तं धर्म्यं महाफलम् ॥
रूपाद्यैः क्वापि नेक्षेऽन्यं भर्तृतुल्यं कदाप्ययि ॥ ३२ ॥
इति श्रुत्वाब्रवीत्सापि हृष्टा साध्वि तथैव मे ॥
श्रद्धां वर्धयसेऽत्यन्तं साध्व्या भर्तैव दैवतम् ॥ ३३ ॥
दिविषद्भिः समं जातं भवत्या दर्शनं परम् ॥
तत्पुण्यात्तेऽनुग्रहोयं धन्याहं वः करोमि किम् ॥ ३४ ॥

कौशिकपत्न्या सत्कृतानसूया तां सतीं प्राह ॥ २७ ॥ देवेभ्य इत्याद्यनसूयावाक्यम् । नन्दस्यपि नन्दसि किम् । तदर्थं पत्यर्थम् ॥२८॥ त्रिवर्गाप्तिः धर्मार्थकामाप्तिः । स्वाचारात्पातिव्रत्यात् 'अदुर्मङ्गलीः पतिलोकमाविश' इति श्रुतेः ॥२९॥ पृथगित्यत्र पत्याधिक्रियते पत्नीविवक्ष्यमाणमनुसंधेयम् ॥३०॥ ॥ ३१ ॥ ३२ ॥ भो साध्व्यनसूये ॥ ३३ ॥ दिविषद्भिः समं देवैः सह । तत्पुण्याद्भर्तृसेवनरूपाद्धर्मात् । अयं ते तवानुग्रहो दया ॥ ३४ ॥

सा प्राह साध्व्यमी देवा याचन्ते लोकशर्मणे ॥
पूर्ववद्द्युनिशासंस्थां तदर्थं चागतास्म्यहम् ॥ ३५ ॥

लोकोच्छेदः क्रियोच्छेदे ततो नश्येज्जगत्क्रमात् ॥
तत्त्वं प्रसीद धैर्येण सूर्यमावह मानदे ॥ ३६ ॥

सोवाचार्कोदयादेव चण्डमाण्डव्यशापतः ॥
नाशं प्राप्स्यति मे भर्ता सुभगे किं ब्रवीम्यतः ॥ ३७ ॥

अनसूयाऽऽह मा भीस्त्वं सूर्यमावह ते पतिम् ॥
सजीवं पूर्ववत्कुर्वे सत्यं ते यदि रोचते ॥ ३८ ॥

तथेत्युक्त्वाऽथ सा साध्वी तद्विश्वासाद्दिवाकरम् ॥
आजुहाव द्रुतं चासौ शोचिष्केशस्तदोदितः ॥ ३९ ॥

स्थितोपि षट्शतघटीकालं भीत्योद्गतो रविः ॥
सत्याहूत्या कौशिकासून् सहैव च हरंस्तमः ॥ ४० ॥

सानसूया ॥३५॥ याच्ञायां हेतुः लोकोच्छेद इत्यादि । अनसूया मदपकारं न करिष्यतीति धैर्येण ॥३६॥ सा कौशिकभार्योवाच । चण्डोऽत्यन्तकोपनो यो माण्डव्यस्तस्य शापात् ॥३७॥ मा भीस्ते भयं मास्तु । पूर्ववद्रोगोत्पत्तेः पूर्वं यथा तथा कुर्वे सत्यमेतत् ॥ ३८ ॥ आजुहावाह्वयत् । शोचिरेव केशा यस्य सः सूर्यः 'शोचिष्केशं विचक्षण' इति श्रुतेः ॥३९॥ सत्या आहूत्या । यद्वा सत्याः हूत्याऽऽह्वानेन 'हूतिराकारणाह्वानम्' इत्यभिधानात् । सहैकसमयावच्छेदेनैव कौशिकप्राणानन्धकारं च हरन्नविरुदितः ॥ ४० ॥ स्वेशं

स्वेशं दृष्ट्वाब्जिनी हृष्टा क्लिष्टा नष्टाधिपा च सा ॥
अनसूयोवाच भद्रे मा शोचीः पश्य मे तपः ॥ ४१ ॥
यदि मेऽनन्यया भक्त्या पत्युपास्तिर्दृढा कृता ॥
स्वप्नेऽपि न मतं पत्या समं कमपि सर्वतः ॥ ४२ ॥
हृद्वाक्कायैः स्वधर्माच्चेत्सेविता पतिदेवता ॥
तल्लवात्स्त्रीसहायोऽसौ जीवत्वब्दशतं पुनः ॥ ४३ ॥
मन आवर्तयाम्यस्य क्वापि यातं पुनस्त्विह ॥
जीवातवेऽसुनीतेऽस्य तन्मनो धेहि पूर्ववत् ॥ ४४ ॥
सत्येत्युक्ते मृतोऽप्येष सुप्तोत्थितवदुत्थितः ॥
स्वदीप्त्या भासयन्वेश्म नीरोगो देववत्सुधीः ॥ ४५ ॥
तुष्टाः पुष्पमुचो देवा ब्रह्मविष्णुशिवादयः ॥
रंभाद्या ननृतुः साधु गन्धर्वा ललितं जगुः ॥ ४६ ॥
देवा ऊचुर्महाकार्यं कृतं कल्याणि नस्त्वया ॥
वरदाः स्मो वरं हृद्यमनसूये वृणीष्व भोः ॥ ४७ ॥

**सूर्यं दृष्ट्वा** अब्जिनी कमलिनी हृष्टा विकासिता प्रोष्यागतं पतिमिव कामिनी **नष्टोऽधिपः** पतिर्यस्याः साध्वी क्लिष्टा क्लेशाभिभूता । तपः प्रभावम् ॥४१॥ उपास्तिरुपासना ॥ ४२ ॥ तल्लवादंशान्न तु कार्त्स्न्यात् ॥ ४३ ॥ मन-उपलक्षितं लिङ्गं प्राधान्यात् 'मनोन्वाहुवामह' इति बन्ध्वाद्युक्तिवत् हे **हे** असुनीते प्राणादिकलानियन्त्रि देवते, जीवातवे जीवितुं पूर्ववत्सर्व-व्यवहारक्षमं ॥ ४४ ॥ भासयन्निति तस्य बाह्यान्तरभावस्य पूर्वापेक्षयात्यु-त्तमत्वमुक्तम् ॥ ४५ ॥ अनसूयोपरि पुष्पाणि मुञ्चन्तीति पुष्पमुचः देवास्तुष्टा बभूवुः ॥ ४६ ॥ हृद्यमभीष्टम् ॥ ४७ ॥ क्लेशेभ्योऽविद्यादिभ्यो

सोवाच भर्तुर्योगोऽस्तु क्लेशमुक्त्यै सदा मम ॥
पुत्रभावं त्र्यधीशो नौ प्राप्नोत्वन्यैर्वरैस्तु किम् ॥ ४८ ॥
एवमस्त्विति तां प्रोक्त्वा जग्मुर्देवा यथागतम् ॥
स्वाश्रमं चानसूयापि कौशिकस्त्र्यनुमोदिता ॥ ४९ ॥
ततः काले सुचार्वङ्गीमृतुस्नातामनिन्दिताम् ॥
स्वजायां सुदतीं स्वङ्गीं लोभनीयतमाकृतिम् ॥ ५० ॥
ब्रह्मपुत्रो द्वितीयोऽत्रिर्महर्षिर्भगवान्प्रभुः ॥
सकामो मनसा भेजे ध्याताऽजातत्र्यधीश्वरः ॥ ५१ ॥
वायूत्थं रज उद्रिक्तं तेजो वैकारिकं द्युमत् ॥
ब्रह्माधिष्ठितमाधत्त चन्द्रः कांशो यतोऽभवत् ॥ ५२ ॥

मुक्तिस्तदर्थं ऐहिकामुष्मिकार्थान्बिभर्ति धारयतीति भर्ता तस्य योगो ब्रह्मबुद्धया ध्यानं सदा निरन्तरमस्तु । स्त्रियो वरद्वयादानाधिकाराद्वरान्तरं याचते । त्र्यधीशो गुणत्रयनियन्ता परमेश्वरः । नौ आवयोः पुत्रत्वं प्राप्नोतु अन्यैर्नश्वरैः । वरद्वय एव सर्वत्रान्तर्भावात् ॥ ४८ ॥ स्वाश्रममाजगामेति शेषः ॥ ४९ ॥ लोभनीयतमाकृतिं रमणीयाकाराम् ॥ ५० ॥ ध्यातः अजातो जन्माद्यतीत त्र्यधीश्वरो येन स सकामः परमेश्वरो मे पुत्रो भूयादिति कामेन युक्तः सन् मनसा भेजे न त्वङ्गसङ्गेन । यद्वा मनसा शुद्धान्तःकरणेन ध्यातोऽजातः त्र्यधीश्वरो येन स तां सुरतविधिना भेजे ॥ ५१ ॥ वैकारिकं कामविकारजन्यं तेजः शुक्रं द्युमत् ब्रह्मणाधिष्ठितत्वात् । यद्यपि 'आभूतिरेषा संभूतिर्बीजमेतं निधीयते । देवाश्चैतामृषयश्च तेजः समभरन्महत्' इति श्रुत्या गर्भमात्रस्य तेजस्वित्वे उक्तेऽपि ब्रह्मणाधिष्ठितत्वाद्विशेषतो द्युमत्त्वम् ॥ ५२ ॥ त्र्यधीशेन परमेश्वरेणाधिष्ठितं महस्तेजः । ब्राह्मणश्रेष्ठः

सत्वोद्रिक्तं च साभिन्नं त्र्यधीशाधिष्ठितं महः ॥
यतोऽभूद्ब्राह्मणश्रेष्ठः श्रीदत्तो भगवान्स्वयम् ॥ ५३ ॥

तथैव तम उद्रिक्तं रुद्राधिष्ठितमंशतः ॥
वरप्रभावाद्धृत्वैवं शुशुभे नितरां सती ॥ ५४ ॥

यथाकालं कृताः सर्वे संस्कारा अत्रिणा क्रमात् ॥
ततस्त्र्यधीशोऽवतरत्तद्गर्भत्रयरूपतः ॥ ५५ ॥

दत्तावतारकाले तु सुयोगे मुदितं जगत् ॥
त्रीशत्वं दर्शयित्वा प्राक् स्मृत्यै बालोऽभवत्स्तुतः ॥५६॥

चक्रेऽथ जातकर्मात्रिर्विधिना नामकर्म च ॥
चन्द्रो दत्तश्च दुर्वासाः सतीस्तन्यं पपुर्मुदा ॥ ५७ ॥

चन्द्रोऽगात्संस्कृतः स्वर्गमोषधीशोऽन्वयर्द्धिकृत् ॥
दुर्वासाश्चोद्धतोऽटद्भ्यां स्वैरं रौद्रोऽसदर्दनः ॥ ५८ ॥

आप्तकामोऽपि भगवान्श्रीदत्तो योगमायया ॥
बालानुसार्यक्रियोऽपि बालोक्तैर्मुग्धचेष्टितैः ॥ ५९ ॥

ब्रह्मविद्वरिष्ठः ॥ ५३ ॥ अंशतो लेशतो रुद्रेण शंकरेण वरप्रभावाद्देववर-सामर्थ्यात् ॥ ५४ ॥ यथाकालं चतुर्थादिमासेषु । संस्काराः पुंसवनादयः ॥ ५५ ॥ पूर्ववरस्मरणायैकरूपेण त्रीशत्वं पितृभ्यां दर्शयित्वा बालो भवेति ताभ्यां स्तुतो भगवान्बालोऽभूत् ॥ ५६ ॥ स्तन्यं दुग्धम् ॥ ५७ ॥ स्वर्गं चन्द्रमण्डलं । अन्वयर्द्धिकृद्वंशवृद्धिकरः स्वैरं स्वच्छन्दं । असदर्दनो दुष्ट-शास्ता ॥ ५८ ॥ बालोक्तैर्बालोक्तिभिः ॥ ५९ ॥ अतर्क्यसुलीलाभिर-

क्वाप्यतर्क्यसुलीलाभिः क्वापि धाष्टर्यैश्च चंक्रमैः ॥
दर्शयन्भक्तवशतां संतोष्य पितरौ स्थितः ॥ ६० ॥

शिष्टपो दुष्टहा मान्यो योगमार्गप्रवर्तकः ॥
इति श्रुत्वा मुनिगणा योगाभ्यासार्थमाययुः ॥ ६१ ॥

जलेऽगाधेऽविशत्तांस्तु सर्वज्ञोपि परीक्षितुम् ॥
शताब्दं तत्र केऽप्यस्थुस्तन्मोहायापि योगिराट् ॥६२॥

स्वाश्रयां परशक्तिं स धृत्वा मूर्तिमदुद्गतः ? ॥
गायन्तीं साधु वाद्यानि वादयन्तीं निजाङ्कगाम् ॥ ६३ ॥

पीनश्रोणिकुचां तन्वीमनघां मद्यमांसयुक् ॥
तेजीयसां न दोषोऽयमित्युक्त्वा केचनास्थिताः ॥६४॥

ततो ज्ञात्वाऽमलाञ्छिष्टांश्चक्रेऽनुग्रहमुत्तमम् ॥
प्रभुर्येनार्जुनमुखा योगर्द्धिमुभयीं ययुः ॥ ६५ ॥

मानुषक्रियाभिः । चंक्रमणैः पौनःपुन्येन धावनैः ॥ ६० ॥ योगमार्गप्रवर्तक इति साध्यदेवेभ्यः श्रुत्वा ॥ ६१ ॥ तानागतान्परीक्षितुं अगाधेऽतलस्पर्शे जलेऽविशज्जलं प्रविष्टोऽभूत् । केऽपि केचन तत्र शतवर्षपर्यन्तं तस्थुः तानपि मोहयितुम् ॥ ६२ ॥ निजाङ्कगां स्वासङ्गोपविष्टाम् ॥ ६३ ॥ तेजीयसां निस्त्रैगुण्यमार्गवर्तिनां महतामयं न दोष इति मत्वा केचन न सर्वे आस्थिताः ॥ ६४ ॥ अमलान्रागादिरहितान् । उभयीं ऐहिकीमामुष्मिकीं च ॥ ६५ ॥

साहसं यद्यपीशस्य स्वैरं धर्मव्यतिक्रमः ॥
तेजीयस्त्वान्न दोषोऽग्नेरिव सर्वभुजो विभोः ॥ ६६ ॥
मूढोऽनीशश्चरन्नश्येत्तद्विनेशं यथा विषम् ॥
धर्माद्यस्पृग्वायुवन्निस्त्रैगुण्यः श्रुतिमूर्धगः ॥ ६७ ॥
तादृगीशवचस्तथ्यं तथैवाचरितं क्वचित् ॥
तयोर्धर्म्यं प्रवृत्तार्हं युक्तं तन्मतिमांश्चरेत् ॥ ६८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां उपासनाकाण्डे तृतीयाष्टके द्वितीयोऽध्यायः ॥

'यान्यस्माꣳसुचरितानि तानि त्वयोपास्यानि नो इतराणि' इति श्रुतेर्यद्यपीशस्य साहसं धर्मव्यतिक्रमश्च तथापि सर्वभुजोऽग्नेरिव विभोर्व्यापकस्य न दोषस्तेजीयस्त्वाज्ज्ञानित्वत् ॥ ६६ ॥ अनीशोऽसमर्थो मूढश्चरेत्तर्ह्यधः पतेत्। ईश्वरं विना हालाहलं विषं सेवमानो यथा नश्येत्तथेति निदर्शनम्। धर्माधर्मादिसंपर्करहितोऽतीतवेदमार्गो निस्त्रैगुण्यो मुक्तः ॥ ६७ ॥ तादृशश्चेश्वरश्च तयोर्वचः तादृग्ज्ञानी एव ईश्वर इति वा तयोस्तदाचरितवचनयोर्मध्ये यद्धर्मादनपेतं प्रवृत्तियोग्यं च तदेव मतिमान् समाचरेत् ॥ ६८ ॥ इति० श्रीम० सा० त्रि० सं० वा० उपा० तृतीयाष्टके द्वितीयोऽध्यायटीकायां समाप्तः ॥ २ ॥

॥ इति श्रीदत्तात्रेयावतारकर्मादिकथनं नाम तृतीयाष्टके द्वितीयोऽध्यायः ॥ ३ । २ ॥

---

## अथ कार्तवीर्यार्जुनचरितं नाम
## तृतीयाष्टके तृतीयोऽध्यायः ॥ ३।३ ॥

हरिः ॐ ॥ इन्द्रतुल्यः पुरा सोमवंश्यः कृतयुगे नृपः ॥
कृतवीर्याभिधः सम्राट् शतपुत्रान्वितोऽभवत् ॥ १ ॥
दैवाच्च्यवनशापात्तत्पुत्रा दग्धा नृपो ययौ ॥
गुरुं शरणमस्मै स व्रतं प्राहाघहृत्सुखम् ॥ २ ॥
कृतवीर्यानपत्यत्वं स्रावो गर्भस्य मूढता ॥
पातो मृतोद्भवो जातनाशो वैक्लव्यमस्य वा ॥ ३ ॥
भूतग्रहार्तिरोगाद्यैर्बाल्ये वान्यत्र चेच्छिशोः ॥
नाशश्चास्यापि तत्रेयं शान्तिदा सप्तमीनयुक् ॥ ४ ॥
ग्रहानुकूले सत्काले व्रतं संकल्प्य वाचयेत् ॥
स्वात्याचार्यं १ च वृणुयाच्छुद्धभूमौ वृतः स च ॥ ५ ॥
प्रतिष्ठाप्याग्निमीशान्यां विधिवत्कलशोपरि ॥
सूर्यरुद्रसप्तमातृप्रतिमाः स्वर्णनिर्मिताः ॥ ६ ॥

॥ श्री गणेशाय नमः ॥

अर्जुनमुखा योगर्द्धिं ययुरिति यदुक्तं तदेव प्रपञ्चयति ॥ १ ॥ गुरुर्बृहस्पतिः । अस्मै कृतवीर्याय । सुखं संतानवर्धकम् ॥ २ ॥ हे कृतवीर्य । वैक्लव्यं विह्वलत्वम ॥३॥ अन्यत्रापरवयसि । इनयुग्रविवारयुक्ता सप्तमी ॥४॥ स च वृत आचार्यः ॥ ५ ॥ अग्नेरीशान्याम् ॥ ६ ॥ पूर्वे पश्चिमे चतुर्षु

संस्थाप्याभ्यर्च्य शान्त्यर्थं सप्तकुम्भान्यथाविधि ॥
पूर्वपश्चिमकोणान्तदेशस्थाञ्जलपूरितान् ॥ ७ ॥
सौरौषध्यृषिमन्त्रैः समृद्रत्नौषधिपल्लवान् ॥
स्तुत्वान्वाधायाधिश्रित्य पायसं जुहुयात्क्रमात् ॥ ८ ॥
प्रत्येकं पायससमिद्यवकृष्णतिलैर्गुरुः ॥
सूर्यरुद्रमनुभ्यां च शतमष्टोत्तरं विधेः ॥ ९ ॥
कुर्यात्स्विष्टकृदाद्यङ्गं बलिं पूर्णाहुतिं ततः ॥
जीवत्पतिप्रजा वृद्धा ब्राह्मण्यः स्वर्चिताः स्थिताः ॥१०॥
उदङ्मुख्योऽभिषिञ्चेयुर्घटाद्भिस्तत्स्थपल्लवैः ॥
दीर्घायुरस्तु बालोऽयं जीवत्पुत्रा च भामिनी ॥ ११ ॥
आदित्यचन्द्रयुक्तं यद्ग्रहनक्षत्रमण्डलम् ॥
शक्रः सलोकपालश्च ब्रह्मविष्णुमहेश्वराः ॥ १२ ॥
एते चान्ये च ये देवाः सदा पान्तु कुमारकम् ॥
मा शनिर्मा च हुतभुङ् मा च बालग्रहाः क्वचित् ॥१३॥
पीडां कुर्वन्तु बालस्य मा मातुर्जनकस्य च ॥
एवं जातेऽभिषेकेऽथ धृत्वा शुक्लाम्बरादिकम् ॥ १४ ॥

कोणेषु मध्ये चेति सप्त ॥ ७ ॥ उदुत्यमिति सौरैः या ओषधीरित्यौषधिमन्त्रैः सहस्तोमा इत्यृषिमन्त्रैः मन्त्रेण देवदानवेति स्तुत्वा निर्वापादिपूर्वकं पायसं श्रपयित्वा ॥ ८ ॥ चित्रं देवानां कद्रुद्राय जज्ञानोन्विति चकाराच्चैभिर्मन्त्रैः ॥ ९ ॥ जीवन्तः पतयः प्रजाश्च यासाम् ॥१०॥ अष्टकलशोदकैः। अभिषेकमन्त्रा दीर्घायुरिति त्रयः । हुतभुगग्निः ॥११॥ १२ ॥ १३ ॥ १४ ॥

अभिषेकाप्लुतं वस्त्रं दत्वाचार्याय देवताः ॥
संपूज्य स्वर्णगोवस्त्रैः संपूज्याचार्यमृत्विजः ॥ १५ ॥
गुरवे तिलपात्रस्थां कालमूर्तिं च काञ्चनीम् ॥
दत्वा सदक्षिणां विप्राः सस्त्रीकाः पायसादिना ॥ १६ ॥
भोज्यास्तैराशिषो देयाः संतुष्टैर्दक्षिणादिना ॥
दीर्घायुरस्तु बालोऽयं यावद्वर्षशतं सुखम् ॥ १७ ॥
यत्किंचिदस्य दुरितं तत्क्षिप्तं वडवामुखे ॥
ब्रह्मा विष्णुर्हरिः स्कन्दो वायुः शक्रो हुताशनः ॥ १८ ॥
रक्षन्तु सर्वदुष्टेभ्यो वरदाः सन्तु सर्वदा ॥
इति लब्ध्वाऽऽशिषो नत्वा तान्कर्ता सकुटुम्बकः ॥१९॥
कर्मेश्वरार्पणं कृत्वा हुतशेषं च भक्षयेत् ॥
एवं कृते व्रते नश्येत्सप्तम्यां दुष्टमप्यरम् ॥ २० ॥
विधिना कुर्विदं राजन् सम्राट् पुत्रो भविष्यति ॥
इत्युक्त्वागाद्गुरू राजा व्यकृणोद्विधिवद्व्रतम् ॥ २१ ॥
अथैकदापि महिषी नाम्ना शीलधरास्य च ॥
मैत्रेयीं गुणवत्पुत्रलब्धयेऽपृच्छदानता ॥ २२ ॥
मैत्रेय्युवाच श्रीदत्तव्रतं कुर्विष्टदं त्विदम् ॥
आब्दं मार्गादिपूर्णायां प्रतिमासमनन्तकम् ॥ २३ ॥

१५ ॥ १६ ॥ दीर्घायुरित्याशीर्मन्त्रौ ॥ १७ ॥ १८ ॥ १९ ॥ साद्गुण्यार्थं कर्मेश्वरार्पणं कृत्वा सपत्नीको यजमानो हुतशेषं भक्षेत् । अरमत्यर्थम् ॥ २० ॥ सम्राट् राजसूयेनेष्टा मण्डलेश्वरो राजशास्ता च ॥ २१ ॥ अस्य कृतवीर्यस्यानता नम्रा ॥ २२ ॥ श्रीदत्तोदितव्रतं आब्दं वर्षपर्यन्तम् ॥२३॥

संकल्प्य तद्व्राचयित्वा समभ्यर्च्य पितॄन्पुरा ॥
स्नानं कृत्वा पूर्णिमायां गव्यं प्राश्यार्चयाक्षरम् ॥ २४ ॥
अनन्तः सर्वकामानामनन्तं भगवान्फलम् ॥
ददात्वनन्तः पुत्रं च भद्रं चान्यच्च जन्मनि ॥ २५ ॥
अनन्तपुण्योपचयमनन्तः पूजयार्पितः ॥
महाव्रतप्रभावेन संतुष्टः सकलेश्वरः ॥ २६ ॥
इत्युच्चार्याभ्यर्च्य नाम्ना तद्दिने निशि हव्यभुक् ॥
वामं पादं कटिं वस्त्रं स्कन्धौ दक्षं कटिं पदम् ॥ २७ ॥
कण्ठं जानूरू च गुह्यं हृत्कं मार्गादिमासतः ॥
अनन्त इति कं सर्वात्मेत्यूरू चोरुबाहवः ॥ २८ ॥
संकर्षणेति दिव्यास्त्रधारीति च गलः कटिः ॥
श्रीकण्ठेति च कामेति जानु शेषेति चाननम् ॥ २९ ॥
पूज्यं विश्वमुखेत्यूरू तथा संकर्षणेति च ॥
वासुदेवेति मुसलं रौप्यं हैमं हलं सदा ॥ ३० ॥

तद्व्रतं पितॄनभ्यर्च्य नान्दीश्राद्धं कृत्वा । गव्यं पञ्चगव्यम् ॥ २४ ॥ अनन्त इति मन्त्राभ्यां तत्तन्मासनाम्ना तत्तदङ्गं मासक्रमेण पूजयेत् ॥ २५ ॥ २६ ॥ मार्गे वामं पादं पौषे वामकटिं माघे वस्त्रं फाल्गुने स्कन्धौ चैत्रे दक्षकटिं वैशाखे दक्षपादम् ॥ २७ ॥ ज्येष्ठे कण्ठं आषाढे जानुनी श्रावणे ऊरू भाद्रे गुह्यं आश्विने हृदयं कार्तिके कं शीर्षं च पूजयेत् । अतन्तनाम्ना शीर्षं सर्वात्मेति चरणौ संर्षकणेत्यूरू दिव्यास्त्रधारीति बाहू श्रीकण्ठेति कण्ठं कामेति कटिं शेषेति जानुनी विश्वमुखेति मुखं प्रतिमासं पूजयेत् । सर्वमासेषु संकर्षणेति मुसलं वासुदेवेति हलं च पूजयेत् ॥ २८ ॥ २९ ॥ ३० ॥ प्राक् चतुर्मासेषु शुद्ध्यर्थं पूर्वं गोमत्र

पूज्यं पार्श्वे व्रतं त्वेवं कुर्वब्दं त्वं हविष्यभुक् ॥
गोमूत्रं प्राक् चतुर्मासं प्राश्यं देया यवास्ततः ॥ ३१ ॥

प्राश्यं देयं घृतं गव्यं व्रतसंपूर्तये ततः ॥
उदकुम्भान्द्वादशात्र दद्याद्गां भोजयेद्द्विजान् ॥ ३२ ॥

एवं कृते व्रते तुष्येदनन्तः सर्वकामदः ॥
कुरुष्वैतद्व्रतं शीलधरे पापप्रणाशनम् ॥ ३३ ॥

लोकोत्तरगुणः सम्राट् चिरजीवी सुतो भवेत् ॥
इत्युक्त्वा सत्कृता सागान्मैत्रेयी ब्रह्मवादिनी ॥ ३४ ॥

योगीशपत्नी राज्ञी तु व्रतं चक्रे यथोक्तवत् ॥
संतुष्टस्तेन भगवान्दत्तात्रेयो दिगम्बरः ॥ ३५ ॥

अवधूतं निजं रूपं सहस्रार्कप्रभोज्ज्वलम् ॥
मन्दस्मितमुखेनोचे राज्ञि साधु व्रतं कृतम् ॥ ३६ ॥

अत्युत्कटव्रतवृषफलं त्वत्रैव जन्मनि ॥
पुत्रस्ते भविता योगी सप्तद्वीपपतिर्विभुः ॥ ३७ ॥

प्राश्यं । पूजान्ते यवा देयाः निशि हविष्यान्नं भोज्यं ततो घृतं प्राश्यं देयं च पूजादिने ॥ ३१ ॥ ३२ ॥ ३३ ॥ ननु स्त्रिया कथमुपदिष्टमित्यतस्तां विशिनष्टि— ब्रह्मवादिनीति ॥३४॥ योगीशस्य याज्ञवल्कस्य पत्नी ॥३५॥ सूर्यसहस्रप्रभावद्देदीप्यमानं साधु सम्यगकपटमित्यर्थः ॥ ३६ ॥ अतिशयेनोत्कटो वृषो धर्मस्तत्फलं । 'अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते' इत्युक्तेः ॥३७॥ अव्याहताऽप्रतिहताऽऽज्ञा यस्य मत्त ईषन्न्यूनो मत्कल्पः

अव्याहताज्ञो मत्कल्पः स्मृतिगामी न संशयः ॥
इति स्वप्नं सती दृष्ट्वा बुद्ध्वा हृष्टतमावदत् ॥ ३८ ॥

कृतवीर्याय पत्ये सा श्रुत्वा सोऽपि तुतोष ह ॥
कृतवीर्योऽथ संतुष्टः काले कालेऽकरोत्क्रियाः ॥ ३९ ॥

धृत्या च हृत्समुन्नत्या क्रमात्पुंसवनादिकाः ॥
ततोऽसूत शुभे काले स्वोच्चस्थैः पञ्चभिर्ग्रहैः ॥ ४० ॥

सुपुत्रं ज्ञापिताशेषभाग्योभयसुसंपदम् ॥
जातमात्रे शिशावाशाः प्रसेदुः प्रववौ मरुत् ॥ ४१ ॥

शान्ताः प्रदक्षिणशिखा अग्नयो यज्वनोऽभवन् ॥
नीरजस्कमभूद्व्योम हर्षितं सकलं जगत् ॥ ४२ ॥

देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात खात् ॥
जगुर्गन्धर्वपतयो ननर्ताप्सरसां गणः॥ ४३ ॥

धर्मे मनोऽभवन्नृणां प्रससाद सतामपि ॥
आयुष्मान्भव सौम्येति सिद्धाद्या अब्रुवंस्तदा ॥ ४४ ॥

उपाधिव्यवधानात् ॥ ३८ ॥ काले काले सर्वेष्वपि योग्यकालेषु 'नित्यवीप्सयोः' इति वीप्सायां द्वन्द्वः । क्रियाः पुंसवनादिसंस्कारान् ॥ ३९ ॥ धृत्या धैर्येण । पुत्रो मे भविष्यतीति समुन्नत्या ॥ ४० ॥ स्वोच्चस्थग्रहैर्ज्ञापिता पूर्णभाग्यं ऐहिकामुष्मिकसंपच्च यस्य । आशा दिशः प्रसन्ना अभवन् ॥ ४१ ॥ ४२ ॥ खोपलक्षितात्स्वर्गात् ॥ ४३ ॥ सतां साधूनां मनः

राजाप्याहूय दैवज्ञाञ्जातकर्माकरोत्तदा ॥
गोभूहिरण्यवस्त्राणि द्विजादिभ्यो ददौ नृपः ॥ ४५ ॥

दैवज्ञा अब्रुवन्राजन्कुमारो दैवशाल्ययम् ॥
श्रीदत्तस्य कृपापात्रं भविष्यति तपोबलात् ॥ ४६ ॥

अनष्टद्रव्यतास्यैव नामसंकीर्तनान्नृप ॥
सप्तद्वीपमहीपालः स्मृतिगामीह दत्तवत् ॥ ४७ ॥

पञ्चाशीतिसहस्राब्दं चक्रवर्ती भविष्यति ॥
अनन्तव्रतमाहात्म्यात्सम्राडेष जयी वशी ॥ ४८ ॥

सूर्यव्रतप्रभावेन लक्षायू रोगवर्जितः ॥
इत्युक्त्वा गणकास्ते तु पूजिताः स्वगृहं ययुः ॥ ४९ ॥

अथार्जुनं सुतं नाम्ना षोडशेऽह्नि पिताकरोत् ॥
ततः कालेन कियता तत्पिता पञ्चतामितः ॥ ५० ॥

राज्यं कुर्वर्जुनेत्युक्तः पौरैः प्राहापि संस्कृतः ॥
न करिष्यामि राज्यं स्वकर्मापि नरकोत्तरम् ॥ ५१ ॥

भुवः षष्ठांशः पण्यानां द्वादशोंशोऽत्र भूभुजा ॥
ग्राह्य इत्यादि यत्प्रोक्तं तत्तु तद्रक्षणाय हि ॥ ५२ ॥

प्रसन्नं बभूव ॥ ४४ ॥ ४५ ॥ ४६ ॥ अनष्टद्रव्यता नष्टद्रव्यलाभः ॥४७॥
॥ ४८ ॥ गणका ज्यौतिषिकाः ॥ ४९ ॥ पञ्चतामितः मृतः ॥ ५० ॥
संस्कृत उपनीतोऽधीतोपि ॥ ५१ ॥ तद्रक्षणाय प्रजापालनाय ॥ ५२ ॥

चौरादिभ्योऽप्यरक्षन्यो भोगाशी नरकं व्रजेत् ॥
धर्मविप्लवमीशोऽपि योऽनिवार्य विहाय च ॥ ५३ ॥
गुरूक्तिं हन्ति लोभेन क्रुधा वा सोऽप्यधः पतेत् ॥
अदण्ड्यदण्डनाद्दण्ड्यादण्डनाच्चापि तादृशः ॥ ५४ ॥
एवमेकोऽन्यविश्वासात्कथं साधुफलं लभे ॥
श्रुत्वैवं तद्वचः प्रौढं धीमान्गर्गोऽवदन्नृप ॥ ५५ ॥
यद्येवं तर्हि योगीन्द्रं श्रीदत्तं शरणं व्रज ॥
निस्त्रैगुण्ये पथि सदा भक्तगुप्त्यै चरत्यमुम् ॥ ५६ ॥
तत्प्रसादादवाप्नोषि सम्यग्राज्यप्रशासने ॥
धृतिं शक्तिं मतिं चान्यत्प्रियं योगप्रभावतः ॥ ५७ ॥
योऽवतीर्णो महीपृष्ठे सह्यसानुकृताश्रमः ॥
योगयुक्तो महात्मा स सर्वत्र समदर्शनः ॥ ५८ ॥
साक्षाद्विष्णुर्जगद्धाता तपोदीप्तोऽत्रिनन्दनः ॥
अनसूयागर्भरत्नं भक्तानामीहितार्थदः ॥ ५९ ॥

धर्मविप्लवमधर्मं । ईशोऽपि समर्थोऽपि । गुरूक्तिं राजनीतिं युक्तदण्डरूपाम् । यदुक्तं " उद्वेजयति तीक्ष्णेन मृदुना परिभूयते ॥ दण्डेन नृपतिस्तस्मा-द्युक्तदण्डः प्रशस्यते " इति ॥ ५३ ॥ द्रव्यादिलोभेन क्रोधेन वा अद-ण्ड्यानां दण्डानर्हाणां दण्डनात् दण्ड्यानामदण्डनाच्च तादृशो नरकं व्रजेत् ॥५४॥ अन्यविश्वासाद्भृत्यादिविश्वासात् । साधु धर्म्यम् ॥५५॥ भक्तगुप्त्यै भक्तरक्षणाय ॥ ५६ ॥ अन्यद्रूपान्तरस्वीकरणपरचित्तज्ञानादि ॥ ५७ ॥ ॥ ५८ ॥ ईहितार्थदोऽभीष्टकामद. ॥ ५९ ॥ यया योगचर्या । इहलोके

तमाराधय यत्नेन योगर्द्धिं ते प्रदास्यति ॥
ययेह बहुधाऽऽत्मानं कृत्वेष्टं साधयिष्यसि ॥ ६० ॥

यमाराध्य सुरेन्द्रोऽपि स देवस्तत्प्रसादतः ॥
जम्भदैत्यं निहत्याशु हृतं पदमवाप सः ॥ ६१ ॥

अद्यापि सेवमानस्तं देवैर्देवर्षिभिः सदा ॥
भुङ्क्ते धर्मेण धर्मात्मा राज्यं दिव्यमकण्टकम् ॥ ६२ ॥

प्रभोराराधनं विद्धि दुष्करं दुर्धियामिह ॥
सुधीनां सुकरं राजन्नात्मभूतस्य तस्य हि ॥ ६३ ॥

यस्य गङ्गाम्भसि स्नानं भिक्षा च कमलालये ॥
सह्याद्रौ च निवासः स स्मृतिगामी क्षणे क्षणे ॥ ६४ ॥

सुदूरे योऽस्ति सततं विषयाकृष्टचेतसाम् ॥
सुधीनामन्तिके चास्य भजनात्किं न सिद्ध्यति ॥६५॥

येनैव सृज्यते विश्वं येनैतद्धार्यते पुनः ॥
संहर्तापि स एवाऽऽस्ते भक्त्या तं शरणं व्रज ॥ ६६ ॥

स्वात्मानं बहुधा कृत्वाऽनेककार्यसंपादनयोग्यं कृत्वेष्टं धर्म्यं राज्यं साधयिष्यसि ॥ ६० ॥ पदं स्वर्गाधिपत्यम् ॥ ६१ ॥ अकण्टकं निःसपत्नम् ॥ ६२ ॥ दुष्करं दुःखेनापि कर्तुमशक्यं । दुर्धियां दुर्बुद्धीनाम् । सुधीनामात्मभूतस्य प्रत्यगभिन्नत्वात् ॥ ६३ ॥ कमलालये कोल्हापुरे ॥ ६४ ॥ अन्तिके समीपे ॥ ६५ ॥ सृष्ट्यादिकर्तापि स एवेत्याह—येनेति ॥ ६६ ॥

श्रुत्वैवमर्जुनः प्राह देवेन्द्रेणार्चितः कथम् ॥
एवंप्रभावो देवोऽपि श्रद्दधानाय शंस मे ॥ ६७ ॥
आराधयाम्यहमपि तमेव मुनिसत्तम ॥
इत्यर्जुनेन संपृष्टो गर्गः प्राह स्मरन्विभुम् ॥ ६८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां उपासनाकाण्डे तृतीयाष्टके तृतीयोऽध्यायः ॥ ३ ॥

शंस कथय ॥ ६७ ॥ विभुं व्यापकं दत्तम् ॥ ६८ ॥ इति तृतीये टीकायां तृतीयः ॥ ३ ॥

॥ इति कार्तवीर्यार्जुनचरितं नाम तृतीयाष्टके तृतीयोऽध्यायः ॥ ३ । ३ ॥

## अथ गर्गेण देवविजयकथनं नाम तृतीयाष्टके चतुर्थोऽध्यायः ॥ ३।४ ॥

ॐ ॥ नतावनात्तसुभगव्रतोऽयं परमेश्वरः ॥
तल्लीलां शृणु भूपेन्द्रो यतोऽभीष्टार्थभागभूत् ॥ १ ॥
स दैत्यो दैत्यराट् जम्भो देवेन्द्रोपि सदेवतः ॥
स्वर्गायायुध्यतान्योन्यं दिव्यवर्षं पुरा भृशम् ॥ २ ॥
दैत्यैर्देवाः पराभूता गत्वोचुर्जीवमातुराः ॥
दृष्टः पराजयो नोऽद्य तत्किं कार्यमतः परम् ॥ ३ ॥
तानाश्वास्याह धिषणो दत्तात्रेयं तपोधनम् ॥
शरणं यात वरदः स कार्यं वः करिष्यति ॥ ४ ॥
इत्युक्तः सामरः शक्रः प्राप दत्ताश्रमं शुभम् ॥
तत्र देवं महात्मानमप्रतर्क्यं ददर्श सः ॥ ५ ॥

॥ श्रीः ॥

विंशे गर्गेण संप्रोक्तो देवानां विजयो महान् ॥
ततोऽर्जुनो गुरुं गत्वा नत्वाभीष्टार्थभागभूत् ॥ १ ॥

नतानामवने रक्षणे आत्तं गृहीतं सुभगव्रतं येन ॥ १ ॥ जम्भस्तन्नामकः । दिव्यानि वर्षाणां यस्मिन्यथा तथा ॥ २ ॥ जीवं बृहस्पतिम् । नोऽस्माकम् ॥ ३ ॥ धिषणो बृहस्पतिराह । कार्यं शत्रुशमनरूपम् ॥४॥ सामरो देवैः सहितः ब्राह्मणो वा क्षत्रियो वा वर्णी वा गृही वा न्यासी वेति तर्काविषयम् ॥ ५ ॥ शोभना दन्ता यस्याः सा सुदती । ‘ वयसि दन्तस्य

दिगम्बरमपि स्वाङ्के धृत्वा बालां दिगम्बराम् ॥
अनघां सुदतीं तन्वीं पानासक्तामपि स्थितम् ॥ ६ ॥

दृष्ट्वैवमपि ते चक्रुः सेवां सर्वेऽमराः सदा ॥
तिष्ठन्तमुपतस्थुस्ते प्रणता यांतमन्वगुः ॥ ७ ॥

भक्त्यैवं बहुकालं ते सेवयामासुरादरात् ॥
अथैकदाऽऽह भगवान्देवाः किं सेवयेच्छथ ॥८ ॥

देवा ऊचुः प्रणम्येशं परमात्मञ्जगत्प्रभो ॥
सयज्ञभागं त्रैलोक्यं दानवैरखिलं हृतम् ॥ ९ ॥

वयं हृताधिकाराश्च तिष्ठामो मर्त्यवद्भुवि ॥
परित्राणाय नो देव तद्वधे च धियं कुरु ॥ १० ॥

त्वद्भक्तानां सुराणां नो विना त्वच्चरणाम्बुजात् ॥
गतिर्न विद्यते भूमन्पाह्यार्ताञ्छरणागतान् ॥ ११॥

दतृ ' इति दत्रादेशः । 'उगितश्चे'ति ङीप् । ताम् ॥ ६ ॥ सेवामाह— तिष्ठन्तमित्यादिना । अन्वगुरनुजग्मुः ॥ ७ ॥ भो देवाः । वयम् ॥ ८ ॥ ॥ ९ ॥ नः परित्राणाय तेषां वधाय च बुद्धिं कुर्वित्यनेन 'परित्राणाय साधूनाम्' इत्यादिरूपमेव भवदवतारप्रयोजनमिति सूचितम् ॥ १० ॥ अन्यत्र गन्तव्यमिति चेद्भवन्तं विनास्माकं नान्या गतिरित्याहुः—त्वदित्यादिना । भूमन्निति संबुद्धया व्यापकोक्तेर्विष्ण्वादिरूपेण त्वमेवाभासीति भावः ॥ ११ ॥ मद्यासक्तत्वादहं नैव वशी स्वाधीन इति भावो बाह्यः । उच्छिष्टैः

प्रहस्य प्राह ताञ्छ्रीमानहमुच्छिष्टदूषितः ॥
मद्यासक्तो वशी नैव मत्तः किं भवतां भवेत् ॥ १२ ॥
स्त्रीसंभोगो हि दुःखाय पाताय च पुनस्तु सः ॥
दैवादुच्छिष्टतामस्याः प्राप्तोऽहं किमतो भवेत् ॥ १३ ॥
देवा ऊचुस्त्वमनघो ज्ञानदीपोऽनघोऽप्यसौ ॥
विद्या तव विभो यस्याः प्रसादात्सद्गतिः खलु ॥ १४ ॥
यथार्कस्य प्रभा भूमन्विप्रचण्डालसङ्गिनी ॥
पुण्यं पापं च नादत्ते तथेयं प्रकृतिस्तव ॥ १५ ॥
श्रीदत्तः प्राह यद्येवं भवतां संमतं ततः ॥
युद्धायाहूयतां दैत्यानिहानयत मा चिरम् ॥ १६ ॥
ततो हृष्टाः सुरा जग्मुर्दैत्यांस्तेऽपि महाबलाः ॥
मुञ्चन्तो विविधास्त्रौघान्युयुधुर्मदविह्वलाः ॥ १७ ॥
पलायनपरा आसन्देवास्तेऽसुरपीडिताः ॥
पृष्ठतोऽनुव्रजन्तस्ते दैत्या दत्ताश्रमं गताः ॥ १८ ॥

मायिकैर्भूतभौतिकैः पदार्थैर्दूषितोऽसङ्गोऽखण्डितोऽपि तत्तदुपाधिवशात्तादृश इव चालकत्वेन भासकत्वेन च स्थितस्तथापि मद्यासक्तः मोहकप्रमादानासक्तोऽत एव वशी न किं अपि तु वशी एव। 'सर्वस्य वशी सर्वस्येशानः' इति श्रुतेः ॥ १२ ॥ लोकवादमनुसृत्य वदति परीक्षार्थं—स्त्रीसंभोग इति ॥ १३ ॥ अनघोऽपहतपाप्मा । 'य आत्माऽपहतपाप्मा' इति श्रुतेः । सद्गतिर्मोक्षः ॥ १४ ॥ ननु विभुत्वे व्यापकत्वाज्जगत्संबन्धेन कुतो न दोष इत्यत आहुः—यथेति । श्रुतिश्च ' सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ' इत्यादिः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

कालयन्तः सुरान्दैत्या हन्यमानान्भयातुरान् ॥
श्रीदत्तपृष्ठसंलग्नान्समस्ताञ्छरणार्थिनः ॥ १९ ॥

ददृशुस्ते महात्मानं दत्तात्रेयं दिगम्बरम् ॥
तन्वीं तद्वामपार्श्वस्थां चार्वङ्गीं प्रमदोत्तमाम् ॥ २० ॥

पद्मपत्रायताक्षीं तां सुदतीं सुस्तनीं शुभाम् ॥
सर्वयोषिद्गुणाढ्यां ते दृष्ट्वाऽऽसन्काममूर्च्छिताः ॥२१॥

साभिलाषास्ततो दैत्यास्त्यक्त्वा देवान्वधूं वराम् ॥
हर्तुं मनो दधुः सर्वे तत्सौन्दर्यविमोहिताः ॥ २२ ॥

वयं स्त्रीरत्नलाभेन कृतार्था इति तेऽसुराः ॥
उक्त्वा बलात्स्त्रियं क्षिप्त्वा शिबिकायां च के दधुः॥ २३॥

स्वस्थानाभिमुखा जग्मुः सानुरागाः स्मरातुराः ॥
योगीन्द्रोऽथ प्रहस्याह दानवान्पश्यतामराः ॥ २४ ॥

पराङ्गनाभिमर्शोत्थपापेनातिबलीयसा ॥
हतश्रीका हतबला जाता एते न संशयः ॥ २५ ॥

१९॥ चारूणि सुन्दराण्यङ्गानि यस्याः सा 'स्वाङ्गाच्चोपसर्जनात्' इति ङीप् । प्रमदासूत्तमा ॥ २० ॥ सर्वे योषिद्गुणास्तैर्युक्तां दृष्ट्वा । आसन्निति छेदः ॥ २१ ॥ साभिलाषाः स्त्रीकामाः । वरां श्रेष्ठाम् ॥ २२ ॥ के मस्तके ॥ २३ ॥ योगीन्द्रः श्रीदत्तः । भो अमराः ॥ २४ ॥ अतिबलीयसा परस्त्रीस्पर्शजन्यपापेन हता नष्टा श्रीः संपच्छोभा च येषाम् ॥ २५ ॥

श्रीः पद्गाऽऽलयदात्री सक्थिगतांशुकदात्री ॥
गुह्यगता प्रमदादा क्रोडगतार्भकदा चेत् ॥ २६ ॥

चेद्धृदि कामितदात्री कण्ठगता वसुदात्री ॥
चेन्मुखगाऽशनवाग्दा मूर्धगता तु शिरोदा ॥ २७ ॥

तन्मूर्धगाऽधुनेयं श्रीः शीर्षाण्युत्कृत्य सत्वरम् ॥
आयास्यत्यत्र नैवात्र शङ्का ह्येते मृतोपमाः ॥ २८ ॥

हन्यन्तां तन्न भेतव्यं प्राप्तोऽद्य विजयक्षणः ॥
भवन्तोऽत्र निमित्तं ते हतप्रायाः श्रियार्दिताः ॥ २९ ॥

इत्युक्तास्ते सुरा गत्वा शस्त्रैर्दैत्यशिरांसि तु ॥
फलानीवाशु वृक्षेभ्यः पातयामासुरुद्यताः ॥ ३० ॥

हतेषु तेष्वजं प्राप्ता श्रीरुत्पत्त्याऽविभागिनी ॥
देवा अपि ययुः स्वर्गं पूर्ववच्छ्रीधराज्ञया ॥ ३१ ॥

पादगता गृहदात्री ऊरुगता वस्त्रदात्री प्रमदादा स्त्रीप्रदा क्रोडं भुजान्तरं गताऽर्भकदा ॥ २६ ॥ वसुदा धनदाऽशनं भोजनं वाचं च ददाति तथा शिरो द्यत्यवखण्डयतीति तथा ॥ २७ ॥ यस्मादेवं तस्मादधुनेयं श्रीर्दैत्य-शिरोगता ॥ २८ ॥ यतस्ते मृतोपमास्तत्तस्माद्भवद्भिस्ते हन्यन्तां तेभ्यो न भेतव्यम् ॥२९॥ उद्यता धृतायुधाः । फलानीवेत्यनेन तद्वधसौकर्यं सूचि-तम् ॥ ३० ॥ अविभागिनी शक्तित्वेनाद्वितीयत्वात् । 'परास्य शक्ति-र्विविधैव श्रूयते' इति श्रुतेः । श्रीधराज्ञया श्रीदत्ताज्ञया ॥ ३१ ॥ एवंप्रभाव-

एवंप्रभावः श्रीदत्त ईशस्तं शरणं व्रज ॥
इत्युक्तः सोऽर्जुनस्तेन श्रीदत्ताश्रममाययौ ॥ ३२ ॥

गर्गोक्तिश्रवणादेव भक्त्युत्कण्ठितधीर्नृपः ॥
सह्याद्रिमेत्य योगीन्द्रं दृष्ट्वा हर्षमवाप सः ॥ ३३ ॥

अस्य दासो भवामीति निश्चित्यानुदिनं स्मरन् ॥
सिषेवे परमानन्दो वारितो भर्त्सितोपि सः ॥ ३४ ॥

पादाङ्गसंवाहनेन मद्याद्याहरणेन च ॥
स्रक्चन्दनसुगन्धादिफलाद्यानयनेन च ॥ ३५ ॥

निद्रालस्यादि संत्यज्य सदा तद्गतमानसः ॥
इङ्गितज्ञोऽभजद्भूप उच्छिष्टोपासनेन च ॥ ३६ ॥

भगवानपि तद्भावं परीक्षितुमपातयत् ॥
दृष्टिमात्रेण दोर्युग्मं स्मयमानस्तमाह च ॥ ३७ ॥

गच्छ गच्छाधुनेतस्त्वं गलितं ते भुजद्वयम्॥
मरिष्यसीतः परं वाऽशुद्धसङ्गो न शोभनः ॥ ३८ ॥

त्वादीशत्वम् ॥३२॥३३॥ अनुदिनं निरन्तरम् ॥३४॥३५॥ अनाज्ञप्तोऽपीङ्गितेनाकारेणैव जानातीति तथा ॥ ३६ ॥ तद्भावं तदभिप्रायम् । दृष्टिमात्रेण दर्शनमात्रेण । दोर्युग्मं भुजद्वयम् ॥ ३७ ॥ इतः मत्सकाशात् । अशुद्धानां सङ्गः शोभनो न भवतीति बाह्यार्थः । वस्तुतस्त्वकारच्छेदं विना शुद्धानां सङ्गः शोभनो न किं दैवादनिष्टोपपत्तावपि तावन्मात्रदृष्ट्या साधुसङ्गो न हेयः ॥ ३८ ॥ संत्यक्ता अखिला लौकिका वैदिकाश्च

संत्यक्ताऽखिलधर्माऽहं भक्ष्याभक्ष्यविवर्जितः ॥
नग्न उन्मत्तवद्वर्ते नग्ना वामेयमङ्कगा ॥ ३९ ॥
भूपैवं कुत्सितोऽस्मीह मम संसर्गदोषतः ॥
पापोत्थेनाग्निना दग्धं तव चारु भुजद्वयम् ॥ ४० ॥
तच्छ्रुत्वा विस्मितो राजा स्मृत्वा गर्गवचोऽवदत् ॥
किं मां मोहयसीश त्वं वाक्यैर्लोकानुसारिभिः ॥ ४१ ॥
देव त्वमसि सर्वात्मा स्वां मायां समुपाश्रितः ॥
अनघस्त्वं तथा तेऽसौ देवी मायाऽनपायिनी ॥ ४२ ॥
येऽनीशा उभयो रूपं विज्ञातुं वामभेदतः ॥
शास्त्रैर्विधिनिषेधाभ्यां नियम्यास्ते न चापरे ॥ ४३ ॥
इत्युक्तोऽव्याजमीशस्तं प्रत्युवाच प्रसन्नधीः ॥
कार्तवीर्य महावीर्य त्वया सर्वं वशीकृतम् ॥ ४४ ॥

धर्मा येन । निस्त्रैगुण्याद्विधिनिषेधातीतत्वाद्भक्ष्याभक्ष्यविवर्जितः । 'अनश्नन्नन्यो अभिचाकशीति'। 'यस्य ब्रह्म च क्षत्रं च' इत्यादिश्रुतिभ्यः परमात्मरूपत्वेऽपि भक्ष्याभक्ष्यवर्जितत्वमपि ज्ञेयम्। नग्नः दिगम्बरः पक्षे निरावरणः शुद्धसत्त्वोपाधित्वात् लोकदृष्ट्योन्मत्तवन्न तून्मत्तः। अङ्कगेत्यनेन मायाया एकदेशवर्तित्वं सूचितम्। 'पादोऽस्य विश्वा भूतानि' इति श्रुतेः 'विष्टभ्याहमिदं कृत्स्नम्' इति स्मृतेश्च ॥ ३९ ॥ हे भूप ॥ ४० ॥ ४१ ॥ हे देव स्वयंप्रकाश, त्वं सर्वात्मा। ननु मुनिपुत्रस्य मम कुतः सर्वात्मत्वमत आह—स्वामिति ॥ ४२ ॥ वां युवयोः। शक्तिशक्तिमतोः रूपमद्वैतलक्षणं ज्ञातुमनीशा असंभावनादिदुष्टत्वादसमर्थाः ते विधिनिषेधबद्धा नान्ये कुतस्तरां तव विध्यादीति भावः ॥ ४३ ॥ अव्याजं निष्कपटम्। मद्वशीक-

वरं वृणीष्व गुह्यं मे त्वया तत्त्वं समीरितम् ॥
संतुष्टस्तेन ते दास्ये दुर्लभांश्च वरान्वरान् ॥ ४५ ॥

ये मामर्चन्ति तत्त्वज्ञा विमलेनैव चेतसा ॥
तेभ्योऽभीष्टं प्रयच्छामि घातयिष्यामि चेतरान् ॥ ४६ ॥

पुलकाङ्कितसर्वाङ्गः कार्तवीर्योऽवदन्नतः ॥
भगवंस्त्वं प्रसन्नश्चेत्तत्प्रदेह्यृद्धिमुत्तमाम् ॥ ४७ ॥

यथा प्रजापालनजमर्थंधर्ममवाप्नुयाम् ॥
परानुस्मरणज्ञानं प्रसिद्धद्वन्द्वताऽपि च ॥ ४८ ॥

सहस्रमिच्छया मेऽस्तु बाहूनां लघिमा गुणः ॥
असङ्गा गतयः सन्तु शैलाकाशाम्बुभूमिषु ॥ ४९ ॥

पातालेषु च सर्वेषु सर्वचित्तज्ञता सदा ॥
तथोन्मार्गप्रवृत्तस्य सन्तु मे मार्गदर्शकाः ॥ ५० ॥

सन्तु नोऽतिथयः श्लाघ्या वसु चैवाक्षयं सदा॥
अनष्टद्रव्यता क्वापि ममानुस्मरणेन च ॥ ५१ ॥

त्वय्यस्त्वनन्ययोगेन भक्तिरव्यभिचारिणी॥
आयुष्मत्ताऽस्तु साम्राज्यं वधः ख्यात्याधिकान्नरात् ॥ ५२ ॥

रणात्सर्वं वशीकृतम् ॥ ४४ ॥ वरानलौकिकान् ॥ ४५ ॥ ४६ ॥ ४७ ॥४८॥ इच्छामात्रेण न सदा । असङ्गा अप्रतिहताः ॥ ४९ ॥ ५० ॥ वसु धनम् ॥५१॥ अव्यभिचारिणी भक्तिरेकान्तभक्तिः ॥५२॥ प्रभुः समर्थः दातृत्वे केनाप्यनिवारणीयः । श्रुतिश्च ' न हि त्वाशूर देवा न मर्तासोदित्सन्तम् ॥

प्रभुः प्राह प्रार्थितं यत्तत्सर्वं समवाप्स्यसि ॥
त्वं मत्प्रसादाद्भविता सप्तद्वीपमहेश्वरः ॥ ५३ ॥
इत्युक्तस्तं प्रणम्याशु ययौ प्रस्थापितः पुरम् ॥
ततोऽभिषिक्तः साम्राज्ये मुनिभिः सोऽर्जुनस्तदा ॥ ५४ ॥
तत आघोषयामास स्थितो राज्ये स हैहयः ॥
अद्यप्रभृति यः शस्त्रं मामृतेऽन्यो ग्रहीष्यति ॥ ५५ ॥
स हन्तव्यो मया दस्युः परहिंसारतोऽपि च ॥
इत्याज्ञप्तेऽभवन्राष्ट्रे सर्वे भीता नता जनाः ॥ ५६ ॥
क्षेत्रपालो ग्रामपालः पशुपालः स एव च ॥
तपस्विविप्रपालोऽर्थधान्यसेनापतिः स च ॥ ५७ ॥
दस्युव्यालाग्निशस्त्रारिभयेषूच्चैर्निमज्जताम् ॥
समुद्धर्ता सदाऽऽपत्सु सर्वेषामखिलास्वपि ॥ ५८ ॥

भीमं न गां वारयन्ते ' इति ॥५३॥५४॥ राज्ये प्रतिष्ठितो हैहयोऽर्जुनो भेरीघोषादिनाऽद्यप्रभृतीत्याद्याघोषयामास ॥ ५५ ॥ नता नम्राः ॥ ५६ ॥ अनेकरूपैः स एव पालकोऽभूदित्याह–क्षेत्रपाल इति ॥ ५७ ॥ दस्यवश्चोराः । व्यालाः सर्पमांसात्पशवः ॥ ५८ ॥ अन्यैः क्वापि संस्मृतो यो योगेन बहुधाऽद्भुतयोगमाहात्म्यात् । यदुक्तं ' आत्मनो वै शरीराणि बहूनि मनुजेश्वर ॥ योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥ प्राप्नुयाद् विषयान्कैश्चिद् कैश्चिदुग्रं तपश्चरेत् ॥ संक्षिपेच्च पुनस्तानि सूर्यो रश्मिगणानिव ' इति । बलं अणिमाद्यष्टसिद्धयः । ताश्च ' अणिमा महिमा चैव लघिमा प्राप्तिरीशिता ॥ प्राकाम्यं च वशित्वं च यत्रकामावसायिता' इति । एवमणुर्महान् लघुर्गुरुश्च भवति । अङ्गुल्या चन्द्रस्पर्शः प्राप्तिऽरीशता सृष्टिशक्तिः प्राकाम्यमिच्छानभिघातः वशित्वं नियमनाशक्तिः संकल्प-

संस्मृतो बहुधा योऽभूद्योगेनात्मेव मायया ॥
अनष्टद्रव्यताऽऽरोग्यं तस्मिञ्छासति चाभवत् ॥५९॥

इन्द्रोऽवर्षद्यथाकामं भूश्चात्र सुफलाऽभवत् ॥
तेनेष्टं बहुभिर्यज्ञैः सौवर्णवरदक्षिणैः ॥ ६० ॥

त्रैलोक्ये संचचाराऽसौ माहिष्मत्यां वसन्नपि ॥
पञ्चाशीतिसहस्राब्दं सप्तद्वीपां शशास गाम् ॥ ६१॥

तीव्रप्रतापस्तेजस्वी स सहस्रकरोऽर्कवत् ॥
अधर्मकारिणो हत्वा स्वयं धर्मं चचार सः ॥ ६२ ॥

अनघां चानघं माघकृष्णाष्टम्यां प्रपूज्य सः
षण्मन्त्रैर्वैष्णवैर्विप्रान्भोजयित्वा प्रजागरम् ॥ ६३ ॥

कृत्वा रात्रौ परदिने समापयति स व्रतम् ॥
कोऽप्यानघव्रतमिदं कुर्यात्सोऽपि समृद्धिभाक् ॥६४॥

यस्मिन्दिने वरो लब्धस्तद्दिने स महोत्सवम् ॥
चक्रे शश्वद्दर्शनं च विभोर्नित्यं हृदि स्मरन् ॥ ६५ ॥

मात्रादिष्टलाभो यत्रकामावसायितेति भेदः । एवंजातीयकप्राप्ताऽणिमाद्यैश्वर्याणां योगिनां युगपदनेकशरीरयोगः ॥ ५९ ॥ ६० ॥ गां भूमिम् ॥६१॥ तीव्रः प्रतापः प्रभावः पक्षे प्रकाशश्च यस्य । तेजः प्रगल्भं पक्षे दीप्तिश्चास्यास्तीति । तथा सहस्रं कराः पक्षे हस्ताश्चास्य ॥६२॥ अनघं श्रीदत्तम्-वैष्णवैः अतो देवा इत्याद्यैः ॥ ६३ ॥ ६४ ॥ शश्वत् पुनः पुनः ॥६५॥

न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ॥
यज्ञदानतपोयोगश्रुतवीर्यजयादिभिः ॥ ६६ ॥
दुर्धर्षः क्वापि तेजस्वी बलौजोवीर्यकीर्तियुक् ॥
अनष्टचित्तस्मरणो बुभुजेऽक्षय्यसत्सुखम् ॥ ६७ ॥
रावणो राक्षसेशोऽपि येन बद्धोऽपि लीलया ॥
श्रीदप्रार्थनया मुक्त एवंभूतोऽर्जुनोऽभवत् ॥ ६८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्यां उपासनाकाण्डे तृतीयाष्टके कार्तवीर्यवरप्रदानं नाम चतुर्थोऽध्यायः ॥ ४ ॥

पार्थिवाः पृथिव्यां विदिता राजानः भूता भव्या वर्तमानाश्च यज्ञादिभिः कार्तवीर्यस्य कीर्तिं न यास्यन्ति च ॥ ६६ ॥ अनष्टस्मृतिः ॥ ६७ ॥ लीलयाऽनायासेन । श्रीदस्य कुबेरस्य प्रार्थनया मोचितः ॥ ६८ ॥ इति श्रीमद्दत्तपुराणे टीकायां तृतीयाष्टके चतुर्थोऽध्यायः ॥ ४ ॥

इति श्रीदत्तपुराणे तृतीयाष्टके चतुर्थोऽध्यायः ॥ ३।४ ॥



## ।। अथ शिल्पकामशास्त्रयोर्गतिर्नाम तृतीयाष्टके पञ्चमोऽध्यायः ।। ३।५ ।।

हरिः ॐ ।। वैश्वानरसमो राजा प्रतापेनापि दुर्धरः ।।
यं यं प्राप्तमुपादत्ते श्रीदत्तात्रेयसंनिधौ ।। १ ।।
नमस्कृत्य पुनर्याति कदाचिन्निवसत्यपि ।।
कदाचिद्धर्मशास्त्राणि शृणोत्येवं प्रियोऽभवत् ।। २ ।।
एवं सन्नेकदा राजा निर्विण्णो मनसा भृशम् ।।
तत्त्वजिज्ञासया देवमुपतस्थे कृताञ्जलिः ।। ३ ।।
देवोऽपि तत्परीक्षार्थं समाधिस्थ इवाबभौ ।।
युक्तं चैतद्गुरूणां हि शिष्यधीदार्ढ्यहेतवे ।। ४ ।।
कर्मणा मनसा वाचा सर्वभावार्पणेन च ।।
सेवमानो हृषीकेशं स्थितो राजातिभक्तितः ।। ५ ।।

।। श्रीगणेशाय नमः ।।
सप्त गाथा उपक्रम्य विरागायार्जुनाय सः ।।
एकत्रिंशे प्राह शिल्पकामशास्त्रविदोर्गतिम् ।। १ ।।

सुकृतिन उपासकस्य भगवत्प्रसादाद्विरतिपुरःसरं मोक्षैकपर्यवसानमुपासनाफलं सिद्ध्यादिब्रह्मलोकान्तं वा फलं न । तस्य दृश्यत्वात्सातिशयत्वादनित्यत्वात्सोपाधिकत्वादिति दर्शयितुमुत्तरो ग्रन्थ आरभ्यते । सर्वशास्त्राणामद्वितीये ब्रह्मणि तात्पर्यं दर्शयितुं च । प्रतापेनाग्नितुल्यः ।। १ ।। ।।२।। एवं सन्वर्तमानोऽध्यात्मतत्त्वजिज्ञासयोप समीपं तस्थे । देवताबुद्ध्या वाऽपूजयत् ।। ३ ।। इवशब्दार्थमर्थान्तरन्यासेन द्रढयति—युक्तमिति । अन्यथोपदिष्टं ज्ञानं निष्फलमिति भावः ।। ४ ।। ५ ।। त्यक्तं उदकं येन

त्यक्तोदमपि तं खिन्नं स्तुवन्तमपि सूक्तिभिः ॥
प्रणमन्तमभीक्ष्णं नो धियाप्याश्वासयत्प्रभुः ॥ ६ ॥
यत्रास्तेऽचिज्जगद्भ्रान्तिः स्वप्नाभाव्यसती सति ॥
अलातचक्रवल्लोला मायिका यत उत्थिता ॥ ७ ॥
तां विद्वान् ज्ञानखड्गेन यतात्मा सन्महाव्रतः ॥
छित्त्वा सदुक्तितीक्ष्णेन क्षिप्रं संयाति यत्पदम् ॥ ८ ॥

'उदकस्योदः संज्ञायाम्' इत्युदादेशः। अभीक्ष्णं पुनः पुनः ॥ ६ ॥ स्तुतिमाह पञ्चदशभिः। यत्र सति त्वधिष्ठानेऽसत्येयं जडा जगद्भ्रान्तिः सुषुप्तिसमाध्योर्बाधदर्शनात् 'अदृष्टमव्यवहार्यम्' इत्यादिश्रुतेः। भाष्यकृद्भिरपि माण्डूक्यभाष्ये विश्वतैजसप्राज्ञान्व्याख्याय 'नान्तःप्रज्ञम्' इत्यादिना तुरीयव्याख्यावसरे इदमुक्तं सर्वविकल्पास्पदत्वात्तुरीयस्य शब्दवाच्यत्वमिति न प्रतिषेधैः प्रत्याय्यत्वं उदकाधारादेरिव घटादेः। न प्राणादि। विकल्पस्यासत्वाच्छुक्तिकादिष्विव रजतादेः। न हि सदसतोः संबन्धः शब्दप्रवृत्तिनिमित्तभागवस्तुत्वान्नापि प्रमाणान्तरविषयत्वं स्वरूपेण गवादिवदात्मनो निरुपाधिकत्वाद्गवादिवत्?। नापि जातिमात्रत्वं अद्वितीयेन सामान्यविशेषाभावात्। नापि विक्रियावत्त्वं पाचकादिवदविक्रियत्वात्। नापि गुणवत्त्वं नीलादिवन्निर्गुणत्वात्। अतो नाभिधानेन निर्देशमर्हतीति। तस्मात्षष्ठी रूढिजातिविक्रियागुणनिमित्तशब्दप्रवृत्त्यभावाच्छशविषाणसमत्वादात्मत्वेनाभ्युपगमात्तदवबोधे तृष्णादिदोषासंभवात्तत्त्वमसीतिश्रुत्या सद्वितीयनिरासपूर्वकमद्वैतप्रतिपादनात्सदेवैकमधिष्ठानम् ॥ ७ ॥ सतः स्वतःप्रमाणभूतवेदस्य यद्वा सतः सत्यस्य ब्रह्मणोऽथवा सतः सद्गुरोरुक्तिरूपोपनिषद्रूपा तया तीक्ष्णेन निशितेनासङ्गरूपज्ञानखड्गेन ॥ ८ ॥ ईदृशं यस्य पदं ज्ञानिगम्यमात्मभूतं तं त्वां त्रिगुणमाया-

तं त्वां त्र्यधीशं गोविन्दं मुमुक्षुः प्रणतोऽस्म्यहम् ॥
नित्यमुक्तेश सर्वज्ञ बद्धं मां शिव पाह्यज ॥ ९ ॥

ओतं प्रोतमिदं यस्मिन्वसने तन्तवो यथा
प्रपद्ये सच्चिदानन्दं तं त्वां नारायणं परम् ॥ १० ॥

बिलाविष्टं कुसौख्योरुतर्षं मां कृपयोद्धर ॥
कालाहिदष्टमवशं स्मृत्यैवाश्वेहि भो हरे ॥ ११ ॥

नियन्तारम् । ननु शत्रोरपि बन्धकस्य सम्राजस्तव कुतो बन्धो यतोऽहं मुमुक्षुरिति वदस्यत आह संबोधयन् हे नित्यमुक्तेति पञ्चसंबोधनैः । शुद्धसत्त्वोपाधित्वान्नित्यमुक्तत्वं ततः सर्वज्ञत्वं ततो बद्धजीवानां नियन्तृत्वरूपमीशत्वं ततो निरतिशयानन्दरूपशिवत्वं यस्मात्तस्मादजत्वं जन्मादिविकारशून्यत्वम् । अहं त्वविद्योपाधित्वादविद्याया अनादिमात्त्वान्नित्यबद्धोऽतोऽल्पज्ञो लौकिकदृष्ट्या सम्राडपीशितव्यः परमानन्दशून्यो देहात्माध्यासनिमित्तजन्मादिविकारवानत एवाविद्याकामकर्मभिः संसरन् देहेन्द्रियमनः प्राणाहंकारैर्बद्धं मां पाहि मोचयेत्यर्थः ॥९॥ तर्हि श्रीगुरुं शरणं व्रजेति चेत्तत्राह-पटे तिर्यगूर्ध्वं तन्तव इव यस्मिन्निदं जगदोतं प्रोतं च । किमाकाशः प्रधानं वा । न । सच्चिदानन्दत्वात्परत्वाच्च नारायणः सर्वगुरुः 'स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति पातञ्जलोक्तेस्त्वमेव सर्वगुरुरिति जानानस्त्वां प्रपद्ये । अत एव मामुपदिश्य मोचय ॥ १० ॥ ननु एवंभूतस्त्वं कुतः संसारबन्धे पतितोऽस्यत आह-बिलेति । सातिशयत्वसोपाधित्वानित्यत्वैः कुत्सिते विषयसौख्ये उरुस्तर्षः कामो यस्य तं बिलरूपसंसाराविष्टं अवशं प्रकृतिपरतन्त्रं कालसर्पदष्टं मां कृपयोद्धर । स्मरणमात्रेण च शीघ्रमेहि अनित्यत्वान्नृदेहस्य ॥ ११ ॥ ननु समाहितं मां दृष्ट्वापि कथं प्रार्थयस

कस्तेऽर्हतीह तं ज्ञातुं वाङ्मनोऽगोचरं परम् ॥
ब्रह्माद्या मोहिता यत्र तत्राहं दुर्मतिः कियान् ॥ १२ ॥
तापतप्तं भवाटव्यामनन्यं मरणोन्मुखम् ॥
दृष्ट्वा मां दीनमेहि त्वमन्वर्थत्वं दयाघन ॥ १३ ॥
मुमुक्षोस्तेऽवतारोऽयं ज्ञानविज्ञानयोगदः ॥
उद्धारकोस्त्यतोऽधीश सर्वात्मन्पाहि माऽधुना ॥ १४ ॥
स्त्रीपुत्रार्थसुहृद्राज्यभोगा मायामया हि तैः ॥
स्वरूपाच्छादकैः किं मे सर्वत्रोद्वेगदैः सदा ॥ १५ ॥
भवचक्रं विनात्युग्रं न बिभेमि रिपोर्यमात् ॥
तीक्ष्णदण्डादपि पवेर्भूतभौतिकतोऽप्यज ॥ १६ ॥
देहि तच्चक्रभङ्गाय निवासं त्वत्पदाम्बुजे ॥
येनानन्दाश्रुसान्द्रोऽहं यास्यामि विभवः शमम् ॥ १७ ॥

इत्यत आह—क इति ॥ १२ ॥ हे दयाघन, अन्वर्थतामेहि त्रिविधतापप्रशमं कुर्विति भावः ॥ १३ ॥ कुत ईदृक् सामर्थ्यं मयीत्यत आह—हे सर्वात्मन्नधीश, ज्ञानविज्ञानयोगदोऽयं तेऽवतारो मुमुक्षोस्तारकोऽस्ति । यतो मुमुक्षुं मा मां अधुना पाह्यविद्याकामकर्मभ्यो रक्ष । शोकमोहापनयनेन व्यष्ट्युपाधिना सर्वात्मत्वं समष्ट्युपाधिनाधीशत्वं वाच्यम् ॥ १४ ॥ ननु स्त्र्यादिसुखोपेतस्त्वं कुतः संसारं त्यक्तुमिच्छसीत्यत आह—स्त्रीति ॥ १५ ॥ भवतु मुमुक्षात्मानात्मविवेकेन तां संपादय । कुतः स्त्र्यादिलक्षणं भवमुपेक्षस इति चेद्भयहेतुत्वादित्याह—भवेति ॥ १६ ॥ सर्वस्य सर्वत्र विद्यमानत्वात्काभयस्थानं दृष्टमिति चेत् 'त्रिपादस्यामृतं दिवि' 'एकांशेन स्थितो जगत्' इति श्रुतिस्मृतिभ्यां तादृक् त्वत्पदमत्र निर्दिष्टं तत्र मां निधेहीत्याह—देहीति ॥ १७ ॥ किं त्वयाऽधुनोपलब्धान्विषयांस्तावद्भुंक्ष्वेति चेत्तत्राह

उचितोऽर्थप्रसङ्गोऽयं त्वत्पादविमुखेऽनलः ॥
त्वत्पादभक्ते सारज्ञे स कथं सुखयत्यसन् ॥ १८ ॥
नात्रामुत्रापि भोगेच्छा प्रसादात्ते ममाधुना ॥
वासनारूढदुर्योगवियोगं योगमादिश ॥ १९ ॥
धन्योऽत्रिरनसूयापि यत्प्रसादाद्भवत्पदम् ॥
अभवं वेदमृग्यं तज्जातं सुलभमत्र तु ॥ २० ॥
नमस्ते वासुदेवाद्य पुराणपुरुषोत्तम ॥
विश्वाध्यक्ष हृषीकेश भक्ताधिव्याधिमर्दन ॥ २१ ॥

–उचित इति । अनलस्तापकत्वात् अग्निरिव अलं न भवतीत्यनलो न कस्यचिद्विषयप्रसङ्गोऽलंबुद्धिजनकः । स्मर्यते च 'न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति । उक्तं यमं प्रति नचिकेतसा 'श्वोभावा मर्त्यस्य' इत्यादि स चार्थप्रसङ्गः स्वयमसन्मृगजलवदविद्यमानः सारज्ञे त्वत्पादभक्ते कथं सुखयति । न कथमपि । एतेन नित्यानित्यविवेक उक्तः ॥ १८ ॥ विवेकिनोऽपि वैराग्यं विनोपदेशोऽनर्थायेत्यत आह–नेति ॥ १९ ॥ यदनुग्रहाद्दुर्लभमपि भगवद्दर्शनं सुलभं जातं तौ प्रशंसन्स्तौति । अभवं भवनिवर्तकम् ॥ २० ॥ त्वमेवाधिव्याधिमर्दनः । कुतः । आधिव्याध्यनुभवकरणीभूतानां हृषीकाणां समनस्केन्द्रियाणां ईशत्वेन नियन्तृत्वात्तदप्यन्तर्यामित्वेन विश्वाध्यक्षत्वं भवत एव । नन्वत्र वर्तमानस्य परिच्छिन्नस्य ममैवंभूतत्वं कुत इत्यतः संबोधयति हे पुराणपुरुषेति । सर्वस्मात्कार्यात्पूर्वमेव विद्यमानेति । 'पूर्वमेवाहमिहासम्' इत्युक्तेः । जगन्मूलत्वेनोर्ध्वं स्थितः 'ऊर्ध्वमूलोऽवाक्शाखः' इति श्रुतेः । हे उत्तम, पुरुषोत्तमेति समस्तं पदं वा । 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥ अतोऽस्मि लोके

एवं स्तुत्वाऽभवत्तूष्णीं सिद्धा अत्रान्तरेऽमिताः ॥
ब्राह्मे मुहूर्त एत्येशं नत्वा जग्मुर्विमानगाः ॥ २२ ॥

सगन्धर्वाप्सरोदेवास्तद्वदेत्य प्रणम्य तम् ॥
परिक्रम्य ययुर्विप्रा मुनयोऽपि तथामिताः ॥ २३ ॥

समृज्जलः शान्ततपा उषस्यापोत्थितः प्रभुः ॥
राक्षस्याशां ययौ मौनी विमलः पुनरागतः ॥ २४ ॥

समृज्जलसमित्तावत्प्राप्तोऽन्यो मुनिरीश्वरः ॥
कृतशौचोऽम्भसि स्नात्वा देवर्ष्यादीनतर्पयत् ॥ २५ ॥

सवल्कभस्मदर्भोऽन्यस्तावत्प्राप्तो यथाविधि ॥
कृत्वाह्निकं विभुस्तस्थौ ध्याननिश्चलदृष्टिवत् ॥ २६ ॥

स्थितः खिन्नोऽभवद्राजा ततः शान्ततपा जगौ ॥
भक्तोऽयं धार्मिकः खिन्नो राजोपेक्षास्य नोचिता ॥२७॥

वेदे च प्रथितः पुरुषोत्तमः' इति स्मृतेः । एतदपि कुतः । हे आद्य सर्वकारणकारण । कारणस्य मृदादेर्जाड्यं दृष्टं लोक इत्यत आह—हे वासुदेव, भूताधारत्वेन भूतावासत्वेन चालकत्वेन भासकत्वेन च त्वमेवैकोऽवस्थितोऽसि ईदृशाय ते नमः ॥२१॥२२॥२३॥ शान्ततपा एतन्नामकः कश्चिच्छिष्यः उषःकाले आप प्राप प्रभुमिति शेषः ॥ २४ ॥ राक्षस्याशां नैर्ऋतिं दिशम् । अन्यः कश्चिच्छिष्यः ॥ २५ ॥ ध्याने निश्चला दृष्टिर्दर्शनं यस्य तद्वन्न तु तथा प्रयोजनाभावात् । यस्य प्रसादेन बहिर्वृत्तित्वं तेन ध्यानमास्थेयम् ॥ २६ ॥ २७ ॥ प्रभुः प्रहस्य आह । हे सम्राट्, समृद्धोऽपि

प्रहस्याह प्रभुः समाट् सम्बुद्धः खिद्यसे कुतः ॥
कां भूतिमिच्छस्यप्राप्तां किं मद्भक्तस्य दुर्लभम् ॥ २८ ॥
साश्रुनेत्रोऽवदत्सम्राडनयालं परीक्षया ॥
प्रशंसन्तीह योग्याय योग्यं दानं मनीषिणः ॥ २९ ॥
तृषितेऽम्भोऽन्नं क्षुधिते दानं दीनेऽवनं तथा॥
आर्ते योग्यं तथा ज्ञानं मुमुक्षौ वेत्सि सर्ववित् ॥ ३० ॥
वाङ्मनोऽगोचरं शुद्धं ब्रह्मैकं सदसत्परम् ॥
वेदान्ती प्राह दृश्यं च मायिकं रज्जुसर्पवत् ॥ ३१ ॥
प्राहान्योऽनादि तत्सत्यं मिथ्या चेद्दृश्यते कथम् ॥
उत्तमत्वादिकं त्वस्य कर्मणैवापरेऽब्रुवन् ॥ ३२ ॥
नानात्मत्वं जगुश्चान्ये प्रधानं कारणं परम् ॥
निमित्तं द्वन्द्वजं चान्ये क्षणिकत्वं परेऽस्य च ॥ ३३ ॥

सन् कुतः कारणात् खिद्यसे भूतिं सिद्धिं अप्राप्तामिच्छसि वद । तामपि दास्ये । मद्भक्तस्य किं दुर्लभं । न किमपि ॥ २८ ॥ योग्याय पात्रभूताय योग्यं । दानं तत्कालोचितम् ॥ २९ ॥ तदाह—तृषित इति । अवनं रक्षणम् ॥ ३० ॥ तर्हि ज्ञानं शास्त्रगम्यमिति चेत् तर्कानुगृहीत-सच्छास्त्राज्ञानुग्रहं विना केवलं शास्त्रं न ज्ञानजनकं विवादाध्यासितत्वादिति वक्तुं तावच्छास्त्रविप्रतिपत्तिमाह । वाङ्मनसागोचरं शुद्धं ब्रह्मैकमेव सजातीयादिभेदविधुरं सृष्टेः पूर्वं सदेवासीदित्युपक्रम्य 'ऐतदात्म्यमिदꣳ सर्वं तत्सꣳस आत्मा ' इत्युपसंहाराद्दृश्यं मायिकमतो रज्जुसर्पवदसादिति सिद्धान्ती प्राह ॥३१॥ अन्यः काणादादिः । मीमांसकमतमनुवदति—उत्तमत्वादिति । सांख्यमतमाह—नानेति । अन्ये क्षणिकवादिनः ॥ ३२ ॥ ३३ ॥ तर्हि

युक्त्या स्वपक्षदार्ढ्यार्थं वेदादीन्योजयन्त्यपि ॥
युक्तं किमत्र भगवन्भ्रमशान्त्या उपादिश ॥ ३४ ॥

मच्छासनं त्वत्प्रसादात्सर्वत्राव्याहतं द्विषः ॥
भृत्या मे वासना कापि न मे मोक्षादृतेऽधुना ॥ ३५ ॥

यया कयापि युक्त्या मामुत्तारय भवाम्बुधेः ॥
ब्रह्मादीनामपि ब्रह्मन् त्वमेवास्यपरो गुरुः ॥ ३६ ॥

भगवान्प्राह शास्त्राणामेकं तात्पर्यमीरितम् ॥
बृहस्पतीन्द्रसंवादं शृणु संशयभेदकम् ॥ ३७ ॥

लौकायतस्मारशिल्पसौगतादिश्रुतान्यपि ॥
पाठयन्तं स्वशिष्येभ्यो गुरुं नत्वा वृषाऽवदत् ॥ ३८ ॥

जात्यैव प्राणिनां प्राप्ता रागतो विषयात्मता ॥
एतैरर्थात्मकैः शास्त्रैः किं विधेयं विपश्चिता ॥ ३९ ॥

विषयाक्रान्तचित्तानां किं तत्त्वबहिर्मुखैः ॥
किं विद्वान् लभतेऽत्राज्ञं कूपेऽन्धमिव पातयन् ॥ ४० ॥

श्रुत्यनुकूलशास्त्रमभ्युपगमस्वेत्यत आह–युक्त्येति ॥ ३४ ॥ द्विषः शत्रवो मे भृत्या जाताः ॥ ३५ ॥ न विद्यते परो यस्मात्सोऽपरः ॥ ३६ ॥ एकं तात्पर्यमद्वैते ब्रह्मणीति शेषः । तर्हि विगानस्य का गतिरित्यत आह–बृहस्पतीति ॥ ३७ ॥ लौकायतं प्रत्यक्षैकप्रमाणं चार्वाकमतम् । स्मारं वात्स्यायनोक्तं कामशास्त्रम् । शिल्पं त्वाष्ट्रम् । सौगतं शून्यवादिशास्त्रम् । आदिशब्दाद्वैशेषिकन्यायप्रभृतिश्रुतानि शास्त्राणि । गुरुं बृहस्पतिम् । वृषा इन्द्रः ॥ ३८ ॥ जात्यैव प्रकृतिसंस्कारवशाज्जन्मनैव ॥ ३९ ॥ ॥ ४० ॥

गुरुः प्राह क्रमादेतैश्चित्तशुद्धिर्भविष्यति ॥
सप्तोदाहरणान्यत्र संशयान्तानि मे शृणु ॥ ४१ ॥

काम्पिल्ये शिल्पवित्कश्चिद्विधिज्ञाख्यः पुरेऽभवत् ॥
गृहान्स निर्ममे कान्तांश्छिल्पशास्त्रोक्तवद्बहून् ॥४२॥

गृहकर्मणि तं सर्वे मान्यं वाञ्छति वेतनम्॥
भूरि प्रायोपजीवन्ति तमेवान्ये स सत्यवाक् ॥ ४३ ॥

मृतस्ततोऽगात्स्वर्गं स भोगान्भुक्त्वाभवन्नृपः ॥
यज्वा स भूतले देवगृहवापीतडागकृत् ॥ ४४ ॥

धार्मिकः स मृतः स्वर्गे भोगान्भुक्त्वा द्विजोऽभवत् ॥
वेदशास्त्रार्थतत्त्वज्ञो ध्याननिष्ठो महाव्रतः ॥ ४५ ॥

चतुर्थाश्रममासाद्य जीवन्मुक्तश्चचार गाम् ॥
शास्त्रं धीशुद्धिकृद्यस्माच्छिल्पज्ञोऽगात्क्रमाद्गतिम् ॥४६॥

माहिष्मत्यां द्विजः कश्चिद्गीतवादित्रवित्कविः ॥
सुन्दरः कामशास्त्रज्ञो भार्यार्थी क्ष्मां चचार सः ॥ ४७ ॥

एतैर्लोकायतादिशास्त्रैरुपकारकैः क्रमादनुक्रमेण संशयान्तानि संशयभेदकानि ॥ ४१ ॥ काम्पिल्ये पुरे । कान्तान्मनोहरान् ॥ ४२ ॥ ॥ ४३ ॥ पृथिव्यां नृपोऽभवत् तत्र स्वयं देवगृहादिकारयिताभवत् ॥ ४४ ॥ भुक्त्वा ततो भुवि ब्राह्मणोऽभवत् । चरमजन्मेदं महाव्रतो जातिदेशकालसमयानवच्छिन्नाहिंसादिमानत एव ध्याननिष्ठः ॥ ४५ ॥ गां भूमिम् । उपसंहरति—शास्त्रमिति । गतिं मोक्षम् ॥ ४६ ॥ क्ष्मां भूमिम् ॥ ४७ ॥

तद्भार्दज्ञो नृपः कश्चित्तस्मै कन्यां व्यदर्शयत् ॥
शास्त्रोक्तसर्वलक्ष्माढ्यां दृष्ट्वोच्चैर्मूर्च्छितोऽभवत् ॥ ४८ ॥
सापि तं चकमे कान्तं हृष्टो राजा स तां ददौ ॥
राज्यार्धमपि तस्मै स द्विजो रेमे तया सह ॥ ४९ ॥
सुखं यदात्मनो रूपं सर्वेहोपरतौ स्फुटम् ॥
वाङ्मनोऽगोचरं नित्यं श्रेष्ठमात्यन्तिकं परम् ॥ ५० ॥
मनुष्यानन्दमारभ्य ब्रह्मानन्दान्तमेव यत् ॥
दशोत्तरगुणं तत्तु ब्रह्मानन्दांशतो गतम् ॥ ५१ ॥
वृत्त्यारूढं च तत्पूर्णं भाव्यते रतिकर्मणा ॥
विधिज्ञेन न मूर्खेण तत्सौख्यं सोऽलभत्सदा ॥ ५२ ॥
पत्नी नान्यं हृदाप्यैच्छत्तस्याभूद्धृद्धुरा सती ॥
रेमे तयैव गीतज्ञो विप्रश्चित्तानुरूपया ॥ ५३ ॥

तद्भार्दज्ञस्तच्चित्तगताभिलाषज्ञः ॥ ४८ ॥ चकमे 'कमु कान्तौ' कान्तिर्नामेच्छा । ऐच्छदित्यर्थः ॥ ४९ ॥ यत्सुखं तदात्मनो रूपं तच्च सर्वेहोपरतौ सर्वेन्द्रियप्राणान्तःकरणक्रियोपशान्तौ स्फुटं भासते । तच्च निरुपाधिकत्वाद्वाङ्मनसागोचरं अत एव नित्यं निरतिशयं च ॥५०॥ तदाह—मनुष्येति । यन्मनुष्यादिषु सुखं तस्योत्तरोत्तरं दशगुणत्वात्सातिशयादिलक्षणं तत्तु ब्रह्मानन्दांशतो गतं 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । तुशब्दाद्ब्रह्मानन्दवन्न नित्यम् ॥ ५१ ॥ तच्च पुंस्त्रीसंयोगजन्यकामवृत्त्यारूढं शुक्रद्रावोपलक्षितरतान्ते पूर्णमेवावभासते तत्सोपाधिकं क्षणलवविरसमिति चेत्तत्राह । रतिकर्मणा विधिज्ञेन शाखाचन्द्रन्यायेन भाव्यते । तर्हि सर्वेऽप्यनेनैवोपायेन मुच्येयुरिति चेद्वेदान्तवैयर्थ्यापत्तिरित्यत आह—

चक्रे वित्तानुसारेण नित्यनैमित्तिकाः क्रियाः ॥
यथारुचि यथाकालं दिव्यार्थान्बुभुजे स च ॥ ५४ ॥
न श्रुतं नानुभूतं च ताभ्यामंहोऽल्पमप्यकम् ॥
दैवात्प्रेत्य स सस्त्रीको गन्धर्वेशोऽभवत्सुधीः ॥ ५५ ॥
तत्रैव नादवित्सोऽपि चार्व्या पत्न्या सदाऽरमत् ॥
तन्व्या सर्वकलाभिज्ञो विधिना रमयन्सुरान् ॥ ५६ ॥
हिमाचलवने रम्ये कदाचिच्छिवया शिवः ॥
उच्चैर्गायन्तमाकर्ण्य सुस्वरं तमवाप सः ॥ ५७ ॥
नत्वेशं सह पत्न्या स नादज्ञो मञ्जुलस्वरः ॥
गीतैरतोषयत्प्राह मौलिमान्दोलयञ्छिवः ॥ ५८ ॥
सुशिक्ष्योऽस्यद्ययावन्मे श्रुतं नेदृङ्मनोरमम् ॥
धन्योसि त्वं दिवं याहि भुंक्ष्व भोगान्सुदुर्लभान् ॥ ५९ ॥
ततो लब्धवरो गत्वा विमानेन दिवं स तु ॥
त्वदादीन्रमयामास सुगीतैर्भार्यया सह ॥ ६० ॥
कदाचिद्ब्रह्मलोकेऽभून्महोत्साहोऽखिलाः सुराः ॥
संप्राप्तास्तत्र सदसि गन्धर्वाप्सरसो जगुः ॥ ६१ ॥
ततानद्धघनच्छिद्रवाद्यैः सह सुमञ्जुलम् ॥
तत्र सर्वेषु गायत्सु ब्रह्मैकाग्रमना अभूत् ॥ ६२ ॥

न मूर्खेणेति ॥ ५२ ॥ ५३ ॥ ५४ ॥ अंहः पापम् । अकं दुःखम् ॥ ५५ ॥ ॥ ५६ ॥ ५७ ॥ ५८ ॥ हे इन्द्र, त्वदादीन् त्वत्प्रभृतीन्देवान् ॥ ५९ ॥ ॥ ६० ॥ ततं वीणादिकम् । आनद्धं मुरजादिकम् । घनं कांस्यतालादि । छिद्रं वंशादि ॥ ६१ ॥ ६२ ॥ ब्रह्मा आह । एषां गायकादीनां मध्ये ।

ब्रह्माऽऽहैषां तु सर्वेषां कोऽयं गायति सुस्वरम् ॥
तदा त्वयेन्द्र स स्रष्ट्रे दर्शितो नेत्रसंज्ञया ॥ ६३ ॥

तदा निवारयामास कः सर्वान्हस्तसंज्ञया ॥
सस्त्रीकः स ततो गायन्नानारागं च सुस्वरम् ॥ ६४ ॥

श्रुत्वा गीतं तदानन्दं ज्ञात्वोवाच विधिस्तदा ॥
नादब्रह्मात्मतत्त्वं तत्सम्यक् प्राप्तमनेन हि ॥ ६५ ॥

विलक्षणोऽस्य चानन्दो रमयत्यपरानपि ॥
ब्रह्मलोकनिवासोऽस्य युक्तो भार्यान्वितस्य हि ॥ ६६ ॥

इत्युक्त्वा कृपया तस्मै यद्ब्रह्म श्रुत्यगोचरम् ॥
मुदा प्रदर्श्य सस्त्रीकं तं स्वाग्रेऽस्थापयद्विधिः ॥ ६७ ॥

स्रष्ट्रे ब्रह्मणे ॥ ६३ ॥ कः ब्रह्मा सर्वान्गायकान् ॥ ६४ ॥ नादब्रह्मणो यदात्मभूतं तत्त्वं तदनेन रागभेदेन प्राप्तम् ॥ ६५ ॥ यतोऽस्यानन्दः लौकिकगायकविलक्षणः । न केवलं स्वयमेवानुभवति किंत्वपरानपि तथैव रमयति । ब्रह्मैव लोकस्तत्र निवासः ॥६६॥ यद्ब्रह्म 'यद्वाचानभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदꣳ श्रुतम्' इति श्रुत्यगोचरं । अनभ्युदितं अप्रकाशितम् । अभ्युद्यते प्रकाश्यते । उपासते वाचो विषयीकुर्वन्ति । एवमन्यत्रापि । तद्ब्रह्म तस्मै प्रदर्श्य 'यच्चक्षुषा न पश्यतीति' श्रुत्या निषिद्धत्वादसंभावनादिनिरासेनापरोक्षीकारयित्वा ॥ ६७ ॥ उपसंहरति—

एवं स कामशास्त्रज्ञो भोगान्भुक्त्वाऽखिलान्क्रमात् ॥
सस्त्रीकोऽगात्परानन्दं शास्त्रं शुद्धिकरं न किम् ॥ ६८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां
संहितायां वासुदेव्यां उपासनाकाण्डे
तृतीयाष्टके पञ्चमोऽध्यायः ॥ ५ ॥

एवमिति ॥ ६८ ॥ इति तृतीये टीकायां पञ्चमोऽध्यायः ॥ ५ ॥

॥ इति श्रीदत्तपुराणे तृतीयाष्टके पञ्चमोऽध्यायः ॥ ३।५ ॥

---

## ॥ अथ विष्णुदत्तोद्धारो नाम तृतीयाष्टके षष्ठोऽध्यायः ॥ ३।६ ॥

हरिः ॐ ॥

एवं त्वान्यदृब्रुवे कश्चिद्वेदशर्मा द्विजोऽभवत् ॥
सुशीलस्तत्सुतो दैवात्सप्तब्रह्मग्रहैर्वृतः ॥ १ ॥
दुर्धरान्दुरभिप्रायान्परस्परजयैषिणः ॥
सूपायैर्न शशाकैतान्समुद्धर्तुं शुशोच सः ॥ २ ॥
ग्रहाविष्टोऽरुदन्मुह्यन्नृत्यन्धावन्हसन्रुषा ॥
नानाचेष्टा व्यधादेवं स्वार्थाद्भ्रष्टः स दैवतः ॥ ३ ॥
कदाचिद्वैश्वदेवान्ते तद्गृहे धूलिधूसरः ॥
भिक्षुको भस्मलिप्ताङ्गो मलिनो मक्षिकावृतः ॥ ४ ॥
दुर्गन्धः प्राप तेजस्वी तस्मै भिक्षां ददौ द्विजः ॥
छन्नात्मा कोयमित्युक्त्वा पृष्ठलग्नोऽभवद्द्विजः ॥ ५ ॥
भिक्षुस्तं ताडितमपि काष्ठलोष्टेष्टिकोपलैः ॥
पश्चाद्धावन्तमूचे किं कार्यं प्राप्तेन ते मया ॥ ६ ॥

॥ श्रीगणेशाय नमः ॥

हरिः ॐ ॥ ग्रहनिग्रहमाहात्र ब्रह्मग्रहनिदेशतः ॥
विष्णुदत्तो दत्तदृष्ट्या द्वाविंशेऽभूत्समुद्धृतः ॥ १ ॥

गाथान्तरमाह–एवमिति । ब्रह्मग्रहैः परकायप्रवेशनशीलैः भूतविशेषैः ॥ १ ॥ सूपायैरुच्चाटनादिभिः ॥ २ ॥ आविष्टैकैकग्रहकृतचेष्टा आह— रुदन्नित्यादिना । व्यधाद्व्यकृणोत् ॥ ३ ॥ स्वार्थान्मोक्षाख्यात्पुरुषार्थाच्छन्नात्मा गूढस्वभावः ॥ ४ ॥ ५ ॥ ६ ॥ तं द्विजं व्रात्येन संस्कारहीनेनेति

इत्युक्तो दुःखितः पुत्रमुक्त्यै तं प्रार्थयद्द्विजः ॥
प्रादुर्भूयात्मना दत्तो दत्त्वा सप्त मनूञ्जगौ ॥ ७ ॥
एकैकेनैषामेकैकं क्रमाद्ग्रहमपाकुरु ॥
यथा ज्ञानावृतीः शास्त्रैः क्रमादुन्मूलयन्त्यमूः ॥ ८ ॥
न ह्यन्योन्यविरुद्धास्ते जय्या एकेन दुर्ग्रहाः ॥
तथैभिस्ताञ्जहीत्युक्त्वा देवोऽदृश्योऽभवत्क्षणात् ॥ ९ ॥
ततस्तुष्टः स धामैत्य यथा दत्तोदितं व्यधात् ॥
एकैकमन्त्रेणैकैकमेकैकेन दिनेन सः ॥ १० ॥
मन्त्रशास्त्रविधानेन क्रमाद्ग्रहमपाकरोत् ॥
शोकाद्येकैकवारेण नष्टमेकैकनिर्गमे ॥ ११ ॥
पूर्ववत्सोऽष्टमेह्न्यासीत्ततोऽभ्यासाद्ययौ गतिम् ॥
शास्त्रं क्षुद्रमपीदं तु मोक्षोपकृतये न किम् ॥ १२ ॥
मातापुरे विष्णुदत्तशर्मा पत्न्या सुशीलया ॥
न्यवसद्गृहिधर्मेण दत्तभक्तो महामतिः ॥ १३ ॥
तद्द्वार्यश्वत्थवृक्षेऽभूद्ब्रह्मरक्षो दिने दिने ॥
विप्रत्यक्तं भूतबलिं बुभुजेऽपीडयन्न तौ ॥ १४ ॥

बाह्यार्थः । पूर्णत्वान्निरञ्जनत्वान्निर्मलत्वात्सर्वादित्वात्संस्कर्तुरभावाच्च स्वतः शुद्धस्य व्रात्यत्वम् । आत्मना स्वरूपेण । मनून् मन्त्रान् ॥ ७ ॥ ८ ॥ देवः श्रीदत्तः ॥ ९ ॥ धाम गृहम् ॥ १० ॥ एकैकवारेणैकैकदिवसेनैकैकभूतनिर्गमे क्रमेण रोदनाद्यपि नष्टम् ॥ ११ ॥ गतिं मोक्षम् । उपसंहरति—शास्त्रमिति ॥ १२ ॥ चतुर्थोदाहरणमाह—मातापुर इति । मातापुरे सह्यैकदेशे रेणुकापुरे ॥ १३ ॥ तौ दंपती ॥ १४ ॥ १९ ॥ करालं दन्तुरं

तेनान्ये पीडिता लोकाः शान्तो विप्रान्नसेवनात् ॥
कदाचिद्वैश्वदेवान्ते प्रादुरास स्वरूपतः ॥ १५ ॥

दृष्ट्वात्मानं करालं स भीतं ज्ञात्वाऽऽह मञ्जुवाक् ॥
विप्र मा भीर्वृणीष्वेष्टं राक्षसोऽहं त्वदन्नभुक् ॥ १६ ॥

स्वपत्न्यभिमतेनाह श्रीदत्तं दर्शयापरम् ॥
न काङ्क्षेऽत्र परत्रापीत्युक्तः प्राह स राक्षसः ॥ १७ ॥

तदाख्यापि न मे श्राव्या तथापि कथयामि ते ॥
तुष्टोऽस्मि प्रतिकर्तुं ते प्रयत्नाद्दर्शयाम्यतः ॥ १८ ॥

विश्वात्मा दुर्धरो देवैरपि तं भक्तिगम्यमित् ॥
आत्मानं चेत्क्षमं ज्ञातुं कृतकृत्यो भविष्यसि ॥ १९ ॥

एकदोन्मत्तवच्छ्रीशं ज्ञात्वा मद्यापणस्थितम् ॥
आहूयाह द्विजं रक्षो विद्धि तं योगिदैवतम् ॥ २० ॥

विप्रस्त्ववेक्ष्य तं हीनं मेनेऽदृश्योऽभवत्तदा ॥
खिन्नोऽगाद्धाम तं रक्षः प्राह दुर्भाग्य किं कृतम् ॥२१॥

भीषणं वा। ज्ञात्वा आहेति छेदः ॥ १६ ॥ १७ ॥ तदाख्या श्रीदत्तनाम तापकरत्वान्मे श्रवणार्हमपि न पापिष्ठत्वात् कुतस्तरां तत्प्रदर्शनकरणम्। तथापि पिशाचानां भूतवर्तमानकालीनसंवेदनत्वादवसरं ज्ञात्वा यादृशेन रूपेण यत्र तिष्ठति तत्ते कथयामि ॥ १८ ॥ भक्तिगम्यस्यात्मनो ज्ञानान्मोक्षश्रवणात् कृतकृत्यत्वं राक्षसस्यापि देवयोनित्वात्संवेदनं मोक्षेऽधिकारश्च। 'तदुपर्यपि बादरायणः संभवात्' इति न्यायात् ॥ १९॥ रक्ष आह ॥ २०॥ २१॥

शासितोऽपि पुरा विप्र मोहितोऽसि कथं वद ॥
संदेक्ष्ये पुनरप्येनं सावधान इतो भव ॥ २२ ॥

अथैकदाऽऽह रक्षोऽङ्ग श्ववृतो धूलिधूसरः ॥
तमात्मक्रीडमात्मानं विध्यात्मरतिमुत्तमम् ॥ २३ ॥

रक्षोभिरपि यः स्मर्तुमशक्योऽहं तु दैवतः ॥
रक्षोऽभवं विप्रकोपात्तद्भक्तोऽपि ततः स्मरे ॥ २४ ॥

विप्रोऽप्यथास्थिभूषं तं रक्ताक्षं संमुखोऽगमत् ॥
तेनास्थ्ना ताडितोऽधावत्स भीतो जीवितेच्छया ॥ २५ ॥

रक्षोऽवदत्परं दैवं मन्ये यत्नो निरर्थकः ॥
मिथ्याऽऽत्मताडनात्का ते हानिर्विप्र विचारय ॥२६॥

भूयोऽपि दर्शयिष्ये ते कार्यं साधय यत्नतः ॥
किं कार्यमिति पृच्छेच्चेत्प्रसन्नः स तदा वद ॥ २७ ॥

इत ऊर्ध्वम् ॥ २२ ॥ अङ्ग हे विप्र ॥ २३ ॥ त्वया कथं ज्ञात इत्यत आह–रक्षोभिरिति ॥ २४ ॥ २५ ॥ मिथ्यात्मा देहः । विकारित्वाद्दृश्यत्वात् जडत्वाद् घटवत् । तत्ताडनात्ते का हानिः । न कापि । अतश्चार्वाकवत्कुदृष्टिं तार्किकवत्कुमतिं च त्यक्त्वा विचारय । मिथ्याभूतस्याध्यासेनात्मसंज्ञितस्य देहादेस्ताडनादनात्मत्वेन निराकरणात् साक्षिभूतस्य सदा विद्यमानस्य ते का हानिः । न कापि । 'न हन्यते हन्यमाने शरीरे' इति शासनात् ॥ २६ ॥ सः श्रीदत्तः ॥ २७ ॥ एकदा आहेति छेदः । देवं

दर्शश्राद्धे क्षणं दास्ये प्रसादः क्रियतामिति ॥
अथैकदाऽऽह रक्षो यः श्वभ्यो मृतखरामिषम् ॥ २८ ॥
दत्त उत्कृत्य तं विद्धि देवं सत्यं वचो मम ॥
पत्न्यापि शिक्षितो धैर्याद्गत्वा तच्चरणेऽग्रहीत् ॥ २९ ॥
मांसास्थिताडितोऽप्युक्तो मुञ्च मुञ्च व्रजेत्यपि ॥
धैर्यात्स्वार्थपरो विप्रो ववन्दे न मुमोच तम् ॥ ३० ॥
दीनमार्तं द्विजं धीरं ज्ञात्वाऽऽह कृपया प्रभुः ॥
आगतोऽसि त्रिवारं किं कार्यं व्रात्येन ते मया ॥ ३१ ॥
श्राद्धे निमन्त्रयामीति द्विजेनोक्तोऽवदद्धत ॥
पितरोऽधः पतिष्यन्ति श्राद्धेऽनाचारयोजनात् ॥ ३२ ॥
द्विजोऽब्रवीत्किमाचारैर्लभ्यन्तेऽन्यैश्च का क्षतिः ॥
तवेशस्याप्तकामस्य किमसक्तस्य कर्मभिः ॥ ३३ ॥
इत्युक्त ओं तथेत्युक्त्वा स्वरूपेण स्थितोऽवदत् ॥
निमन्त्र्यान्यं च मत्कल्पं पाकशुद्धिर्विधीयताम् ॥ ३४ ॥
सुस्नातः शुचिरेष्यामि त्वद्वेश्म कुतुपक्षणे ॥
न श्मशानं न मांसास्थि तत्रापश्यद्द्विजस्तदा ॥ ३५ ॥

श्रीदत्तम ॥ २८ ॥ २९ ॥ चरणे मुञ्च मुञ्च व्रजेति श्रीदत्तेनोक्तोऽपि ॥ ३० ॥ ज्ञात्वा आहेति छेदः ॥ ३१ ॥ न विद्यते आचारो यस्य तादृशब्राह्मणयोजनात्पितरोऽधः पतन्ति परमार्थतस्तु श्राद्धेऽनाचारस्य ब्रह्मनिष्ठस्य योजनादल्पपुण्या अपि पितरोऽधः पतिष्यन्ति किं, अपि तूद्धरिष्यन्त्येवेति काका भगवदाशयः ॥ ३२ ॥ अन्यैरनाचारादिभिः ॥ ३३ ॥ मत्कल्पं पङ्क्तियोग्यम् ॥ ३४ ॥ कुतुपक्षणेऽह्नोऽष्टमांशे ॥ ३५ ॥

श्मशानं योगभूः श्वानो वेदाः शास्त्राणि वायसाः ॥
दृष्टो द्विजेनावधूतः साक्षाद्दत्तस्त्रिरूपधृक् ॥ ३६ ॥

द्विजो नत्वाऽऽह धन्योऽस्मि धन्यौ मे पितरौ कुलम् ॥
यत्पुण्यौघादपि कुधीरद्राक्षं ते पदं महत् ॥ ३७ ॥

इत्युक्त्वा स द्रुतं गेहं गत्वा पत्न्यै शशंस तत् ॥
सापि हृष्टा सती पाकं विधिना कर्तुमारभत् ॥ ३८ ॥

क्व मृग्योऽन्यो द्विजस्तुल्य इत्युक्तो राक्षसोऽब्रवीत् ॥
यत्रायातीश्वरस्तत्र समायान्त्यखिलाः सुराः ॥ ३९ ॥

तथाप्यर्कं गृहपतिं वह्निं वाऽत्र निमन्त्रय ॥
कार्यं ते साधितं सर्वं प्रसादे मां न विस्मर ॥ ४० ॥

तथेत्युक्त्वा स पत्न्यै तच्छशंसात्रान्तरेऽत्रिजः ॥
श्रीश एत्याह मत्कल्पः कोऽऽन्यो विप्रो वद द्विज ॥४१॥

स्वासनेऽत्रास्यतामन्यो विप्र आयास्यतीति तम् ॥
उक्त्वा सती बहिर्गत्वाऽऽजुहावार्कं प्रणम्य सा ॥४२॥

सर्वात्मन्धीर सवितः करोषि त्वं सचेतनम् ॥
विश्वं जडमपीहाद्य देवागच्छ दयस्व नः ॥ ४३ ॥

॥३६॥ ययोः पित्रोः पुण्यौघात् ॥३७॥३८॥ मृग्योऽन्वेषणीयः ॥३९॥ गृहपतिं अग्निम्। उभयविशेषणं वा 'अग्निर्गृहपतिरिति हैक आहुः' इत्यादिश्रुतेः ॥४०॥४१॥ सा पत्नी ॥४२॥ धियं ईरयतीति धीरः तत्संबुद्धौ॥४३॥

इत्यर्कः प्रार्थितो विप्ररूपी प्रापात्रिजोऽवदत् ॥
देवहीनं कथं श्राद्धं तृतीयोऽन्विष्यतां तथा ॥ ४४ ॥

सती गृहपतिं प्राह कर्माध्यक्षांशतोऽधुना ॥
एहीत्युक्तोऽग्निरप्याप तत्कल्पो विश्वरूपधृक् ॥ ४५ ॥

दैवेऽग्निमुपवेश्येशं पित्र्येऽर्कं च यथाविधि ॥
व्यधाच्छ्राद्धं मुदा भुक्तास्तृप्ताः स्मेत्यवदंस्त्रयः ॥ ४६ ॥

आचान्तेष्वक्षयं दत्वा तमष्टशतनामभिः ॥
नत्वाऽऽह राक्षसोक्त्या वः कृतकृत्योऽस्मि दर्शनात् ॥

दत्तः प्राहैतु रक्षोऽपि मदुच्छिष्टाशनाद्गतिम् ॥
मुक्तास्ते पितरः पत्न्या सिद्धस्त्वं चैहि सद्गतिम् ॥४८॥

दत्वा विद्या ययौ दत्तः स्वर्यानं कामगं च कः ॥
उभयर्धीश्च शुष्मैवं तेजीयान्सोभवत्कृती ॥ ४९ ॥

दर्शस्य पार्वणद्वयत्वाद्देवहीनं कथम् ॥ ४४ ॥ गृहपतिमावसथ्यं 'अग्निर्वै देवानामवमः' इति श्रुतेस्तत्कल्पः ॥ ४५ ॥ देवस्थाने अग्निं ईशं श्रीदत्तं सूर्यं च पितृस्थाने व्यधाद्व्यकरोत् ॥ ४६ ॥ पिण्डदानोत्तरमाचान्तेषु नत्वा विप्र आह । वो दर्शनात्कृतकृत्योऽस्मि ॥ ४७ ॥ पत्न्या सह त्वमपि सिद्धः सन् सद्गतिमेहि ॥ ४८ ॥ विद्याः मन्त्रान् । कः सूर्यः । स्वर्यानं विमानं । शुष्माग्निः ऐहिकामुष्मिकसिद्धीः । कृती कृतकृत्यः ॥ ४९ ॥ शास्त्रमेव दृग् दर्शनसाधनं यस्य स एवं मीमांसकशास्त्रक्रमा-

अलङ्घ्यशासनोऽभीष्टभागभूच्छास्त्रदृग्द्विजः ॥
रक्षोप्युच्छिष्टभुङ्मुक्त एवं शास्त्रक्रमाद्गतिः ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां
संहितायां वासुदेव्यां उपासनाकाण्डे
तृतीयाष्टके षष्ठोऽध्यायः ॥ ६ ॥

च्चित्तशुद्ध्या भगवद्दर्शनाद्गतिर्मुक्तिर्जातेति ॥ ५० ॥ इति तृतीये टीकायां षष्ठोऽध्यायः ॥ ६ ॥

॥ इति श्रीदत्त० विष्णुदत्तोद्धारो नाम
तृतीयाष्टके षष्ठोध्यायः ॥ ३।६ ॥

---

## अथ रोग्युद्धारादिकथनं नाम
## तृतीयाष्टके सप्तमोऽध्यायः ॥ ३।७ ॥

हरिः ॐ ॥ प्रभुप्रसादाद्विप्रोऽयं कमप्यन्वग्रहीत्स च ॥
कृतार्थो भवतीत्येवं प्रसिद्धोऽभूत्स भूतले ॥ १ ॥

गोदावासी द्विजः कश्चिद्धरिशर्मा तदात्मजः ॥
द्विदशाब्दो यस्य जन्या गुल्मोऽष्टाब्दः क्षयोऽभवत् ॥२॥

त्र्यब्दो जलोदरो जीर्णज्वर एकाब्द आयनः ॥
अतिसारः सकासश्च चातुर्मास्यो भगन्दरः ॥ ३ ॥

त्रिदोषेणापि संक्रान्तं प्रेक्ष्य मृत्यून्मुखं पतिम् ॥
तद्भार्या षोडशाब्दागाच्छरणं विष्णुदत्तमित् ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥

रोग्युद्धारस्त्रयोविंशे झुटिङ्गस्य च निग्रहः ॥
रोचनार्थश्रुतिख्यातिर्जन्मक्रम उदाहृतः ॥ १ ॥

यं कमपि जीवमात्रम् । अयं विष्णुदत्त इति वा ॥ १ ॥ द्विदशाब्दो विंशत्यब्दः । जन्योत्पत्त्या सह गुल्मरोगेण व्याप्तः । अष्टाब्दः क्षयः त्रयोदशेऽब्दे समुत्पन्न इत्यर्थः ॥ २ ॥ जलोदरस्त्र्यब्दोऽष्टादशेब्दे समुत्पन्नः । जीर्णज्वर एकाब्दो विंशेऽब्दे समुत्पन्नः । आयनः षाण्मासिकोऽतिसारः काससहितश्च भगन्दरश्चातुर्मास्यः ॥ ३ ॥ त्रिदोषेणान्ते कफवातपित्तसंनिपातजेन संक्रान्तं व्याप्तमिति यावत् । विष्णुदत्तं शरणमगात् । इदेवार्थे ॥४॥

सौभाग्यं देहि मे ब्रह्मन्भर्ता मे रोगपीडितः ॥
अत्युत्कटाः प्रतीकारा दैवाज्जाता निरर्थकाः ॥ ५ ॥
इत्यर्थितो दयालुः स साध्व्या तद्गृहमेत्य तम् ॥
दृष्ट्वा कर्मविपाकोक्तं पत्न्या व्रतमकारयत् ॥ ६ ॥
क्रमेणाशु लयं प्राप तत्तद्रोगः प्रतिव्रतम् ॥
क्षये ब्रह्मवधोत्थेऽदाद्द्वादशाब्दं स निर्गतः ॥ ७ ॥

प्रतीकाराश्चिकित्साख्यास्तन्नाशोपायाः ॥ ५ ॥ अर्थितः प्रार्थितः । व्रतं येन येन कर्मणा यो यो रोग उत्पन्नस्तत्तत्कर्मप्रायश्चित्तम् ॥ ६ ॥ ब्रह्महत्यात उत्पन्ने क्षये 'अनेकरोगानुगतो बहुरोगपुरोगमः ॥ राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः ॥ देहौषधक्षयकृतेः क्षयस्तत्स्तम्भनाच्च सः' इत्युक्तलक्षणे । द्वादशाब्दं षष्ट्यधिकत्रिशत्कृच्छ्रात्मकं प्रायश्चित्तं अदात् पत्न्या कारयामासेत्यर्थः । ततः स क्षयो निर्गतः । 'रूक्षकृष्णारुणशिराततन्तुजालगवाक्षितः ॥ गुल्मोऽष्टधा पृथग्दोषैः संसृष्टैर्निचयं गतैः' । इत्याद्युक्तलक्षणो गुल्मोपि षडब्देन गतः । 'प्रवृत्तस्नेहपानादेः सहसा नाम्बुपायिनः ॥ अत्यम्बुपानमन्दाग्नेः क्षीणस्यातिकृशस्य वा ॥ रुध्वाम्बुमार्गाननिलः कफश्च जलमूर्च्छितः ॥ वर्धयेतां तदेवाम्बु तत्स्थानादुदराश्रितौ ॥ ततः स्यादुदरं तृष्णा गुदस्रुतिरुजायुतम् कासश्वासारुचियुतं ॥ नानावर्णशिराततम् ॥ तोयपूर्णद्रुतिस्पर्शशब्दप्रक्षोभवेपथुः ॥ दकोदरं महत्स्निग्धं स्थिरमावृत्तनाभि तत्' इत्युक्तलक्षणो जलोदरः द्वादशाब्दव्रतेन गतः । 'त्रिसप्ताहं व्यतीते तु ज्वरो यस्तनुतां गतः ॥ प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते' इत्युक्तलक्षणो जीर्णज्वरः अब्देन गतः ॥ 'दोषैर्व्यस्तैः समस्तैर्वा भयाच्छोकाच्च षड्विधः ॥ अतीसारः स सुतरां जायतेऽत्यम्बुपानतः ॥ कृशः शुष्कामिषासात्म्यतिलपिष्टविरूढकैः ॥ मद्यरूक्षातिमात्रान्नैरर्शोभिः

गुल्मः षडब्देन देवद्रोहोत्थोऽपि जलोदरः ॥
द्वादशाब्देन चाब्देन पापोत्थोऽपि भगन्दरः ॥ ८ ॥

ज्वरोऽब्देनातिसारश्च त्रिदोषश्चौषधाद्गतः ॥
द्विजोऽथ तं हृदि स्पृष्ट्वा जजापोपनिषन्मनुम् ॥ ९ ॥

नीरुग्लेभे द्विजस्तेन भूतिमायुः प्रजां यशः ॥
दिव्यां गतिं दत्तभक्तिमिहामुत्र च सद्गतिम् ॥ १० ॥

पितृत्वेन वृतः सत्या द्विजः प्रस्थापितोऽस्पृहः ॥
ययौ धामेति रुग्णोऽपि द्विजोऽगात्सद्गतिं ततः ॥११॥

क्रमाद्रोगेषु नष्टेषु यथान्ते पुष्टिदो रसः ॥
नष्टेष्वविद्यादोषेषु शास्त्रैर्बोधस्ततो रसः ॥ १२ ॥

स्नेहविभ्रमात् ॥ कृमिभ्यो वेगरोधाच्च तद्विधैः कुपितोऽनिलः ॥ विस्रंसयत्यधोऽब्धातुं हत्वा तेनैव चानलम् ॥ व्यापद्यानुशकृत्कोष्ठं पुरीषं द्रवतां नयन् ॥ प्रकल्पतेऽतिसाराय लक्षणं तस्य भाविनः' इत्युक्तलक्षणोऽतिसारोऽब्दव्रतेन गतः ॥ ७ ॥ ८ ॥ द्विजो विष्णुदत्तः ॥ ९ ॥ तेनोपनिषन्मन्त्रजपेन निर्गता रुग्रोगो यस्य सः । भूतिमैश्वर्यं दिव्यामुत्तमामव्याहतां गतिं औपनिषदं ज्ञानं वा सत्या विप्रपत्न्या पितृत्वेन वृतः ममायं पितेत्यङ्गीकृतः । अस्पृहो निरिच्छः ॥ १० ॥ ११ ॥ रसो रसायनं पुष्टिदं । ततो बोधानन्तरं रसः परमानन्दः । 'रसो वै सः । रसँ्ह्येवायं लब्ध्वानन्दी भवति' इति श्रुतेः ॥ १२ ॥ नन्वेवं चेत्सर्ववेदशास्त्राणां मोक्षे तात्पर्यं तर्हि

मिष्टाशनोत्थरोगार्तं ब्राह्मणी काचिदात्मजम् ॥
अम्बा निम्बं पिबेत्याह तिक्तं नादूरदृक् पपौ ॥ १३ ॥
दास्ये लड्डुकमित्युक्तः पपौ दत्वापि तत्करे ॥
अपथ्यशङ्किनी युक्त्या ततो जग्राह लड्डुकम् ॥ १४ ॥
फलं लड्डुकवद्गौणं मुख्यमारोग्यवत्परम् ॥
रोग्यर्भवद्भवाध्यार्तो हिमकृन्मातृवच्छ्रुतम् ॥ १५ ॥
स्वर्गार्थं कामभोगार्थं शत्रुघातार्थमप्ययम् ॥
न वशीकरणार्थं च शास्त्रौघो बुद्धिशुद्धिदः ॥ १६ ॥
विप्रस्य कस्यचिद्भार्यां दृष्ट्वा तन्वीं गते प्रिये ॥
ग्रामान्तरे तत्स्वरूपधृग् झुटिंगो ह्यवाप ताम् ॥ १७ ॥
कामार्तो वर्ण्यवस्थायां दुराचारो हि यो मृतः ॥
स झुटिंगत्वमेत्येव दुर्धरः कामलम्पटः ॥ १८ ॥
कथं ह्याश्वागम इति सत्योक्तः सत्कृतोऽवदत् ॥
गतो यदर्थं मार्गे स मिलितः प्राह नाधुना ॥ १९ ॥
साध्यं कार्यं मासमात्रादेहीत्युक्तोऽञ्जसागमम् ॥
इति तां वञ्चयित्वा स साध्वीं स्ववशमानयत् ॥ २० ॥

'अक्षय्यं ह वै चा०', 'अपाम सोम०', 'उच्चादिवि०' इति श्रुतिभिः कुतः कर्मफलस्य नित्यत्वं प्रतिपादितमिति चेन्न हि वेदः कर्मफलं नित्यमभिप्रैति किंतु लक्षणया प्राशस्त्यमात्रं, विध्येकवाक्यत्वादन्यथा वाक्यभेदप्रसङ्गात्। 'तद्यथेह कर्म' इति न्यायोपबृंहितश्रुत्यन्तरविरोधाच्चेत्याह सदृष्टान्तं–मिष्टेति ॥ १३ ॥ १४ ॥ परं सर्वोत्कृष्टं मोक्षाख्यं पदम् ॥ १५ ॥ १६ ॥ उदाहरणान्तरमाह–विप्रस्येति ॥ १७ ॥ १८ ॥ ॥ १९ ॥ २० ॥

वशं गता तस्य मायामजानन्ती मनस्विनी ॥
धाष्टर्यं बलं भोगशक्तिं विकारांश्च विलक्षणान् ॥ २१ ॥

ज्ञात्वापि दुःखिता वक्तुं न शशाकाप्रियं क्वचित् ॥
तस्मिन्संदिग्धचित्तापि प्रत्याख्यातुमनीश्वरा ॥ २२ ॥

मासेनैत्य गृहेशस्तं दृष्ट्वोचे मत्स्वरूपधृक् ॥
कोऽसि भार्यां गृहं चार्थं कथं गृह्णास्यरेऽधम ॥ २३ ॥

स प्राहाहं गृहस्वामी कस्त्वं मद्रूपधृक्खल ॥
त्वं खलस्त्वं खल इति विवदन्तौ विलोक्य तौ ॥ २४ ॥

दृष्ट्वैकरूपौ चकिता मित्रश्वशुरबान्धवाः ॥
सर्वं रहसि पत्न्योक्तं ज्ञात्वा खिन्नोऽभवद्द्विजः ॥२५॥

झुटिंगेन स्त्रिया स्वैश्च विष्णुदत्तालयं द्विजः ॥
गत्वा शशंस तत्सर्वं ज्ञात्वाप्येवावदत्स तौ ॥ २६ ॥

रूपं शीलं वयोऽवस्था स्वरवर्णाकृतिर्गतिः ॥
नामगोत्रकुलाद्येकं वदथः सत्यमत्र किम् ॥ २७ ॥

क्षन्तव्यं निश्चिनोमीदमित्युक्त्वा सप्त मुद्रिकाः ॥
दत्वा समन्त्रा भालेऽसौ पृथक् पप्रच्छ संसदि ॥ २८ ॥

२१॥ अनीश्वराऽसमर्था ॥२२॥२३॥२४॥२५॥ झुटिंगोऽयमिति ज्ञात्वापि लोकप्रत्ययार्थं तौ अवदत् ॥२६॥ स्वरः शब्दः । वर्णः कान्तिः । आकृतिराकारः । अत्र युवयोः किं सत्यम् ॥ २७ ॥ एकत्र चन्दनमुद्रिका परत्र सप्तमुद्रिकाश्च दत्वा पृथगेकैकं संसदि सभायां पप्रच्छ ॥ २८ ॥ कुप्य-

कुप्यभाण्डांशुकान्नादि गेहे लक्ष्म च ते स्त्रियि ॥
प्रकाशं चाप्रकाशं च सर्वमाख्यातुमर्हसि ॥ २९ ॥

लेखयित्वा पृथक् ताभ्यामुक्तं संसदि दूरतः ॥
तौ कृत्वा ब्राह्मणीं प्राह सत्यं कस्योभयोर्वद ॥ ३० ॥

सा प्राह योऽद्य मां भुङ्क्ते तद्वाक्ये व्यत्ययो महान् ॥
अपरोक्तौ सत्यतेति तथेत्युक्त्वा द्विजोऽब्रवीत् ॥ ३१ ॥

पञ्चक्रोशात्मकमिदं क्षेत्रं कृत्वा प्रदक्षिणम् ॥
विप्रावेष्यति यः शीघ्रं पूर्वं स विजयी भवेत् ॥ ३२ ॥

तथेत्युक्त्वा गतौ तत्र क्षणार्धेन पिशाचकः ॥
परिक्रम्यैत्य तत्राह कृता मेऽद्य प्रदक्षिणा ॥ ३३ ॥

लिङ्गानि पथि सर्वाणि देवतायतनानि च ॥
तानि सर्वाण्यसंदिग्धं कथयामास संसदि ॥ ३४ ॥

तच्छ्रुत्वा चकिताः सर्वे सभ्या ऊचुः परस्परम् ॥
नेयं मनुष्यचेष्टातो भूतोऽयं नात्र संशयः ॥ ३५ ॥

भाण्डानि स्वर्णरौप्यातिरिक्तधातुपात्राणि ॥ २९ ॥ तौ दूरतः कृत्वा ॥ ३० ॥ द्विजोऽब्रवीत् । ताविति शेषः ॥ ३१ ॥ हे विप्रौ ॥ ३२ ॥ ३३ ॥ असंदिग्धं निःसंशयम् ॥ ३४ ॥ भूतोऽयं नात्र संशयः । वाक्यस्य सत्यत्वे तावत्कालेन नृणां प्रदक्षिणीकर्तुमशक्यत्वात् ॥ ३५ ॥ दिनार्धेन सर्वत्र-

प्राप विप्रस्त्वकृत्स्नज्ञो दिनार्धेनाब्रवीत्समम् ॥
विष्णुशर्मा पुनः प्राह सिद्धाः कति गिराविह ॥ ३६ ॥
पृष्ट्वा तन्नाम गोत्रादि गिरिं कृत्वा प्रदक्षिणम् ॥
ब्रूयाद्यः शीघ्रमागत्य प्रथमं स जयी भवेत् ॥ ३७ ॥
इत्युक्तौ जग्मतुरुभौ मुहूर्तार्धात्पिशाचकः ॥
आगत्य स यथापृष्टं कथयामास सर्वशः ॥ ३८ ॥
विप्रस्तु पञ्चयामोर्ध्वमेत्य क्लेशादुवाच सत् ॥
सिद्धा न दृष्टास्तन्नाम गोत्रवार्ता कुतः पुनः ॥ ३९ ॥
तच्छ्रुत्वातीव विश्वासो विप्रस्याभूत्सभासदाम् ॥
विष्णुशर्मा पुनः प्राह परीक्षैकावशिष्यते ॥ ४० ॥
इत्युक्त्वा लोहकरकं संस्थाप्योवाच तौ द्विजः ॥
वक्त्रेणाविश्य नालेन निर्गम्य स्त्री प्रगृह्यताम् ॥ ४१ ॥
इत्युक्तः सत्वरं भूतः सूक्ष्मरूपी समाविशत् ॥
कृतरक्षो द्विजो ध्यात्वा श्रीशं मन्त्रं जजाप ह ॥ ४२ ॥
दुर्धरं दुर्मुखं दुष्टं पिशाचमिन्द्रसंमृण ॥
बध्वा मन्त्रानुभावेन सर्वं रक्षो निबर्हय ॥ ४३ ॥
इत्यनेन मुखं नालं कीलयामास मध्यगः ॥
भूतोऽभूद्दुःखितो बद्धं तं तत्याज महागिरौ ॥ ४४ ॥

गमनासंभवाद्विप्रस्त्वकृत्स्नज्ञः ॥ ३६ ॥ ३७ ॥ मुहूर्तार्धाद्घटिकया ॥३८॥ ॥ ३९ । ४० ॥ करकाकारं पात्रम् ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

साध्वी विप्रः सदस्याश्च जहृषुः प्राह तां द्विजः ॥
दृष्टमात्रो मया ज्ञातो झुटिंगोऽयं महाखलः ॥ ४५ ॥

सहसा निगृहीतेऽस्मिन्नपवादो मयीत्यतः ॥
कृतो यत्नः क्रमादेष लोकसंशयभेदकः ॥ ४६ ॥

शास्त्रक्रमाद्यथाज्ञस्याज्ञानान्तः क्रियते तथा ॥
कृता प्रतिक्रियैषात्र नैव कस्यापि संशयः ॥ ४७ ॥

विश्वासः प्रथमे किंचिद्द्वितीये सविशेषकः ॥
तृतीये संशयश्छिन्नस्तुर्ये नाशमितोऽधमः ॥ ४८ ॥

सर्वे ततस्तदादिष्टा नत्वा जग्मुर्यथागतम् ॥
साध्वी साऽनिन्दिता हृष्टा स्वेशं लब्ध्वा तथैव सः ॥४९॥

॥ ४५ ॥ ४६ ॥ कस्यचित् 'आत्मा वै पुत्रनामासि' इत्यादिना पुत्रादावात्मत्वभ्रमः स च लौकायतिकशास्त्रेण देहात्मत्वप्रतिपादकेन निरस्यते । प्रत्यक्षप्रमाणीभूतं तन्मतमनुमानप्राधान्येन बौद्धादिमतशास्त्रेण निरस्यते । स च विज्ञानवादोऽप्यसङ्गात्मनां प्रतिपादकेन सांख्यादिमतेन निरस्यते । स चाद्वैतप्रतिपादकेनागमप्रधानेन सिद्धान्तशास्त्रेणेत्येवं शास्त्रक्रमात् ॥४७॥ प्रथमे प्रत्यये ॥ ४८ ॥ नन्वेवं विचारेण रक्षोनिग्रहणं समुचितं यथा तथा मायामयस्यापि द्वैतस्य निग्रहणेऽद्वैतात्मलाभेपि पूर्वकालीनद्वैतावस्थोत्पन्नकालुष्यं दुर्वारमित्यत आह–साध्वी साऽनिन्दितेति । अज्ञानात् स्वपतिभ्रान्त्या झुटिंगेन सङ्गतायाः साध्व्या उभयलोकभ्रंशकरौपपत्यदोषेण पातिव्रत्यलेशांशोपि न परिहृतः किमु वाच्यं नित्यशुद्धबुद्धमुक्तासङ्गोदासीनस्वभावस्यात्मनः स्वप्नतुल्यमायामयद्वैतावस्थोत्पन्नकालुष्यं विज्ञानोत्तरं दुर्वा-

एवं शास्त्रक्रमात्त्यक्तः संशयो यैः प्रयत्नतः ॥
प्राक्सिद्धं प्राप्नुवन्त्येते शर्मासंशयमात्मनः ॥ ५० ॥
गत्वोर्ध्वमपि भोगान्ते प्राप्येहौषधितो नरम् ॥
स्त्रीपुंयोगाच्छुक्ररक्तमयो गर्भत्वमेत्यृतौ ॥ ५१ ॥
कललं प्राक्पञ्चरात्राद्बुद्बुदः सप्तरात्रतः ॥
पेशी पक्षादर्बुदोऽथ भवति स्वस्तितो घनः ॥ ५२ ॥
मासात्क्रूरः कं द्वितीये तृतीयेऽस्याङ्कुरोद्भवः ॥
त्वक् चतुर्थे रोमनखाः पञ्चमे मासि षष्ठके ॥ ५३ ॥
छिद्राणि सप्तमे चित्त्वमष्टमे धीस्ततः स्मृतिः ॥
नालरन्ध्राप्तरसभुङ्नार्तोऽपि म्रियते विधेः ॥ ५४ ॥
स्तौत्यथेश भवाभीतो मोचयार्य सुदुर्गतेः ॥
त्वां भजेऽतः परं नेदृग्गतिर्येन भवेन्मम ॥ ५५ ॥
स स्तुत्वैवं सूतिवायुत्यक्तो विस्मृतलब्धधीः ॥
रोरूयति जनुर्लब्ध्वा मोहितो माययेशितुः ॥ ५६ ॥

रमिति ॥ ४९ ॥ शर्मानन्दमयं स्वरूपम् ॥ ५० ॥ ऊर्ध्वं स्वर्गादौ पञ्चाग्निप्रकारेण स्त्रीगर्भत्वमेति । एतेनात्मा देहो वा तद्व्यतिरिक्तो वेति संशयाः परिहृताः । 'एक आत्मनः शरीरे भावात्' इति न्यायात् माला० 'आत्मा देहस्तदन्यो वा चैतन्यं मदशक्तिवत् ॥ भूतमेलनजं देहे नान्यत्रात्मा वपुस्ततः ॥ भूतोपलब्धिर्भूतेभ्यो विभिन्ना विषयत्वतः ॥ सैवात्मा भौतिकाद्देहादन्योऽसौ परलोकभाक्' इति ॥ ५१ ॥ प्राक् पूर्वावस्थायाम् ॥ ५२ ॥ क्रूरः काठिनः । कं शिरः । अङ्कुरा हस्तादयः । षष्ठे छिद्राणीत्यग्रिमेणान्वेति ॥ ५३ ॥ विधेर्दैवयोगात् ॥ ५४ ॥ ५५ ॥ ५६ ॥ अनभिप्रेतं

अनभिप्रेतमापन्न आसनोत्थानचेष्टने ॥
पराधीनतया भुङ्क्ते स व्यथां वक्तुमक्षमः ॥ ५७ ॥
क्रीडासंभोगचिन्ताक्तो बाल्ययौवनवार्धके ॥
पुनरावर्ततेऽज्ञानी ज्ञानी चेन्मुच्यतेऽचिरात् ॥ ५८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्यां उपासनाकाण्डे तृतीयाष्टके सप्तमोऽध्यायः ॥ ७ ॥

विरुद्धम् ॥ ५७ ॥ ५८ ॥ इति तृतीये टीकायां सप्तमोऽध्यायः ॥ ७ ॥

॥ इति श्रीदत्तपुराणे रोग्युद्धारादिकथनं नाम
तृतीयाष्टके सप्तमोऽध्यायः ॥ ३ । ७ ॥

---

अथ बालविद्वच्चेष्टाभेदबन्धमोक्षमिथ्यात्वकथनं नाम तृतीयाष्टकेऽष्टमोऽध्यायः ॥ ३।८ ॥

हरिः ॐ ॥ इदमुत्यत्पुरुतमं ज्योतिरानन्दमात्मवान् ॥
ज्ञात्वाप्यस्थिरबोधोऽङ्ग द्वैताद्बिभेति तच्छृणु ॥ १ ॥
प्रतिष्ठाने द्विजः कश्चिज्ज्ञानविज्ञानतत्परः ॥
पूर्वाभ्यासाज्जन्मनैव मुक्तोप्यासीत्पिशाचवत् ॥ २ ॥
लोकसङ्गाद्भृशं भीतो विषयेभ्यो विषादवान् ॥
मानभीत्यापि सर्वज्ञो दुश्चेष्टा व्यकृणोद्धिया ॥ ३ ॥
जन्मनैव ग्रहग्रस्तं मत्वा तं पितरौ बुधम् ॥
चक्रतुः पुत्रवात्सल्यात्प्रतीकारं प्रयत्नतः ॥ ४ ॥
व्रतोपवासनियमजपशान्तिसुरार्चनैः ॥
रक्षाबन्धनसत्तीर्थयात्रादानौषधादिभिः ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥ हरिः ॐ ॥
बालस्य विदुषश्चेष्टा मिथ्यात्वं बन्धमोक्षयोः ॥
चतुर्विंशे कथ्यतेऽत्र संसारभ्रमकारणम् ॥ १ ॥

इदमपरोक्षं उ अपि त्यत् परोक्षं उपाधिवशाद्द्विधाभूतमपि पुरुतमं व्यापकं ज्योतिः स्वयंप्रकाशं चैतन्यमानन्दघनं सकृज्ज्ञात्वापि अस्थिरोऽसंभावनाविपरीतभावनानिवर्तको बोधो यस्य स निदिध्यासनपरिपक्वजैकात्म्यसाक्षात्काराभावाद्भयनिदानाद्द्वैताद्बिभेति । कथमिदमिह विरुद्धमुच्यते 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' इति श्रुतेरानन्दरूपब्रह्मणो विदुषः कुतो भयावकाश इत्यत आह—तच्छृण्विति ॥ १ ॥ २ ॥ लोकसङ्गाद्भृशं भीत इत्यनेनाद्याप्यसङ्गात्मत्वानुभवास्थैर्यत्वं द्योत्यते ॥ ३ ॥ ४ ॥ ॥ ५ ॥ न

प्रकृतिं न ययौ जाताः प्रयत्ना निष्फलास्तयोः ॥
मलं मूत्रं तथा भक्ष्यं पानमन्नं न वेद सः ॥ ६ ॥
मलोत्सर्गादि कुरुते तिष्ठन्वापि स्वपन्नपि ॥
अनर्थं किमपि ब्रूते न वेत्ति च हिताहितम् ॥ ७ ॥
उपनीतोऽष्टमेऽब्देऽपि सावित्रीं न जजाप सः ॥
न चक्रे शिक्षितोऽत्युच्चैः स संध्यावन्दनादिकम् ॥ ८ ॥
विष्णुदत्तस्य माहात्म्यं श्रुत्वा तं पितरौ गृहम् ॥
नीत्वा तस्योचतुः खिन्नौ भो ब्रह्मन्पाहि नः पितः ॥ ९ ॥
एक एव सुतो जातो जडो जन्मत आवयोः ॥
ग्रहग्रस्तोऽथवोन्मत्तो ज्ञात्वा नौ देहि जीवनम् ॥ १० ॥
पुत्रं कृतार्थं ज्ञात्वा तत्पितरौ प्राह स द्विजः ॥
विश्राम्यतां गृहे भुक्त्वा पुत्रो वामत्र तिष्ठतु ॥ ११ ॥
इत्युक्तौ तौ गतौ भोक्तुं विष्णुदत्तोऽवदत्स तम् ॥
कस्त्वं कस्य किमायातः किं ते कार्यं करोषि किम् ॥ १२ ॥
गम्यतां स्वपितुर्गेहे भुज्यतां सुखमुत्तमम् ॥
मया ते किं विधातव्यं त्यज चेष्टां वदाधुना ॥ १३ ॥

ययौ स बाल इति शेषः ॥ ६ ॥ अनर्थमर्थरहितमसंगतिकम् ॥ ७ ॥ सावित्रीं गायत्रीम् ॥ ८ ॥ तं तस्य गृहं नीत्वा ॥ ९ ॥ १० ॥ कृतार्थं मुक्तम् । वां युवयोः ॥ ११ ॥ कस्त्वमिति जातिवाचकः प्रश्नः । कस्येति संबन्धप्रश्नः । किमित्यागमनप्रश्नः । किं करोषीति क्रियानिमित्तः प्रश्नः ॥ १२ ॥ १३ ॥ आकाशकल्पस्याद्वितीयस्यात्मनो जातिसंबन्धगमनागम-

इत्युक्तः प्राह संबन्धो निजबोधात्मनः क्व मे ॥
किं करोमि क्व यास्यामि किं गृह्णामि त्यजामि किम् ॥१४॥

ततं कल्पाम्बुनेवेदमात्मना सच्चिदात्मना ॥
अन्नादोऽहमहं चान्नं किं मे भोग्यं सुखात्मनः ॥१५॥

तच्छ्रुत्वा तं समालिङ्ग्य दत्तभक्तोऽवदन्मुदा ॥
तर्ह्याचारेण विद्वंस्ते कोऽत्र दोषो भविष्यति १६ ॥

जागृतिस्तिसृषु स्वप्नस्तुर्या भूर्ब्रह्मवित्त्विह ॥
परा निद्रेह ब्रह्मज्ञवरो गाढसुषुप्तिका ॥ १७ ॥

क्रियाकारकाद्यसंभवात् तावत् प्रश्नोऽयमनुपपन्न इत्युत्तरमाह—संबन्ध इति । गमनाद्यभावं दर्शयति—ततं व्याप्तं अत एव न भोक्तृभोग्यादिविभागः किंत्वहमेवान्नमन्नादश्च । ननु प्रत्यक्षादिना भोक्त्रादेर्विद्यमानस्य कथमपलापः क्रियते न्यायादित्याह—न्यायस्तावत् 'भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्' इति । 'अद्वैतः बाध्यते नो वा भोक्तृभोग्यादिभेदतः । प्रत्यक्षादिप्रमासिद्धो भेदोऽसामान्यबाधकः ॥ तरङ्गफेनभेदेपि समुद्रेऽभेद इष्यते ॥ भोक्तृभोग्यविभेदेपि ब्रह्माद्वैतं तथास्तु तत्' इति । ब्रह्मनिष्ठस्य भृगोरप्यनुभवः श्रूयते 'अहमन्नमहमन्नमहमन्नं । अहमन्नादः' इत्यादि ॥ १४ ॥ १५ ॥ ॥ १६॥ शुभेच्छा १ विचारणा २ तनुमानसा ३ सत्वापत्तिः ४ असंसक्तिः ५ पदार्थाभाविनी ६ तुर्या ७ शुभेच्छादितिसृषु भूमिषु विद्यमानस्य जागृतिरवस्थोच्यते तुर्या भूः सत्त्वापत्तिः स्वप्नः । अत्र साधको ब्रह्मविदित्युच्यते । पञ्चम्यसंसक्तिनामिका भूः । अत्र निद्रा । अत्र विद्यमानो ब्रह्मविद्वर उच्यते षष्ठी गाढसुषुप्तिः । अत्र च विद्यमानो वरीयानुच्यते । तस्य पूर्ववत् स्वतो

षष्ठीहान्यत उत्तिष्ठेद्दरीयान्सोऽपि कर्मकृत् ॥
तुर्यान्त्यात्र वरिष्ठो ज्ञोऽक्रियस्तादृग्भवान्न हि ॥ १८ ॥
जीवन्मुक्तः सुखं तिष्ठ शिक्षयान्यान्क्रियाः कुरु ॥
बन्धो देहाभिमानोऽत्र तत्त्यागो मुक्तिरुच्यते ॥ १९ ॥
अहं ममेति संबन्धः कुतः स्वात्मदृशो भवेत् ॥
मानावमानजो दोषो निरहंकृतितः कुतः ॥ २० ॥
मानाद्यभावे विषयवासनाविक्रिया कुतः ॥
समाहितमनास्तस्मान्मुक्तोऽयं निरहंकृतिः ॥ २१ ॥
एवं सन्नपि नो मूढो बध्यते किं पुनर्भवान् ॥
मनोऽर्थसङ्गि बन्धाय निरर्थं मुक्तये च तत् ॥ २२ ॥
गृहकृत्यरतापि स्त्री परव्यसनिनी यथा ॥
तदेवास्वादयत्यन्तः परसङ्गरसायनम् ॥ २३ ॥
तथा ब्रह्मणि विश्रान्तः समाहितमनाः सुधीः ॥
तदेवास्वादयत्यन्तर्बहिर्व्यवहरन्नपि ॥ २४ ॥
दिवस्पृष्ठेऽङ्ग मोक्षो न पातालेऽपि न भूतले ॥
अहंकृतेर्विमोहस्य क्षयो मोक्षो न चापरः ॥ २५ ॥

नोत्थानं किंतु परत उत्तिष्ठते सोऽपि कर्मकर्ता । सप्तमी तुर्या तत्र विद्यमानो वरिष्ठ उच्यते । तस्य स्वतः परतो वा व्युत्थानाभावादक्रियत्वम् । भवांस्त्वद्यापि न तादृशः अतः कर्म कुरु ॥ १७ ॥ १८ ॥ शिक्षयेत्यनेन लोकसंग्रहार्थमुपदिश्यते न नियम्यते ॥ १९ ॥ ततो बन्धाभावमाह—अहमिति ॥ २० ॥ २१ ॥ अर्थसङ्गि विषयासक्तम् ॥ २२ ॥ उभयव्यवहारप्रवृत्तौ निदर्शनमाह—गृहकृत्येति ॥ २३ । दृष्टान्तमुक्त्वा दार्ष्टान्तिकेऽतिदिशति—तथेति ॥ २४ ॥ अहंकारनाश एव मोक्षो नान्य इत्याह—दिव इति ॥ २५ ॥

सुकरोऽहंकृतेस्त्यागः पुष्पावदलनादपि ॥
दृङ्मीलनादपि प्राज्ञ न क्लेशोऽत्र मनागपि ॥ २६ ॥

स्फूर्तिभ्रान्तिगतिव्याप्तिसंहृतिस्वान्यतामुखाः ॥
ज्ञात्वा चलमनश्चेष्टास्तत्परस्त्वं सुखी भव ॥ २७ ॥

निर्बन्धं न करोमि ज्ञ कंचित्कालं तथा वस ॥
पित्रोः प्रेम समालोच्य बन्धस्तेन न ते स्वदृक् ॥ २८ ॥

इत्युक्तः स तथेत्युक्त्वा भुक्त्वा तद्धाम्नि सङ्गजम् ॥
भयं साऽप्यन्नमाहात्म्याज्जहौ चेष्टाश्च कल्पिताः ॥२९॥

पितरौ प्रेक्ष्य तं शान्तं विप्रं नत्वोचतुः प्रभो ॥
को मन्त्रो भेषजं वास्य कल्पितं शीघ्रमुक्तिदम् ॥ ३० ॥

दत्तं नौ जीवनं ब्रह्मन्नित्युक्त्वा तौ गतौ गृहम् ॥
तदादिष्टोऽप्यभीः पुत्रस्तस्थौ धाम्न्यात्मसंगतः ॥३१॥

सोऽपि सुकर इत्याह ॥ २६ ॥ ननु नानाचेष्टासु विद्यमानासु कथं निरहंकारित्वं सिद्ध्येदिति चेच्चेष्टावतोपि मनसः साक्षित्वेनावस्थानादित्याह—स्फूर्तीति ॥ २७ ॥ तर्हि किमेवं कर्म कुर्विति निर्बन्धं करोषि, नेत्याह—निर्बन्धमिति । एवं सतोऽपि कथं बन्धो न स्यादित्यत आह । स्वमात्मानं पश्यतीति स्वदृक् तत्संबुद्धौ । तादृशस्य ते न बन्धो भवेत् ॥ २८ ॥ २९ ॥ ॥३०॥ धाम्नि पितृगृहे ॥३१॥ यस्मादेवं तस्मादेकमद्वितीयं सर्वशास्त्राणां

तदेकं शास्त्रतात्पर्यमज्ञस्यानुपदं भयम् ॥
भयमात्रावशेषो हि विज्ञानामृतसागरः ॥ ३२ ॥

बुद्धोऽपि सङ्गभीमात्रावृतो विप्रसुतो यथा ॥
तथा सर्वोऽपि लोकोऽयं मोहमात्रावृतो मृषा ॥ ३३ ॥

स्वात्मानमनुभूयापि सर्वदा चिद्घनं परम् ॥
कर्ता विकर्ता दाताहं भोक्ता च सुखदुःखयोः ॥ ३४ ॥
कोऽहं केऽमी कुतो मोहः क्व सुखं चेति चिन्तयन् ॥
भ्रान्त्यैव नित्यमुक्तोऽपि बहिर्धावति मुह्यति ॥ ३५ ॥
नासाभूषां यथा कण्ठे धृत्वा विस्मृत्य सा मम ॥
नष्टेति शोचत्यज्ञा स्त्री तथात्मार्थमयं जनः ॥ ३६ ॥
तदर्थं सर्वशास्त्राणि बोधयन्ति प्रकारतः ॥
मोहमात्रनिरासे हि पर्यवस्यन्त्यनुक्रमात् ॥ ३७ ॥

तात्पर्यम् । यद्यपि 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ॥ सर्वास्ता निष्फलाः प्रेत्य तमोमूला हि ताः स्मृताः' इति मनुनोक्तं तथापि हंसो जलमिश्रादपि दुग्धाद्दुग्धमेवादत्ते तद्वद्विचक्षणेन तर्कानुगृहीतश्रुत्यनुकूलाद्वैतमेवादेयं । अनेवंविदोऽज्ञस्यानुपदं भयमेव ॥ ३२ ॥ निगमयति—बुद्ध इति ॥ ३३ ॥ मृषात्वं विशदयति—स्वात्मानमिति ॥ ३४ ॥ ३५ ॥ सर्वापीयं भ्रान्तिरेवेत्यत्रोदाहरणमाह—नासेति ॥ ३६ ॥ ननु श्रुत्यापि विस्तरेणोपासनाद्युक्तं सफलस्यापि तस्य भ्रान्तिमात्रत्वं किमित्यत आह—तदर्थमिति । यदाहुः 'आश्रमास्त्रिविधा हीनमध्यमोत्कृष्टदृष्टयः । उपासनोपदिष्टेयं तदर्थमनुकम्पया' इति। तर्हि तेषां परस्परं विरुद्धसिद्धान्तानां मताश्रयाद्द्वैतं न भज्येत किमित्यत आह—पर्यवस्यन्तीति । यदाहुः 'स्वसिद्धान्त-

महान्त्यल्पानि शास्त्राणि नाणुमात्रश्रमाय हि ॥
स्वबुध्द्येदं विचार्येन्द्र वदेदं साध्वसाधु वा ॥ ३८ ॥

इत्युक्तो गुरुणाहेन्द्रो नत्वा साधूदितं गुरो ॥
क्षमस्वातिक्रमं मेऽद्य शास्त्रतत्त्वमवेदि सत् ॥ ३९ ॥

श्रीदत्तः प्राह राजेन्द्र संवादोऽयं मयोदितः ॥
शास्त्रैर्विप्रतिपत्तिः क्व सर्वाण्येकपराणि हि ॥ ४० ॥

मनोजवा गतिर्व्योम्नि विविधा योगसिद्धयः ॥
तत्सर्वं नश्वरं विद्धि मोक्षमेकं सनातनम् ॥ ४१ ॥

व्यवस्थासु द्वैतिनो निश्चिता दृढम् ॥ परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥ अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते ॥ तेषामुभयथा द्वैतं तेनायं न विरुध्यते ' इति ॥ ३७ ॥ ३८ ॥ अवेदि ज्ञातम् ॥ ३९ ॥ उदाहरणान्युपसंहरति—राजेन्द्रेत्यादि । एकपराण्यद्वैतब्रह्मप्रतिपादकानि ॥ ४० ॥ तर्हि योगादिशास्त्रेऽणिमादिसिद्धयः प्रतिपादितास्ता अप्यादेया इति चेत् 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति तत्र तत्र श्रुतौ ध्यानार्थमैकाग्र्यं प्रतिपादितं तदर्थमेव 'योगश्चित्तवृत्तिनिरोधः' इत्युपक्रम्य 'निर्वृत्तिकस्य तत्तदा द्रष्टुः स्वरूपेऽवस्थानं वृत्तिसारूप्यमितरत्र ' इत्यन्वयव्यतिरेकाभ्यां वृत्तिसत्त्वासत्त्वतोऽस्य प्रपञ्चतदभावौ प्रदर्श्य वैराग्याभ्यासपुरःसरमसंप्रज्ञातसमाधिरेव तात्पर्येण प्रतिपादितो नच सिद्धयः । ताश्चात्रानुषङ्गिका योगप्रवृत्त्यर्थं प्रदर्श्यन्ते न तात्पर्येण । प्रयोजनाभावात् । एवमन्यत्राप्यनया दिशा विनिश्चेयम् ॥ ४१ ॥ ननु मोक्षस्य सत्यत्वे बन्धस्य सत्यत्वं बलादा-

सोऽप्यात्मन्युपचारोऽयं बन्धः क्वास्योत मोक्षणम् ॥
अज्ञानजनबोधाय व्यवस्थेयं प्रकल्पिता ॥ ४२ ॥

सत्यं ज्ञानमनन्तं यद्ब्रह्माचिन्त्यमरूपकम् ॥
भ्रमेण कल्पितं नामरूपेऽत्र सदसत्परे ॥ ४३ ॥

मोहमात्रो भ्रमोऽनादिस्तन्नाशायात्र वस्तुनि ॥
विकल्पितत्वलक्ष्यत्वसंबन्धाद्यास्तु कल्पिताः ॥ ४४ ॥

जीव ईशश्च तद्भेदोऽविद्याचित्तद्युतिस्त्वियम् ॥
षडस्माकमनादीयं मृषा जीवेशकल्पना ॥ ४५ ॥

पतितं तथा सत्यनिर्मोक्षप्रसङ्ग इत्यत आह सोऽपीति। स मोक्षोऽप्यात्मन्युपचार एव वास्तवबन्धाभावात्। यदाहुः 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥ न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थता' इति ॥४२॥ ननूत्पत्त्याद्यभावे कथं ब्रह्मणि नामरूपप्रतीतिरित्यत आह-सत्यमिति। सत् कार्यं असत् कारणं तत्परे कार्यकारणसंबन्धवर्जिते ॥ ४३ ॥ सर्वं कल्पितं चेद्वाक्यलक्ष्यस्यापि तदन्तःपातित्वात्कल्पितस्य मिथ्यात्वाद्ब्रह्मणोऽपि मिथ्यात्वमिति चेन्नेत्याह–मोहेति। वाक्यलक्ष्यादेः शाखाचन्द्रन्यायेन विशुद्धात्मस्वरूपापरोक्षत्वपर्यवसानान्न कल्पितत्वमिति भावः ॥ ४४ ॥ नन्वेवं भ्रमानादित्वे जीवेशभेदस्य सुस्थिरत्वान्न मोक्षं प्रत्याशेत्यत आह–जीव इति। तद्भेदो जीवेश्वरभेदः। तद्युतिरविद्याचिद्योगः ॥ ४५ ॥ ननु प्रत्यक्षतो दृश्यमानस्य कथं कल्पितत्वमिति चेत् तत्कालं दृष्टस्याप्युत्तरक्षणं बाधितत्वाद्दृष्टिसृष्टस्य

रौप्यं शुक्ताविव स्थाणाविव तस्कर आत्मनि ॥
नाविद्यातः कुतो भेदः केन योगः परात्मनः ॥ ४६ ॥

मिथ्याभ्रमोऽप्यनर्थाय यतो भेदो विमोहदः ॥
योगादिस्तद्विनाशाय नैवायं वस्तुसिद्धये ॥ ४७ ॥

वस्तु सत्स्वप्रकाशं नो न क्वाप्यन्यदपेक्षते ॥
भ्रममात्रान्तरे त्वत्र विकल्पो नैव वस्तुनि ॥ ४८ ॥

द्वैतं नास्त्यत्र नासीत्प्राङ् न भविष्यत्यनर्थकम् ॥
अपि भातं मृषैवेन्द्रजालवत्तन्मनोमयम् ॥ ४९ ॥

भ्रम एव जगत्सर्वं भ्रम एवास्य संसृतिः ॥
भ्रमे सति प्रणष्टेऽस्मिन्नेकः स्वात्मैव शिष्यते ॥५०॥

मिथ्यात्वमेवेत्युदाहरणेन स्फुटयति–रौप्यं शुक्ताविवेति । यत आत्मन्यविद्यैव नास्त्यतः कुतस्तरां भेदप्रसङ्गः । एवं सत्यपि भेदादियोगं कल्पयसि चेद-सङ्गस्य केन योगः कल्पित इति वद ॥ ४६ ॥ तर्हि भ्रमस्य मिथ्यात्वे आत्मनोऽसङ्गत्वे च किमर्थं शास्त्रादिविचारो ध्यानादिकं वेत्यत आह–मिथ्येति । भिद्यत इति भेदः द्वैतं विमोहदः विशेषेण वैचित्यदः । तर्हि कथं तन्नाश इत्यत आह–योगादिरिति । तर्हि योगेन किं वस्तुसिद्धिर्भवति, नेत्याह—नैवेति ॥ ४७ ॥ कुतः । यतः वस्तु सत् कालत्रयाबाधम् ॥ ४८ ॥ अस्तु नाम द्वैतस्य पूर्वं पश्चाद्वा अभावः, वर्तमानस्य तु कथमपलाप इत्यत आह–द्वैतमिति । 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इति न्यायात्सुषुप्तिसमाध्यादौ तदभावाच्च कालत्रयेपि द्वैतं नैव ॥ ४९ ॥ यस्मा-देवं तस्माद्भ्रम इति ॥ ५० ॥ उपोद्घातमुपसंहरति–तस्मादिति । ज्ञानं

तस्माद्भ्रमं निराकृत्य ज्ञानयोगपरो नरः ॥
इहैव भजति स्वस्थः परमानन्द आप्लुतः ॥ ५१ ॥
इति श्रुत्वा गुरोर्वाक्यमर्जुनो नष्टसंशयः ॥
स्थैर्याय प्राप्तबोधस्य पर्यपृच्छत्त्र्यधीश्वरम् ॥ ५२ ॥

**इति श्रीमद्दत्तात्रेयपुराणे सा० त्रि० सं० वासु० उपासनाकाण्डे तृतीयाष्टकेऽष्टमोऽध्यायः समाप्तः ॥३।८॥**

शास्त्रीयं योगो ध्यानं तत्परः ॥ ५१ ॥ ५२ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्त्र्यां संहितायां त्रिकाण्डमण्डितायां वासुदेव्यां उपासनाकाण्डे तृतीयाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥ इति तृतीयाष्टकः संपूर्णः ॥ श्रीदत्तार्पणमस्तु ॥

**॥ इति उपासनाकाण्डे तृतीयाष्टकः संपूर्णः ॥**

# ॥ अथ श्रीमद्दत्तात्रेय० चतुर्थाष्टकप्रारम्भः ॥

———:0:———

## अथ षड्लिङ्गैः श्रवणमहावाक्यार्थबोधो नाम चतुर्थाष्टके प्रथमोऽध्यायः ॥ ४।१ ॥

हरिः ॐ ॥ त्वामग्ने रविचन्द्रादेर्भासकं लोकचालकम् ॥
पृच्छामीदं कथं ज्ञानमाप्नुयां दयया वद ॥ १ ॥
इति पृष्टोऽर्जुनेनाह श्रीदत्तः शृणु भूपते ॥
यदेकं परमं ब्रह्म नित्यमुक्तमविक्रियम् ॥ २ ॥
तत्स्वशक्तिसमाविष्टमीशमाहुर्मनीषिणः ॥
स विष्णुः स शिवो ब्रह्मा सोऽग्निरिन्द्रः स्वराड्ढरिः ॥३॥
धाता कालः क्रिया कर्ता जीवनं मृत्युरामयः ॥
नारायणो हृषीकेशो भूतं भव्यं भवच्च सः ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥ हरिः ॐ ॥

अध्यायेऽस्मिन्पञ्चविंशे षड्लिङ्गैः श्रवणादिकम् ॥
महावाक्यार्थबोधश्च कार्तवीर्याय कथ्यते ॥ १ ॥

अग्नेः सूर्यचन्द्रादेरपि भासकं त्वाम् ॥ १ ॥ २ ॥ 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति न्यायमनुसृत्य तावदध्यारोपं प्रपञ्चयति –तदिति । 'स ईक्षत लोकान्नु सृजै', 'सोऽकामयत बहु स्यां', 'स ऐक्षत०', 'स ईक्षांचक्रे०', 'इन्द्रो मायाभिः पुरुरूप ईयत' इत्यादि-

वस्तुमात्रमिदं सर्वमहमेवास्मि सर्वदृक् ॥
अहमेव परं ध्येयं मिथ्याभ्रमनिवृत्तये ॥ ५ ॥

भ्रमस्यापि च नामानि कल्पितानि शृणुष्व तत् ॥
मायाविद्या परा देवी मनोऽनादिर्भ्रमस्त्रिवृत् ॥ ६ ॥

प्रधानं प्रकृतिर्ब्रह्म योनिः शक्तिश्च कारणम् ॥
मोहोऽध्यासस्तमोऽज्ञानं प्रस्वापः कारणं त्विदम् ॥७॥

अतोऽविद्या पञ्चपर्वा महामोहो द्विरूपकः ॥
विक्षेपावृतिशक्त्याख्य आद्यात्सर्गोऽत्र भौतिकः ॥ ८ ॥

स्वरूपमावृणोत्यन्यो मुक्तं चेशं विना भृशम् ॥
योऽविद्यार्तोऽवशो दुःखी भ्रान्तोऽज्ञो जीव एव सः ॥९॥

श्रुतिभ्य ईक्षणपूर्वकं जगद्भावापत्तिक्षमशक्तिसहितादभिन्ननिमित्तोपादानादीश्वरादेव जगदुत्पत्तिः श्रूयतेऽतोयं न विसंवादः । ननु सत्त्वाद्युपाधियुक्तेभ्यो विष्ण्वादिभ्यः स्थित्यादि स्मर्यतेऽत आह-विष्णुरिति ॥ ३ ॥ ४ ॥ यः शक्तिविशिष्टः स सर्वात्मकः । क्वासावीश्वर इत्यपेक्षायामाह—अहमेवेति । ननु परिच्छिन्नस्य भवत ईदृक्त्वं कुत इत्यत आह—सर्वदृगिति । ननु सर्वदृशः परिच्छिन्नत्वं घटते तर्हि किमर्थमियं साकारतेति चेन्निजभजकभ्रमनिवृत्तये सुखेन ध्यानार्थमित्याह—अहमेव परं ध्येयमिति । ब्रह्मेत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ पञ्चपर्वाऽविद्यैव कारणं तत्कार्यभूतो मोहो विक्षेपावरणाभ्यां द्विरूपकः । तत्र तयोर्मध्ये आद्याद्विक्षेपादेव भूतभौतिकसृष्टिः ॥८॥ ननु विक्षेपादेव सृष्टिश्चेदावरणस्य किं कार्यमत आह—स्वरूपमिति । अन्य आवरणाख्यः ईश्वरं मुक्तं च विहायान्येषां स्वरूपमावृणोतीत्र । ननु को मुक्तः को वान्यो जीव इत्यत आह—य इति ॥ ९ ॥ तयोरन्यः क

समष्टिरीशः सर्वज्ञो वशमायः स्वराट् सुखः ॥
असत्त्वाभानाख्यभक्तावृतिहृद् गुरुरप्यसौ ॥ १० ॥

मतं मूढैर्जगन्नित्यं तथा जीवेशयोर्भिदा ॥
एवं भेदत्रयेणेदं भातं वस्त्वेव मायया ॥ ११ ॥

तन्निवृत्त्यै कृता वेदैः सृष्टिप्रलयकल्पना ॥
मूढस्य सा मता सत्या भ्रमोऽयं लीयते विदा ॥ १२ ॥

ज्ञानं विद्येति तां प्राहुर्द्वेधा विद्या विचारजा ॥
परोक्षा चापरोक्षेति तत्राद्या गुरुवक्त्रतः ॥ १३ ॥

अमानित्वादियुक्तैः सा विज्ञेया साधनान्वितैः ॥
गुरुभक्तिं विना सापि दुर्लभा मोक्षदायिनी ॥ १४ ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ १५ ॥

गुर्वनुग्रहमात्रेण विचारः सुलभो नृणाम् ॥
विचारेण परं तत्त्वं स्वयमेव प्रकाशते ॥ १६ ॥

ईश्वर इत्यत आह–समष्टिरिति । अत्रेश्वराभिन्नत्वं गुरोः प्रतिपादितम् ॥ १० ॥ नन्वेवं सति कथं जगतो नित्यत्वं मतं, मौढ्येनेत्याह–मतमिति ॥११॥ तथा चेत्कुतः सृष्ट्यादिकल्पनेत्यत आह–तदिति । तर्ह्यस्य भ्रमस्य कथं लय इत्यत आह—विदा औपनिषदज्ञानेनायं भ्रमो लीयते नान्यथा । 'नान्यः पन्था अयनाय विद्यते' इति श्रुतेः ॥ १२ ॥ सा द्विधा ॥१३॥ ॥ १४ ॥ ननु शास्त्रावगतौ किं गुरुणेत्यत्र श्वेताश्वतरश्रुतिमर्थतः पठति ॥१५॥ काठकश्रुतिमपि 'नैषा तर्केण' इत्यर्थतः पठति—गुर्विति ॥१६॥

राजंस्त्वयाखिलं कर्म योगयागादिकं मयि ॥
समर्पितं ततोऽयं ते विचारोऽद्य समुत्थितः ॥ १७ ॥
वैराग्यं परमं जातं भ्रममोहमलापहम् ॥
अतो विद्याप्रसादस्ते भविष्यत्यचिरेण हि ॥ १८ ॥
विद्या ज्ञेया परोक्षेयं वेदान्तश्रवणात्मिका ॥
उपक्रमादिभिर्लिङ्गैर्यत्तात्पर्यावधारणम् ॥ १९ ॥
तदेव श्रवणं तत्तु हरेत्संशयभावनाम् ॥
असत्त्वावरणं चापि वस्त्वस्तीति तदेक्षते ॥ २० ॥
मननं कार्यमस्येदमाश्वसंभावनाहरम् ॥
वशीकाराख्यवैराग्ययुक्तस्येदं सुखावहम् ॥ २१ ॥

भगवति सर्वकर्मसमर्पणाद्भगवत्प्रीतिस्ततो विचारोदय इति समुचितम्। स्मर्यते च 'ईश्वरानुग्रहादेव पुंसामद्वैतवासना' इति ॥ १७ ॥ परं वैराग्यं वशीकारसंज्ञम्। भ्रमो मिथ्यामतिः। मोहो वैचित्यम्। उपेक्षणीये दोषानुदयः मलः। कायिकं वाचिकं मानसं च पापं रागादयो वा। ते हि चित्तमला इत्युच्यन्ते एतानपहन्तीति तथा। विद्याप्रसादः। शान्तिः कैवल्यलक्षणा ॥ १८ ॥ पूर्वोक्तयोः परोक्षापरोक्षयोर्विद्याविद्ययोर्मध्ये परोक्षविद्यामाह। इयं श्रवणात्मिका परोक्षा विद्या ज्ञेया। श्रवणलक्षणमाह —उपक्रमादिभिरिति ॥ १९ ॥ षड्विधलिङ्गैस्तात्पर्यावधारणं श्रवणं तत्संशयभावनां हरेत् सर्ववेदान्तानामद्वैते पर्यवसानात्। न केवलमियदेव किंतु असत्त्वावरणमपि हरेत्तदा साधको वस्त्वस्तीति परोक्षतयेक्षते निश्चिनोतीत्यर्थः ॥ २० ॥ मननं असंभावनादोषहरं तच्च पातञ्जलोक्तवशीकाराख्यवैराग्ययुक्तस्य सुखावहं सजातीयप्रत्ययप्रवाहीकरणक्षमत्वात् ॥ २१ ॥

आत्मैव नेह नानास्ति मोहितस्य जगत्त्विदम् ॥
भाति नान्यस्य मिथ्येदं स्वप्नो निद्रागमे यथा ॥ २२ ॥
विषयान्ध्यायतो यद्वन्मनोरथपरम्परा ॥
असत्येव सदा भाति नानाविषयगोचरा ॥ २३ ॥
परमात्मैक एवाहं वस्तुमात्रश्चिदात्मकः ॥
मयि मिथ्याविभागोऽयं दृश्यतेऽनाद्यविद्यया ॥ २४ ॥
भ्रमो मोहो महामाया प्रधानं प्रकृतिर्मनः ॥
अज्ञानं शक्तिरव्यक्तं गुणसाम्यमितीरिता ॥ २५ ॥
सैव मिथ्यामतिर्यस्या इदं भातं चराचरम् ॥
एवं विचारश्रवणानुसारि मननं तु तत् ॥ २६ ॥
सच्चिदानन्दलक्ष्मापि परात्मा माययाऽऽवृतः ॥
निजं स्वरूपं विस्मृत्य ययेदं दृश्यते जगत् ॥ २७ ॥
महांस्ततोऽहमस्तस्मात्तन्मात्राणि ततः क्रमात् ॥
भूतेन्द्रियसुराणां च सर्गकृयात्माऽहमः क्रमात् ॥ २८ ॥

मननमाह—आत्मैवेति ॥ २२ ॥ २३ ॥ मिथ्यामतिपर्यायानाह—भ्रम इति ॥ २४ ॥ कासौ मिथ्यामतिः सैवेत्याह ॥२५॥२६॥ माययावृतः सन्निजं रूपं विस्मृत्य संसरतीति शेषः। ययावृतः का सा मायेत्यत आह— ययेदं द्वैतं दृश्यते ॥२७॥ यत इदं दृश्यते तत इति संबन्धः। ज्ञानक्रियात्मा महान् त्र्यात्माहमस्त्रिगुणात्मकाद्भूतादेरहंकाराच्छब्दादितन्मात्रकारणात्ताम-सादभूतानि तेषामावरणस्वभावात्। तस्मादेव तैजसाख्याद्राजसात्प्राणाः कर्मेन्द्रियाणि च प्रवृत्तिस्वभावत्वात्। तस्मादेव वैकृताख्यात् सात्त्विकाद्देवता मनश्च प्रकाशस्वभावात् ॥२८॥ ननु क्वचिद्युगपत्सृष्टिः क्वचित्क्रमसृष्टिः क्वचि-

नह्यत्र नियमो राजन्नसत्ये मानसभ्रमे ॥
कदाचिद्युगपत्सृष्टिः क्रमसृष्टिः कदाचन ॥ २९ ॥

देहाः सुरासुरनरतिरश्चां भौतिका इमे ॥
स्थूलैः स्थूलानि सूक्ष्मैश्च सूक्ष्माण्येवं भवोद्भवः ॥३०॥

उपक्रमोऽयमाख्यात उपसंहार उच्यते ॥
भूतेषु भौतिकानीह क्रमाद्योगी विलापयेत् ॥ ३१ ॥

पृथ्वी जले जलं वह्नौ वह्निर्वायौ स खे च खम् ॥
अहमि प्राणगोदेवा मनश्चापि स्वकारणे ॥ ३२ ॥

दाकाशादिसृष्टिः क्वचिल्लोकसृष्टिः क्वचित्प्राणादिसृष्टिरिति सृष्टौ विसंवादाः । क्वचिदसतः क्वचित्सतः क्वचिदात्मन इत्यादिदर्शनात्तत्कार्यकारणविसंवादे किं सत्यमिति चेत् सच्छब्देनात्मग्रहणात्सदात्मनोः पर्यायत्वाच्चाव्याकृतात्मनोऽसच्छब्दवाच्यत्वाच्च कारणे तावद्विसंवादो नास्ति, कार्ये तु तात्पर्याभावात् प्राणेन्द्रियसंवादादिवदर्थवादत्वान्न नियमापेक्षेत्याह–नहीति । यदाहुः— 'मृल्लोहविस्फुलिङ्गाद्यैर्या सृष्टिश्चोदितान्यथा ॥ उपायः सोऽवताराय नास्ति भेदः कथंचन' इति । अज्ञानादेव सर्वमिदं जातमिति युगपत्सृष्टिः । महदहंकारादितः क्रमसृष्टिः । 'द्विविधस्वप्नसद्भावाद्द्विविधसृष्टिदर्शनात्' इत्यभियुक्तोक्तेः ॥२९॥ सर्वे देहा भौतिकाः स्थूलैर्भूतैः स्थूलानि शरीराणि सूक्ष्मैश्च सूक्ष्माणि ॥३०॥ अयमेवोपक्रमः । उपसंहारस्तु व्युत्क्रमत एव । 'विपर्ययेण तु क्रमोत उपपद्यते' इति न्यायात् । 'सृष्टिक्रमो लये ज्ञेयो विपरीतक्रमोऽथवा ॥ क्लृप्तं क्लृप्त्याद्वरं तेन लयो सृष्टिक्रमो भवेत् ॥ हेतावसति कार्येऽस्य न सत्त्वं युज्यते ततः ॥ पृथिव्यप्स्विति चोक्तत्वाद्विपरीतक्रमो लयः ' इति ॥ ३१ ॥ प्राणेन्द्रियदेवा मनश्च कारणभूतेऽहंकारे ॥ ३२ ॥ एवं सर्वप्रविलयावधिभूतः

अहंकारोऽपि महति सोऽव्यक्ते तच्च निष्कले ॥
स एवाहं परात्मैकः शुद्धो मुक्त उपाधितः ॥ ३३ ॥
एवं निदिध्यासनत एकः स्वात्मैव शिष्यते ॥
तस्मान्नास्त्यपरं किंचिदात्मैवायं यथा तथा ॥ ३४ ॥
राजन्मम प्रसादात्त्वं खलु धन्योऽस्यसंशयम् ॥
अन्तःकरणशुद्धिस्ते जाता वैराग्यमुत्तमम् ॥ ३५ ॥
मयि भक्तिर्दृढा प्रेम्णा श्रवणं चापि विस्तरात् ॥
प्रपञ्चास्थापि चित्तस्था सर्वथा विलयं गता ॥ ३६ ॥
तत्त्वमेकं परं ब्रह्म न द्वितीयं कदापि हि ॥
एवं शमादिरूपां तामारूढो भव भूमिकाम् ॥ ३७ ॥
त्वं साक्षात्कारसूपायक्रमं विध्यथ भूपते ॥
दत्तचित्तो भवाद्यात्र तत्त्वनिश्चयकारक ॥ ३८ ॥
सर्वसाधनसंपन्नः पुरुषो जातनिश्चयः ॥
श्रोत्रियं ब्रह्मनिष्ठं तं सद्गुरुं शरणं व्रजेत् ॥ ३९ ॥
तत्त्वमस्यादिवाक्यार्थमुपदिष्टं तु षड्विधैः ॥
लिङ्गैर्धिया समालोच्य बुधः समवधारयेत् ॥ ४० ॥

परात्मैक एव निरुपाधिकः स एवाहम् ॥ ३३ ॥ तस्मात्स्वात्मनोऽपरं किंचिन्नास्त्येव । शून्यवादं व्यावर्तयति—आत्मैवेति ॥ ३४ ॥ ३५ ॥ मयि मद्विषये ॥ ३६ ॥ ३७ ॥ तत्त्वनिश्चयकारके उपदेशे दत्तचितो भव ॥ ३८ ॥ सर्वसाधनानि नित्यानित्यविवेकादीनि तैः संपन्नः । श्रोत्रियं शाब्दज्ञं अपरोक्षीकृतस्वात्मरूपं ब्रह्मनिष्ठं च । श्रुतिश्च 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं' 'अनन्यप्रोक्ते गतिरत्र नास्ति' इत्यादि ॥ ३९ ॥ लिङ्गैर्वक्ष्यमाणैः । धिया सूक्ष्मबुद्ध्या ॥ ४० ॥

श्रवणं त्विदमेवोक्तं तत्समासेन ते ब्रुवे ॥
यतस्त्वं शिष्यतां प्राप्तो मत्सेवाहतकिल्बिषः ॥ ४१ ॥
तत्पदेन परं ब्रह्म त्वंपदेन च पूरुषम् ॥
अनूद्यैक्यं तयोर्भूप बोध्यतेऽसिपदेन सत् ॥ ४२ ॥
विरुद्धस्य त्वमर्थस्य तदर्थत्वं कथं भवेत् ॥
इति चेच्छृणु राजेन्द्र तयोरैक्ये निदर्शनम् ॥ ४३ ॥
देवदत्तः क्वचिद् दृष्टो युवा देशान्तरे स च ॥
पुनर्दृष्टो जरां प्राप्तः सोऽयमित्यवधार्यते ॥ ४४ ॥
पूर्वदेशमवस्थां च त्यक्त्वेदं तस्य वार्धकम् ॥
देशं चापि यथैकेन पिण्डेनैक्यं प्रतीयते ॥ ४५ ॥
त्यक्त्वा द्व्यंशौ तथात्रापि वाक्य ऐक्यं हि लक्ष्यते ॥
त्वंपदस्य च वाच्यार्थः संसारीति सुनिश्चितः ॥ ४६ ॥
कर्ता भोक्ता सुखी दुःखी माययैव न तत्त्वतः ॥
देहेन्द्रियमनःप्राणाहंकारेभ्यो विलक्षणः ॥ ४७ ॥
वस्तुतः सच्चिदानन्दस्वरूपो गुणगोचरः ॥
एकांशस्तत्र चिद्रूपमन्यः संसारितास्य च ॥ ४८ ॥

समासेन संक्षेपेण ॥ ४१ ॥ पुरुषं धीस्थजीवम् । असिपदेन सामानाधिकरण्येन ॥ ४२ ॥ ननु कामकर्मादिदूषितस्य विरुद्धस्य त्वमर्थस्याखण्डैकरसं तदर्थत्वं कथमिति शङ्कते–विरुद्धस्येति ॥ ४३ ॥ परिहरति दृष्टान्तावष्टम्भेन–देवदत्तेति ॥ ४४ ॥ ४५ ॥ एवं दृष्टान्ते लक्षणयैक्यं प्रदर्श्य दार्ष्टान्तिके दर्शयति–त्यक्त्वेति । त्वंपदस्य को वाच्यार्थः को वा लक्ष्यार्थ इत्यत आह सार्धद्वयेन ॥ ४६ ॥ ४७ ॥ ४८ ॥ तद्ब्रह्म न भवतीत्यतत् अतत्तो

एवं त्वमर्थं निश्चित्य तदर्थमपि निश्चिनु ॥
अतद्व्यावृत्त्या विधिना साक्षाच्च श्रुतियुक्तितः ॥ ४९ ॥
तत्पदस्य च वाच्यार्थः सर्वज्ञः परमेश्वरः ॥
तस्यैकोंशोऽपि चिद्रूपं सर्वज्ञत्वादि चापरः ॥ ५० ॥
त्यक्त्वा विरुद्धवाच्यांशद्वयं जीवेशयोरिह ॥
लक्ष्यौ चिदंशौ निर्बाधं पदयोरुभयोरपि ॥ ५१ ॥
अविरुद्धं तयोरैक्यं लक्षणालक्षितं द्वयोः ॥
वाक्यार्थोऽयं सुनिष्पन्नस्त्वं ब्रह्म परमं हि तत् ॥ ५२ ॥
तदेव त्वं परं ब्रह्म नास्ति भेदः कथंचन ॥
अखण्डैकरसत्वेन वाक्यार्थोऽत्र सतां मतः ॥ ५३ ॥
विशेष्यं त्वंपदं तस्य तत्पदं च विशेषणम् ॥
निरस्यतेऽस्य दुःखित्वं सुखित्वं च विधीयते ॥ ५४ ॥

व्यावृत्तिर्निषेधः तया सत्यं ज्ञानमनन्तमिति साक्षाद्विधिमुखेन च श्रुत्यनुकूलयुक्तितश्च । अत्र 'अस्थूलमनणु', 'नान्तःप्रज्ञं न बहिःप्रज्ञं', 'अशब्दमस्पर्शमरूपम्' इत्याद्या अतद्व्यावृत्तिः ॥ ४९ ॥ तत्पदस्यापि वाच्यार्थलक्ष्यार्थावाह–तदिति ॥५०॥ एवं सति विरुद्धयोरुभयवाच्यांशयोस्त्यागेन भागलक्षणयोभयोर्लक्ष्यांशयोरैक्यं निर्बाधम् । यदुक्तं—'तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा ॥ सोयमित्यादिवाक्यस्थपदयोरिव नापरा' इति ॥५१॥ निर्णयमाह–अविरुद्धमिति ॥ ५२ ॥ एवं व्यतिहारेणैक्यं प्रतिपाद्य सदाचारं प्रमाणयति–अखण्डेति । यदाहुः 'संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः ॥ अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः' इति ॥ ५३ ॥ त्वमर्थस्य दुःखित्वादिनिरासेन सुखित्वादिविधानार्थं विशेष्यविशेषणयोजनमाह—विशेष्यमिति ॥ ५४ ॥ एवं वैपरीत्येन

वैपरीत्येन विज्ञेयं विशेष्यं तत्पदं तथा ॥
विशेषणं त्वंपदं च पारोक्ष्यस्य निरासकृत् ॥ ५५ ॥

तद्ब्रह्म परमं शुद्धं त्वमात्मैव निरामयः ॥
इत्यैक्यं भूप विज्ञेयं वेदोक्तं गुर्वनुग्रहात् ॥ ५६ ॥

स्वात्मैक्यार्थमियं प्रोक्ता सुधीभिर्भागलक्षणा ॥
त्रिकाण्डेनापि वेदेन सोऽयमर्थो विनिश्चितः ॥ ५७ ॥

स्थूलधीभिः सुदुर्ज्ञेयो विज्ञेयो हि मनीषिभिः ॥
पर्यवस्यन्ति वेदाद्या अत्रैव विविधा अपि ॥ ५८ ॥

शास्त्रतत्त्वमविज्ञाय मूढाः शास्त्राणि सर्वशः ॥
ते प्रवृत्तिपराण्येव कथयन्ति कुतर्कतः ॥ ५९ ॥

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ॥
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ ६० ॥

तत्पदस्य परोक्षतानिरासमाह— एवमब्रह्मत्वपरोक्षत्वयोर्व्यावर्त्यभेदेनैक्यमुक्तम् । तथाहि वाक्यवृत्तौ— 'नीलोत्पलवैलक्षण्येनायमर्थोऽभिहितः—'प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः ॥ अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥ इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ॥ अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥ तदर्थस्य च पारोक्ष्यम्' इत्यादि ॥ ५५ ॥ ॥ ५६ ॥ ५७ ॥ सुधिय एवाधिकारिण इत्याह—स्थूलेति । अत्रैव सर्वशास्त्रपर्यवसानम् ॥ ५८ ॥ ५९ ॥ के ते उपक्रमादय इत्यत आह— उपक्रमेति । स्पष्टम् ॥ ६० ॥ तावदुपक्रमोपसंहाराख्यं प्रथमं लिङ्गमाह

प्राक् सदैवेत्युपक्रम्यैतदात्म्यमिदमेव सत् ॥
उपसंहृतमित्येकमभ्यासो नवधा परम् ॥ ६१ ॥

शाब्देनैव ह्यखण्डार्थविषयत्वं तृतीयकम् ॥
तुर्यं विदेहकैवल्यं प्रारब्धान्ते विवेकिनः ॥ ६२ ॥

षष्ठं मृदादिदृष्टान्तैर्निर्णयस्तूपपत्तिकम् ॥
सृष्टिस्थित्यन्तप्रवेशानियमः शोधनं फलम् ॥ ६३ ॥

सप्तार्थवादास्तद्रूपं पञ्चमं लिङ्गमुच्यते ॥
सर्वस्यात्मन उत्पत्तेरवस्थानाच्च तत्र हि ॥ ६४ ॥

पुनर्लयाज्जगौ वेदः कारणब्रह्ममात्रताम् ॥
सूर्यस्येव जले चात्र प्रवेशमपि चात्र तु ॥ ६५ ॥

'सदेव सोम्येदम्' इत्युपक्रम्य 'तदैक्षत' इत्यध्यारोपं प्रपञ्च्य 'ऐतदात्म्यमिदं सर्वम्' इत्युपसंहृतमिदमेकं लिङ्गम्। प्रकारान्तरेण नवकृत्वस्तत्त्वमसीति द्वितीयमभ्यासाख्यं लिङ्गम् ॥ ६१॥ प्रत्यक्षाद्यगोचरस्य शाब्देनैवाखण्डार्थविषयत्वं तृतीयम्। 'तस्य तावदेव चिरम्' इति विवेकिनः प्रारब्धभोगान्ते विदेहकैवल्यं चतुर्थम् ॥ ६२ ॥ 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' इति दृष्टान्तैर्निर्णय इत्युपपत्त्याख्यं षष्ठम् ॥ ६३ ॥ सप्तार्थवादरूपं पञ्चमम्। सर्वस्य तेजोऽबन्नादिप्रपञ्चस्यात्मन एवोत्पत्तेस्तस्मिन्नेवावस्थानात् पुनस्तत्रैव लयाच्च कारणब्रह्ममात्रतावगमादुत्पत्तिस्थितिविलयैरपि तात्पर्यमत्रसेयम् ॥ ६४ ॥ 'अनेन जीवेनात्मनानुप्रविश्य' इति जीवरूपेण प्रवेशरूपश्चतुर्थार्थवादः ॥ ६५ ॥ 'यः पृथिव्यां

अन्तर्यामितया भेदात्सदा नियमनं स्मृतम् ॥
तथा रोहितरूपाद्यैः पदार्थपरिशोधनम् ॥ ६६ ॥
अभेदज्ञानस्य परं स्वात्मैक्यममृतं फलम् ॥
एवं सप्तार्थवादात्मलक्षणं पञ्चमं मतम् ॥ ६७ ॥
षड्लिङ्गैरिति तात्पर्यावधृतिः श्रवणं स्मृतम् ॥
आस्थायाथो योगभूमिं मननादि चरेद्बुधः ॥ ६८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां उपासनाकाण्डे चतुर्थाष्टके प्रथमोऽध्यायः ॥ १ ॥

तिष्ठन्' इत्यन्तर्यामितया भेदात्पञ्चमोऽर्थवादः । 'यदग्ने रोहितं रूपम्' इति पदार्थशोधनरूपः षष्ठः 'अमृतः समभवत्' इत्यभेदज्ञानस्य स्वात्मैक्यममृतं फलं सप्तमोऽर्थवाद एतदात्मकं पञ्चमं लिङ्गम् ॥ ६६ ॥ ६७ ॥ एवं षड्विधलिङ्गैस्तात्पर्यावधारणं श्रवणम् ॥ ६८ ॥ इति चतुर्थे टीकायां प्रथमोऽध्यायः ॥ १ ॥

इति श्रीदत्तपुराणे चतुर्थाष्टके प्रथमोऽध्यायः ॥ ४।१ ॥

---

## अथाष्टाङ्गयोगयोग्याचारयोगचर्या नाम चतुर्थाष्टके द्वितीयोऽध्यायः ॥ ४।२ ॥

हरिः ॐ मही महेश योगस्य मयास्थेया कथं वद ॥
इति पृष्टोऽर्जुनेनाह साङ्गं योगं त्र्यधीश्वरः ॥ १ ॥
अष्टाङ्गो योग इत्येके षडङ्ग इति चापरे ॥
विसंवादो नोभयत्र शृणु तत्त्वं ब्रवीमि ते ॥ २ ॥
अष्टाङ्गयोगो यमाद्यैः षडङ्गस्त्वासनादिभिः ॥
यमानां नियमानां च स्वभावेन विधानतः ॥ ३ ॥
आसनादिः षडङ्गोऽतः सप्ताङ्गं केचनाब्रुवन् ॥
सप्ताङ्गानि समाधिस्तु फलमेवेति तन्मतम् ॥ ४ ॥
समाधिं द्विविधं मत्वा सविकल्पाविकल्पकम् ॥
अङ्गेष्वेकं समादाय द्वितीयं फलमुच्यते ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥ हरिः ॐ ॥

षड्विंशे तु विसंवादमष्टाङ्गं योगमुक्तवान् ॥
योग्याचारं योगचर्यामर्जुनाय च तत्फलम् ॥ १ ॥

महस्योत्सवस्य महतां वेशः महांश्चासावीशश्च वा तत्संबुद्धौ । योगस्य मही भूमिः ऐकाग्र्यसंज्ञा मया कथमास्थातुं योग्येति प्रश्नः । उत्तरमाह—त्र्यधीश्वर इन्द्रियान्तःकरणप्राणनियामकः ॥ १ ॥ उभयत्र पक्षद्वयेऽपि ॥ २ ॥ विसंवादं परिहरति—यमानामिति ॥ ३ ॥ पक्षान्तरमाह—सप्ताङ्गमिति । तन्मते समाधिः फलम् ॥ ४ ॥ तर्ह्यष्टाङ्गयोगो न सिद्ध्यतीत्यत आह—समाधिमिति । सविकल्पो निर्विकल्प इति तयोराद्योऽङ्गं परः फलम्

सप्ताङ्गत्वेपि चाष्टाङ्गयोगमित्यूचिरे परे ॥
शब्दतोऽत्रैव भेदोऽस्ति नान्यथेति विनिर्णयः ॥ ६ ॥
यमान्दशादौ संपाद्य नियमांश्च महाव्रतः ॥
सुखाल्लब्ध्वासनस्थैर्यं प्राणायामं ततोऽभ्यसेत् ॥ ७ ॥
समे सुखेऽजने देशे निःशब्दे निरुपद्रवे ॥
सुखासने समासीनश्चैलाजिनकुशोत्तरे ॥ ८ ॥
सर्वचिन्तां परित्यज्य धृतिमास्थाय सात्त्विकीम् ॥
तत्राभ्यासं प्रकुर्वीत यमवानात्मशुद्धये ॥ ९ ॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ॥
इतस्ततो नैव पश्येत्पश्येद्भ्रूमध्यमेकधीः ॥ १० ॥
पूरकुम्भकरेचात्मप्राणायामाख्यकर्मणि ॥
दृढाभ्यासः प्रकर्तव्यो जिते प्राणे जितं मनः ॥ ११ ॥

॥ ५ ॥ शब्दत एवात्र भेदो नान्यथा ॥ ६ ॥ 'योगाङ्गानुष्ठानादशुद्धक्षये ज्ञानदीप्तिरा विवेकख्यातेः' इति पतञ्जलिनोक्तत्वादादौ यमान्नियमांश्च संपाद्य, 'ते जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्' इति योगोक्तेरहिंसादयो जात्याद्यनवच्छिन्ना एव संपाद्या इत्याह— महाव्रत इति । 'तत्र स्थिरसुखमासनम्' इत्युक्तेः सुखेनासनस्थैर्यं लब्ध्वा ततः प्राणायामानभ्यसेत् । 'तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः' इत्युक्तेः ॥ ७ ॥ समे शुचावित्यादिश्रुतिं शुचौ देश इति स्मृतिं चार्थत आह त्रिभिः ॥ ८ ॥ ९ ॥ १० ॥ ततः क्षीयते प्रकाशावरणमित्यघघातवददृष्टफलत्वात्प्राणायामकर्मणि दृढाभ्यासः प्रयत्नेन कर्तव्यः ॥ ११ ॥ ननु प्राणजये मनोजयः कुत इत्यत

वृषावतिबलौ मत्तौ सयुगं संप्रधावतः ॥
भवेतां स्ववशे पाशे शृङ्गासक्ते यथैकतः ॥ १२ ॥

तथैवेमौ मनःप्राणौ योगाभ्यासेन संयतौ ॥
जितेऽनयोरेकतरे तौ द्वावपि जितौ खलु ॥ १३ ॥

अत्र सत्कर्मभिः केचिच्छुद्धचित्ता महाश्रियः ॥
स्थिरचित्ता मदर्चायां वशप्राणा भवन्ति ते ॥ १४ ॥

अङ्गानि धारणादीनि तेऽभ्यसन्ति महाव्रताः ॥
अन्येऽसुयामतः प्राणमनोजयमभीप्सवः ॥ १५ ॥

प्राणस्पन्दनिरोधो हि प्राणायाम इतीर्यते ॥
इडया प्राणमापूर्य कुम्भयित्वा पुनर्बहिः ॥ १६ ॥

क्षिपेत्पिङ्गलया धीमान्पुनः पूर्ववदाचरेत् ॥
विपरीतेन वा युञ्ज्याद्बहिर्वा कुम्भयेत्तथा ॥ १७ ॥

आह—वृषाविति दृष्टान्तावष्टम्भेन ॥ १२ ॥ दृष्टान्तमभिनीय दार्ष्टान्तिकमभिनयति—तथेति ॥ १३ ॥ पक्षान्तरमत्र निर्दिशति—अत्रेति । सत्कर्मभिरीश्वरोद्देशेनानुष्ठितैर्नित्यैर्नैमित्तिकैश्च महती श्रीर्दैवी संपद्येषां ते महाश्रियः प्राणायामं विनापि ते वशप्राणा भवन्ति ॥ १४ ॥ अन्ये तदनभिज्ञाः । असुयामतः प्राणायामाभ्यासतः ॥ १५ ॥ प्राणायामव्युत्पत्तिमाह—प्राणेति । अभ्यासक्रममाह—इडयेति ॥ १६ ॥ बहिर्वेति कुम्भकविकल्पः ॥ १७ ॥ कालमानमाह—पूर इति । मात्रामानं तु 'जानुं प्रदक्षिणी-

पूरो द्वादशमात्राभिर्द्विगुणाभिश्च रेचकः ॥
कुम्भश्चतुर्गुणाभिश्च विधेयो बन्धपूर्वकः ॥ १८ ॥

यथा यथा प्राणजयो मात्रावृद्धिस्तथा तथा ॥
पिण्डशुद्धिस्तया ज्ञेया वातपित्तकफान्तका ॥ १९ ॥

नाडीद्वाराणि सर्वाणि निर्मलानि भवन्त्यतः ॥
नीरोगो जायते योगी क्रमाभ्यासेन यत्नतः ॥ २० ॥

निर्बीजश्च सबीजश्च प्राणायामो द्विधा मतः ॥
निर्बीजः केवलो रोधः सबीजो जपयुक् शुभः ॥ २१ ॥

लीनः स पञ्चविपलद्विपलं ब्रह्मरन्ध्रगः ॥
प्राणः सुषुम्णया प्रोक्तः प्राणायामः स उत्तमः ॥ २२ ॥

इन्द्रियाणि जिते प्राणे विषयेभ्यः प्रयत्नतः ॥
मनसोपाहरेद्धीरः प्रत्याहारः स उच्यते ॥ २३ ॥

कृत्य न द्रुतं न विलम्बितम् ॥ प्रदद्याच्छोटिकामेकां मात्रामानं प्रचक्षते ' इति । बन्धास्तूक्ता आचार्यैः— ' जालन्धरोड्याननमूलबन्धाञ्जल्पन्ति कण्ठोदरपायुसंस्थान् ' इति ॥ १८ ॥ नैतावन्मात्रमभ्यसेत् किंतूत्तरोत्तर-मभ्यासेन वर्धयेदित्याह—यथेति । फलमाह सार्धेन--पिण्डेति ॥ १९ ॥ प्राणायामभेदमाह--निर्बीज इति । तयोर्मध्ये जपयुक्त एव शुभः॥ २० ॥ ॥ २१ ॥ उत्तमप्राणायामकालं तत्स्थानं चाह--लीन इति ॥ २२ ॥ प्रत्याहारमाह । प्राणे जिते सति मनसा विषयेभ्य इन्द्रियाणि प्रत्याहरेत् । ' स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ' इति योगोक्तेः ॥ २३ ॥ अर्थेभ्यो विषयेभ्यः समनस्का गा इन्द्रियाणि । ' ततः

यथा संहरतेऽङ्गानि सुखात्कूर्मस्तथाप्ययम् ॥
अर्थेभ्यः समनस्का गाः प्रत्याहारस्तदोत्तमः ॥ २४ ॥

कार्योऽथ धारणा साऽपि द्विविधा परिकीर्तिता ॥
सगुणाऽगुणभेदेन मनसः स्थिरताऽऽत्मनि ॥ २५ ॥

ततो ध्यानं त्विदं कार्यं विक्षिप्तं मन आत्मनि ॥
अभ्यासेन स्थिरीकुर्यात्पुनः पुनरखेदतः ॥ २६ ॥

ध्यानं प्राग्धारणा पश्चात्केऽपीच्छन्ति न तद्वरम् ॥
ध्यानं ह्युपसमाधीति समाधिर्ध्यानविस्मृतिः ॥ २७ ॥

द्वादशद्वादशगुणा वृद्धिः प्राणलयस्य या ॥
प्राणायामादि चत्वारि योगाङ्गानीति केचन ॥ २८ ॥

एवं द्विषड्दिनैः साध्यः समाधिर्द्विविधः स च ॥
सविकल्पो निर्विकल्पो धर्ममेघः स दैवहा ॥ २९ ॥

परमा वश्यतेन्द्रियाणाम्' इत्युक्तेरस्योत्तमत्वम् ॥ २४ ॥ 'देशबन्धश्चित्तस्य धारणा' इत्यर्थतः पठति—कार्याथेति ॥२५॥ 'तत्र प्रत्ययैकतानता ध्यानम्' इत्युक्तं ध्यानमाह—विक्षिप्तं विषयान्तराकारपरिणतम् ॥२६॥ मतान्तरं निराकरोति—ध्यानमिति ॥ २७ ॥ मतान्तरमाह—द्वादशेति ॥ २८ ॥ द्विषट्दिनैर्द्वादशदिनैः । स निर्विकल्पो धर्ममेघः । यदुक्तं 'धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः ॥ वर्षत्येष यतो धर्मामृतधाराः सहस्रशः ॥ अमुना वासनाजाले निःशेषं प्रविलापिते ॥ समूलोन्मूलिते पापपुण्याख्ये कर्मसंचये' इति ॥ २९ ॥ तर्हि श्रवणादेः क उपयोग इत्यत आह—प्राणेति ।

प्राणायामादिभिश्चित्ते सुस्थिरे मननक्षमे ॥
योगी विश्रुतवाक्यार्थमननं श्रद्धया चरेत् ॥ ३० ॥
परात्मचिन्तनं वेदाविरुद्धाभिश्च युक्तिभिः ॥
अखण्डया मनोवृत्त्या मननं तत्प्रचक्षते ॥ ३१ ॥
समाधिः सविकल्पो यस्तन्निदिध्यासनं विदुः ॥
विजातीयप्रत्ययस्य निरासेनैव सर्वथा ॥ ३२ ॥
सजातीयप्रत्ययस्य प्रवाहीकरणं तु यत् ॥
अखण्डतैलधारावत्तन्निदिध्यासनं स्मृतम् ॥ ३३ ॥
तल्लक्ष्मेदं महाबाहो दुर्लभं यत्कुयोगिनाम् ॥
तत्त्वमस्यादिवाक्यार्थो विनिर्णीतो यथा पुरा ॥ ३४ ॥
षड्लिङ्गैः श्रुतिनिर्णीतैर्यः सम्यगवधारितः ॥
सुलक्षितो लक्षणया धारणाभिश्च चिन्तितः ॥ ३५ ॥
युक्तिभिर्मननाख्येन ध्यानेन स्ववशीकृतः ॥
योगिनां सोऽवतिष्ठेत हृदि रूढतमो यदा ॥ ३६ ॥
सोऽहमात्मा परं ब्रह्म ब्रह्मैवाहं परात्परम् ॥
नित्यं ज्ञानमनन्तं यच्छुद्धं बुद्धमनामयम् ॥ ३७ ॥
आनन्दमद्वयं पूर्णं मनोवाचामगोचरम् ॥
इत्यखण्डार्थधीवृत्तिर्दृढा तन्मननं परम् ॥ ३८ ॥

युक्तिभिर्वेदानुकूलतर्कैः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ लक्ष्म लक्षणम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ रूढतमत्वं व्यतिहारेणेत्याह—स इति ॥ ३७ ॥ ३८ ॥ समाधिलक्षणमाह—'तस्यापि निरोधे सर्वनिरोधा-

यदा विस्मृत्य तद्ध्यानं ध्येयाकारं मनो भवेत् ॥
निवातदीपवत्स्वस्थं समाधिः सोऽभिधीयते ॥ ३९ ॥

व्यापकं तत्र चैतन्यं तिष्ठत्येव स्वयंप्रभम् ॥
तदा योगी न वेदेदं बाह्यमाभ्यन्तरं क्वचित् ॥ ४० ॥

सूर्यकान्तस्य योगेन तूलोऽर्कप्रतिबिम्बितः ॥
अग्निरेव भवेत्तद्वज्ज्ञेयमत्रापि नान्यथा ॥ ४१ ॥

ब्रह्माकारा मनोवृत्तिः केवलं ब्रह्म निष्कलम् ॥
विषयीकृत्य हरति केवलं तद्गतं तमः ॥ ४२ ॥

नष्टे सकार्ये तमसि प्रपञ्चो नैव तिष्ठते ॥
एक एवाद्वितीयोऽत्र तदा स्वात्मावशिष्यते ॥ ४३ ॥

न्निर्बीजः समाधिः' इति पातञ्जलात् । श्रुतिश्च 'यदा पञ्चावतिष्टन्ते प्राणाः' इत्यारभ्य 'तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्' इत्यादि । तदा अमनस्कदशायां बाह्यं जाग्रद्वस्तु आभ्यन्तरं स्वप्नवस्तु न वेद । यदुक्तं 'मनोदृश्यमिदं द्वैतं यत्किंचित्सचराचरम् ॥ मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ॥ आत्मा सत्यानुबोधेन न संकल्पयते यदा ॥ अमनस्तां तदा याति ग्राह्याभावे तदग्रहं' इति द्वैतस्य मनोमात्रविलासितत्वात् । अत्रायं प्रयोगः—विमतं द्वैतं मनोमात्रं तद्भावे नियतभावत्वाद्यथा मृद्भावे नियतभावो मृन्मात्रो घटादिरिति । संकल्पाभावे संकल्प्याभावाद्दाह्याभावे ज्वलनमिवाग्नेर्यदा तदा मनोऽमनस्तां यातीत्यर्थः ॥ ३९ ॥ ४० ॥ ऐक्यं दृष्टान्तपुरःसरमुपपादयति—सूर्येति । तूलः कार्पासः ॥ ४१ ॥ तद्गतमावरकं तमः ॥ ४२ ॥ ततोऽर्थादद्वैतसिद्धिरित्याह—नष्टेति । स्वात्मा स्वरूपभूत आत्मा ॥ ४३ ॥ ननु वृत्तिज्ञानस्यात्मनश्च सत्त्वे कथमद्वैतमित्यत

या वृत्तिः सैव विज्ञानं कार्यं कृत्वा ततः स्वयम् ॥
स्वरूपे लीयते स्वच्छे जले कतकरेणुवत् ॥ ४४ ॥

घटे भिन्ने घटाकाशो महाकाशो यथा तथा ॥
चिद्बिम्बं तु चिदेव स्यादुपाधौ विलयं गते ॥ ४५ ॥

स्वप्रकाशं परं ब्रह्म कथं हृत्तत्प्रकाशयेत् ॥
अतः स्वच्छादर्शगतस्वमुखालोकनोपमम् ॥ ४६ ॥

स्वच्छधीवृत्तिफलितस्वात्मनोऽपि निरीक्षणम् ॥
स्वस्यैव नैव मनसो दृश्यस्याचेतनस्य च ॥ ४७ ॥

अज्ञातस्यैव विषये मनोवृत्तेः प्रयोजनम् ॥
द्रष्टव्यं मनसेत्याह सार्थकं तच्छ्रुतिः स्वयम् ॥ ४८ ॥

मनो न मनुते ब्रह्म वागप्यत्र प्रशाम्यति ॥
स्वयंप्रभं परं ज्योतिर्नित्यं वाङ्मनसः परम् ॥ ४९ ॥

आह दृष्टान्तावष्टम्भेन—येति ॥ ४४ ॥ उपाधिविलये ऐक्यं न चित्रमिति सदृष्टान्तमाह—घट इति । चिद्बिम्बं यस्य तच्चैतन्यप्रतिबिम्बो जीवः ॥ ४५ ॥ ननु प्रकाशं ब्रह्म कथं हृद्वृत्त्या प्रकाश्यत इति चेदादर्शमुखन्यायेनेत्याह—स्वप्रकाशमिति ॥ ४६ ॥ ४७ ॥ नन्वग्राह्यस्यात्मनो मनसा दर्शनं कथमिति चेदागमप्रामाण्यादित्याह—द्रष्टव्यमिति । श्रुतिश्च 'मनसैवानुद्रष्टव्यम्' इति ॥ ४८ ॥ तर्हि 'यन्मनसा न मनुते' इत्यादिनिषेधस्य का गतिरित्यत आह द्वाभ्यां—मन इति । फलव्याप्तेरेव निषेधो न वृत्तिव्याप्तेरिति भावः । यदुक्तं 'ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ॥ स्वयं

फलव्याप्यत्वमेवात्र शास्त्रेणास्य निरस्यते ॥
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्यत्वमुच्यते ॥ ५० ॥

यावदेवं भवेत्सिद्धं तावद्वृत्तिर्न शाम्यति ॥
ज्ञातृज्ञेयविभागोऽयं भाति वृत्तौ स्वभावतः॥ ५१ ॥

सविकल्पोऽयमेव स्यात्समाधिर्भूपसत्तम ॥
वृत्तेर्लयो निर्विकल्पः समाधिः परमो मतः ॥ ५२ ॥

अविभागं परं ब्रह्म यतस्तत्रानुभूयते ॥
इमामेव परां भूमिमारूढो न पुनश्च्यवेत् ॥ ५३ ॥

स्फुरणरूपत्वादाभासो नोपयुज्यते ' इति ॥ ४९ ॥ ५० ॥ ५१ ॥ अयमेव ज्ञातृज्ञेयविभागरूपः सविकल्पकः । हे भूप योगभूमिपालक, वृत्तेर्लये निर्विकल्पकः । तर्हि निद्रैव समाधिरिति चेन्निद्राया अभावप्रत्ययालम्बत्वेनाभ्युपगमात्सर्वप्रत्ययाभावत्वेन समाधिसिद्धेः समाधौ प्रचारस्य विद्यमानत्वादिन्द्रियोपरतिप्रपञ्चलयमुखाप्तिमत्याः सुषुप्तेः समाधिवैलक्षण्यमेव । तदुक्तं गौडपादाचार्यैः–'निगृहीतस्य मनसो निर्विकल्पस्य धीमतः॥ प्रचारः स तु विज्ञेयः सुषुप्तेऽन्यो न तत्समः॥ लीयते हि सुषुप्ते तन्निगृहीतं न लीयते ॥ तदेव निर्भयं ब्रह्म ज्ञानालोकं समंततः' इति । समंतत इति सर्वतो नैरन्तर्येण व्योमवद्व्यापकम् ॥५२॥ यदविभागं परं ब्रह्मेत्ययं किमुपचारो वास्तवो वेति चेत् स्वानुभवेन पूर्वाचार्यैः ' अजमनिद्रमस्वप्नमनामकमरूपकम् ॥ सकृद्विभातं

यदि विघ्ना भवन्त्यत्र युञ्जतो योगिनो मनः ॥
तत्रोपायस्त्वयं कार्यः सावधानेन योगिना ॥ ५४ ॥
सिद्धयोऽत्र भवन्त्यष्टावणिमप्रमुखा नृप ॥
तदासक्तौ प्रणश्येत योगः संसरते स च ॥ ५५ ॥
सर्वं तन्नश्वरं विद्वान्न प्रसज्येत कर्हिचित् ॥
लये संबोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः ॥ ५६ ॥
सकषायं सुधीर्जह्यात्समप्राप्तं न चालयेत् ॥
नास्वादयेद्रसं तत्र निसःङ्गः प्रज्ञया भवेत् ॥ ५७ ॥
निवातदीपवच्चित्तो ब्रह्मात्मा शून्यवृत्तिकः ॥
कृतकृत्यः क्षीणकर्मा भिन्नहृद्ग्रन्थिसंशयः ॥ ५८ ॥
प्रारब्धभोक्तात्मारामो जीवन्मुक्तो भवेदियम् ॥
योगभूर्महती रूढ एतां मुग्धादिवच्चरेत् ॥ ५९ ॥

सर्वज्ञं नोपचारः कथंचन' इति प्रतिज्ञातत्वाद्वास्तवमेव ॥ ५३ ॥ ५४ ॥ ॥ ५५ ॥ समाधिसिद्धये उपायमाह—लये सुषुप्तौ लीनं चित्तं आत्मविवेकदर्शनेन संबोधयेत्। कामोपभोगेषु विक्षिप्तं चेत्पुनः पुनः शमयेत् ॥ ५६ ॥ सकषायं सरागं। समप्राप्तं न चालयेद्विषयाभिमुखं न कुर्यात्। समाधित्सतो योगिनो यो रसः सुखं जायते तन्नास्वादयेत्तत्र न रज्येत विवेकेन निःस्पृहः सन् ॥ ५७ ॥ निर्विकल्पसमाधिस्थस्य लक्षणमाह—निवातेति। लयविक्षेपकारणीभूतगुणवृत्त्यभावात् स्थिरचित्तः 'यथा दीपो निवातस्थः' इति स्मृतेः। ब्रह्मात्मा 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इति पातञ्जलात् शून्यवृत्तिकः चरमवृत्त्यवस्थानात्। कृतं कृत्यमात्मदर्शनरूपं येन। क्षीणानि प्रारब्धातिरिक्तानि कर्माणि यस्य। भिन्नाः हृद्ग्रन्थिः कामाख्यः संशयाश्च यस्य ॥५८॥ प्रारब्धभोक्ताप्यात्मन्येवारामो यस्य न विषये ॥५९॥

मुग्धोऽन्धो बधिरोऽजिह्वो योगी पङ्गुर्नपुंसकः ॥
स्वात्मदृक् परमानन्दो भवेत्स्वैरगतिः सदा ॥ ६० ॥
अर्थानामपि सांनिध्ये समर्थोऽविकलेन्द्रियः ॥
सुप्तवद्वर्तते नित्यं स योगी मुग्ध ईरितः ॥ ६१ ॥
तिष्ठतो व्रजतो वास्य योगिनो दृङ् न दूरगा ॥
युगमात्रां भुवं त्यक्त्वा योगिराट् सोऽन्ध उच्यते ॥६२॥
शोकावहं मनोहारि हितं वाप्यहितं वचः ॥
न संशृणोति श्रुत्वापि स योगी बधिरः स्मृतः ॥६३॥
इदमिष्टमिदं नेति योऽश्नन्नपि न सज्जते ॥
सत्यं हितं मितं ब्रूते योगी सोऽजिह्व उच्यते ॥ ६४ ॥
भिक्षार्थं यस्य गमनं विण्मूत्रोत्सृतयेपि च ॥
योजनान्न परं याति स योगी पङ्गुरुच्यते॥ ६५ ॥
सद्योजातां कुमारीं यो दृष्ट्वा षोडशवार्षिकीम् ॥
वृद्धामपि समां पश्यन्निर्विकारः स षण्ढकः ॥ ६६ ॥
योगचर्यामिमां प्राप्य श्रित उत्तमभूमिकाम् ॥
जीवन्मुक्तो भुक्तदैवो विदेहां मुक्तिमश्नुते ॥ ६७ ॥
योगादेशमिमं राजन्नाविनीताय बोधय ॥
श्रद्दधानाय शिष्याय शंस शुद्धहृदेऽर्जुन॥ ६८ ॥

प्रत्यगभिन्ने आत्मनि दृग् दर्शनं यस्य ॥ ६० ॥ मुग्धलक्षणमाह—अर्थानामनात्मभूतानां विषयाणाम् ॥ ६१ ॥ युगं यानाङ्गम् ॥ ६२ ॥ ६३ ॥ अजिह्व इति छेदः ॥ ६४ ॥ विण्मूत्रत्यागार्थम् ॥६५॥ ॥ ६६ ॥ ६७ ॥ योगादेशं योगप्रतिपादकं शास्त्रं शंस कथय ॥ ६८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां उपासनाकाण्डे चतुर्थाष्टके द्वितीयोऽध्यायः ॥ २ ॥

इति श्रीदत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्यां उपासनाकाण्डे चतुर्थाष्टके द्वितीयष्टीकायां समाप्तः ॥ २ ॥

इति श्रीदत्त० अष्टाङ्गयोगयोग्याचारयोगचर्या नाम चतुर्था० द्वितीयो० ॥ ४।२ ॥

---

अथ कार्तवीर्यार्जुनस्य योगाभ्यासपूर्वं राज्याधिगमो नाम चतुर्थाष्टके तृतीयोऽध्यायः ॥ ४।३ ॥

हरिः ॐ ॥ प्रयुञ्जती यदात्मानं बुद्धिस्तत्प्रेरकस्य हि ॥
मही देवस्य सवितुर्मम कार्या परिष्टुतिः ॥ १ ॥
यो मद्गतान्तरात्मात्र श्रद्धावान्भजते हि माम् ॥
स ममातिप्रियो नूनं सर्वेषामेव योगिनाम् ॥ २ ॥
त्वमपि श्रद्धया राजन्योगं युञ्जन्भजस्व माम् ॥
मत्प्रसादादिहैवाशु मत्सायुज्यं त्वमेष्यसि ॥ ३ ॥
इत्युक्तः प्रणतो राजा नत्वा प्राह सगद्गदम् ॥
फुल्लास्याब्जो गलन्नेत्रो हृष्टरोमा तदाऽचिरात् ॥४॥

॥ श्रीगणेशाय नमः ॥
योगपूर्वात्मविज्ञानं श्रुत्वा स्तुत्वाऽर्जुनो गुरुम् ॥
सप्तविंशेऽभ्यस्य योगं राज्यं गुर्वाज्ञयागमत् ॥

पुनरुक्तयोगसिद्ध्यर्थं स्वोपासनमाह भगवान् । आत्मानं मनः प्रयुञ्जती बुद्धिर्यदा भवति तदा तत्प्रेरकस्य जगत्प्रसवितुर्देवस्य मम परिष्टुतिः कार्या । श्रुतिश्च 'युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । विहोत्रादधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः' इति ॥ १ ॥ मत्स्वरूपं ध्यानावेशेन गतोन्तरात्मान्तः करणं यस्य ॥ २ ॥ युञ्जन्नभ्यसन् इहैवास्मिन्नेव जन्मनि ॥३॥ इति श्रीदत्तेनोक्तः फुल्लं आस्यमेवाब्जं यस्य । आनन्दाश्रुणा गलती नेत्रे यस्य । भक्त्युद्रेकलक्षणानीमानि ॥ ४ ॥

मोहतमो मम नष्टं त्वद्वचनान्नहि कष्टम् ॥
शिष्टमिदं मयि हृष्टं हृत्परमात्मनि तुष्टम् ॥ ५ ॥

ज्ञानरविर्हृदि भातः स्वावरणाख्यतमोऽतः ॥
क्वापि गतं भवदीक्षासौ खलु का मम दीक्षा ॥ ६ ॥

क्लेशरुजां हरणेन त्वच्चरणस्मरणेन ॥
अस्मि कृतार्थ इहेश श्रीश परेश महेश ॥ ७ ॥

प्रेमदुघं तव पादं को न भजेदविवादम् ॥
दैववशाद्धृदि मेयं दर्शितवानसि मे यम् ॥ ८ ॥

चित्रमिदं सदमेयः सोऽप्यभवद्धृदि मेयः ॥
देवसुरर्षिसुगेयः सोऽद्य कथं मम हेयः ॥ ९ ॥

आश्रितातापहरं तं पातकदैन्यहरन्तम् ॥
नौमि शिवं भगवन्तं पादमहं तव सन्तम् ॥ १० ॥

मोहो मूलाज्ञानं कारणीभूतं तमस्तत्कार्यं मोहसहितमज्ञानं क्लेशरूपं कष्टमपि नहि शिष्टम् । अत एव परमात्मन्यभेदेन हृष्टं तुष्टं च ततोऽन्यत्र हर्षतोषयोर्गौणत्वात् ॥ ५ ॥ अत्र कारणं शुद्धसत्त्वे हृदि ज्ञानरविर्भातः अतो भानात्स्वरूपावरकं तमः क्वापि गतं नष्टं इयं भवत्कृपैव । ईदृशी मम दीक्षा पूर्तेष्टदत्तादिरूपा का । न कापि । अतो भवत ईक्षैव ॥ ६ ॥ क्लेशरोगहरणेन त्वच्चरणस्मरणेनाहं कृतार्थोऽस्मि ॥ ७ ॥ हृद्यन्तःकरणेऽङ्गुष्ठमात्रः पुरुष इति मेयं यं पादं दर्शितवानसि तं प्रेमदुघं तव पादं को न भजेत् ॥ ८ ॥ अमेयो व्यापकः ॥ ९ ॥ सन्तं कालत्रयाबाधं तव पादमित्यत्र राहोः शीर्षवदौपचारिकभेदः ॥ १० ॥ यत्र पादैकदेशे

यत्र जगद्भ्रम एषः कल्पित एव सशेषः ॥
भ्रान्तिलयेऽद्वय एवावेदि मयाद्य स एव ॥ ११ ॥

शान्तिपदं तव पादं नौमि सुसेव्यमखेदम् ॥
स्वार्थदमाद्यमनन्तं हापितकामधनं तम् ॥ १२ ॥

देवोऽभावो राद्धः सिद्धः सत्यो नित्यो बुद्धः शुद्धः ॥
सर्वोऽपूर्वो हर्ताऽकर्ता भिन्नस्त्वं नः पाता माता ॥१३॥

त्वं देहकरणातीतः सर्वात्मा शरणं सताम् ॥
स प्राणघोषमात्रात्मा सूक्ष्मो देहो गुहां श्रितः ॥ १४ ॥

यथोष्ममेयः काष्ठेऽग्निर्मथनाद्दृश्यते क्रमात् ॥
तथा चित्सुखमेयात्मा योगेनात्रापि गम्यते ॥ १५ ॥

अवेदि ज्ञातः ॥ ११ ॥ अखेदं खेदनिवर्तकं । इमान्यष्टौ चित्रपदावृत्तानि ॥ १२ ॥ विद्युन्मालेयं । देवः स्वयंज्योतिः अग्रहणान्यथाग्रहणाविर्भावतिरोभावविवर्जितत्वात् अभावो जन्मादिवर्जितः स स्थावरजङ्गमस्वरूपः । ननु स्थावरजंगमस्वरूपत्वे कथं अभावत्वमिति चेज्जगतः कल्पितत्वात् 'अजायमानो बहुधा विजायते' इति विवर्तवादाङ्गीकारे सर्वं समंजसम् । गौडपादाश्च–'नेह नानेति चाम्नानादिन्द्रो मायाभिरित्यपि । अजायमानो बहुधा मायया जायते तु सः' इति ॥ १३ ॥ ननु सर्वश्चेत्सुखादिसंबन्धभागित्यत आह–देहकरणातीत इति । 'अपाणिपादो जवनः' इति श्रुतेः सांख्यैः सुखदुःखादीनां बुद्धिसमवायाभ्युपगमाद्बुद्ध्यादिकरणसंबन्धाभावान्न दुःखादिसंपर्कः । गुहां बुद्धिम् ॥ १४ ॥ योगेन ध्यानेन ॥ १५ ॥ पूर्व-

भक्त्याश्लिष्टस्त्वमेकोपि देवो व्यक्तोप्यहो त्रिवृत् ॥
बहुधेव भ्रमाद्भासि स्वस्थोऽप्यप्सु यथा रविः ॥ १६ ॥

यस्मिन्नोतमिदं प्रोतं वसने तन्तवो यथा ॥
सर्वयोनिं भजे तं त्वां सच्चिदानन्दमद्वयम् ॥ १७ ॥

मायाभातो भवतरुः शतमूलो द्विबीजकः ॥
पञ्चार्थसूतिस्त्रिनालः पञ्चस्कन्धो दशाङ्कुरः ॥ १८ ॥

द्विसुपर्णस्त्रिवल्को द्विफलः प्रत्नश्चिदाश्रयः ॥
गृध्रोऽस्यैकं फलं हंसोन्यद्भुङ्क्ते स सुदुर्धरः ॥ १९ ॥

वृद्धाः परमहंसास्तं तीक्ष्णविद्यासिना भृशम् ॥
छित्त्वान्वेष्य पदं यान्ति यतो नावर्तते पुनः ॥ २० ॥

तं क्षेमधाम देवं त्वां प्राप्तवानस्म्यतो मया ॥
कृतं कृत्यं प्रापणीयं प्राप्तमत्र न संशयः ॥ २१ ॥

मेको देवस्ततो व्यक्तो व्याकृतस्ततस्त्रिवृदेवं मायाभ्रमाज्जलेऽर्क इव बहुधा भासि तथापि स्वस्थ एव ॥ १६ ॥ १७ ॥ मायया मृगतृष्णिकावद्भवतरुर्भातः । कथंभूतः । शतं वासना मूलानि यस्य । द्वे पापपुण्ये बीजे यस्य । पञ्चार्थाः विषयाः सूतयो यस्य । त्रिगुणा नाला यस्य । पञ्चभूतानि स्कन्धा यस्य । दशेन्द्रियाण्यङ्कुरा यस्य ॥ १८ ॥ द्वौ जीवेश्वरौ सुपर्णौ यस्मिन् । त्रिदेहा वल्कानि यस्य । द्वे सुखदुःखे फले यस्य । प्रत्नः पुराणश्चिदाधारश्चैतन्याश्रयश्च गृध्रो विषयलंपटः । एकं दुःखं फलम् । हंसस्त्यागी । अन्यत् सुखम् ॥ १९ ॥ ज्ञानवृद्धा अन्वेष्य शास्त्रतोऽवगम्य । यतो गतात्पदात् ॥ २० ॥ ईदृक्पदरूपं क्षेमस्थानं त्वाम् ॥ २१ ॥ तवागम्यस्यापि

गुरो गुरुतरागम्य गुरुगम्य गुणाकर ॥
गुरूत्तम नमस्तेऽस्तु संनिधो भव सर्वदा ॥ २२ ॥

एवं सुतीर्थः श्रीदत्तस्तीर्थकीर्तिः प्रसादितः ॥
फुल्लहृन्नेत्रवक्त्रास्यः प्रेम्णा प्राह परेश्वरः ॥ २३ ॥

विदितं मत्प्रसादेन परं तत्त्वं त्वयानघ ॥
यावद् दृढीभवेत्तावदभ्यासं कुरु यत्नतः ॥ २४ ॥

दरी निरामया हृद्या गूढैषाऽत्रासनं दृढम् ॥
बध्वोपविश्य सुचिरं समकायशिराः स्वदृक् ॥ २५ ॥

मयोपदिष्टं यत्तत्त्वं सम्यक् चिन्तय भक्तितः ॥
तत्र बोधः समाधिर्वा निर्विघ्नो यो भवेत्स च ॥ २६ ॥

अनुभूय चिरं तेन कृतकृत्यो भविष्यसि ॥
इत्युक्त्वा दक्षिणं हस्तं निदधौ तच्छिरस्यजः ॥ २७ ॥

गुरुद्वारेण सुगमत्वं संबुद्धिभिराह ॥ २२ ॥ फुल्लं विकसितं हृत् नेत्रे वक्त्रं च यस्य ॥ २३ ॥ प्रयत्नतः शमादिपूर्वकम् ॥ २४ ॥ दरी गुहा । निरामया निरुपद्रवा । स्वदृक् स्वरूपानुसंधानवान् ॥ २५ ॥ चिन्तय निदिध्यासनं कुरु । तत्र ध्याने ॥ २६ ॥ हस्तं दधाविति शक्तिपात उक्तः । यद्यपि 'ज्ञप्तेस्तु कारणं राम शिष्यप्रज्ञैव केवलम्' इति वासिष्ठोक्तिस्तथापि 'परिपक्वमला ये तानुत्सादनहेतुशक्तिपातेन । योजयति परे तत्त्वे स दीक्षयाचार्यमूर्तिस्थः' इत्यागमाद्गुरुप्रसाद एव मुख्यं कारणम् । अत एव श्रुतिः 'यस्य देवे परा भक्तिः' इत्यादिः ॥ २७ ॥ आशिषमाह—

मा भी राजन्कृतार्थस्त्वं सायुज्यं मम यास्यसि ॥
इत्युक्तस्तं प्रणम्याशु गुहां गत्वा यथाविधि ॥ २८ ॥
उपविश्यासने दध्यौ प्रसन्नकरणोऽर्जुनः ॥
समाहितोऽल्पकालेन सोऽभवत्सुदृढासनः ॥ २९ ॥
उत्थितो द्वादशदिनैः पुनर्मासेन सुस्थिरः ॥
पुनः स्थाणुर्निश्चलात्मा त्रिमास्या स समुत्थितः ॥३०॥
उत्थाय शनकैः प्राप्य ववन्देऽङ्घ्र्यब्ज ईशितुः ॥
तमालिङ्ग्याह भगवाननुभूतं किमुच्यताम् ॥ ३१ ॥
दृढासनो भवान्कालमेतावन्तं समाहितः ॥
कथमव्यग्रया बुद्ध्या नैश्चल्यं परमं गतः ॥ ३२ ॥
प्रहस्याहार्जुनो नत्वा भूमन्क्वानुभवः पृथक् ॥
पृथक्च कोऽनुभविता सर्वत्रास्मीह खे खवत् ॥ ३३ ॥

उपसर्गेभ्यस्ते भयं मास्तु । तं श्रीगुरुं दत्तात्रेयम् ॥ २८ ॥ २९ ॥ त्रिमास्या मासत्रयेण ॥ ३० ॥ शनकैः शनैः । 'अव्ययसर्वनाम्नाम्' इत्यकच् ॥ ३१ ॥ अव्यग्रया सूक्ष्मया बुद्ध्या लयविक्षेपकषायरसास्वादराहित्यं नैश्चल्यम् । अत एव परमं श्रेष्ठं निर्विकल्पसमाधिं कथं केन प्रकारेण भवान्गतः स्वानुभवं कथयेति भावः ॥ ३२ ॥ प्रहस्येषद्धासं कृत्वा । प्रेम्णैव न तूपालम्भेन । हे भूमन्नपरिच्छिन्न सर्वसाक्षिन्, समाहितमनसोऽनुभवः क्व पृथक् वा कोऽनुभविता । कोऽपि नास्त्यत्र त्रिपुट्यभावात् । ननु ध्यातुस्तत्र ध्येयस्य च भानं तत्र न किमित्यत आह—सर्वत्रेति । त्रिपुटी तु निदिध्यासनपर्यन्तमेवावतिष्ठते । एकान्तं ध्येयाकारेण परिणतेन्तःकरणे धातृध्यानविभागाभावादद्वैतमेव प्रत्यगभिन्नपरमात्मस्वरूपमवतिष्ठते ! ऐक्ये दृष्टान्तः खे खवदिति ॥ ३३ ॥ एवं सत्यपि समाधित उत्थित एवानुस्मरे

तथाप्युत्थित एवानुस्मरे श्रीसद्गुरोः कृपाम् ॥
परानन्दे निमग्नस्य त्रिपुटी नैव भाति मे ॥ ३४ ॥
तदा पश्चाववतिष्ठन्ते ज्ञानानि मनसा सह ॥
परमानन्द आभाति धीश्चापि न विचेष्टते ॥ ३५ ॥
तदाऽप्रमत्तता स्वामिन्सुस्थिरेन्द्रियधारणा ॥
स आनन्दो न करणैर्वाच्यो न च हृदा धिया ॥ ३६ ॥
तदाऽज्ञातापि चात्मार्थवृत्तिः प्राग्भावनावशात् ॥
अद्यानुस्मर्यते भूमानन्दं ध्याप्तं कथं ब्रुवे ॥ ३७ ॥
भवत्प्रसादादानन्दमनुभूतोऽस्म्यनुत्तमम् ॥
पुनर्देहदशां नीतः प्रारब्धेन जवीयसा ॥ ३८ ॥
इह क्वापि न मे हानिर्भवन्तं पश्यतो विभो ॥
सगुणोऽपि हि पूर्णात्मा सर्वानन्दनिधिर्भवान् ॥ ३९ ॥
बहुना किमिहोक्तेन निस्तीर्णोऽस्मि भवाम्बुधेः ॥
परमानन्दसंदोहनिमग्नोऽस्मि निराकुलः ॥ ४० ॥

एतावन्तं कालं समाहितोऽभवमिति ॥ ३४ ॥ तदा समाध्यवस्थायां ज्ञानानि ज्ञानेन्द्रियाणि अवतिष्ठन्ते निगृहीतानि भवन्ति । समाहितत्वाद्धीरपि न विविधचेष्टां करोति ॥ ३५ ॥ ३६ ॥ ननु तदा वृत्त्यभावस्त्वया कथं ज्ञात इत्यत आह—आत्मा अर्थो विषयो यस्याः सा वृत्तिस्तदाऽज्ञातापि समाधिप्राग्भावनावशात् स्मर्यते । अतो धीवृत्त्याप्तं भूमानन्दं स्वतोऽनुभूतमपि कथं ब्रुवे, वक्तुमशक्यत्वात् ॥ ३७ ॥ तर्हि स आनन्दस्त्वया कुतस्त्यक्त इत्यत आह—पुनरिति ॥ ३८ ॥ ३९ ॥ ४० ॥ इत ऊर्ध्वं कर्तव्यज्ञातव्य-

न किंचिन्मेऽस्ति कर्तव्यं कृतं सर्वमशेषतः ॥
ज्ञातव्यमपि विज्ञातं प्राप्तं प्राप्तव्यमप्यहो ॥ ४१ ॥
इदं स्वात्मसुखं त्यक्त्वा मनो मे नैति कुत्रचित् ॥
न कं कृतेन राज्येन नाकं त्यक्तेन वा पुनः ॥ ४२ ॥

अदः पूर्णमिदं पूर्णं पूर्णात्पूर्णमुदच्यते ॥
पूर्णस्यादाय पूर्णं हि पूर्णं ब्रह्मावशिष्यते ॥ ४३ ॥

आत्मैकः परिपूर्णोऽत्र नान्यत्किंचित्ततः परम् ॥
ज्ञातं भवत्प्रसादान्मे भगवन्नात्र संशयः ॥ ४४ ॥

अतो राज्ये व्यवहृतौ देशे कालार्थवस्तुषु ॥
सदा भाति चिदात्माऽतः सुखमय्योऽखिला दिशः॥४५॥

यद्याज्ञा भवतो भूयो ध्यानार्थं प्रविशे गुहाम् ॥
ईक्षे भवत्स्वरूपं वा सगुणं नाग्रहो मम ॥ ४६ ॥

श्रीशः प्राह नृप स्नात्वा कृत्वा नित्यविधिं सुधीः ॥
कृत्वाहारं समाधिं च श्वोभूते व्रज पूर्णदृक् ॥ ४७ ॥

**प्राप्तव्या**भाव इत्याह—नेति ॥ ४१ ॥ पूर्वसिद्धराज्यहृयादिसुखेच्छापि **नावशिष्टे**त्याह–इदमिति । कं सुखं अकं दुःखम् ॥ ४२ ॥ अत्र हेतुः **अद इति** ॥ ४३ ॥ अत्रात्मैकत्वानुभवे । न संशय इत्युपलक्षणमसंभावनावि**परीत**भावनयोरपि । एतेन न सांख्यवत् पुरुषमात्रज्ञानं मम संपन्नं किंत्वद्वि**तीया**त्मतत्त्वमप्यवगतमिति सूचितम् ॥ ४४ ॥ ४५ ॥ दार्ढ्यार्थमाह—**यदीति** ॥ ४६ ॥ पूर्णदृगित्यनेन 'विपर्यस्तो निदिध्यासेत्किं ध्यानमवि**पर्ययः**' इति विपर्यासोपि तव शिथिलीभूत इति ॥ ४७ ॥ श्रीदत्तवाञ्छ-

इत्याज्ञप्तस्तथा चक्रे सोऽर्जुनोऽथ समाहितः ॥
षण्मासात्पुनरुत्थानं प्राप श्रीदत्तवाञ्छया ॥ ४८ ॥
ततः पुनर्विशेत्युक्तो भूयो योगी समाहितः ॥
वर्षेणोत्थाय चागत्य नत्वाग्रे श्रीगुरोः स्थितः ॥ ४९ ॥
तं प्राह प्रणतं शान्तं स्वभक्तं भक्तवत्सलः ॥
स्वाग्रे तमुपवेश्याङ्ग त्वया पृष्टं मयोदितम् ॥ ५० ॥
किमाचारेण मे कृत्यं तवापि च तथाप्ययम् ॥
धर्मः सनातनः सेव्यो लोकोपकृतये सदा ॥ ५१ ॥
लोकबाधानिरासार्थं विपरीतं क्वचिद्बहिः ॥
चरित्वापि नहि त्याज्याः क्रिया वर्णाश्रमोचिताः ॥५२॥
गृहस्थेन त्वया भूप त्रिविधा कर्मचोदना ॥
लोकसंग्रहसिध्यर्थं श्रद्धयैव विजानता ॥ ५३ ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरोपि च ॥
स यत्प्रमाणं मनुते लोकस्तदनुवर्तते ॥ ५४ ॥

येत्यनेन स्वत उत्थानाभावः सूचितः ॥ ४८ ॥ उत्थायेत्यत्रापि श्रीदत्त-वाञ्छयेत्यनुसंधेयम् ॥ ४९ ॥ ५० ॥ लोकसंग्रहार्थमुपदिशति–किमिति ॥ ५१ ॥ ५२ ॥ गृहस्थेनेत्यनेन सर्वाश्रमपोषकत्वादयं त्वया सेव्य इत्युक्तं भवति । ‘ यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ॥ वर्तन्ते गृहिणं तद्व-दाश्रित्येतर आश्रमाः ’ इति स्मृतेः । त्रिविधाऽपूर्वनियमपरिसंख्याविधिलक्षणा कर्मचोदना । ननु तत्त्वज्ञानिनः किमपि कृत्यं नास्ति कुतो न्वियं चोदने-त्यत आह–विजानतापि लोकसंग्रहार्थं श्रद्धयैव ॥ ५३ ॥ तदेव द्रढयति–यदिति ॥ ५४ ॥ तर्ह्यतिप्रसङ्ग. इति चेन्नेत्याह–दोषेति । तथाहि ‘ विध्य-

दोषबुध्द्योभयातीतो निषिद्धान्न निवर्तते ॥
गुणबुध्द्या न विहितं करोति ज्ञोऽपि बालवत् ॥ ५५ ॥

यस्त्वात्मरतिरात्मज्ञः स्वात्मतृप्तः सदात्मवान् ॥
स्वात्मन्येवात्मना तुष्टस्तत्कार्यं क्वावशिष्यते ॥ ५६ ॥

कृतेन तस्य नैवार्थो नानर्थोऽप्यकृतेन च ॥
अतोऽस्य नैव कुत्रापि कश्चनार्थव्यपाश्रयः ॥ ५७ ॥

भावान्न बालस्य दृश्यतेऽतिप्रसञ्जनम् । स्यात्कुतोऽतिप्रसङ्गोऽस्य विध्यभावसमे सति ॥ न किंचिद्वेत्ति चेद्बालः सर्वं वेत्त्येव तत्त्ववित् ॥ अल्पज्ञस्यैव विधयः सर्वे स्युर्नान्ययोर्द्वयोः ' इति ॥ ५५ ॥ रतिः प्रीतिः । तृप्तः स्वानन्दानुभवेन निर्वृतः । आत्मनि स्वरूपे । आत्मना स्वयमेव ॥ ५६ ॥ कृतेन कर्मणार्थः पुण्यमनर्थः प्रत्यवायः । निरहंकारेण विधिनिषेधातीतत्वात् । तथापि ' तदेषां न प्रियं यदेतन्मनुष्या विदुः ' इति श्रुतेर्मोक्षे देवकृतविघ्नसंभवात्तत्परिहारार्थं कर्मणा देवाः सेव्या इत्यत्राह–अत्र ब्रह्मादिस्थावरान्तेषु कोऽप्यर्थे मोक्षे व्यपाश्रय आश्रयणीयो नास्ति ' तस्य हन देवाश्च नाभूत्या ईशत आत्मा ह्येषां संभवति' इति विघ्नाभावः श्रुत्योक्तत्वात् । हनेत्यव्ययमप्यर्थे । देवा अपि तस्यात्मतत्त्वज्ञस्याभूत्यै ब्रह्मताप्रतिबन्धाय नेशते न शक्नुवन्तीति श्रुत्यर्थः । देवकृतविघ्नास्तु ज्ञानोत्पत्तेः प्रागेव यदेतन्मनुष्या विदुस्तदेषां देवानां न प्रियमिति ब्रह्मज्ञानस्यैवाप्रियत्वोक्त्या तत्रैव विघ्नकर्तृत्वसूचनान्निर्वासनमनोधारणया कृतकृत्यस्य विध्याद्यतीतत्वमेव । ' समाधिमथ कर्माणि मा करोतु करोतु वा ॥ हृदयेनास्तसर्वार्थो मुक्त एवोत्तमाशयः ॥ नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः । न समाधानजप्याभ्यां यस्य निर्वासनं मनः ' इत्युक्तेः ॥ ५७ ॥

द्वावेतौ पुरुषौ लोके परमानन्दनिर्भरौ ॥
योगयुक्तो द्वयातीतो यश्च बुद्धेः परं गतः ॥ ५८ ॥
पुरं गच्छावनिं पाहि सप्तद्वीपां भुजार्जिताम् ॥
देवान्यज्ञैर्यज श्राद्धैः पितॄन्दानैर्द्विजानपि ॥ ५९ ॥
विप्रान्संतर्पय स्वर्णगोभूकन्यारथादिभिः ॥
भूयो भूयोऽपि मे प्रीत्या दर्शनं च समाचर ॥ ६० ॥
स्मरणं कुरु राज्येऽपि हृदाऽव्यग्रेण मे सदा ॥
परानन्दस्वरूपं मे न विस्मरसि कर्हिचित् ॥ ६१ ॥
अन्तर्निष्ठः सदा युक्तो बहिर्व्यवहरन्नपि ॥
प्रवाहपतितं कर्म कुरु तेन न लिप्यसे ॥ ६२ ॥
जीवन्मुक्तः सदा तिष्ठ यावदारब्धमात्मदृक् ॥
ततो विदेहकैवल्यं प्राप्स्यसे मयि निश्चितम् ॥ ६३ ॥
मयानुशिष्टो गच्छाशु यथोक्तं सम्यगाचर ॥
सुखीभवानन्दमयः सदैव त्वं निरामयः ॥ ६४ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्या-
मुपासनाकाण्डे चतुर्थाष्टके तृतीयोऽध्यायः ॥ ३ ॥

योगयुक्तः योगो निष्कामकर्म ॥५८॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ आशिषमाह—सुखीति ॥ ६४ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्यां उपासनाकाण्डे चतुर्थाष्टके टीकायां तृतीयोऽध्यायः ॥ ३ ॥ श्रीदत्तार्पणमस्तु ॥

इति कार्तवीर्यार्जुनस्य योगाभ्यासपूर्वं राज्याधिगमो नाम
चतु० तृती० ॥ ४।३ ॥

---

अथ राज्यं शासतोऽर्जुनस्यर्षिशापो
नाम चतुर्थाष्टके चतुर्थोऽध्यायः ॥ ४।४ ॥

हरिः ॐ ॥ ऋतस्य गोपोऽद्य भवान्यदाज्ञापयति प्रभुः॥
तन्मे मूर्ध्ना धृतमिति प्रोक्त्वा नत्वाऽर्जुनो गतः ॥१॥

पुरमेत्यार्जुनः सम्राट् श्रीदत्तेन यथोदितम् ॥
चचाराव्याहतस्वैरगतिर्वायुरिवात्मवान् ॥ २ ॥

दशयज्ञसहस्रैः स भूप ईजे महामतिः ॥
सर्वे यज्ञा महाराजो भूरिकाञ्चनदक्षिणाः ॥ ३ ॥

सर्वे काञ्चनवेदीका वेदविन्मुनिसंवृताः ॥
सर्वैर्देवैः सुसंप्राप्तैर्विमानस्थैरलंकृताः ॥ ४ ॥

अप्सरोभिश्च गन्धर्वैर्गायद्भिः परिशोभिताः ॥
नाकाले यस्य राष्ट्रे तु मरणं कोऽप्यपश्यत ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥

अष्टाविंशेऽर्जुनो राजा राज्यं गत्वेश्वराज्ञया ॥
यथोक्तमाचरद्दैवाच्छप्तोऽभूत्स महर्षिणा ॥ १ ॥

ऋतस्यावश्यंभाविफलस्य कर्मणः गोपो रक्षकः ॥ १ ॥ पुरं माहिष्मतीम् । अव्याहताऽकुण्ठिता स्वैरा स्वच्छन्दा गतिर्यस्य । आत्मवान्वशचित्तः ॥ २ ॥ दशसहस्रयज्ञैः । महांश्चासौ राट् च तस्य । भूरि प्रभूतं काञ्चनमेव दक्षिणा येषु ॥ ३ ॥ ४ ॥ अकाले नापश्यतेति संबन्धः ॥ ५ ॥ ‘ अतिवृ-

दुर्भिक्षमीतिभीत्यादि यस्य राष्ट्रे कदापि नो ॥
यथाकालं ववर्षेन्द्रः सस्यवृद्धिं ददौ मही॥ ६ ॥

समस्तरत्नसंपूर्णश्चक्रवर्ती बभूव सः ॥
स्वयं हि सप्तद्वीपेषु खड्गी चक्री शरासनी॥ ७ ॥

रथी परिभ्रमत्येव दुष्टचोरारिशासनः ॥
सर्वान्तरो यथा वायुरात्मा साक्षी स्वयोगतः॥ ८ ॥

एवं राजा मनुष्योऽपि माहिष्मत्यां वसन्नपि ॥
कर्कोटकसुतां जित्वा पुरीं तत्र न्यवेशयत्॥ ९ ॥

ष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ॥ स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः' इति। ताभ्यो भीतिः। आदिशब्दान्मार्याद्युपसर्गा उत्पाताश्च ॥ ६ ॥ ७ ॥ यथात्मा सूत्रत्वेन व्यापको वायुः साक्षी 'वायुर्वै गौतम तत्सूत्रम्' इति श्रुतेः। वाय्वादेः साक्षित्वं पुराणोक्तं 'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं मनश्च ॥ अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम्' इति। यद्यपि 'साक्षी चेता केवलो निर्गुणश्च' इति श्रुतेरात्मनः साक्षित्वं मुख्यं तथाप्यन्तर्यामित्वेनादित्यादिदेवतारूपेण साक्षित्वाभ्युपगमे न काप्यनुपपत्तिः। यद्वा वायुशब्दवाच्यः सर्वान्तर आत्मा साक्षी तथायं राजापि योगप्रभावतः सर्वसाक्षी बभूव॥ ८ ॥ कर्कोटको नागविशेषः। तत्र कर्कोटकनिवासभूते समुद्रतीरे ॥ ९ ॥ रेवां

कदाचित्स्त्रीसहस्राढ्यो रेवायां स महाबलः ॥
चिक्रीडे दोःसहस्रेण रेवां प्राग्गतिमानयन् ॥ १० ॥

तत्प्रेक्ष्य तत्पतिः क्रुद्धः सिन्धुर्वेगादधावत ॥
तमूर्मिमालिनं क्रुद्धं दृष्ट्वा राजा प्रहस्य च ॥ ११ ॥

एको भुजसहस्रेण जगाहे स महार्णवम् ॥
तस्य बाहुसहस्रेण पीडितोऽभून्महोदधिः ॥ १२ ॥

चूर्णीकृतमहावीचिर्लीनमीनमुखः स च ॥
भीतभीतः समुद्रोऽपि पलायनपरोऽभवत् ॥ १३ ॥

अब्धौ संक्षोभ्यमाणे तु पातालस्था महासुराः ॥
सर्वेऽप्यहिवरा बाढमार्तिमापुर्दुरत्ययाम् ॥ १४ ॥

एवंप्रभावो राजर्षिरेको धन्वी महीतले ॥
योगाभ्यासरतो नित्यं राज्यं चक्रे स्वधर्मवित् ॥ १५ ॥

दुश्चरं तत्तपो दृष्ट्वा निष्प्रत्यूहांस्तथाध्वरान् ॥
स्वपदस्था अपि सुरा भयमाजग्मुरन्वहम् ॥ १६ ॥

देवाधिकारहर्तायं भविष्यति तपोबलात् ॥
इत्याशङ्क्यामरैः सूर्यः सत्त्वहत्यै प्रचोदितः ॥ १७ ॥

नर्मदाम् ॥ १० ॥ ऊर्मिमालिनं महोर्मिम् ॥ ११ ॥ १२ ॥ राज्ञा चूर्णीकृता महावीचय उन्नततरङ्गा यस्य । लीना मीनमुखा यस्मिन् । भीतादपि भीतः ॥ १३ ॥ महासुरा बल्यादयः ॥ १४ ॥ १५ ॥ निष्प्रत्यूहान्निर्विघ्नान् । शस्त्रधारिणो योद्धुरभावात् ॥ १६ ॥ १७ ॥ आतिथेयं अतिथिषु

द्विजरूपधरो भूत्वा वैश्वदेवक्षणे रविः ॥
बुभुक्षितोऽतिथिः प्राप्त आतिथेयं तमर्जुनम् ॥ १८ ॥

अतिथिः प्राह राजेन्द्र ब्रह्मण्योऽसि दयापरः ॥
तृप्तिमेकां प्रयच्छाद्य त्वत्तः कोऽन्यो ममेष्टदः ॥ १९ ॥

राजोचे केन ते तृप्तिर्वद सर्वं ददामि ते ॥
दैवतं ब्राह्मणोऽस्माकं सर्वस्वं वार्पयाम्युत ॥ २० ॥

सूर्यस्तमाह सर्वोङ्घ्रिद्रूपभिक्षां प्रयच्छ मे ॥
तया भवेयं संतृप्तस्तृप्तिर्मे भूप नान्यथा ॥ २१ ॥

तच्छ्रुत्वाश्चर्यतोषाभ्यां राजा प्राह प्रणम्य तम् ॥
यद्याचितं तद्ददामि को भवान्मानुषो नहि ॥ २२ ॥

तदा सूर्यः स्वरूपेण प्रादुरास प्रणम्य तम् ॥
राजा प्राहाद्य धन्योऽस्मि लब्धो यस्येदृशोऽतिथिः ॥ २३ ॥

न शक्याः स्थावराः सर्वे तेजसा स्वबलेन च ॥
निर्दग्धुं तपतां श्रेष्ठ त्वामेव प्रणतोऽस्म्यहम् ॥ २४ ॥

एवमुक्तस्ततः सूर्यः प्राह राजन्बहुप्रद ॥
तुष्टस्तेऽहं ददामीषूनक्षयान्सर्वतोमुखान् ॥ २५ ॥

साधुं 'पथ्यातिथि'इति ढञ् ॥ १८ ॥ १९ ॥ २० ॥ सर्ववृक्षरूपां भिक्षाम् ॥ २१ ॥ वृक्षभिक्षाश्रवणमाश्चर्यं, तेजस्व्यतिथिलाभस्तोषस्ताभ्याम् ॥ २२ ॥ तं सूर्यम् ॥ २३ ॥ २४ ॥ इषूपलक्षितानिषुधीन् ॥ २५ ॥ ज्वालयिष्यन्ति

ते क्षणाज्ज्वालयिष्यन्ति मम तेजःसमन्विताः ॥
संधाय ताञ्छरान्सर्वान् शोषयित्वार्पयाद्य मे ॥ २६ ॥
शुष्कान्भस्मीकरिष्यामि तेन तृप्तिर्भवेन्मम ॥
इत्युक्त्वा स रविर्दिव्यान्बाणानस्मा उपानयत् ॥ २७ ॥
तेन दत्ताञ्छरान्राजा संधाय बलवत्तरः ॥
स पञ्चशतचापेभ्यो मुमोचाप इवाम्बुदः ॥ २८ ॥
पर्वतग्रामनगरघोषदुर्गेवनादिजाः ॥
सुशुष्काः स्थावराः सर्वे बभूवुर्बाणवृष्टितः ॥ २९ ॥
ततः सूर्योऽग्निरूपेण शुष्कान्सर्वानभक्षयत् ॥
तृणगुल्मलतावृक्षमुखांस्तान्स्थावरान्क्षणात् ॥ ३० ॥
अत्रान्तरे वसिष्ठाख्यस्तपोदीप्तो महामुनिः ॥
समाधिविरमे वृक्षान्निर्दग्धान्समपश्यत ॥ ३१ ॥
क्रुद्धः शापं ददौ तस्मा अर्जुनाय महातपाः ॥
मदाश्रमद्रुमा यस्मात्त्वया दग्धाः सुदुर्मते ॥ ३२ ॥
मत्तोऽसि बलदृप्तोऽसि यतः प्रतिभटो न ते ॥
मा गर्वं वह दुष्टात्मंस्तेजस्वी ब्राह्मणोत्तमः ॥ ३३ ॥

शुष्कभावं नेष्यन्ति नतु भस्मतां । भस्मीकरिष्यामीति वक्ष्यमाणत्वात् । ननु तेषामीदृक् सामर्थ्यं कथमित्यत आह–ममेति । सर्वान्वृक्षान् ॥२६॥ अस्मै राज्ञे उपानयत्समर्पयत् ॥ २७ ॥ अम्बुदो मेघोपम इव ॥ २८ ॥ घोष आभीरपल्ली ॥ २९ ॥ अभक्षयद्भस्मसाच्चकार ॥ ३० ॥ तपसा दीप्तः । समाधिविरमे व्युत्थानदशायाम् ॥ ३१ ॥ महातपा इति शापामोघ्यं सूचितम् ॥ ३२ ॥ प्रतिभटः प्रतियोद्धा ॥ ३३ ॥ ननु सहस्रकरस्य मम

भार्गवो जामदग्न्यस्ते रामः परशुना भुजान् ॥
छित्त्वा सहस्रं द्रुस्कन्धानिव त्वां निहनिष्यति ॥३४॥
एवं स भाविना राजा ब्रह्मण्योऽप्यतिथिप्रियः ॥
दैवयोगेन संशप्तः शान्तेनापि महर्षिणा ॥ ३५ ॥
तदाप्रभृति राजासावुद्धतोऽभूत्सुधीरपि ॥
बभूवुर्बहवः पुत्रास्तस्य राज्ञो महाबलाः ॥ ३६ ॥
दत्तात्रेयप्रसादेन लब्धेन स्यन्दनेन सः ॥
कामगेन विमानेन चचाराखिललोकगः ॥ ३७ ॥
ऐश्वर्यमतुलं लेभे किंकर्यः सिद्धयोऽस्य हि ॥
अव्याहताज्ञः सर्वत्र स सम्राडुग्रशासनः ॥ ३८ ॥
स्मृतिगामी स सर्वत्र कामितानेकदेहधृक् ॥
प्रत्यक्षदर्शी सर्वस्य दत्तात्रेय इवापरः ॥ ३९ ॥
दुर्वृत्तान्वारयामास नृपांश्चोराञ्जघान च ॥
ममर्द देवान्यक्षादीन्पीडयामास सर्वशः ॥ ४० ॥

किं ब्राह्मणोत्तमेनेत्यत आह । द्रुस्कन्धानिव वृक्षशाखा इव ॥ ३४ ॥ ननु अतिथिप्रियो ब्रह्मण्योऽपि राजा शान्तेन महर्षिणा कथं शप्त इत्यत आह—एवमिति । भाविना दैवयोगेन ॥ ३५ ॥ तदाप्रभृति तत आरभ्य ॥ ३६ ॥ स्यन्दनेन रथेन । कामगेनाव्याहतगतिना विमानेन ॥ ३७ ॥ सिद्धयोऽणिमादयः । सर्वत्र नृदेवादिषु अव्याहताऽप्रतिहता आज्ञा यस्य । उग्रं भयंकरं शासनं यस्य ॥ ३८ ॥ कामितान् अभिप्रेताननेकान्देहान्धरतीति तथा । सर्वस्य लोकस्य व्यवहारं प्रत्यक्षं पश्यतीति प्रत्यक्षदर्शी अत एवापरो दत्तात्रेय इवेति भावः ॥ ३९ ॥ ४० ॥ पुलोमस्यापत्यं पौलोमीन्द्राणी

दिव्येनैव विमानेन हैहयाधिपतिर्बली ॥
क्रीडन्तमिन्द्रं पौलोम्या धर्षयामास तं दिवि ॥ ४१ ॥
ततो देवा विनिर्धूता देवर्षिसहितास्तदा ॥
पीडिताः कार्तवीर्येण श्रीविष्णुं शरणं ययुः ॥ ४२ ॥
देवदेव सुरारिघ्न विष्णो सत्यपराक्रम ॥
भगवन्भूतरक्षार्थं कार्तवीर्यार्जुनं जहि ॥ ४३ ॥
स दिव्येन विमानेन त्रैलोक्ये विचरन्स्वयम् ॥
बाधते विश्वमखिलं त्वां विना कोऽस्य घातकः ॥४४॥
इति संप्रार्थितो देवो देवान्दृष्ट्वार्जुनार्दितान् ॥
प्राहावतीर्य तं हन्मि विप्ररूपेण निश्चितम् ॥ ४५ ॥
एवमुक्ता भगवता हृष्टा इन्द्रमुखाः सुराः ॥
विष्णुं नत्वा स्वस्वधाम प्रापुश्चिन्ताविवर्जिताः ॥ ४६ ॥
भगवानपि सर्वज्ञः स्वभक्तं वीक्ष्य तादृशम् ॥
अर्जुनं मुनिना शप्तं समुद्धर्तुं मनो दधौ ॥ ४७ ॥

त्तया ॥ ४१ ॥ ४२ ॥ भूतरक्षार्थं सर्वप्राणिरक्षार्थम् । जहि घातय ॥ ४३ ॥ ननु धार्मिको ज्ञानी राजा कुतो हन्तव्य इत्यत आहुः । अखिलं विश्वं बाधते न त्वस्मानेव । ननु मद्भक्तो मया कथं हन्तव्यः भवद्भिरेव सर्वैर्मिलित्वा हन्तव्य इत्यत आहुः । त्वामादिपुरुषं विनास्य बलिष्ठस्य योगिनः को घातकः । न कोऽपि । अतः त्वमेव कथमप्येनं जहीति भावः ॥ ४४ ॥ इत्येवंप्रकारेण सम्यगकपटमित्यर्थः । प्रार्थितो विष्णुर्विप्ररूपेणावतीर्य तं हन्मीति प्राह । वरदानस्य ख्यात्याधिकत्वं स्मरन् ॥ ४५ ॥ स्वस्वधाम स्वं स्वं पदम् ॥४६॥ ननु सर्वज्ञो भगवान् स्वभक्तं हन्तुं कथं प्रतिज्ञातवानित्यत आह चतुर्भिः । समुद्धर्तुं विदेहकैवल्यं दातुम् ॥ ४७ ॥ मया

वधोऽस्य कल्पितः पूर्वं मया ख्यात्याधिकान्नरात् ॥
अतोऽहं द्विजरूपेण हन्मि भक्तमपि स्वयम् ॥ ४८ ॥
योगाभ्यासेन तपसा मुक्तोऽयं मदनुग्रहात् ॥
नूनं विदेहकैवल्यं भक्तारब्धं नयाम्यहम् ॥ ४९ ॥
इति निश्चित्य भगवान्स्वांशेन त्रिजगत्पतिः ॥
अवातरद्विप्ररूपी दयालुर्भक्तभावनः ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां
संहितायां वासुदेव्यामुपासनाकाण्डे
चतुर्थाष्टके चतुर्थोऽध्यायः ॥ ४ ॥

श्रीदत्तरूपेण क्षत्रियाद्ब्राह्मणस्य ख्यात्याधिकत्वाद्द्विजरूपेण स्वयं स्वभक्तमपि हन्मि। द्विजशब्दस्य द्विजातित्वप्रतीतावपि ब्राह्मणे एव रूढत्वात् कथासंगतित्वाच्चात्र ब्राह्मण एव। 'न तस्य प्राणा उत्क्रामन्ति' इतिश्रुतेर्ज्ञानिनो हननाद्यभावाद्धन हिंसागत्योरितिधातोर्गत्यर्थमादायान्तर्भावितण्यर्थेन प्रारब्धपरिसमाप्त्या विदेहकैवल्यं गमयामीति योजना ॥ ४८ ॥ तथैवाह— योगेति। 'ब्रह्मविद्ब्रह्मैव भवति'। 'न तस्य प्रेतसंज्ञास्ति' 'नायं हन्ति न हन्यते' 'नैनं छिन्दन्ति शस्त्राणि' इति सिद्धान्तितत्वाद्विदेहकैवल्यनयनमेव हननम् ॥ ४९ ॥ ॥ ५० ॥ इति चतुर्थे चतुर्थष्टीकायां समाप्तः ॥

इति श्रीदत्त० राज्यं शासतोऽर्जुनस्यर्षिशापो
नाम चतुर्था० चतुर्थो० ॥ ४।४ ॥

---

## अथ देवकार्यार्थं परशुरामावतारो नाम चतुर्थाष्टके पञ्चमोऽध्यायः ॥ ४।५ ॥

हरिः ॐ ॥ त्वं हि नः पाहि देवेति सकृद्यः प्रार्थयत्यपि ॥
सर्वापद्भ्यस्तमुद्धृत्य ददातीशः पदं ध्रुवम् ॥ १ ॥

नित्यमुक्तं निजं भक्तमेकभक्तिं तमर्जुनम् ॥
कथं हन्यात्स निन्ये तत्प्रार्थितं सत्यतां प्रभुः ॥ २ ॥

आसीन्नृपः कान्यकुब्जे गाधी नाम महाबलः ॥
वसतो भार्यया सार्धं वने तस्याभवत्सुता ॥ ३ ॥

रूपलावण्यसंपन्नां देवीमिव महाप्रभाम् ॥
ऋचीको भार्गवो दृष्ट्वा ययाचे तां नृपं प्रति ॥ ४ ॥

महातपस्विनं दृष्ट्वा गाधी तं शंसितव्रतम् ॥
प्रत्याख्यातुं नृपो भीतः प्राह तं प्रार्थयन्बहु ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥

भगवान्देवकार्यार्थमवतीर्य द्विजात्मना ॥
पितृवाक्यपरो जात एकोनत्रिंश ईरितः ॥ १ ॥

**सकृदेकवारम्** । ध्रुवं मोक्षम् ॥ १ ॥ प्रार्थितं ख्यात्याधिकवधलक्षणम् । **तत्प्रार्थितम्** ॥ २ ॥ ३ ॥ ४ ॥ शितं 'तीक्ष्णं व्रतं यस्य ॥ ५ ॥

ब्रह्मन्संभावनीयोऽसि भार्येयमुचिता तव ॥
तथाप्येकः पणो मेऽद्य कृतस्तं शृणु मानद ॥ ६ ॥
एकतः श्यामकर्णानां पाण्डुराणां तरस्विनाम् ॥
सहस्रं वाजिनां शुल्कं यो ददात्येव भाग्यवान् ॥ ७ ॥
तद्विधाय मया देया कन्यैषाङ्गाप्सरःसमा ॥
इति विप्र प्रतिज्ञातं मया ते साध्यते कथम् ॥ ८ ॥
ऋषिः प्राहाहमेवाशु दास्याम्यद्य तथैव ते ॥
साध्वी ममास्तु भार्येयं नात्र कार्या विचारणा ॥ ९ ॥
इति प्रतिज्ञाय मुनिर्वरुणं प्राप्य तं जगौ ॥
शुल्कार्थं श्यामकर्णाश्वसहस्रं मे प्रदीयताम् ॥ १० ॥
ज्ञात्वोग्रतपसं विप्रं वरुणोपि स्वराड् भृशम् ॥
प्रत्याख्यातुमनीशोऽदात्स तस्मै तादृशान्हयान् ॥ ११ ॥
आदायाश्वान्मुनिः शीघ्रं गङ्गामध्याद्बहिर्ययौ ॥
कान्यकुब्जेऽश्वतीर्थं तत्तोऽभूत्सर्वपापहम् ॥ १२ ॥
गाधिर्भूपमवाप्याह त्वत्प्रतिज्ञानुसारतः ॥
अत्रानीता मयेमेऽश्वाः स्वस्ति ते देहि मे सुताम् ॥ १३ ॥

**संभावनीयः** सत्कार्योऽसि ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ जगौ उवाच ॥ १० ॥ **उग्रं** देदीप्यमानं तपो यस्य तम् । स्वेन बलेन राजतेऽसौ स्वराट् **वरुणः** 'संम्राळन्यः स्वराळन्य उच्यते वां महान्ताविन्द्रावरुणे' ति श्रुतेः । **अनीशोऽसमर्थः** शापभयात् ॥ ११ ॥ तत् अश्वनिर्गमस्थानजम् ॥ १२ ॥ **अवाप्य** प्राप्य आह । मया इमे अश्वा आनीताः ॥ १३ ॥ तस्मै **ऋचीकाय**

तस्यात्यद्भुतमाहात्म्यं दृष्ट्वा तस्मै मुदा नृपः ॥
यथोक्तेन विधानेन ददौ कन्यामनिन्दिताम् ॥ १४ ॥

एवं धर्मेण लब्ध्वा तामृचीकः स्वर्वधूपमाम् ॥
यथासुखं यथाकामं तया रेमे सुमध्यया ॥ १५ ॥

देवा इन्द्रादयो दृष्ट्वा तस्योद्योगं महात्मनः ॥
आश्चर्यं परमं प्रापुः प्रशशंसुस्तपस्विताम् ॥ १६ ॥

अथैकदाह तं गाधिर्मुनेऽपुत्रोऽस्मि सर्ववित् ॥
उपायं कुरु येन स्यां सपुत्रोऽहं विमुक्तिगः ॥ १७ ॥

तथेत्युक्त्वा ततः पत्न्या साकं स पितरं मुदा ॥
आगत्य तत्पदे भक्त्या ववन्दे भक्तिभावितः ॥ १८ ॥

सर्वं न्यवेदयत्प्रेम्णा भृगुस्तुष्टो महामुनिः ॥
तं दृष्ट्वा कामसदृशं स्नुषां च स्वर्वधूपमाम् ॥ १९ ॥

स्वाश्रमे स्थापयामास प्रहृष्टेनान्तरात्मना ॥
सुभगा साप्यनुदिनं भर्तृसेवापरायणा ॥ २० ॥

शीलेन सेवया चापि मुनिं परमधार्मिकम् ॥
साध्वी प्रसादयामास गाधिपुत्री मनस्विनी ॥ २१ ॥

॥ १४ ॥ तां सत्यवतीम् ॥ १५ ॥ १६ ॥ एकदा आह 'नापुत्रस्य लोकोऽस्ति' इति श्रुतेः । येनोपायेनाहं सपुत्रः सन्मुक्तिगः स्याम् 'एष पन्था उरुगायः सुशेवो यं पुत्रिण आक्रमन्ते विशोकाः ॥ शश्वत्पुत्रेण पितरोत्यायन्बहुलं तमः' इति श्रुतेः ॥ १७ ॥ पितरं भृगुम् ॥ १८ ॥ १९ ॥ ॥ २० ॥ शीलेन स्वभावेन । प्रशस्तं मनो यस्याः सा मनस्विनी ॥ २१ ॥

भृगुः प्रसन्नस्तामाह धन्यासि त्वं पतिव्रते।।
वरं वृणीष्व सुभगे दास्यामि त्वदभीप्सितम् ।। २२ ।।

सा प्राह भगवन्मातुरपुत्राया ममाप्युत ।।
आधिं ज्ञात्वा महाप्राज्ञ प्रसादं कर्तुमर्हसि ।। २३ ।।

तां सोऽवददुपायोऽयं साध्वि पुंसवनाय वाम् ।।
ऋतुस्नाता त्वं च माता मनस्याधाय तत्परम् ।। २४ ।।

अश्वत्थं पृथगालिङ्ग्य यज्ञाङ्गं च यथाविधि ।।
चरुद्वयं च संस्कृत्य प्राशितव्यं विधानतः ।। २५ ।।

पुत्रस्ते ब्रह्मवर्चस्वी सम्राण्मातुश्च ते क्रमात् ।।
भविष्यति न संदेहः सत्यं सत्यवति स्नुषे ।। २६ ।।

तथेत्युक्त्वाथ सा राष्ट्रं पितुः प्राप प्रियान्विता ।।
यथोपदिष्टं भृगुणा व्यकरोत्पुत्रकाङ्क्षया ।। २७ ।।

चरुप्राशनकाले तु व्यत्यासो दैवतोऽभवत् ।।
मात्रा पुत्र्याश्चरुर्भुक्तः पुत्र्या मातुः प्रमादतः ।। २८ ।।

।। २२ ।। अपुत्राया मातुर्ममाप्याधिं मनस्तापम् ।। २३ ।। प्रसादं पुत्रप्राप्तिरूपम् । पुमान्सूयतेऽनेनेति पुंसवनं तस्मै । वां तव मातुश्च । परं ईशं मनस्याधाय ध्यात्वा ।। २४ ।। त्वयाश्वत्थं ब्राह्मणम् । त्वन्मात्रा यज्ञाङ्गमुदुम्बरम् । क्षत्रं 'क्षत्रं वा एतद्वनस्पतीनां यदुदुम्बरः' इति श्रुतेः । विधानतः पुत्रकामेष्टिविधानेन ।। २५ ।। २६ ।। प्रियेण भर्त्रान्विता युक्ता ।। २७ ।। व्यत्यासो वैपरीत्यम् । तदाह—मात्रेति ।। २८ ।। दिव्येन चक्षुषा

ततो बहुतिथे काले गते दिव्येन चक्षुषा ॥
विज्ञाय व्यत्ययं प्राप्य भृगुः प्राह स्नुषां सतीम् ॥२९॥

उपभुक्तश्चरुर्भद्रे वृक्षस्यालिङ्गनं कृतम् ॥
विपरीतं हि जातं तत्संतानव्यत्ययो भवेत् ॥ ३० ॥

ब्राह्मणोऽपि क्षत्रवृत्तिस्तव पुत्रो भविष्यति ॥
क्षत्रोऽपि ब्राह्मणाचारो मातुस्तव सुतस्तथा ॥ ३१ ॥

तच्छ्रुत्वा प्रार्थयामास श्वशुरं सा पुनः पुनः ॥
न मे पुत्रो भवत्वीदृक्कामं पौत्रो भवत्विति ॥ ३२ ॥

भृगुस्तां प्रतिनन्द्याह तथास्त्विति ततो ययौ ॥
स्वाश्रमं सा ततोऽसूत काले सत्यवती सुतम् ॥ ३३ ॥

तेजसा वर्चसा युक्तं जमदग्निमिति द्विजम् ॥
नाम्नाकरोदभूत्सोपि वेदवेदाङ्गपारगः ॥ ३४ ॥

तस्या मातुः सुतो जज्ञे विश्वामित्रो महामनाः॥
चरुप्रभावात्स ययौ ब्रह्मर्षित्वं तपोबलात् ॥ ३५ ॥

ज्ञानदृष्ट्या ॥ २९ ॥ ३० ॥ संतानव्यत्ययं दर्शयति–ब्राह्मण इति ॥ ३१ ॥ पौत्रो नप्ता ॥ ३२ ॥ प्रतिनन्द्य आह ॥ ३३ ॥ अकरोदृचीक इति शेषः । जमज्ज्वलन्नग्निरिव 'जमज्ज्वलन्नाम' इति निघण्टुः । वेदा ऋगाद्याः । छन्द-आद्यङ्गानि ॥ ३४ ॥ विश्वस्य मित्रं ' मित्रे चर्षौ ' इत्याद्‌ ' विश्वस्य ह वै मित्रं विश्वामित्र आस' इति श्रुतेः ॥ ३५ ॥ शक्तिकलामुमांशभूताम् ।

जमदग्निस्तु रुद्रांशो महातेजा महामनाः ॥
रेणोः कन्यां शक्तिकलामुपयेमे स रेणुकाम् ॥ ३६ ॥

गार्हस्थ्यं धर्ममाश्रित्य तया रेणुकया सह ॥
साध्व्यानुकूलया तीव्रं जमदग्निस्तपोऽतपत् ॥ ३७ ॥

तयोः पुत्रा महात्मानः पञ्चासन्नमरोपमाः ॥
तेषां कनीयाञ्छ्रीविष्णोरंशो रामः प्रतापवान् ॥ ३८ ॥

साङ्गान्वेदानधीत्यासौ ब्रह्मचर्येण संयुतः ॥
धनुर्वेदं च विधिवत्पितृसेवापरोऽभवत् ॥ ३९ ॥

आहिताग्नेः पितुर्नित्यमनुकूलोऽभवत्सदा ॥
फलमूलसमित्पुष्पकुशादीन्नाम आहरत् ॥ ४० ॥

एकदा रेणुका स्नातुं नदीं गत्वा ददर्श तम् ॥
क्रीडन्तं सलिले स्त्रीभी राजानं पद्ममालिनम् ॥ ४१ ॥

क्षणं स्थित्वा रेणुका सा तत्क्रीडां वीक्ष्य हर्षिता ॥
ततः सा शङ्किता भर्तुः समीपमगमद्द्रुतम् ॥ ४२ ॥

उपयेमे उदवहत्। 'उपाद्यमः स्व' इत्यात्मनेपदम् ॥ ३६ ॥ ॥ ३७ ॥ तयोः रेणुकाजमदग्न्योः। कनीयान् कनिष्ठः ॥ ३८ ॥ ॥ ३९ ॥ आहिताः स्थापिता अग्नयो दक्षिणाग्निगार्हपत्याहवनीयसभ्यावसथ्या येन। आहरदानयत् ॥४०॥ गन्धर्वराजं। हा धिक्। किं पतिव्रतया मया कृतं परक्रीडालोकनं। अनेन पापेन सर्वज्ञः पतिर्मां त्यजेत् किमिति शङ्किता सती ॥ ४१ ॥ ४२ ॥ धैर्यात्पातिव्रत्यात्परक्रीडायां रमसे धिक् त्वां गृहान्निर्गच्छ

स तां दृष्ट्वा च्युतां धैर्याद्ब्राह्म्या लक्ष्म्या विवर्जिताम् ॥
धिक्कृत्वा तां विगर्ह्याह वसुमन्तं सुतं रुषा ॥ ४३ ॥

पुत्रेमां घातयाशु त्वमिति श्रुत्वापि तद्वचः ॥
सस्नेहो नावधीत्तूष्णीं तस्थौ पश्यन्नधो भिया ॥ ४४ ॥

भस्मीभवेति तं प्रोक्त्वा सुषेणं च तथा वसुम् ॥
विश्वावसुं च तान्निन्ये कोपेनैव यमक्षयम् ॥ ४५ ॥

अत्रान्तरे वनाद्रामः प्राप तं प्राह सत्वरम् ॥
जह्येनामविचारेण भो राम त्वं ममाज्ञया ॥ ४६ ॥

तत आदाय परशुं रामो मातुः शिरोऽच्छिनत् ॥
शान्तो मुनिस्तमालिङ्ग्य प्राहाभीष्टं वरं वृणु ॥ ४७ ॥

स वव्रे मातुरुत्थानं भ्रातृणां चात्मनो जयम् ॥
युद्धेऽप्रतिद्वन्द्वतायुर्दीर्घं सोऽपि तथा ददौ ॥ ४८ ॥

ततस्ते बन्धवस्तस्य मृता अप्युत्थिताः पुनः ॥
रेणुका च महाभागा ततो रामो मुदं ययौ ॥ ४९ ॥

ततः प्रभृति रामोऽसौ महावीर्योऽभवद्भुवि ॥
तेजसातीव दुर्धर्षो धनुर्विद्याविशारदः ॥ ५० ॥

मुखमपि मा दर्शयेति विगर्ह्याह ॥ ४३ ॥ ४४ ॥ यमक्षयं मृतिम् ॥ ४५ ॥
॥ ४६ ॥ ४७ ॥ स रामः । दीर्घायुश्चिरजीवितां । स जमदग्निरपि ॥ ४८ ॥
रेणुका चोत्थिता ॥ ४९ ॥ पितृवरान्महावीर्यः शिवप्रसादात्तेजसात्यन्तं
दुर्धर्षश्च ॥ ५० ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां उपासनाकाण्डे चतुर्थाष्टके पञ्चमोऽध्यायः ॥ ४।५ ॥

वासुदेव्यां उपासनाकाण्डे चतुर्थाष्टके पञ्चमोऽध्यायः ॥ ९ ॥

इति श्रीदत्त० देवकार्यार्थं परशुरामावतारो नाम चतु० पंचमोऽध्यायः ॥ ४।५ ॥

---

**बलाद्धोमधेनुहर्तुरर्जुनस्य परशुरामेण वधो नाम चतुर्थाष्टके षष्ठोऽध्यायः ॥ ४।६ ॥**

**हरिः ॐ॥ पिबतः प्रत्यहं सोमं राज्ञो धर्मात्मनोऽस्य च ॥**
**ब्रह्मण्यस्यापि धीर्भ्रष्टा मुनिशापेन दैवतः ॥ १ ॥**

**विहितार्थोऽपि राजासौ ब्रह्मण्योऽपि सुनीतिमान् ॥**
**वशीकृतो भाविनायमपराधं व्यधादृषेः ॥ २ ॥**

**ब्रह्मादयोऽपि सर्वज्ञा भाविनैव वशीकृताः ॥**
**अवश्यंभाविताप्येषा स्वयमीशेन निर्मिता ॥ ३ ॥**

॥ श्रीगणेशाय नमः ॥

त्रिंशे दैवान्नष्टबुद्धिं हरन्तं भार्गवो रुषा ॥
होमधेनुं भुजाञ्छित्वा रामोऽहन्कृतवीर्यजम् ॥ १ ॥

'**सौत्रामण्यां** सुराग्रहं गृह्णातीति' शासनात् प्रत्यहं सोमं पिबतो **धर्मात्मनो ब्रह्मण्यस्यापि** बुद्धिर्भ्रष्टा । अत्र कारणं ब्रह्मशाप एव । ईदृशस्यैवं **गतिश्चेत्किमु** वाच्यमन्येषाम् ॥ १ ॥ २ ॥ ननु ज्ञानिनि कथं शापप्रवेश **इति चेच्छापस्तु** निमित्तमात्रं किंतु प्रारब्धमेवेदं येन ब्रह्मादयोपि व्याप्ता **इत्याह—ब्रह्मेति** । भाविना प्रारब्धेन । तर्ह्यवश्यंभावितेश्वरस्याप्यनिवार्येत्यत **आह—ईशेन** निर्मितेति । तस्मात् 'यदभावि न तद्भावि भावि चेन्न तद-**न्यथा'** इति निश्चित्यापि पुरुषकारो न हेयः भाविनोऽचिन्त्यत्वात्, प्रयत्नस्य **विशेषतः** श्रवणात् ॥ ३ ॥ ईश्वरेणाप्यवश्यंभाविताप्यनुमोदितेति प्रमाण-

कुमारशापदग्धास्ते पेतुर्भुव्यजपार्षदाः ॥
चन्द्रेन्द्रभृगुदक्षाद्या भाविनैवेह वञ्चिताः ॥ ४ ॥

नारदाद्या अपि विधिं नातिक्रामन्ति तद्वशाः ॥
का कथा तु मनुष्याणां बलीयान्विधिरेष हि ॥ ५ ॥

बलिष्ठेऽस्मिन्नपि कुतो हानिस्तत्त्वविदः सतः ॥
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ६ ॥

यदा सिद्धोऽभवद्योगी सोऽर्जुनः प्राह तं गुरुम् ॥
बलिष्ठं मां त्वमेवेश जहि यास्ये ततो गतिम् ॥ ७ ॥

नेदं त्वां रोचते मृत्युर्न मे रोगान्न हीनतः ॥
भूयाद्भवादृशादेव राज्ञेत्थं याचितं तदा ॥ ८ ॥

श्रीशः स्वांशेन तत्सिध्द्या अवतीर्य द्विजन्मना ॥
जघ्ने ख्यात्याधिको रामो भार्गवोऽपि स्वसेवकम् ॥ ९ ॥

यति–कुमारेति । अजस्य विष्णोः । पार्षदा जयाद्याः ॥ ४ ॥ आधिकारिकाणां परतन्त्राणामेवमस्तु स्वतन्त्रा ज्ञानिनः कुतोऽवश्यं भावितां नातिक्रामन्ति इति चेत्तस्या ईश्वरेण निर्मितत्वादीशसृष्टेर्बाधिकाभावाज्जीवसृष्टया बाधकेन कृतार्थत्वप्रदेन ज्ञानेन स्वातन्त्र्यं गता अपि तामाद्रियन्त इत्याह–नारदेति ॥ ५ ॥ एवं तस्मिन् विधौ, बलिष्ठेऽपि सति ब्रह्मरूपिणो विदः ज्ञानिनः का हानिः । न कापि । तस्य चैतन्यस्वाभाव्यादग्रहणान्यथाग्रहणाविर्भावतिरोभावादिवर्जितत्वात् यतः शरीरनिर्वर्त्यं स्नानभोजनादि केवलं रागशून्यं कर्म कुर्वन्किल्बिषं नाप्नोति ॥ ६ ॥ पूर्वं तेनैवेदं प्रार्थितमित्याह त्रिभिः ॥ ७ ॥ ॥ ८ ॥ ९ ॥ तर्हीशस्य दोषः, नेत्याह–दोष इति । अध्यारोपस्यापवादेन

दोषः क ईश्वरस्यात्र कल्प्यतेऽत्र जगद्भ्रमः ॥
ईशः सर्गस्थितिलयान्करोतीति भ्रमो ह्यसन् ॥ १० ॥
ईशः कर्तास्य सर्वस्य हर्ता भर्ता जनार्दनः ॥
बालवत्क्रीडति सदा तेन बन्धः कुतो विभोः ॥ ११ ॥
उत्पन्नस्यापि सर्वस्य ध्रुवो नाशोऽध्रुवत्वतः ॥
किं विनष्टं हि भक्तस्य देहे नष्टे चिदात्मनः ॥ १२ ॥
ज्ञस्यापि यावदारब्धं चेष्टा भवति तेन किम् ॥
हीयते तस्य स ज्ञानकाल एव स्थितिं गतः ॥ १३ ॥
कर्मणैवेश्वरोऽप्यत्र चेष्टते न स्वभावतः ॥
न तेन बाध्यते तस्मान्नात्र दोषो द्वयोरपि ॥ १४ ॥
एकदा रथमारुह्य सम्राड् राजा स पर्यटन् ॥
क्रीडित्वा सुचिरं हर्षाच्चतुरङ्गबलान्वितः ॥ १५ ॥
मार्गे निवृत्तः सोऽद्राक्षीज्जमदग्न्याश्रमं शुभम् ॥
द्वित्रैर्मित्रैर्युतो राजा पादचारी तमाविशत् ॥ १६ ॥

बाधकत्वात् विनयात् ज्ञानिदृष्ट्या प्रपञ्चस्य मिथ्यात्वात् सृष्ट्यादिभ्रमोऽसन्नेव । यैस्तु तात्त्विक इत्युक्तः वेदबाह्यत्वेन तेषां कुदृष्टित्वात्स नादरणीयः ‘या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ॥ सर्वास्ता निष्फलाः प्रेत्य तमोमूला हि ताः स्मृताः’ इति ॥ १० ॥ यद्यपि लोकलीलाकैवल्यन्यायेन तत्स्वीकारेऽपि न दोष इत्याह द्वाभ्याम् ॥ ११ ॥ १२ ॥ स्थितिमद्वैतस्थितिम् । नहि मुक्तानां समाहितानां च भ्रान्तिदर्शनाभावे आत्मव्यतिरिक्तो बाह्यार्थ उपलभ्यते, नह्युन्मत्तावगतं वस्त्वनुन्मत्तैरपि तथाभूतं गम्यते । एतेन द्वयदर्शनं दुःखोपलब्धिश्च प्रत्युक्ता ॥ १३ ॥ उपसंहरति— तस्मादिति ॥ १४ ॥ १५ ॥ द्वे वा त्रीणि वा द्वित्राणि तैः ॥ १६ ॥ शिवया पार्वत्या

दृष्ट्वाऽऽश्रमे मूर्तिमन्तं शिवयेव शिवं नृपः ॥
जमदग्निं तपोदीप्तं साध्व्या रेणुकयान्वितम् ॥ १७ ॥
तं नमस्कृत्य भक्त्यैव मूर्ध्नि बद्धाञ्जलिर्नृपः ॥
स्तुत्वा स्तोत्रैश्च विविधैर्नत्वापि च पुनः पुनः ॥ १८ ॥
तदाज्ञया तत्पुरतो विनयावनतो नृपः ॥
उपविश्याथ पप्रच्छ कुशलं सोऽपि तं तथा ॥ १९ ॥
राजाऽऽह राष्ट्रकोशादौ धर्मे सर्वत्र चाप्यहो ॥
भवत्प्रसादात्स्वस्त्यस्ति धन्यो वो दर्शनादहम् ॥ २० ॥
इत्युक्तः स ऋषिः स्नेहादातिथ्येन निमन्त्र्य तम् ॥
ससैन्यं तर्पयामास स्वन्नैर्धेनुप्रसादतः ॥ २१ ॥
दृष्ट्वा तद्वैभवं राजा भाविनाऽऽकृष्टचेतनः ॥
ऋषिं पप्रच्छ चैश्वर्यं कुत ईदृक् तव प्रभो ॥ २२ ॥
स प्राह कामधुगियं सदा मे सर्वकामदा ॥
राजाऽऽह दीयतां मे सा निष्क्रयं ते ददाम्यहम् ॥ २३ ॥
बहुमूल्यं धनं रत्नं भूमिं गाश्चाप्यनेकधा ॥
गृहाणेति प्रार्थितोऽपि स धेनुं न ददौ मुनिः ॥ २४ ॥
मुनिः शान्तिपरोऽयं मे किं करिष्यत्यतो बलात् ॥
नयामीति विचिन्त्याशु हठात्तां धेनुमाददे ॥ २५ ॥

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ स्वन्नैः यथोचितैः शोभनान्नैः । कामधेनुप्रसादतः ॥ २१ ॥ आकृष्टा चेतना बुद्धिर्यस्य ॥ २२ ॥ राजा आह ॥ २३ ॥ २४ ॥ आददे जग्राह ॥ २५ ॥ आत्मवान्वशी भूयोपि शान्ति-

रत्नं धनं बहुविधं दत्तमप्यात्मवान्मुनिः ॥
न स्वीचकार भूयोऽपि धीमाञ्छान्तिपरोऽभवत् ॥२६॥

ततोऽनयत्स्वनगरं तां धेनुं सोऽर्जुनो मुदा ॥
अत्रान्तरे वनाद्राम आययौ ससमित्कुशः ॥ २७ ॥

सोदरैः कथितं श्रुत्वा धेन्वाकर्षणमप्रियम् ॥
भृशं चुकोप भूपाय वृद्धमन्युर्महाबलः ॥ २८ ॥

पितरं प्राह मद्वीर्यं पश्य लोकान्दिधक्षतः ॥
राजा चोरोऽयमुन्मत्तो ब्रह्मद्वेषी सुगर्वितः ॥ २९ ॥

सबलं तं निहन्म्यद्य शास्तास्म्युत्पथगामिनाम् ॥
तदर्थमवतीर्णोऽहं नैव जानाति मां खलः ॥ ३० ॥

इत्युक्त्वा क्षत्रमुच्छेत्तुं रामो रक्तान्तलोचनः ॥
प्रविशन्तं पुरं भूपं निर्धार्याह गभीरवाक् ॥ ३१ ॥

रे चोर चोर दुष्टाद्य क्व यास्यसि मदग्रतः ॥
धेनुं क्व नेष्यसि क्षेत्रे किमु क्षत्राधमोचितम् ॥ ३२ ॥

परः पुण्यापहारिणमात्मदाहकं कोपमपि न चकार ॥ २६ ॥ २७ ॥ सोदरैर्भ्रातृभिः भूपाय चुकोप । 'क्रुधद्रुह' इति चतुर्थी ॥२८॥ दिधक्षन्तः दग्धुमिच्छन्तः ॥ २९ ॥ सबलं ससैन्यम् ॥ ३० ॥ निर्धार्य आह ॥ ३१ ॥ रे इत्याक्षेपसंबुद्धिः ॥ ३२ ॥ इति रामेणोक्तः सुधीरित्यनेन कामादीनां

इत्युक्तः स सुधी रामं ज्ञात्वा विष्णुं नृपोऽर्जुनः ॥
क्षात्रधर्मेण तुष्ट्वामुं प्रयास्ये तत्पदं परम् ॥ ३३ ॥
इति कृत्वा मतिं भूपो युद्धाय प्रैरयद्भटान् ॥
स्वशक्त्या तेऽपि युयुधू रामेण परमात्मना ॥ ३४ ॥
युध्यमानान्महावीर्यान्क्रुद्धो रामः प्रतापवान् ॥
क्षणाज्जघान निःशेषं नैशं ध्वान्तमिवारुणः ॥ ३५ ॥
देवा दैत्या अपि न मे संमुखे स्थातुमीश्वराः ॥
नाद्यापि कोऽपि शक्तो मां जेतुं मर्त्यस्य का कथा ॥३६॥
तथाप्यद्य द्विजो जेतुं समर्थो मामयं नहि ॥
द्विजोऽवतीर्णो विष्णुर्वा इति योत्स्ये द्विजन्मना ॥३७॥
इति निश्चित्य सहसा योद्धुमभ्याययौ नृपः ॥
युयुधे विविधास्त्रैः स श्रीदत्तं संस्मरन्हृदि ॥ ३८ ॥
जगर्ज सिंहनादेन ववर्ष शरपञ्जरान् ॥
आच्छादयामास रामं महीध्रमिव तोयदः ॥ ३९ ॥
स सहस्रकरो दीप्तो दुर्धर्षस्तेजसार्जुनः ॥
रेजे रथीव मार्तण्डो दुर्निरीक्ष्यः प्रतापवान् ॥ ४० ॥

बुद्धिसमवायाभ्युपगमेऽपि सुधीत्वेन लेपाभावादहंकाराभावाच्च न बन्धोऽस्येति युक्तं 'यस्य नाहंकृतः' इति स्मृतेः। युद्धेऽपलायनरूपक्षात्रधर्मेण 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्' इति लोकसंग्रहार्थं दर्शयन्नमुं तुष्ट्वा ॥ ३३ ॥ ॥ ३४ ॥ अरुणः सूर्यः ॥ ३५ ॥ ईश्वराः समर्थाः ॥ ३६ ॥ वै निश्चयेन ॥ ३७ ॥ ३८ ॥ महीध्रं पर्वतम्। तोयदो मेघः ॥ ३९ ॥ सहस्रं करा हस्ताः। पक्षे किरणा इत्यादि पूर्ववत् ॥ ४० ॥ अभ्राणि मेघपटलानीव

तुतोष रामस्तद्धस्तलाघवं वीक्ष्य हर्षितः ॥
वातोऽभ्राणीव तद्बाणान्निरस्य च धनूंषि च ॥ ४१ ॥
छित्त्वेक्षूनिव तत्तेजः शमयित्वा परश्वधी ॥
विरथीकृत्य तद्बाहूंश्चिच्छेद द्रोरिवाङ्कुरान् ॥ ४२ ॥
दत्तात्रेयप्रसादेन निर्गतैरपरैः पुनः ॥
बाहुभिर्युयुधे वीरो महाबलपराक्रमः ॥ ४३ ॥
पुनश्चिच्छेद रामोऽपि पुनस्ते निर्ययुः कराः ॥
आग्नेयास्त्रेण रामोऽथ शोषयामास निर्गमम् ॥ ४४ ॥
तदा सस्मार हृदये राजा तत्त्वं गुरूदितम् ॥
अन्तर्बहिर्व्यवहृतीर्विस्मृत्यैकाग्र्यमास्थितः ॥ ४५ ॥
न छिन्द्यमानमप्येतद्ब्रह्मभूतोऽर्जुनः शिरः ॥
परश्वधाच्छिन्नशीर्षं पपात भुवि तद्वपुः ॥ ४६ ॥
विमानस्थाः सुराः सर्वे संग्रामं प्रेक्ष्य दारुणम् ॥
अतर्क्यं तत्प्रयाणं च पुष्पाणि ववृषुर्मुदा ॥ ४७ ॥

निरस्य दूरीकृत्य धनूंषीक्षूनिव छित्त्वा ॥ ४१ ॥ परश्वधी परशुधरः । द्रोर्वृक्षस्य ॥ ४२ ॥ ४३ ॥ ४४ ॥ तत्त्वं तात्त्विकं प्रत्यगभिन्नं परमात्मानं । ऐकाग्र्यमनन्यवृत्तित्वं आस्थितः । किं कृत्वा । अन्तर्बहिर्व्यवहृतीर्जाग्रत्स्वप्नव्यवहारान् । ऐकाग्र्ये चित्तलयाभावात् सप्तमभूमिगतां तुरीयामापन्नः । योगभूमयो मूढादयः वासिष्ठे—' ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता । विचारणा द्वितीया स्यात्तृतीया तनुमानसा ॥ सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ॥ पदार्थभाविनी षष्ठी सप्तमी तुर्यगा स्मृता ॥ १ ॥ चतुर्विंशाध्यायटीकायामुक्ताः ॥ ४५ ॥ ४६ ॥ तत्प्रयाणं मोक्षम् ॥ ४७ ॥

जीवन्नेव स मुक्तोऽपि कैवल्यं परमं ययौ ॥
योगीश्वरप्रसादेन नित्यमुक्तोऽर्जुनः स च ॥ ४८ ॥
स्वस्वहेतौ लयं जग्मुः सर्वास्तस्य कलाः स्वयम् ॥
श्रीदत्तेनैकतां प्राप राजा युक्तः समाधिना ॥ ४९ ॥
धेनुमादाय रामोपि तातमेत्य न्यवेदयत् ॥
पित्रादिष्टोऽकरोद्रामो राड्वधोत्थाघनिष्कृतिम् ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्यां उपासनाकाण्डे चतुर्थाष्टके षष्ठोऽध्यायः ॥ ६ ॥

॥ ४८ ॥ तटस्थप्रतीत्यभिप्रायेणाह 'गताः कला' इति श्रुत्यर्थं, सूत्रं च 'तानि परे तथाह्याह'। 'ज्ञस्य वागादयः स्वस्वहेतौ लीनाः परेऽथवा ॥ गताः कला इति श्रुत्या स्वस्वहेतुषु तल्लयः ॥ नद्यब्धिलयसाम्योक्तेर्विद्वदृष्ट्या लयः परे ॥ अन्यदृष्ट्या परं शास्त्रं गता इत्याद्युदाहृतम्' इति । स श्रीदत्तेन परब्रह्मणैकरसत्वं प्राप 'अविभागो वचनात्' इति न्यायात्। 'तल्लयः शक्तिशेषेण निःशेषेणाथवात्मनि ॥ शक्तिशेषेण युक्तोऽसावज्ञानिष्वेतदीक्षणात् ॥ नामरूपाविभागोक्तेर्निःशेषेणैव संक्षयः ॥ अजे जन्मान्तरार्थं तु शक्तिशेषत्वमिष्यते' इति । समाधिरत्र निर्विकल्पः धेन्वाकर्षणादि तु प्रारब्धचेष्टनमिति वेदितव्यम्। तथात्वेपि तत्क्षणं संजातदेहाभिमानित्वेन न ज्ञानभङ्गः। यदाहुः 'भोगकाले कदाचित्तु मर्त्योहमिति मन्यते। नैतावतापराधेन तत्त्वज्ञानं विनश्यति' इत्युक्तेः। स्मृतिश्च 'सर्वभूतस्थितं यो माम्' इत्यादि ॥ ४९ ॥ तातं जमदग्निं 'दशश्रोत्रियसमो राजा' इति भारतोक्तेः पित्रा आज्ञप्तो रामः राजवधोत्थपापनिष्कृतिमकरोत् ॥ ५० ॥ इति चतुर्थे षष्ठोऽध्यायः ॥ ६ ॥ ॥ दत्तार्पणमस्तु ॥

इति श्रीदत्त० अर्जुनस्य परशुरामेण वधो नाम
चतुर्थाष्टके षष्ठोऽध्यायः ॥ ४।६ ॥

---

रेणुकायाः पत्यनुगमनं रामस्य शत्रुनाशप्रतिज्ञा नाम चतुर्थाष्टके सप्तमोऽध्यायः ॥ ४।७ ॥

हरिः ॐ ॥ इन्द्रं वोतान्यमप्याजौ जेतारमपराजितम् ॥
द्विजोऽप्यहन्निगृह्येदं न साध्वस्मत्सु सत्स्विति ॥ १ ॥
हृद्यानीयार्जुनसुता बद्धवैराः सुदुःखिताः ॥
पितृहन्तृवधे यत्नमास्थिता एकदा ययुः ॥ २ ॥
तत्पूर्वं निर्ययौ रामो वनं सभ्रातृको बली ॥
अथागत्यार्जुनसुता आश्रमं रुरुधुर्भृशम् ॥ ३ ॥
अन्वेष्येतस्ततो राममदृष्ट्वा सहसा मुनिम् ॥
जमदग्निं सुखासीनं दृष्ट्वा तं व्यहनन्रुषा ॥ ४ ॥
आक्रोशन्तीं पुरोभागे रेणुकां मूढबुद्धयः ॥
तां निरस्य मुनिं हत्वा स्वपुरं सत्वरं ययुः ॥ ५ ॥
दुर्निमित्तानि रामोऽपि वीक्ष्य शीघ्रं गृहं ययौ ॥
हतं स्वपितरं ज्ञात्वा विललाप सुदुःखितः ॥ ६ ॥

॥ श्रीगणेशाय नमः ॥

एकत्रिंशे रेणुकायाः पत्यानुगम उच्यते ॥
श्रीदत्ताचार्योपदेशात्प्रतिज्ञा चारिनाशने ॥ १ ॥

पितुः सांपरायिकं कृत्वान्यैः क्षत्रैः सह मिलिता अर्जुनपुत्रा ऊचुः ॥ इन्द्रं वान्यं कालकल्पं वापि जेतारं स्वयमपराजितम् ॥ १ ॥ हृदि मनसि ॥ २ ॥ आययुः जमदग्न्याश्रममिति शेषः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

मन्निमित्तां मृतिं यातः पिता धिङ्मां सुदुर्मतिम् ॥
हा तात हा दयासिन्धो क्व गतोऽसि गुणाकर ॥ ७ ॥
रुदित्वैवं समाश्वास्य जननीं साश्रुलोचनाम् ॥
मात्राग्रजैर्निषिद्धोऽपि क्रुद्धो हन्तुं ययौ रिपून् ॥ ८ ॥
मुहूर्तेनाहनत्सर्वान्सबलानर्जुनात्मजान् ॥
सप्राकारं पुरं भित्त्वा सर्वं मात्रे न्यवेदयत् ॥ ९ ॥
मुनिभिर्भ्रातृभी रामो वार्यमाणोऽपि शृण्वताम् ॥
ऋषीणां मातुरग्रे स प्रतिज्ञामकरोदिमाम् ॥ १० ॥
त्रिसप्तधा करिष्यामि बलान्निःक्षत्रियां महीम् ॥
पितॄन् तदस्रकुण्डेषु तर्पयाम्यृणमुक्तये ॥ ११ ॥
तच्छ्रुत्वा रेणुका प्राह सम्यगुक्तं त्वयानघ ॥
प्राक् संस्कृत्य पितुर्देहं प्रतिज्ञां सफलां कुरु ॥ १२ ॥
अर्जुनो दत्तभक्तोऽयं यदि क्रुध्यति स प्रभुः ॥
त्वां नाशयिष्यत्यत्रामुमुपायं कथयामि ते ॥ १३ ॥
कृत्वैकतस्त्वं पितरं तुलायां मां तथैकतः ॥
गृहीत्वा याहि तिष्ठेति यत्र श्रोष्यसि खाद्वचः ॥ १४ ॥

मृतिं मरणम् ॥ ७ ॥ ८ ॥ सप्राकारं सावरणम् । मात्रे रेणुकायै ॥ ९ ॥ शृण्वतामित्यनादरे षष्ठी । इमां वक्ष्यमाणाम् ॥ १० ॥ त्रिसप्तधैकविंशतिवारम् । तदस्रकुण्डेषु तद्रक्तकुण्डेषु ॥ ११ ॥ हे अनघ विष्ण्वंशत्वान्निष्पाप ॥ १२ ॥ प्रभुः समर्थः पूर्णत्वात् ॥ १३ ॥ एकतः एकत्र । सार्वविभक्तिकस्तासिः । खादाकाशात् ॥ १४ ॥ आवयोर्भर्तुर्मम च । अनुगमविधिना

तत्रैव ब्राह्मणं योग्यं लक्ष्यसे त्वं तदावयोः ॥
संस्कारं विधिना कृत्वा कृतकार्यो भविष्यसि ॥ १५ ॥

एवमुक्तो जनन्या स रामः पितृपरायणः ॥
तदाज्ञां शिरसा धृत्वा तुलामादाय भक्तिमान् ॥ १६ ॥

विन्यस्यैकत्र पितरं मृतमन्यत्र मातरम् ॥
स्वाश्रमान्निर्ययौ स्कन्धे तुलामादाय भक्तितः ॥ १७ ॥

संस्कर्तुं पितरौ भक्त्या कान्यकुब्जप्रदेशतः ॥
ययौ स्थानानि संपश्यन् तीर्थान्यायतनानि च ॥ १८ ॥

दृष्ट्वा पुण्यान्यरण्यानि पवित्रांस्तापसाश्रमान् ॥
विविधांश्चाचलान्पुण्यान्नदीस्तीर्थानि सर्वशः ॥ १९ ॥

एवं स पर्यटन्रामो धीमान्धर्मभृतां वरः ॥
ययावामलकीग्रामं सह्याद्रौ मुनिमण्डितम् ॥ २० ॥

प्रशान्तबाधं निर्वैरं सर्वकालसुखावहम् ॥
ऋषिभिः संवृतं रम्यं कन्दमूलफलान्वितम् ॥ २१ ॥

कृतं कार्यं पित्रर्णापाकरणरूपं येन ॥ १५ ॥ १६ ॥ पितरं पितृदेहं अन्यत्र जीवन्तीं मातरं च ॥ १७ ॥ भक्तिशब्दाभ्यासो गुणवत्त्वद्योतकः ॥ १८ ॥ अचलान् विन्ध्यादिपर्वतान् । नदीर्नर्मदातापीपयोष्णीगोदाद्याः । तीर्थान्यृषिजुष्टजलानि ॥ १९ ।' २० ॥ २१ ॥ विद्याध्रा जीमूतवाहनादयः

सिद्धविद्याध्रगन्धर्वकिन्नरोरगचारणैः ॥
वृतं सह्याचलप्रान्ते ददर्शाश्रममुत्तमम् ॥ २२ ॥
रामं तत्रैव साक्षेपमुवाच सुरवर्त्मवाक् ॥
भो भो परशुराम त्वं श्रीदत्ताचार्यसंयुतः ॥ २३ ॥
यथाविधि स्वपितरं भक्त्या संस्कर्तुमर्हसि ॥
संकल्पोऽपि तवात्रैव सुफलश्च भविष्यति ॥ २४ ॥
इति श्रुत्वाऽशरीरां गां तथेत्युक्त्वा स भार्गवः ॥
अवतीर्य तुलां तत्र श्रीदत्ताश्रममाविशत् ॥ २५ ॥
तुलस्युदुम्बराश्वत्थबिल्वपर्णशमीवटैः ॥
अन्यैश्च फलपुष्पाढ्यैस्तृणगुल्मलतादिभिः ॥ २६ ॥
जलैः सुशीतलैर्मिष्टैः स्रवद्भिः परिवेष्टितम् ॥
सर्वर्तुगुणसंपन्नं योगिवृन्दनिषेवितम् ॥ २७ ॥
प्रविश्याश्रममासीनं दत्तात्रेयं दिगम्बरम् ॥
ददर्शानघयाश्लिष्टं देव्या रामो महामतिः ॥ २८ ॥
क्रीडन्तमपि तं देव्या पानपात्रधरं मुनिम् ॥
अभिवाद्येश्वरं मत्वा प्रार्थयामास भक्तितः ॥ २९ ॥
कृपां कुरु मयि ब्रह्मन्भक्तवत्सल सर्ववित् ॥
संस्कर्तुं पितरावत्र प्राप्तोऽस्मि ब्रूहि मे विधिम् ॥ ३० ॥

॥ २२ ॥ सुरवर्त्मवागाकाशवाणी ॥ २३ ॥ संकल्पः क्षत्रहननरूपः ॥ २४ ॥ अशरीरां गामाकाशवाणीं । भार्गवः भृगोर्गोत्रापत्यं रामः ॥ २५ ॥ पर्णः पलाशः स्पष्टमन्यत् ॥ २६ ॥ २७ ॥ अनघया शक्तिभूतया मायया-श्लिष्टमालिङ्गितम् । कथंभूतया देव्या । क्रीडापरया ॥ २८ ॥ २९ ॥ ३० ॥

श्रीदत्तः प्राह न विधिं निषेधं वा न वेद्म्यहम् ॥
यथेष्टां गतिमाश्रित्य स्थितोऽस्मीह पिशाचवत् ॥ ३१ ॥
अनाचारो न जानामि धर्मं वाऽधर्ममप्युत ॥
इत्युक्तः प्राह रामस्तं त्वमेव मुनिसत्तम ॥ ३२ ॥
योगीश्वरः सर्वगुरुः कर्ता हर्ता जगत्प्रभुः ॥
सदानन्दो गुणातीतो धर्माधर्मौ कुतस्तव ॥ ३३ ॥
श्रीशः प्राह ब्रवीष्यत्र पश्यन्नप्यन्यथा कथम् ॥
दिगम्बरेयं प्रमदा मदिराविह्वलेक्षणा ॥ ३४ ॥

विधिं वेदोक्तं कर्मविधानं। निषेधमधर्मादिरूपं प्रतिषेधं न वेद्मीति बाह्योक्तिः। अविदुषोऽविद्यावस्थायां कर्तृकरणाद्यनात्मदर्शनस्य विद्यमानत्वात् 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्' इत्यादिभेददर्शनश्रवणं तस्य ज्ञानाधिकारसंपत्तये श्रुत्या विधिर्निषेधश्चोपदिश्यते। ज्ञानिनस्तु 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति द्वैताभावान्न विधिनिषेधौ किं पुनरीशस्य ॥ ३१ ॥ आचार आचरणं प्रवृत्तिसंबन्धि निवृत्तिसंबन्धि वा तदुभयं न विद्यते यस्य सोऽनाचारः। आप्तकामत्वेन प्रयोजनाभावात् ॥३२॥ गुणातीतत्वाद्धर्माधर्मसंबन्धानुपपत्तेः ॥३३॥ स्त्रीक्रीडापानादि पश्यन्नपि त्वं मां प्रति सदानन्दो गुणातीत इत्यादि कथमन्यथा ब्रवीषि। अन्यथात्वमाह–दिगम्बरेति ॥ ३४॥ पक्षान्तरे इन्द्रियैः स्प्रष्टुं योग्याः स्पृश्याः शब्दादय आकाशादिगुणाः ते न विद्यन्ते यस्यातिसूक्ष्मत्वात्। 'अशब्दमस्पर्शमरूपम्' इति श्रुतेः। संभाव्यो ध्येयो न भवतीत्यसंभाव्यः मनोऽगोचरत्वात् 'यन्मनसा न मनुते' इति श्रुतेरीदृशस्य मम कुतो विधिवार्ता। न कुतोपि। पक्षे भ्रष्टत्वादस्पृश्यः पापी 'संसर्गी सोपि पापी' इत्युक्तेः। अत एवासंभाव्यो निन्द्यः। 'निन्द्यन्ते यतयोऽप्यन्यैरनिशं भोगलम्पटैः॥ भिक्षावस्त्रादि रक्षेयुर्यद्येते भोगतुष्टये ॥ अहो

तथाप्यहं न नौ वेत्सि मदिरास्वादलालसौ ॥
अस्पृश्योऽहमसंभाव्यो विधिवार्ता कुतो मम ॥ ३५ ॥
ततो रामोऽभवत्तूष्णीं तुलास्था रेणुकावदत् ॥
किं मोहयस्यमेयात्मन्वाक्यैर्लोकानुसारिभिः ॥ ३६ ॥
इत्युक्तो भगवान्दत्तः प्रहस्योत्थाय सत्वरम् ॥
तुष्टाव रेणुकां देवीं लक्ष्यालक्ष्यस्वरूपिणीम् ॥ ३७ ॥
मातः सर्वं त्वमेवैका वन्दनीया परावरा ॥
एकवीरा महामाया सृष्टिस्थित्यन्तकारिणी ॥ ३८ ॥
एकैवानेकरूपेषु स्थितासि त्वमनामया ॥
देहेन्द्रियमनःप्राणाहंकारेभ्यो विलक्षणा ॥ ३९ ॥
स्तुत्वैवं रेणुका भर्त्रा सह दाहार्थमीश्वरम् ॥
प्रार्थयामास स प्राह पतिस्तेऽसौ कथं मृतः ॥ ४० ॥

यतित्वमेतेषां वैराग्यभरमन्थरम्' इत्युक्तेः ॥ ३५ ॥ हे अमेयात्मन्देशकालवस्तुपरिच्छेदरहित ॥ ३६ ॥ संबुध्यैव विदितः सन् प्रहस्य ॥ ३७ ॥ लक्ष्यं रूपं तावदाह—मातरिति । सर्वं दृश्यजातम् ॥ ३८ ॥ अनामया परिणामित्वेपि ततः परा अनिर्वचनीयत्वात् । अलक्ष्यस्वरूपमाह—देहेति । सामानाधिकरण्यादव्याकृतरूपेण लक्ष्या अव्याकृतेनालक्ष्येत्यर्थः । नन्वस्या जगदुत्पादकत्वं कथमिति चेत् 'अजामेकाम्' इतिश्रुत्युक्तं ज्ञापयितुं विशिनष्टि— सृष्टीति । तर्हि सांख्यमता प्रकृतिः किं नेत्याह—देहेति । 'चमसवदविशेषात्' इतिन्यायात् । 'अजा हि सांख्यप्रकृतिस्तेजोबन्नात्मिकाथवा । रजआदौ लोहितादि लक्ष्येसौ सांख्यशास्त्रगा । लोहितादिप्रत्यभिज्ञा तेजोबन्नादिलक्षणाम् । प्रकृतिं गमयेच्छ्रौतीमजाक्लृप्तिमधुत्ववत् ' इति । अनेन पररूपं दर्शितम् । स्त्रीवद्व्यवहारास्तु न तात्त्विकाः ॥ ३९ ॥ ४० ॥

सा नृपैर्हत इत्यूचे दत्तः प्राह ज्वलन्रुषा ॥
मत्ता नश्यन्तु भूपा ये घातयन्ति द्विजानपि ॥ ४१ ॥

रामोऽवदत्करिष्येऽहं महीं निःक्षत्रियामिति ॥
संकल्पितमृतं भूयात्प्रसादाद्भवतोऽधुना ॥ ४२ ॥

योगज्ञोऽपि भवच्छिष्यः कृतागस्त्वान्मया हतः ॥
क्षन्तुमर्हसि देवेश सत्यसन्धं विधेहि माम् ॥ ४३ ॥

दत्तः प्राह तमालिङ्ग्य त्वं सखा मेऽसि निश्चितम् ॥
कृतं साधु त्वया राम सत्यसन्धो भविष्यसि ॥ ४४ ॥

ततः श्रीशाज्ञयाऽऽनीय सर्वतीर्थानि सायकैः ॥
भित्त्वाद्रिं विधिवत्सस्नौ रामः पश्चाच्च रेणुका ॥ ४५ ॥

भूषिता सा जगन्माता श्रीदत्तं प्राह चात्मजम् ॥
स्वस्थानं गन्तुमिच्छामि पत्या सह मुदान्विता ॥ ४६ ॥

भो राम त्वं द्विजान्पाहि प्रतिज्ञां सफलां कुरु ॥
इत्युक्त्वाचार्यमर्कं च नत्वाऽदाद्वायनानि सा ॥ ४७ ॥

वसुरुद्रादित्यमुखाः सस्त्रीका निखिलाः सुराः ॥
स्वर्यानैराययुर्द्रष्टुमुत्सवं मुनयोऽपि च ॥ ४८ ॥

॥ ४१ ॥ ४२ ॥ आगोऽपराधः । संधा प्रतिज्ञा ॥ ४३ ॥ ४४ ॥ सस्नौ स्नानं चक्रे ॥ ४५ ॥ ४६ ॥ पाहि रक्ष । आचार्यं श्रीदत्तात्रेयं ॥ ४७ ॥ स्वर्यानैर्विमानैः ॥ ४८ ॥ गुरुणा श्रीदत्तेन । क्रव्यं मांसमत्तीति क्रव्यादः

गुरुणापि समाधाय क्रव्यादाग्निं यथाविधि ॥
सुमङ्गला विवेशासौ सह पत्याऽऽहिताग्निना ॥ ४९ ॥
सतीस्पर्शात्प्रदीप्तोऽग्निः शुशुभेऽर्कसहस्रवत् ॥
प्रणेमुर्हर्षिताः सर्वे चक्रुरुच्चैर्जयध्वनिम् ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां त्रिकाण्डमण्डितायां वासुदेव्यां उपासनाकाण्डे चतुर्थाष्टके सप्तमोऽध्यायः ॥ ७ ॥

'क्रव्यादो मृतदाहकः' इति पारिभाषिकोक्तेः ॥ ४९ ॥ प्रणेमुर्नमश्चक्रुः ॥ ५० ॥ इति श्रीदत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्यां उपासनाकाण्डे चतुर्थाष्टके टीकायां सप्तमोऽध्यायः ॥ ७ ॥

इति श्रीदत्त० रामस्य शत्रुनाशप्रतिज्ञा नाम चतुर्था० सप्तमो० ॥ ४।७ ॥



**कृतपित्रौर्ध्वदैहिकेन परशुरामेण ऋषये महीदानं नाम चतुर्थाष्टकेऽष्टमोऽध्यायः ॥ ४।८ ॥**

हरिः ॐ ॥ यज्ञाय ज्ञाय ते दत्त नमस्त्वं मे सखास्यतः ॥
भूत्वाचार्यः कारयौर्ध्वदैहिकं विधिवत्तयोः ॥ १ ॥

इत्यर्थितः स रामेण भूत्वाऽऽचार्योऽप्यकारयत् ॥
विधिनाञ्जलिदानादि पिण्डनिर्वापणादि च ॥ २ ॥

श्रीदत्तः प्राह पितरौ क्व गतौ राम वेत्सि किम् ॥
स प्राह त्वत्प्रसादात्तौ स्वर्गताविति भाति मे ॥ ३ ॥

श्रीशः प्राह मृतौ स्वर्गं गतावित्यज्ञभावना ॥
न मृतौ न गतावेतौ पश्य लीलाविहारिणौ ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥

कृत्वौर्ध्वदैहिकं पित्रोर्द्वाविंशे राम आत्मनः ॥
कृत्वा संधामवितथामीजेऽदादृषये महीम् ॥ १ ॥

यज्ञाय यज्ञरूपाय । 'यज्ञो वै विष्णुः' इति श्रुतेः । ज्ञाय सर्वज्ञाय—ईदृशस्य सखित्वं द्वा सुपर्णेति श्रुतेः युक्तमेव । और्ध्वदैहिकं मृतार्थं दानादि । 'मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदैहिकम्' इति कोशात् । तयोः पित्रोः ॥ १ ॥ अर्थितः प्रार्थितः । शिलोपरि जलाञ्जलिदानादि । पिण्डाः शिर आद्यवयवनिष्पत्तिनिमित्तास्तदादि ॥ २ ॥ स रामः ॥ ३ ॥ श्रीशः श्रीदत्तः । एतौ पश्येति सन्निकृष्टत्वेन साक्षाद्दर्शयति ॥ ४ ॥ अदर्शनं

रामोऽपि पितरौ दृष्ट्वा द्योतयन्तौ दिशस्त्विषा ॥
ननाम परया भक्त्या तौ ततोऽदर्शनं गतौ ॥ ५ ॥
प्राहाश्लिष्य प्रभू रामं क्षत्रियाञ्जह्यधार्मिकान् ॥
मच्चिदंशयुतस्त्वं तु सखे जिष्णुर्भविष्यसि ॥ ६ ॥
ततो रामः प्रणीतायां स्नात्वा संकल्प्य सायुधः ॥
त्रिसप्तवारं निःक्षत्रां क्ष्मां कृत्वास्रसरांस्यधात् ॥ ७ ॥
पितॄन्संतर्प्य शस्त्राणि प्रक्षाल्याचार्यमत्रिजम् ॥
ऋत्विजः कश्यपमुखान्वृत्वा सोमेन सोऽयजत् ॥ ८ ॥
सर्वे देवा यत्र तृप्ता विप्राश्चान्नधनांशुकैः ॥
सर्वां क्ष्मां कश्यपायादाद्विशुद्धात्मा विधानतः ॥ ९ ॥
स्वर्णवस्त्रधनै रामो दत्ताचार्यमपूजयत् ॥
तत्सर्वं ब्राह्मणेभ्योऽदाद्भगवान्भक्तिभावनः ॥ १० ॥
प्राह रामं निवेश्याङ्के बालेदं दुष्करं कृतम् ॥
कर्मामी क्षत्रिया दुष्टा दुर्जया अपि ते हताः ॥ ११ ॥

अदृश्यताम् ॥ ५ ॥ आश्लिष्यालिङ्ग्य शक्तिं दत्वेति गूढोऽभिप्रायः तदेवाह—मदित्यादि ॥ ६ ॥ प्रणीतायां नद्यां क्षत्रहननं संकल्प्य क्ष्मां भूमिं अस्रसरांसि रक्तह्रदानि पञ्च स्यमन्तपञ्चकतीर्थाख्यानि कुरुक्षेत्रे प्रसिद्धानि अधात् ॥ ७ ॥ तत्र पितॄन् संतर्प्य । अत्रिजं श्रीदत्तं । ऋत्विजो अध्वर्युहोत्रादयः ॥ ८ ॥ यत्र सोमयज्ञे सोमाहुत्या तृप्तिं याताः । अंशुकानि वस्त्राणि क्ष्मां भूमिम् । क्षत्रहत्यापापाद्विशुद्धात्मान्तःकरणं यस्य । विधानतश्चातुर्होत्रविधिना ॥ ९ ॥ तत्सर्वं स्वर्णादि रामेण दत्तं भगवान्दत्तः षड्गुणैश्वर्यसंपन्नः ब्राह्मणेभ्योऽदात् आप्तकामत्वान्न स्वयं जग्राह । तर्ह्याचार्यत्वं कुतोङ्गीकृतमित्यत आह—भक्तिभावनः ॥१०॥ ते त्वया ॥११॥

कृतो यज्ञोऽपि विधिवच्छूरोऽसि त्वं हरिः स्वयम् ॥
रामः प्राह न शूरोऽहं प्रसादो भवतामयम् ॥ १२ ॥
साधु साध्विति ते प्राहुर्देवाश्च मुनयोऽपि च ॥
रामेण सत्कृता जग्मुः स्वस्वधामाखिला मुदा ॥ १३ ॥
सख्यं कृत्वाऽवसद्रामस्तस्मै तुष्टोऽवदत्प्रभुः ॥
रहस्यं त्रिपुरादेव्याः श्रवणान्मुक्तिदं क्षणात् ॥ १४ ॥
सखा मे त्वं चिरं जीव कंचित्कालं वसात्र तु ॥
तपश्चर ततो लोकशर्मणे पश्चिमांबुधौ ॥ १५ ॥
त्वयि तेजोऽद्य यन्न्यस्तमवतारान्तरे पुनः ॥
आदास्ये त्वं ततो ब्राह्म्या लक्ष्म्या युक्तस्तपश्चर ॥१६॥
भविष्यसि महर्षिस्त्वं नूनं सावर्णिकेऽन्तरे ॥
ततः प्राप्ते महाकल्पे मत्सायुज्यं गमिष्यसि ॥ १७ ॥
एवं रामं जामदग्न्यमुक्तवान्भगवान्प्रभुः ॥
रामोऽपि स्वाश्रमं गत्वा कंचित्कालमुवास ह ॥ १८ ॥

विधिवद्यथाशास्त्रम् ॥ १२ ॥ साधु शोभनम् । आदराद्द्विरुक्तिः ॥१३॥ सख्युर्भावः सख्यं निरपेक्षां मैत्रीं 'सख्युर्यः' इति यः । सख्याख्यभक्त्या तुष्टः श्रीदत्तस्तस्मै अधिकारिणे रामाय यज्ञेनान्तःकरणशुद्धिसद्भावाद्भक्त्या चैकाग्र्यनिष्पत्तेश्च ततः शमादयोऽर्थसिद्धाः ते चात्मविद्याङ्गभूताः 'शान्तो दान्तः' इति श्रुतेः । व्यष्टौ समष्टौ च । त्रीणि स्थूलसूक्ष्मकारणाख्यानि पुराणि विश्वाद्यभिमानित्वेन जाग्रदादिस्थानान्यूर्ध्वाधःप्रासादा इव यस्याः सा त्रिपुरा रेणुकाख्या देवी स्वयंप्रकाशा । तस्या रहस्यं जगत्कर्तृत्वादावप्यकर्तृत्वादिलक्षणमसङ्गोदासीनत्वादिलक्षणमौपनिषदं गोपनीयं तत्त्वम् । श्रवणं मननादेरप्युपलक्षणम् । 'श्रोतव्यो मन्तव्यः' 'अनुष्ठाय न शोचति' इत्यादिश्रुतेः ॥१४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ त्रिसप्तकृत्वैकविंश-

त्रिसप्तकृत्वा येनेदं निःक्षत्रं जगतीतलम् ॥
निहतं तीक्ष्णधारेण दृढं परशुना भृशम् ॥ १९ ॥

ततो युगान्तरे सूर्यवंशी देवोऽवतीर्य तत् ॥
आददेऽत्युल्बणं तेजस्ततो रामस्तपोऽतपत् ॥ २० ॥

हर्यंशो लीलया रामः पितृभक्तो हरेः सखा ॥
भक्तिं प्रथयितुं लोके जातोऽयं द्विजरूपधृक् ॥ २१ ॥

रेणुका सा जगन्माता साक्षादेवेश्वरी खलु ॥
स्वयं शिवोऽवतीर्णोऽत्र जमदग्निर्महामुनिः ॥ २२ ॥

श्रीदत्तेनात एवेयं लोकशिक्षार्थमीश्वरी ॥
प्रार्थिता ब्रह्मणा चाऽपि स्वकार्यार्थमभिष्टुता ॥ २३ ॥

तिवारम् ॥ १९ ॥ देवो विष्णू रामरूपेण ॥ २० ॥ हरेः श्रीदत्तात्रेयस्य परमात्मनः । प्रथयितुं ख्यापयितुम् ॥ २१ ॥ रेणुका साक्षादीश्वरी जगन्माता व्याकृता । देवी चिच्छक्तिः । तर्हि जमदग्नेर्भार्या कथमत उच्यते— स्वयं शिव इति । प्रलये साधिभूताधिदैवतादिकं सर्वं जगच्छेतेऽस्मिन्निति शिवः जगत्संहर्ता । यद्वा शमादिसाधनपूर्वकं विधिवच्छ्रवणादिना संजातापरोक्षसाक्षात्कारेणाविद्याकामकर्माद्युपमर्देनाहं निरतिशयानन्दस्वरूप इति प्रत्यगभिन्नपरमात्मैकतया अखण्डैकरसत्वेन विदेहमुक्तः शेतेऽस्मिन्निति शिवः । 'यत्प्रयन्त्यभिसंविशन्ति' इत्यादिश्रुतेः । स शिवः स्वयमेवात्रावतीर्णोऽसौ जमदग्निर्महामुनिः ॥ २२ ॥ अत एवेयं रेणुकेश्वरी लोकशिक्षार्थं पूर्वोक्तप्रकारेण प्रार्थिता ब्रह्मणापि च ॥ २३ ॥ ब्रह्मणा किमर्थमभिष्टुतेत्यत

पुरा विद्यां पञ्चपर्वां ससृजे यां विधिस्तया ॥
कदाचिद्देवदत्तास्ता विसस्मार श्रुतीः समाः ॥ २४ ॥

हृदि शश्वद्विचार्यापि न बुबोधात्मना स्वयम् ॥
गत्वा मातापुरं देवीमस्तौषीद्रेणुकां शुभाम् ॥ २५ ॥

देवि त्वं वेदमाताऽसि गायत्री वाङ्मयीश्वरी ॥
प्रसीद विस्मृतान्वेदान्त्संप्रकाशय पूर्ववत् ॥ २६ ॥

आह—पुरेति । पुरा सृष्टिकाले आदावेव यां पञ्चपर्वाख्यां अविद्यां ससृजे तया अविद्यया हेतुभूतया सृष्ट्युत्तरं कदाचिद्देवेन परमेश्वरेण 'यो वै वेदांश्च प्रहिणोति' इत्युक्तप्रकारेण दत्ता अन्तःकरणे उद्बोधिताः सृष्टिसाधनभूताः समाः सर्वास्ताः श्रुतीर्विसस्मार । श्रुतिविस्मरणात्सृष्टिक्रियापि विस्मृता । शब्दपूर्वकं सृष्टिरेव श्रूयते 'असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः' । 'एते असृग्रमिन्दवस्तिरःपवित्रमाशवः ॥ विश्वान्यभिसौभगा' ॥ 'एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄन् तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्यान्' इत्यादि । स्मृतिरपि 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ॥ आदौ वेदमयी दिव्या यतः सर्वप्रवृत्तयः' इति ॥ ननु 'जन्माद्यस्य यतः' इत्यादौ ब्रह्मप्रभवत्वं जगतोऽवधारितं तत्कथं शब्दपूर्विका सृष्टिरित्युच्यते तत्राह । प्रजापतेरपि सृष्टेः पूर्वं वैदिकाः शब्दा मनसि प्रादुर्भूताः पश्चादनुगतार्थान् सृजन्तीति गम्यते 'भूरिति व्याहरन् भूमिमसृजत' इति । मनसि प्रादुर्भूतेभ्यो भूरादिशब्देभ्यो भूरादिसृष्टिरित्यनवद्यम् ॥ २४ ॥ पुनःपुनर्विचार्याप्यात्मना बुध्या वेदान्न बुबोध ॥ २५ ॥ वेदमाता वेदप्राकट्याधिकरणम् । गायतो भक्तान् त्रायत इति गायत्री ॥ २६ ॥ स ब्रह्मा ।

देव्याह गत्वा श्रीदत्तं परिपृच्छ स वक्ष्यति ॥
इत्युक्तः स प्रभुं गत्वा श्रीदेव्योक्तं न्यवेदयत् ॥ २७ ॥

श्रीदत्त सर्वविच्छ्रेष्ठ सर्वदेवनमस्कृत ॥
सर्वाधार निराधार गुणात्माऽप्यसि निर्गुणः ॥ २८ ॥

साङ्गोपनिषदान्वेदान् विस्मृतोऽस्म्यद्य दैवतः ॥
बुद्धिप्रदीप तान्ब्रूहि वर्णमात्रास्वरात्मकान् ॥ २९ ॥

श्रीदत्तः प्राह हे ब्रह्मन् विद्यया पञ्चपर्वया ॥
विमुह्य विस्मृतोऽस्येतामतो वेदान्न बुध्यसे ॥ ३० ॥

वर्णा यस्यां प्रकाश्यन्ते वर्णेष्वेकैव या स्थिता ॥
त्रिपुरा वर्णरूपा सा रेणुकैकैव नापरा ॥ ३१ ॥

सवर्णा वेदमाता सा सावित्री ब्रह्मरूपिणी ॥
एकैव चित्कला देवी जगद्धात्री न चापरा ॥ ३२ ॥

प्रभुं समर्थं श्रीदत्तम् ॥ २७ ॥ हे सर्वविच्छ्रेष्ठ सर्वज्ञवरिष्ठ । सर्वगुरुत्वात्सर्वदेवनमस्कृत । जगद्योनित्वात्सर्वाधार । अकरणत्वान्निराधार । 'स्वे महिम्नि प्रतिष्ठित' इति श्रुतेरनवस्थादोषो वारितः । निर्गुणोऽपि भक्तेच्छया गुणात्माऽसि भवसि ॥२८॥ हे बुद्धिप्रकाशक । ' देवमात्मबुद्धिप्रकाशम् ' इति श्रुतेः ॥ २९ ॥ एतां रेणुकाम् ॥ ३० ॥ यस्यामधिष्ठानभूतायां विकारजातस्य कारणात्मकत्वाद्वर्णेष्वेकैव स्थिता । त्रीणि पुराणि स्थूलसूक्ष्मकारणाख्यशरीराणि यस्याः सा त्रिपुरा ॥ ३१ ॥ तस्या एकत्वाद्द्विमात्रादिसंज्ञा सम्यगुपपन्ना शाखाचन्द्रन्यायेन स्वरूपबोधार्थं । एवंरूपा रेणुकैकैव नान्या, अद्वितीयत्वाच्चितेः ॥ ३२ ॥ एका ओंकाराख्या मात्रा यस्याः ।

एकमात्रैकवीरेशा साष्टपर्यायवाचका ॥
ओंकारैकस्वरा ज्ञेया रेणुका ब्रह्मरूपिणी ॥ ३३ ॥

पादशो विभक्तस्यौंकारस्य तिसृभिर्मात्राभिराध्यात्मिकाद्यभेदमापकाभिः परिमितेभ्यः स्थानस्थानिभ्यो याऽन्या तुरीया सा त्वमेव । भाष्यकारास्तु—एवं च सति 'सर्वप्रपञ्चोपशमेऽद्वैतसिद्धिः' 'सर्वभूतस्थमात्मानं०' 'यस्मिन्त्सर्वाणि भूतानि' इत्यवधारणात् । अन्यथा स्वदेहपरिच्छिन्न एव प्रत्यगात्मा सांख्योक्तवत्स्यात्तथा च सति अद्वैतं न स्यात् सांख्यादिदर्शनाविशेषात् । दृश्यते च सर्वोपनिषदां सर्वात्मैक्यप्रतिपादकत्वं अतो युक्तमेवास्याध्यात्मिकपिण्डात्मनो द्युलोकाद्यङ्गत्वेन विराडात्मनाऽऽधिदैविकेनैकत्वमित्यभिप्रेत्य सप्ताङ्गत्ववचनं, 'मर्धा ते व्यपतिष्यत्' इत्यादिलिङ्गदर्शनाच्च विराजैकत्वमुपलक्षणार्थं हिरण्यगर्भाव्याकृतात्मनोः । उक्तं चैतन्मधुब्राह्मणे—'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम्'इति । मूर्धेत्यत्र टीकाकारोऽपि दिवादित्यादिकं वैश्वानरावयवं वैश्वानरबुद्ध्या ध्यायतो जिज्ञासया पुनरखण्डं पक्षमुपगतस्य मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इत्यन्धो भविष्यद्यन्मामित्यादि व्यस्तोपासननिन्दा समस्तोपासनविधित्सया दृश्यते । न द्युलोकादिकं विपरीतबुद्ध्या गृहीतवतः स्वकीयमर्धादिपतनमुचितम् । यद्यध्यात्माधिदैवयोरेकत्वं न भवेत्तयोरेकत्वमत्राविवक्षितं भवति । तथाच यन्मुखतो विराजो विश्वेनैकत्वं दर्शितं तत्तु हिरण्यगर्भस्य तैजसेनान्तर्यामिणश्चाव्याकृतोपहितस्य प्राज्ञेन सहैकत्वस्योपलक्षणार्थम् । एवमध्यात्माधिदैवयोरेकत्वं विवक्षितम् । इत्यद्वैतपर्यवसानसिद्धिः । अध्यात्माधिदैवतयोरेकत्वं मधुब्राह्मणेऽप्युक्तं । अधिदैवतमध्यात्मं चैकरूपेण निर्देशं कृत्वा प्रतिपर्यायमयमेव स इत्यभेदवचनादेवमत्र प्रवक्तुं एकमात्रैकवीरेशेत्युक्तम् । ईदृशा सा 'अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च' इत्यष्टपर्यायवाचका । तर्हि तस्या अनेक-

एकैवानेकरूपासावेकवीरेति गीयते ॥
मनसा स्मर तां देवीं लब्धवेदो भविष्यसि ॥ ३४ ॥
कः प्राह साधु साधूक्तं सैव मे विस्मृता खलु ॥
प्रबुद्धोऽस्म्यधुना भक्त्या संस्मरे रेणुकां शुभाम् ॥३५॥

त्वमिति चेदुपाधिपरामर्शमन्तरेणानेकत्वानुपपत्तेः 'ॐ'कारैकस्वरा ज्ञेया समाहितेनौंकारोच्चारणे यच्चैतन्यं स्फुरति तदोंकारसामीप्यादेव शाखाचन्द्रन्यायेनौंकारशब्देन लक्ष्यते । तेन लक्षणयौंकारनिर्णयो ब्रह्मधीहेतुरिति यमेन नचिकेतसं प्रति 'ॐ' इत्येतदुपादिश्य प्रतिमायां विष्णुबुद्धिवदोंकारो ब्रह्मबुद्ध्योपास्यमानो ब्रह्मप्रतिपत्त्युपाय इति 'एतदालम्बनं श्रेष्ठम्' इत्युक्तम् । पिप्पलादेनापि सत्यकामाय 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति' इति । ओंकारो यदा परापरदृष्ट्योपास्यते तदा तज्ज्ञानोपायतामारोहतीत्युक्तम्, 'समाधिष्ठो यदौमित्युच्चार्यात्मानमनुसंधत्ते तदा स्थूलमकारमुकारे सूक्ष्मे तं च कारणे मकारे तमपि कार्यकारणातीते प्रत्यगात्मन्युपसंहृत्य तन्निष्ठो भवति' इत्यनेन प्रकारेणौंकारस्य तत्प्रतीत्युपायतो त्रिधान्तरेणाङ्गिरसा शौनकायोक्तं 'ओमित्येवं ध्यायथात्मानम्' इति, तैत्तिरीयेपि 'योऽयं स्थाणुः स पुमान्' इतिवद्यदेतदोमित्युच्यते तद्ब्रह्मेति । बाधायां सामानाधिकरण्येन समाहितो ब्रह्म बोध्यत इति ब्रह्मज्ञानहेतुत्वेनौमिति ब्रह्मेत्युक्तं सर्वास्पदत्वादोंकारस्य ब्रह्मणश्च तथात्वादेव लक्षणत्वादन्यत्वासिद्धेरोंकारप्रतिपत्तिर्ब्रह्मप्रतिपत्तिरिति ज्ञापनाय 'ॐकार एवेदं सर्वम्' इत्यादिश्रुतिभिरुक्तम् । अत एवौंकारैकस्वरेत्युक्तम् । ननु ऋषिपत्न्या ईदृक्त्वं कथमित्यत आह—ब्रह्मरूपिणीति ॥ ३३ ॥ सा एकैवोपाधिवशादनेकरूपेव भाति तां प्रणवालम्बनां मनसा स्मर 'मनसैवानुद्रष्टव्यम्' इति वृत्तिव्याप्तेर्ब्रह्मलब्धावभ्युपगमात् । लब्धवेदः ज्ञातवेदः । 'यस्तं वेद स वेदवित्' इति स्मृतेः ॥३४॥ कः ब्रह्मा । भक्त्यौंकारोपासनलक्षणया ॥३५॥

एवं तयोर्विवदतोः प्रादुरासापि रेणुका ॥
तन्मुखादपि वेदाश्च साङ्गोपाङ्गाः सशीर्षकाः ॥ ३६ ॥

परमेष्ठी ततो हृष्टः श्रीदत्तं रेणुकां च ताम् ॥
तुष्टाव लब्धवेदोऽसौ प्रसन्नमुखपङ्कजः ॥ ३७ ॥

ह्रीर्भीर्धीः श्रीस्त्वमेवैका श्रद्धा मेधा च धारणा ॥
प्रज्ञा त्वमेव छन्दांसि तवाङ्गान्येव वाङ्मयि ॥ ३८ ॥

स्वरवर्णात्मिकेऽनन्ते त्वमेवौंकाररूपिणी ॥
एकवीरे प्रसीद त्वं सदा मे सन्निधा भव ॥ ३९ ॥

तेभ्यो ह प्रादुर्बभूवेतिवत्प्रादुरास । सशीर्षकाः सोपनिषदः ॥ ३६ ॥ परमे सर्वोत्कृष्टानन्दे तिष्ठतीति 'अम्बाम्बगो'इत्यादिना षत्वम् ॥ ३७ ॥ महावाक्यविवरणरूपश्लोकद्वयेन स्तौति । प्रज्ञा रूपादिविषयोपलम्भमाना? प्रकृष्टा ज्ञप्तिस्तया । 'येन वा पश्यति' इत्यादि संगृहीतम् । ध्यानादिधारणान्तैर्ह्रियते तत् हृदयमित्यादिवशान्तं? संगृहीतम् । एवं त्वंपदं प्रज्ञानं सिद्धम् । अनुक्तसंग्रहार्थश्चकारः । छन्दांसि वेदाः तत्प्रतिपादकाः । हे वाङ्मयि ब्रह्मादिस्थावरान्तनामरूपजातिविकारे । एतेन 'एष ब्रह्मैष इन्द्रः' इत्यादि सर्वं संगृहीतम् । सर्वबाह्यविकारस्य नामरूपमात्रत्वात् 'वाचारम्भणं विकारो नामधेयम्' इति श्रुतेः ॥३८॥ स्वरादिकं त्वमेवेत्याह—स्वरेति । इयदेवाध्यारोपलक्षणं मम रूपं नेत्याह—हे अनन्ते, अपरिच्छिन्नत्वात् 'अतो ज्यायांश्च पूरुषः' इत्यादिश्रुतेः । तर्हीदृशमधिष्ठानं प्रणव एव 'ओमित्येतदक्षरमिदं सर्वम्' इत्यत आह—त्वमेवौंकाररूपिणीति । नामनामिनोरभेदादुपचार एवायमिति भावः । प्रसीदासंभावनादिनिरासेन प्रसन्ना

स्तुत्वैवं सा तथेत्युक्त्वा रेणुकान्तर्दधे विधिः ॥
नत्वा दत्तं तदाज्ञप्तः स्वधाम प्रययौ मुदा ॥ ४० ॥

एवंप्रभावा सा देवी रेणवे तपसः फलम् ॥
दातुं तत्पुत्र्यभून्नाम्ना रेणुकेत्यखिलश्रुता ॥ ४१ ॥

साद्याप्यामलकीग्रामे साक्षान्मातापुरे स्थिता ॥
श्रीदत्ताश्रमसामीप्ये पवित्रे सह्यसानुनि ॥ ४२ ॥

मातृतीर्थं शुभं तत्र माता स्नाता स्वयं सती ॥
नृणां सद्गतिदं तत्तु दर्शनस्पर्शनादिना ॥ ४३ ॥

अनसूयात्रितत्पुत्रदत्तश्रीरेणुकाश्रमान् ॥
देव्यात्मकृष्णामलकीं दृष्ट्वैति न पुनर्भवम् ॥ ४४ ॥

पद्मतीर्थं सर्वतीर्थं मातृतीर्थमिति त्रिकम् ॥
पावनं सर्वलोकानां नेदृक् क्वाप्याशु तारकम् ॥ ४५ ॥

भव । अखण्डैकरसत्वेन संनिधा भव ॥ ३९ ॥ ४० ॥ रेणवे राज्ञे ॥ ४१ ॥ सा रेणुका ॥ ४२ ॥ यत्र माता रेणुका अनुगमनकाले स्नाता तन्मातृतीर्थम् ॥ ४३ ॥ एकत्रानसूयाया अत्रेश्चाश्रमः । परत्र रेणुकाश्रमः । तन्मध्ये तत्पुत्रोऽनसूयात्रिपुत्रो भगवान्दत्तात्रेयस्तस्याश्रमः । समुद्रमथनसमये क्षीरोदे कृष्णामलकी उत्पन्ना सा भगवताऽऽनीय तत्रैव स्थापितेति पुराणान्तरे प्रसिद्धम् । देव्या लक्ष्म्या आत्मभूता या कृष्णामलकी तां च दृष्ट्वा नरः पुनर्भवं नैति ॥ ४४ ॥ क्वाप्यन्यत्राशु शीघ्रतारकं ईदृङ् न विद्यते ॥ ४५ ॥

कुष्ठी पुराभवत्सूर्यः स्वात्मजाकामदूषितः ॥
पद्मतीर्थस्नानमात्राच्छुद्धोऽन्यार्तिहरोऽभवत् ॥ ४६ ॥

दुर्गतिस्थपित्रुद्धृत्यै चान्ध्रीकः पर्यटन्महीम् ॥
मातृतीर्थस्नानमात्रान्मुक्तान्पितॄन्ददर्श ह ॥ ४७ ॥

नत्वा देवीं मातृतीर्थे पिण्डान्दास्यन्ति ये नराः ॥
समुद्धृतास्तत्पितरोऽक्षय्यतृप्तिं प्रयान्ति हि ॥ ४८ ॥

द्व्यष्टकाभ्यामिदं प्रोक्तं दत्तमाहात्म्यमुत्तमम् ॥
यशस्तत्प्रियशिष्यस्य कार्तवीर्यार्जुनस्य च ॥ ४९ ॥

पद्मतीर्थमाहात्म्यमाह—स्वात्मजां कन्यां रमणीं दृष्ट्वा संजातो यः कामस्तेन दूषितः सूर्यः कुष्ठी अभूत् । सोऽन्यत्रालब्धशुद्धिः पद्मतीर्थमेत्य तत्र स्नानमात्रेण शुद्धः सन्नन्येषां पापिनां दद्रुकुष्टमण्डलविचर्चिकादिरोगजन्यार्तिहरोऽभवत् । अत एव 'उद्यन्नद्य' इति तृचेनाराध्यते ॥ ४६ ॥ मातृतीर्थमाहात्म्यमाह—दुर्गतिस्था नरकस्थाः स्वपितरस्तेषामुद्धाराय मातृतीर्थस्नानमात्रेणैव दुर्गतितो मुक्तान्स्वपितॄन्प्रत्यक्षतो ददर्श ॥ ४७ ॥ देवीं रेणुकां श्राद्धपूर्वकं पिण्डान्दास्यन्ति ॥ ४८ ॥ द्व्यष्टकाभ्यां तृतीयाष्टकेन चतुर्थाष्टकेन च ॥ ४९ ॥ अद्यापि मुक्तस्याप्यर्जुनस्य स्मरणं सद्य एवाभीप्सितं ददाति यथा त्र्यधीश्वरो भगवान्दत्तात्रेयः । हीति प्रसिद्धम् । 'कार्तवीर्योऽर्जुनो नाम राजा बाहुसहस्रवान् ॥ तस्य स्मरणमात्रेण गतं नष्टं च लभ्यते' इति । कार्तवीर्यमन्त्रस्तु 'ॐफ्रोंव्रींक्लींभ्रूंआंह्रींक्रोंहुंफट् कार्तवीर्यायार्जुनाय नमः' इति । अस्य श्रीदत्त ऋषिः कार्तवीर्योऽर्जुनो

मुक्तस्याप्यर्जुनस्यास्य स्मरणं सद्य एव हि ॥
ददात्यभीप्सितं देवो यथा दत्तस्त्र्यधीश्वरः ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां उपासनाकाण्डे आदितश्चतुर्थाष्टके अष्टमोऽध्यायः ॥ चतुर्थाष्टकः संपूर्णः ॥
श्रीदत्तार्पणमस्तु ॥

देवता विराट् छन्द इति ॥ ५० ॥ इति चतुर्थे टीकायां अष्टमोध्यायः ॥

इति श्रीदत्त० परशुरामेण ऋषये महीदानं नाम
चतुर्थाष्टके अष्टमोऽध्यायः ॥ ४।८ ॥

॥ इति श्रीमद्दत्तपुराणे चतुर्थाष्टकः संपूर्णः ॥

---

## ॥ अथ श्रीमद्दत्तात्रेय० पंचमाष्टकप्रारम्भः ॥

———:0:———

**गालवार्थदानवहननं कुवलयाश्वेन मदालसावरणं नाम पञ्चमाष्टके प्रथमोऽध्यायः ॥ ५।१ ॥**

हरिः ॐ ॥ स्तुषे नराकृतिमपि श्रीगुरुं तन्निराकृतिम् ॥
साकारमपि यो भक्तं निराकारं करोत्युत ॥ १ ॥

सोमवंश्यो महावीर्यः पुरासीच्छत्रुजिद्द्युमान् ॥
ऋतध्वजाख्यस्तत्पुत्रः सर्वविद्याविशारदः ॥ २ ॥

गालवोऽभ्येत्य तं प्राह दैत्येनोपद्रुतोऽभवम् ॥
तदैवाश्वोऽपतद्दिव्यो व्योम्नो वाक् चाशरीरिणी ॥ ३ ॥

॥ श्रीगणेशाय नमः ॥

त्रयस्त्रिंशे गालवर्षिहितायाहत्य दानवम् ।
वृत्वा मदालसां ख्यातो जातः कुवलयाश्वकः ॥ १ ॥

साकारं संघाताभिमानिनम् । निराकारमभिमानशून्यम् ॥ १ ॥ शत्रुजिन्नामा तत्पुत्रः ऋतध्वजः ॥ २ ॥ तं शत्रुजितम् । यदोपद्रुतोऽभवं तदैवाश्वोऽग्रेऽपतत् । व्योम्नो वाक्चापतत् प्राह ॥ ३ ॥ अमुमश्वमारुह्य ते

आरुह्यर्तुध्वजोऽमुं ते दुःखहर्तेत्यतो नृप ॥
पुत्रं देह्यरिनाशाय तप्स्यामीतस्तपः सुखात् ॥ ४ ॥
तथेत्यदात्सुतं राजा हृष्टस्तस्मै स गालवः ॥
दत्त्वाश्वं स्वाश्रमं प्राप सह तेन बलीयसा ॥ ५ ॥
तत्रैकदागतो दैत्यः क्रोडरूप ऋतध्वजः ॥
दैत्यं ज्ञात्वा रुरोहाश्वं धृतास्त्रः सर्वतोगतिम् ॥ ६ ॥
जघानार्धेन्दुबाणेन विद्धो दुद्राव सोऽसुरः ॥
राजा तमन्वगाद्भीत्या दैत्यः पातालमाविशत् ॥ ७ ॥
तमन्वेत्य ददर्शाधो दिव्ये धाम्न्येकलां स्त्रियम् ॥
राजापि सा तमालोक्य शिरोधामाञ्जसारुहत् ॥ ८ ॥
सोऽप्यन्वेत्य वधूं तन्वीं प्रेक्ष्य मञ्चस्थितां शुभाम् ॥
तारुण्यदारितोरस्कामभवत्कामविह्वलः ॥ ९ ॥
पपात मूर्च्छिता सापि नृदेवं वीक्ष्य सुन्दरम् ॥
सामुश्चत्तिग्मनिःश्वासान्सख्याश्वस्ता नृपेण च ॥ १० ॥

दुःखहर्ता भवेत् अतो हेतोः इतः परं शत्रुनाशोत्तरं सुखेन तपस्तप्स्यामि त्वं अपि तत्फलभाग्भविष्यसीत्याशयः ॥ ४ ॥ तेनर्तुध्वजेन सह ॥ ५ ॥ तत्र गालवाश्रमे । क्रोडरूपो वराहरूपधरो दैत्यः पातालकेतुः ॥ ६ ॥ ७ ॥ अधः पाताले । दिव्ये प्रकाशशीले । धाम्नि गृहे । एकलामेकाकिनीम् । शिरोधाम चन्द्रशालां आरुहत् ॥ ८ ॥ स राजापि । तन्वीं मनोहराम् । 'वोतो गुणवचनात्' इति ङीप् । तारुण्यदारितोरस्कां स्तनभराक्रान्तां अपराम् ॥ ९ ॥ त्यक्ततीक्ष्णनिश्वासान् ॥ १० ॥ त्वमित् त्वमेवास्या

तत्संज्ञया सखी प्राह विस्मितं तं नृपं त्वमित् ॥
मोहहेतुर्दर्शनात्ते स्मरक्षोभाद्धि मूर्च्छिता ॥ ११ ॥

मदालसाभिधा विश्वावसुगन्धर्वपुत्र्यसौ ॥
पातालकेतुदैत्येन बलान्मायाविना हृता ॥ १२ ॥

सोऽमूमेष्यत्त्रयोदश्यां हठादुद्वाहयिष्यति ॥
नार्हो वरः स चार्वङ्ग्याः श्रुत्याः शूद्र इवाधमः ॥१३॥

गतेऽह्नि कामधुगिमामात्मनाशोद्यतां जगौ ॥
मैवं कुरु नरो दैत्यं श्वो भेत्स्यति स ते पतिः ॥ १४ ॥

तथैवाद्यासुरो विद्धः केनापि स दरीं गतः ॥
अन्वागतो भवान्मन्ये देवस्तद्वेधरुक् त्वमित् ॥ १५ ॥

कुण्डलाख्या सखी त्वस्या अहमस्म्यखिलं मया ॥
निवेदितं दयस्वाद्य सख्याः शोकमपाकुरु ॥ १६ ॥

राजोवाच न देवोऽहं सोमवंश्य ऋतध्वजः ॥
विद्धं हन्तुमिह प्राप्तो गालवर्ष्याज्ञयाऽसुरम् ॥ १७ ॥

मोहहेतुः । हि यतस्त्वद्दर्शनसंजातकायक्षोभान्मूर्च्छिता ॥ ११ ॥ केयमित्यत आह—मदालसेति ॥ १२ ॥ अमूं मदालसाम् ॥ १३ ॥ गतेह्नि गते दिवसे । आत्मनाशोद्यतां मर्तुमुद्युक्ताम् ॥ १४ ॥ त्वमित् त्वमेव ॥ १५ ॥ सख्या मदालसायाः । 'सख्यशिश्वी' इति ङीप् ॥ १६ ॥ विद्धं असुरं हन्तुम् ॥ १७ ॥ ऋक्शाखीयैकोनषष्टितमाध्यायोक्तौ मन्त्रौ 'सोमः

परिणेया वधू राज्ञा द्विजदेवाग्निसंनिधौ ॥
तस्मादुद्वाहनादस्या दोषो मेऽद्य भवेन्न किम् ॥ १८ ॥
कुण्डलोचे कुलगुरुं ध्यानेनैवानयाम्यहम् ॥
इत्युक्त्वा सा गुरुं दध्यौ सोऽप्याप ससमित्कुशः ॥१९॥
ज्ञात्वा सर्वं योजकाग्निं प्रज्वाल्य स यथाविधि ॥
कृत्वा विवाहसंस्कारं जगाम तपसे पुनः ॥ २० ॥
कुण्डलाप्याशिषो दत्वा तपसेऽगात्स सूर्यया ॥
आरुह्याश्वं ययौ राजा योद्धुमाप तदासुरः ॥ २१ ॥
ससैन्यं तं क्षणाद्धत्वा विज्ञाप्य मुनये नृपः ॥
राष्ट्रमेत्य सभार्यस्तत्सर्वं पित्रे शशंस सः ॥ २२ ॥
स प्रेक्ष्य जयिनं पुत्रं स्नुषां च स्ववधूपमाम् ॥
नाम्ना कुवलयाश्वेति प्रतिष्ठामकरोन्मुदा ॥ २३ ॥
मदालसानिशं भेजे तं पतिं पतिदेवता ॥
प्रेमान्योन्याश्रयं चासीत्तयोश्चक्राङ्गवत्सदा ॥ २४ ॥
ऋतध्वजः कदाचित्तु मृगयार्थं गतो वनम् ॥
भ्राताह तस्य दैत्यस्य तालकेतुर्ददर्श तम् ॥ २५ ॥

प्रथमो विविदे०' । नहि देवभुक्तस्त्रीपरिग्रहे दोषः वधूवस्त्रदानतो दोषपरिहारश्रवणादतो द्विजादिसंनिधौ परिणेया ॥ १८ ॥ स गुरुः ॥ १९ ॥ 'विवाहे योजको मतः' इति स्मृतेर्योजकाग्निम् ॥ २० ॥ सूर्यया नवोढया मदालसया ॥ २१ ॥ तं पातालकेतुदैत्यम् ॥ २२ ॥ स्नुषां मदालसाम् ॥ २३ ॥ तयोश्चक्रवाकवत् प्रेमासीत् ॥ २४ ॥ तं कुवलयाश्वम् ॥ २५ ॥

मायया वञ्चयाम्येनमग्रजानृण्यहेतवे ॥
इत्युक्त्वा स मुनिर्भूत्वा माययाऽकल्पयद्वनम् ॥ २६ ॥
मत्वा तपोवनं राजा दैवात्तत्रैत्य तं खलम् ॥
ननामाज्ञाततन्मायो मत्वा शान्तं मुनिं तदा ॥ २७ ॥
स प्राह स्वस्ति ते राजन्नारब्धोऽयं मया क्रतुः ॥
दक्षिणार्थं धनं नास्ति कण्ठभूषां प्रदेहि मे ॥ २८ ॥
तथेत्युक्त्वाप्यदाद्राजा कण्ठभूषां प्रगृह्य सः ॥
नृपं प्राह क्षणं तिष्ठ नत्वेशं जलपं क्षणात् ॥ २९ ॥
आगत्य पश्चाद्वरदो भविष्ये ते तथेति सः ॥
उक्त्वा तस्थौ नृपो दैत्यो मुनिवेषी पुरं ययौ ॥ ३० ॥
पितुर्मदालसायाश्च हाहाकृत्वाग्रतोऽवदत् ॥
ऋतध्वजो हतो दैत्यैर्म्रियमाणो ददाविदम् ॥ ३१ ॥
वनस्थैरग्निसंयोगः कृत आश्वासनं त्विमाम् ॥
कण्ठभूषां गृहाणेति त्यक्त्वागात्स्वाश्रमं द्रुतम् ॥ ३२ ॥
स नृपं प्रणयात्प्राह कृतार्थोऽहं त्वया कृतः ॥
इत्युक्तस्तं नमस्कृत्य स राजागाद्वनान्तरम् ॥ ३३ ॥

एतं राजानम् । आसुर्या मायया वञ्चयामि ॥ २६ ॥ अज्ञाता तन्माया येन स नृपः ॥२७॥ क्रतुर्यज्ञः । दक्षिणां विना यज्ञस्य तामसत्वस्मरणात् ॥२८॥ जलपं वरुणम् ॥२९॥ ते तुभ्यं वरदो भविष्ये ॥३०॥ इदं कण्ठभूषणम् । ॥३१॥ इमामाश्वासनभूतां कण्ठभूषां गृहाण । अतः परं यत्कर्तव्यं तत्क्रियतां किं शोकेनेत्युक्त्वागात्॥३२॥ त्वयाहं कृतार्थः कृत इति प्रणयेन प्राह ॥३३॥

राष्ट्रे महाननर्थोऽभूत्कोरस्ताडनपूर्वकम् ॥
विललाप नृपः पुत्रशोकेन महतावृतः ॥ ३४ ॥

विदुषी सापि सुचिरं रुदित्वाथ मदालसा ॥
आश्वास्य श्वशुरौ धैर्याद्विवेशाग्निं यथाविधि ॥ ३५ ॥

शोकमग्नाः प्रजाः सर्वा हाहाकारो महानभूत् ॥
स्नात्वान्यैर्बोधितो राजा जलं प्रादाद्यथाविधि ॥ ३६ ॥

अत्रान्तरे वनादेत्य सोऽश्वारूढ ऋतध्वजः ॥
खिन्नान्दृष्ट्वाखिलान्सर्वं श्रुत्वाभूद्दुःखितो भृशम् ॥३७॥

चिरं विमृश्य संकल्पं प्रियानृण्याय सोऽकरोत् ॥
इह जन्मनि चार्वङ्गीं न भोक्ष्ये तां विनेतराम् ॥३८॥

संकल्प्यैवं जहौ भोगं दैवादश्वतराहिजौ ॥
विप्ररूपौ भुवं प्राप्तौ तयोः सख्यं नृपोऽकरोत् ॥३९॥

बुद्धिविक्रमलावण्यैर्गुरुशक्रस्मरोपमम् ॥
दृष्ट्वैत्य प्रत्यहं नागौ तेन चिक्रीडतुर्मुदा ॥ ४० ॥

कं शिरः । उरो वक्षःस्थलम् ॥ ३४ ॥ विदुषी अपि रुदित्वा इत्यतिस्नेहपरिणामो दर्शितः । यथाविधि पाषाणे त्रिः सकृद्वा प्रतिदिनमुदकं 'ब्राह्मणे दक्षिणास्याः क्षत्रे तूदङ्मुखा वै मृतव्रति विशि तु प्राङ्मुखास्ते ददीरन्' इति विधिना ॥ ३५ ॥ ३६ ॥ सर्वमृष्यागमनादिकम् ॥ ३७ ॥ स कुवलयाश्वः । विमृश्य विचार्य ॥ ३८ ॥ अश्वतरनागपुत्रौ ॥ ३९ ॥ बुद्ध्या गुरूपमं । विक्रमेणेन्द्रोपमं । लावण्येन स्मरोपमम् ॥ ४० ॥ अस्य

न रेमे तौ विना भूपस्तौ विज्ञायैकदाऽस्य तु ॥
पत्नीवियोगजं दुःखं नागौ खिन्नौ बभूवतुः ॥ ४१ ॥

तत्पिता म्लानवक्त्रौ तावपृच्छत्खेदकारणम् ॥
ऊचतुस्तौ तु तातावां मित्रदुःखेन दुःखितौ ॥ ४२ ॥

ऋतध्वजः सोमवंश्यस्तत्सख्यं भुवि नावभूत् ॥
तत्कार्यं दुर्धरं मत्वा प्राप्तं खिन्नत्वमावयोः ॥ ४३ ॥

पितोवाचोपकर्तव्यमवश्यं सखिभिः खलु ॥
किं वा कार्यं महत्सख्युर्ब्रूतं तत्र यताम्यहम् ॥ ४४ ॥

तावूचतुस्तं गन्धर्वपुत्री नाम्ना मदालसा ॥
दैत्येन वञ्चिता तत्स्त्री मृता श्रुत्वा मृतं पतिम् ॥४५॥

नान्यां भोक्ष्ये स्त्रियमिति प्रतिज्ञामकरोत्स तु ॥
तन्मित्रस्य महाकार्यं पितस्तत्केन साध्यते ॥ ४६ ॥

सर्वेन्द्रियनिधानात्मा भुक्तभोगः प्रशाम्यति ॥
तद्वासनाग्निना दग्धो नश्यत्येवावशोऽन्यथा ॥ ४७ ॥

कुवलयाश्वस्य सख्युः ॥ ४१ ॥ तौ तथाभूतौ आगतौ म्लानमुखौ दृष्ट्वा । भो तात आवामिति छेदः ॥ ४२ ॥ नौ आवयोः । सख्यं सखित्वं 'सख्युर्यः' इति यः ॥ ४३ ॥ सख्युरुपकारोऽवश्यमेव सखिभिः कर्तव्यः ॥ ४४ ॥ अग्निदाहेन मृता ॥ ४५ ॥ केनोपायेन ॥ ४६ ॥ सर्वेन्द्रियनिधानभूत आत्मा संघाताभिमानी प्रशाम्यति निर्वासनो भवति । अवशो वासनाधीनः स्वार्थाद्भ्रष्टो भवति ॥ ४७ ॥ पिता आह । विधिर्दैवं भावि

पिताह यत्नः कर्तव्यः पुंसातर्क्यो विधिर्यतः ॥
तत्कार्यार्थे यतिष्येऽहं तपसा खलु पुत्रक ॥ ४८ ॥
इत्युक्त्वाश्वतरो नागस्तपसेऽगात्सकम्बलः ॥
हिमाद्रौ प्लक्षावरणतीर्थे सर्वसुसिद्धिदे ॥ ४९ ॥
जिताहारः सुसंयम्य प्राणायामैर्मनो धिया ॥
समाहितोऽर्चयद्देवीं ब्रह्मयोनिं सरस्वतीम् ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रि० संहितायां
वासुदेव्यां उपासनाकाण्डे पञ्चमाष्टके
प्रथमोऽध्यायः समाप्तः ॥ १ ॥

न ज्ञायते तथापि यत्न आस्थेयः । 'यत्ने कृतेपि तु न सिद्ध्यति कोऽत्र दोषः' इति दैवपौरुषराद्धान्तः ॥ ४८ ॥ तपसे तपस्तप्तुं 'तुमर्थाच्च' इति चतुर्थी ॥ ४९ ॥ प्राणायामैः शोधितया धिया मनो नियम्य । ब्रह्मयोनिं वेदाविर्भावस्थानभूताम् ॥ ५० ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां उपासनाकाण्डे पञ्चमाष्टके प्रथमोऽध्यायः ॥ १ ॥

इति गालवार्थदानवहननं कुवलयाश्वेन मदालसावरणं नाम
पञ्च० प्रथ० ॥ ५।१ ॥

---

## पातालं गतस्य राज्ञो नागेभ्यो मदालसालब्धिर्नाम पञ्चमाष्टके द्वितीयोऽध्यायः ॥ ५ । २ ॥

हरिः ॐ ॥ जुषस्व बालवाक्यवत्स्तवं ममाम्ब भारति ॥
असत्सदप्यदस्त्वयि भ्रमाद्विभाति केवले ॥ १ ॥

क्षराक्षरात्परं हि यत्त्वमेव तत्पदं ध्रुवम् ॥
जले यथोर्मिबुद्बुदास्तथा त्वयीशजीवधृक् ॥ २ ॥

॥ श्रीगणेशाय नमः ॥

चतुस्त्रिंशे सरस्वत्याः प्रसादेनाहिना शिवम् ॥
तुष्ट्वा मदालसा लब्धा दत्ता भर्त्रे च कथ्यते ॥ १ ॥

कम्बलाश्वतरावूचतुः । हे सरस्वति, अभिनवबालवाक्यवन्मे स्तवं जुषस्व । हे अम्ब, त्वयि अधिष्ठानभूतायां अदः सदसत्कार्यकारणात्मकं भ्रान्त्या रज्जुसर्पवद्भाति तन्मिथ्येति ज्ञापनाय केवल इति संबुद्धिः ॥ १ ॥ क्षरः सर्वभूतानि अक्षरः कूटस्थः तत्समाहारस्तस्मात्परं ध्रुवं क्षरमतीतं अक्षराच्चोत्तमं तत्त्वमेव । ननु द्वासुपर्णेति श्रुत्या जीवेश्वरयोः प्रतिपादनात्कथं केवलत्वमत आह । वायूपाधितः जले यथोर्मिबुद्बुदास्तथा चिद्रूपिण्यां त्वयि मायाविद्योपाधिभ्यां ईश्वरजीवकल्पना ॥ २ ॥ ननु मायाहं

त्र्यधीश ओंकृतेऽखिलं त्वमेव चास्य मङ्गलम् ॥
यदर्धमात्रमूर्जितं क्रियाविकारवर्जितम् ॥ ३ ॥

त्रिसप्तयागसाधिके सुभुक्तिमुक्तिदायिके ॥
स्वरार्णकारणे स्तवः स्वयं नु कैः कृतस्तव ॥ ४ ॥

प्रकाशकप्रकाशके श्रुतिश्रुतादिधारके ॥
त्वमेव सर्वकारणं त्वमेव सर्वतारणम् ॥ ५ ॥

सुशक्तभक्तभावितं हि येन सर्वथा ततम् ॥
तदेव धाम ते वरं यदीक्ष्यते बुधैः परम् ॥ ६ ॥

न। हे त्रिगुणमायाधीशे प्रणवरूपिणि, अखिलं नामरूपात्मकं त्वमेव अधिष्टानसत्तातिरिक्ताध्यारोपसत्ताभावात्। अस्य जगतः उपजीव्यभूतं मङ्गलमानन्दस्त्वमेव 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः। कथंभूतं क्रिया इष्टानिष्टमिश्ररूपाः विकारा जन्मादयस्तद्रहितं ज्ञानैश्वर्याद्यूर्जितं यदर्धमात्रं तत्तव रूपं 'अर्धमात्रास्थिता नित्या' इति मार्कण्डेयात्॥ ३॥ सप्त पाकयज्ञाः सप्त हविर्यज्ञाः सप्त सोमयज्ञाः तेषां साधनभूता त्वमेव। हे भोगमोक्षप्रदे, स्वरा आदयः। अर्णाः कादयः तेषां कालस्थानप्रयत्नानुप्रदानतः कारणभूते, तव स्तवः स्वयं कैः कृतः न कैरपि। न्विति वितर्के ॥ ४ ॥ सूर्यादिप्रकाशकानां प्रकाशनहेतुभूते श्रुतिशास्त्रधारके, त्वमेव सर्वेषां कारणं तारणं च ॥ ५ ॥ येन सर्वं ततं व्याप्तं तदेव ते धाम रूपं 'नायमात्मा बलहीनेन लभ्यः' इति श्रुतेर्ब्रह्मचर्यादिना ये सुतरां शक्ता भक्ताः तैर्भावितं लब्धं किं मानसमूर्तिवत् यत्तमसः परं तद्बुधैः अपरोक्षीक्रियते ॥ ६ ॥ हे अम्ब,

स्थिराश्चराश्च गोचराः परत्र चात्र वाम्ब ये ॥
त्वदेव तत्समागमः प्रमाणमत्र चागमः ॥ ७ ॥
नमोस्तु ते सरस्वति ध्यवित्रि वाजिनीवति ॥
प्रसीद बुद्धिचेतने स्वभक्तहृन्निकेतने ॥ ८ ॥
स्तुतैवं विष्णुजिह्वा सा प्रसन्ना सूनृतेरका ॥
प्राहाविष्कृत्य चात्मानं तुष्टास्मि वरयेप्सितम् ॥ ९ ॥
सकम्बलस्य कुरु मे साहाय्य शंभुगायने ॥
सुस्वरत्वादि यच्छेति ययाचे हि सरस्वतीम् ॥ १० ॥
वागीशाऽऽहोभयोरस्तु दिव्यनादरहस्यमुत् ॥
स्तोत्रं चास्तु स्खलद्धीष्ट्वधीजाड्यादिहरं त्विदम् ॥ ११ ॥
इत्युक्त्वान्तर्दधे सा तौ कैलासं जग्मतुर्द्रुतम् ॥
सुस्वरं चैव सांगाढ्यं माधुर्यं स्वर्णमुत्तमम् ॥ १२ ॥
कलं कालोचितं गीतं ततानद्धघनारयुक् ॥
दिव्यं मनोहरं तन्त्रीलययुक्तः सकम्बलः ॥ १३ ॥

परेत्रात्र वा ये स्थावरजंगमा विषयास्तेषां त्वत्प्रसादत उपलब्धिः । अत्र वेदः प्रमाणम् ॥ ७ ॥ हे ध्यवित्रि बुद्धिरक्षके वाजा अन्नानि विद्यन्ते यस्यां सा वाजिनी यज्ञक्रिया सा विद्यते यस्याः सा यज्ञाधिष्ठात्रि अन्नदात्रि बुद्धिप्रकाशके स्वभक्तहृद्वासिनि, प्रसीद मंत्रश्च 'प्रणो देवी' इत्यादिः ॥ ८ ॥ विष्णोर्विराडात्मनो जिह्वा लोकप्रियवचनप्रेरका आत्मानं स्वरूपम् ॥ ९ ॥ ॥ १० ॥ आहेति छेदः । उत् उत्कृष्टं आदिशब्दाद्धारणादि ॥ ११ ॥ सा सरस्वती । तौ नागौ ॥ १२ ॥ ततं वीणादि आनद्धं मुरजादि घनं कांस्यतालादि आरं वंश्यादि तन्त्रीलयः साम्यम् ॥ १३ ॥ हृद्यमारोहाव-

त्रिसंध्यं नियतो हृद्यं जगौ देवीप्रसादतः ॥
मन्दमन्दं हरः श्रुत्वा सुगीतेन तुतोष ह ॥ १४ ॥
हारिणा गीतरागेण हरोपि प्रसभं हृतः ॥
तदग्रेऽभ्येत्य तौ प्राह ब्रूतं वां किमभीप्सितम् ॥ १५ ॥
नागोऽवदत्कुवलयाश्वपत्नी या मृता तु सा ॥
तैरेवाकारधीरूपैर्दुहितृत्वं प्रयातु मे ॥ १६ ॥
जातिस्मरा पूर्ववत्सा क्षमाशान्त्यादिभूषिता ॥
पतिव्रता योगिमाता योगिनी ब्रह्मवादिनी ॥ १७ ॥
प्राहेश्वरस्तथैवास्तु प्राश्नीया आत्मनाहिप ॥
श्राद्धकाले मध्यपिण्डमभिध्यायस्व तां तथा ॥ १८ ॥
मत्प्रसादाद्यथापूर्वं नागेन्द्र भवितैव सा ॥
इत्युक्त्वा प्रययावीशः स्वधामाप्यापतुश्च तौ ॥ १९ ॥
स चक्रेऽश्वतरः शंभुप्रोक्तवत्तत्प्रसादतः ॥
जज्ञे निःश्वासतोऽथास्य पूर्ववत्सा मदालसा ॥ २० ॥
तां सावरोधने स्त्रीभिर्गुप्तामास्थाप्य यत्नतः ॥
पुत्रौ प्राहैकदानीतं मित्रं नृपमिहेति सः ॥ २१ ॥

रोहतो हृदयंगमम्। 'क्रमात्सुराणां सप्तानामारोहश्चावरोहणम्। सा मूर्च्छे- त्युच्यते ग्रामा एताः सप्त च सप्त च' इत्यादिलक्षणम् ॥१४॥ प्रसभं हृतः बलादानीतः। वां युवयोः ॥ १५ ॥ दुहितृत्वं पुत्रीत्वम् ॥ १६ ॥ ब्रह्म- वादिनी वेदतदर्थसंपन्ना ॥ १७ ॥ आत्मनार्धाङ्गीभूतेन कलत्रेण ॥ १८ ॥ तौ नागौ। स्वधाम पातालम् ॥ १९ ॥ अस्य जायात्मनो निःश्वासत आविर्भूता ॥ २० ॥ अवरोधनेऽन्तःपुरे ॥ २१ ॥ तौ नागपुत्रौ। त्वा त्वां

तथेत्युक्त्वापि तौ विप्ररूपिणावेत्य भूतलम् ॥
ऋतध्वजेच्छति द्रष्टुं तातस्तौ त्वेति चोचतुः ॥ २२ ॥

वाढमित्युदितौ तेन सह तौ गोमतीं गतौ ॥
नदीमध्यान्नृपो नीतः पातालं विस्मितोऽभवत् ॥२३॥

तावत्कालं नृपो मेने वानप्रस्थात्मजौ तु तौ ॥
तदैव भुजगौ दृष्ट्वा सोऽपृच्छत्कौ युवामिति ॥ २४ ॥

तस्मै निवेद्य स्वोदन्तं नागमश्वतरं वरम् ॥
दर्शयामासतुर्हृष्टो ननामाहिपतिं नृपः ॥ २५ ॥

प्रेम्णालिङ्ग्य दृढं सोऽश्रुपूर्णोऽवघ्राय मूर्ध्नि तम् ॥
सम्राड् भव चिरं जीव सुखेनेत्याशिषो ददौ ॥ २६ ॥

राजाऽप्याहाद्य धन्योऽस्मि दर्शनं वः सुदुर्लभम् ॥
जातं मित्रप्रसादाद्धि कृतकृत्योऽस्म्यसंशयम् ॥ २७ ॥

नागोऽप्याह चिराज्जातं दर्शनं तेऽभिवाञ्छितम् ॥
पुत्राभ्यां ते गुणाः श्लाघ्या यथा गीतास्तथैव ते ॥२८॥

यदभीष्टं वृणीष्व त्वं वरदं विद्धि मां नृप ॥
इत्युक्तः सोऽब्रवीद्राजा नत्वाश्वतरमादरात् ॥ २९ ॥

इत्यूचतुः ॥ २२ ॥ तेन कुवलयाश्वेन सह ॥ २३ ॥ विप्ररूपधरौ नागौ ॥ २४ ॥ स्वोदन्तं स्ववृत्तान्तम् ॥ २५ ॥ २६ ॥ २७ ॥ श्लाघ्याः क्षमादयः ॥ २८ ॥ २९ ॥ वो भवादृशां अर्थो विषयाः । पितुः राष्ट्रे 'ढूलोपे

प्रसादाद्वः पितू राष्ट्रे सन्त्यर्था मेऽखिलाः प्रभो ॥
धर्मे मतिर्भवतु मे पितृदेवातिथिष्वपि ॥ ३० ॥
एवमस्त्वन्यदिष्टं चेद्वृणीष्वेत्युक्त एव सः ॥
दृष्ट्वा मित्रमुखं स्वेष्टं वक्तुं हीत ऋतध्वजः ॥ ३१ ॥
तदा तदिङ्गितज्ञौ तौ नागपुत्रौ समूचतुः ॥
मदालसां विना नान्यदभीष्टं चास्य भो पितः ॥ ३२ ॥
पिताऽऽह योगो भूतानां वियोगो वाऽत्र दैवतः ॥
तथापीच्छसि चेद्द्रष्टुं दर्शयाम्यद्य ते प्रियाम् ॥ ३३ ॥
इत्युक्त्वा दर्शयामास गृहे गुप्तां मदालसाम् ॥
दृष्ट्वैव तन्मुखं राजा प्रियेत्युच्चार्य मूर्च्छितः ॥ ३४ ॥
विसंज्ञः पतितो भूमौ चिरमुत्थाय राट् पुनः ॥
आलिङ्गितुमधावत्तां संत्यज्य स्त्रैणवद्ध्रियम् ॥ ३५ ॥
नागो निवार्याह भूपं नीत्या तं परिसांत्वयन् ॥
मयेयं निर्मिता माया मा स्प्राक्षीर्धृतिमावह ॥ ३६ ॥
दूरात्पश्य दिदृक्षुश्चेद्द्राङ्नश्येः स्पर्शनादिना ॥
त्वं सन्विचारशीलोऽपि कथं मुह्यसि मायया ॥ ३७ ॥
इत्थं स तेन प्रणयाद्वश्चितोपि निरीक्ष्य ताम् ॥
हा वल्लभे इति प्रोक्त्वा मूर्च्छितो निपपात कौ ॥ ३८ ॥

पूर्वस्य दीर्घोऽणः' ॥ ३० ॥ हीतः लज्जितः ॥ ३१ ॥ अस्य राज्ञः ॥ ३२ ॥ पिता आहेति छेदः ॥ ३३ ॥ प्रिये इति प्लुतं वक्तुं योग्यं दूरतो दृष्टत्वात् ॥ ३४ ॥ स्त्रैणवत् ह्रियं लज्जां संत्यज्य ॥ ३५ ॥ निवार्य आह । मा स्प्राक्षीः स्पर्शनं मा कुरु । धृतिं धैर्यम् ॥ ३६ ॥ द्रष्टुमिच्छसि चेद्दूरात्त्वं पश्य । सन् साधुः ॥ ३७ ॥ कौ भूम्याम् ॥ ३८ ॥ मा शुचः शोकं

विसंज्ञं पतितं भूपमाश्वास्याश्वतरोऽवदत् ॥
सावधानो भवेमां ते प्रियां स्वीकुरु मा शुचः ॥ ३९ ॥
तस्मै तां विधिवद्दत्वा सरस्वत्या अनुग्रहम् ॥
श्रीशंकरप्रसादं च शशंसापि स्वचेष्टितम् ॥ ४० ॥
मदालसापि तं कान्तं प्रतिलभ्य ननन्द तम् ॥
मृतामपि पुनर्लब्धां प्राग्वद्राजापि तां तथा ॥ ४१ ॥
दिनमेकं नृपः स्थित्वा पीत्वा स्वाद्वमृतं ततः ॥
नागान्नत्वा तदाज्ञप्तः सपत्नीकोऽश्वमारुहत् ॥ ४२ ॥
ततः शीघ्रं ययौ राजा स्वपुरं समलंकृतम् ॥
सभार्यः पितरौ नत्वा कथयामास सोऽखिलम् ॥ ४३ ॥
दृष्ट्वा मदालसां तन्वीं वयसा वपुषापि च ॥
पूर्ववच्छ्वशुरौ पौरा अपि जह्लादिरेऽखिलाः ॥ ४४ ॥
राष्ट्रे ध्वजपताकाढ्ये भूषिते च सुतोरणे ॥
सुगीतनृत्यवादित्रे समभूदुत्सवो महान् ॥ ४५ ॥
युवा कुवलयाश्वोऽसौ मूर्तयेव तया मुदा ॥
चार्वङ्ग्या सुचिरं रेमे मारो रत्येव कान्तया ॥ ४६ ॥
ब्रह्मनिष्ठापि सा तन्वी विलासैः सुमनोहरैः ॥
रमयामास भूपालं चिदिव व्यावहारिकम् ॥ ४७ ॥

मा कार्षीः ॥ ३९ ॥ ४० ॥ तथा ननन्दानन्दं प्राप ॥ ४१ ॥ तदाज्ञप्तः नागेनादिष्टः ॥ ४२ ॥ ४३ ॥ पुरे भवाः पौरा लोकाः ॥ ४४ ॥ सुष्ठु तोरणानि बहिर्द्वाराणि यस्य ॥ ४५ ॥ मूर्तिमत्या प्रीत्येव । मारः कामः ॥ ४६ ॥ चिच्चितिर्व्यावहारिकं जीवम् ॥ ४७ ॥ अमा सह समीपे वा

ततः कालेन कियता तत्पिता निधनं गतः ॥
राज्येऽभिषिक्तोऽमात्याद्यै राजनीत्या जुगोप सः॥४८॥

पितृवद्राजनि प्रीतिं चक्रुः सर्वे महिष्यथ ॥
भूत्वा गर्भिण्यसूतार्कमिव पुत्रं मदालसा ॥ ४९ ॥

सा जातमात्रमपि तं तत्त्वज्ञानमपाययत् ॥
दुग्धं तु प्राणधृतय औदासीन्यात्ततः परम् ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्ड-
मण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे
पञ्चमाष्टके द्वितीयोऽध्यायः ॥ २ ॥

भवा अमात्याः अव्ययात्त्यप् मन्त्रिणः । जुगोप ररक्ष ॥ ४८ ॥ ४९ ॥ तं पुत्रम् । प्राणधृतये प्राणधारणार्थम् ॥ ५० ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे टीकायां पञ्चमाष्टके द्वितीयोऽध्यायः ॥ २ ॥ श्रीदत्तार्पणमस्तु ॥

इति पञ्चमाष्टके द्वितीयोऽध्यायः ॥ ५।२ ॥



अथ मदालसया पुत्रत्रयज्ञानोपदेशश्चतुर्थाय प्रवृत्तिमार्गकथनं नाम पञ्चमे तृतीयः ॥ ५।३ ॥

हरिः ॐ ॥ उग्रो जज्ञे सहैवायं प्रमादो मृत्युरात्महा ॥
इति मत्वोत्तानशायिन् रोदिष्यपि स न त्वयि ॥ १ ॥
शुद्धोऽस्यकं न ते नायं कल्पितः पाञ्चभौतिकः ॥
देहोऽपि ते ह्यसङ्गस्य कुतो रोदिषि सन्भवान् ॥ २ ॥
विश्वोद्भवाऽसतीयं शुक् शब्दोऽयं कल्पितो गुणैः ॥
भूताश्रया गुणा भौता मृषा विषयिगा अपि ॥ ३ ॥

॥ श्रीगणेशाय नमः ॥
प्रबोध्याजन्म पुत्रांस्त्रीनलर्कं च चतुर्थकम् ॥
पतीच्छयाऽकरोद्भूपं पञ्चत्रिंशे मदालसा ॥ १ ॥

रे उत्तानशायिन्, आत्मघातकः प्रमादनामकः मृत्युः सदैव जात इति मत्वा रोदिषि किम्। मा रोदीः। स मृत्युस्त्वयि न ॥१॥ यतस्त्वं शुद्धः प्रमादकारणरागादिरहितोऽसि अतस्तवाकं दुःखं न। ननु देहपरिच्छिन्नस्य कथं न दुःखमित्यत आह—कल्पितोऽयं पाञ्चभौतिकः। त्वं त्वविकारी। यतो भवान् सन् कालत्रयाबाधः। देहस्त्वसत्यः. विकारित्वाद्घटवत् ॥ २ ॥ ननु त्वदुदराज्जातस्य वर्धमानस्य च कथमविकारित्वमत आह—हे विश्वोद्भव। 'मत्त एव जगज्जातं मयि सर्वं प्रतिष्ठितम् ॥ मयि सर्वं लयं याति' इत्येवं भावयेति संबुद्ध्यर्थः। यदा त्वं संघाताभिमानी सन् पराक् पश्यसि तदा जगदुत्पन्नमिवेति तव भाति अतः बहिःप्रवृत्ताक्षगणं शनैः प्रत्यक् प्रवाहय

भूतान्यन्योन्यसंबन्धं प्राप्यार्द्धिं यान्ति न स्वतः ॥
वृद्धिहानी न तेम्ब्वन्नदानाद्देहोऽस्य वर्धते ॥ ४ ॥

शीजमानोऽत्र देहेषु व्रजेथा नैव मूढताम् ॥
अहंताममताद्युत्थैः कर्मभिर्बाध्यसेऽन्यथा ॥ ५ ॥

ततो विकारसंघाभिमानो नङ्क्ष्यति ततः कुतस्तरामहं जात इत्यादिविकारः। एवं विचार्य शोकं मा कार्षीः। यत इयं शुक् असती त्वादृशं न स्प्रष्टुमर्हा। योऽयं शोक इति शब्दः स गुणैः कल्पितः। ते गुणाः भूताश्रयाः। ननु गुणा विषयिषु दृश्यन्त इत्यत आह। इन्द्रियद्वारा विषयान्सेवमानेषु स्थिता इव दृष्टा अपि ते भौताः। आकाशगुणः शब्दः। आकाशाद्वायुर्द्विगुणः स्पर्शेन। वायोर्ज्योतिस्त्रिगुणं रूपेण। अग्नेरापश्चतुर्गुणा रसेन। अद्भ्यः पृथिवी पञ्चगुणा गन्धेनेत्युक्तेः। यत आत्मा गुणद्रव्यक्रियाजातिवर्जितः। गुणानामाश्रयो द्रव्यं। समवायिकारणं द्रव्यमिति वा तार्किकैर्लक्षितत्वात्। कर्मव्यतिरिक्तत्वे सति जातिमात्राश्रयो गुणः। नित्यमेकमनेकवृत्ति सामान्यमिति लक्षिता जातिः। संयोगवियोगयोरसमवायिकारणजातीयं कर्मेति लक्षिता क्रियेत्येतत्सर्वं नात्मनि ॥ ३ ॥ ननु वृद्ध्यादिमतो देहरूपस्य ममेदृक्त्वं कथमित्यत आह—शुक्रशोणितरूपेण परिणतानि पञ्चमहाभूतानि परस्परं संबन्धं प्राप्य देहरूपेण वृद्धिं यान्ति। यतोऽस्य संघाताभिमानिनः कर्मफलभोक्तुर्देहोऽन्नोदकदानेन वर्धतेऽत एवास्य साक्षिणस्तव न वृद्धिहानी। 'एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्' इति श्रुतेः। ईदृशो देहो आत्मा न कार्यत्वाद्घटवत् ॥ ४ ॥ अतोऽत्र देहे शीजमानो वर्धमान इति मूढतां न व्रजेथाः। अन्यथा देहेऽहंता मात्रादिषु ममता आदिशब्दाद्रागादयः एभ्य उत्थितैः कर्मभिः स्नेहैश्च बध्यसे। अहंकाराद्यभावेऽनुष्ठितैरपि कर्मभिर्न बन्धः। 'यस्य नाहंकृतः' इति स्मृतेः ॥ ५ ॥

पितेति क्वापि मातेति प्रियेति च तवेति च ॥
ममेति भौतिकेष्वेषु मा कृथा दुर्मतिं सुधीः ॥ ६ ॥

दुःखैः संतप्यते मूढो विदस्तान्येव कानि हि ॥
पराधीनतयोत्थं कं तत्तुच्छं विरसं क्षणात् ॥ ७ ॥

त्वक्छन्ना मांसघटिताऽस्थिस्तम्भविधृता सती ॥
दुर्गतिः किं न योषेयं देहोऽप्यभिमतस्तथा ॥ ८ ॥

वर्धमानं सुतं त्वेवं प्रत्यहं सा मदालसा ॥
उल्लापनच्छलेनैव बोधयामास निर्मलम् ॥ ९ ॥

यथा यथा स ववृधे प्रबोधोऽपि तथा तथा ॥
राज्ञा विक्रान्त इत्येवं तन्नामकरणं कृतम् ॥ १० ॥

ननन्दुः सकला भृत्या जहास च मदालसा ॥
लब्धप्रबोधो बालोऽभूद्दक्षोऽपि जडमूढवत् ॥ ११ ॥

स्वस्यान्येषां च देहानां भौतिकत्वादहंतादिर्न कार्या ॥ ६ ॥ ननु भौतिकसुखदुःखसंबन्धत एव लोका हृष्टाः संतप्ताश्च दृश्यन्त इति चेत्ते मूढा एव । यतो विदो ज्ञानिनः मया दुःखरूपाणि कर्माणि भुक्तानीति दुःखान्यपि सुखानि भवन्ति । पराधीनतयोत्पन्नं कं विषयसुखं क्षणाद्विरसमतस्तुच्छम् ॥ ७ ॥ स्वस्यान्यस्य च देहस्य दुर्गतित्वमाह । स्पष्टम् ॥ ८ ॥ निर्गता मला रागादयो यथा तथा ॥ ९ ॥ १० ॥ ११ ॥ कैमुतिकन्यायेन नात्र

किमत्र चित्रमाजन्म मात्रा पुत्रः प्रबोधितः ॥
विदुष्या मुमुचे बन्धात्सङ्गात्सन् तारयत्यपि ॥ १२ ॥
पुनः सा गर्भिणी भूत्वा दैवात्पुत्रमर्जीजनत् ॥
सुबाहुरिति तं नाम्ना चकार विधिना नृपः ॥ १३ ॥
तदापि सा जहासोच्चैः पूर्ववच्च मदालसा ॥
उल्लापेनैव तं निन्ये प्रबोधं सुमहामतिम् ॥ १४ ॥
भूयोऽपि गर्भिणी भूत्वा सासूत तनयं न यम् ॥
द्वैतवातोऽपि संस्पृष्टो मात्रुल्लापात्तसद्धियम् ॥ १५ ॥
शत्रुमर्दन इत्याख्यां ददौ तस्मै नृपो मुदा ॥
जहासापि तदा तन्वी सर्वेषामेव पश्यताम् ॥ १६ ॥
मुक्तसङ्गोऽनहंवादी मूढवच्छत्रुमर्दनः ॥
चचार त्रीनपि सुतान्दृष्ट्वा खिन्नोऽभवन्नृपः ॥ १७ ॥
न हृदाप्युपदेशं ते प्रवृत्त्यर्हं पितुः सुताः ॥
जगृहुर्मृगतृष्णाभं मन्यमानाः सुबोधिताः ॥ १८ ॥
तुर्यं सा सुषुवे पुत्रं सत्पञ्चोच्चग्रहक्षणे ॥
तदा सर्वमनांस्यासन्प्रसन्नानि दिशोऽपि च ॥ १९ ॥

चित्रमित्याह—जन्मारभ्य मात्रा बोधितः पुत्रो मुक्त इति न चित्रम् । यतः सङ्गमात्रेण सन् साधुस्तारयति ॥ १२ ॥ १३ ॥ १४ ॥ मातुरुल्लापेन लब्धसन्मतिं यं द्वैतवातोऽपि न स्पृष्टः ॥ १५ ॥ पश्यतामित्यनादरे षष्ठी ॥ १६ ॥ अनहंवादी निरभिमानः ॥ १७ ॥ मृगतृष्णाभं संसारमिति शेषः ॥ १८ ॥ सन्तोऽस्तादिदोषरहिताः सार्वभौमयोगसूचकाः पञ्च ग्रहा यस्मिंस्तस्मिन्क्षणे । तुर्यं चतुर्थम् ॥ १९ ॥ अस्य पुत्रस्य नाम किं विधेयं

राजाऽवदत्प्रिये पुत्रनामसु त्रिष्वपि त्वया ॥
कुतो हास्यं कृतं ब्रूहि किं नामास्याधुना वद ॥ २० ॥

सा प्राह वल्लभेयं तु कल्पना व्यावहारिकी ॥
तथापि त्वत्कृताख्यानां शृणुष्वेमां निरर्थताम् ॥ २१ ॥

देशाद्देशान्तरं क्रान्तिर्गतिः सैव विभौ कुतः ॥
तस्माद्विक्रान्तसंज्ञेयमात्मनोऽस्य निरर्थका ॥ २२ ॥

निराकारोऽयमात्माऽतः सुबाहुरिति चापरा ॥
संविन्नैवात्मनोऽन्वर्था क्वामूर्तस्य भुजो वद ॥ २३ ॥

शत्रुमर्दन इत्याख्या साप्यनर्थाय ते विभुः ॥
भूते भूते स्थितोऽप्यर्क इवाप्स्वात्मैक एव हि ॥ २४ ॥

क्व मित्रं क्व च वाऽस्यारिर्नायं हन्ति न हन्यते ॥
भूतैर्म्रियन्ते भूतानि भङ्गैर्भङ्गा इवार्णवे ॥ २५ ॥

कामादिरान्तरोऽप्यस्य नारिर्धीवृत्तिजो विभोः ॥
बुद्धेः परतरस्यास्य साक्षिणः केवलस्य च ॥ २६ ॥

वद ॥ २० ॥ पूर्वं त्वत्कृतनाम्नां निरर्थताम् ॥२१॥ क्रान्तिर्नाम गतिः सा विभौ व्यापके कुतः ॥२२॥ संविन्नाम ॥२३॥ भूते भूते प्रतिदेहं विभुरात्मैक एव ॥२४॥ न हन्तीति भेदवादिनिषेधः । न हन्यत इति चार्वाकनिषेधः । लोकप्रसिद्धमरणे मारणे च दृष्टान्तः भङ्गैर्भङ्गास्तरङ्गा इव ॥ २५ ॥ २६ ॥

देहे चेद्व्यवहारार्थमसन्नाम प्रकल्प्यते ॥
तर्ह्यस्यालर्क इत्याख्यां कुरु नैरर्थ्यमत्र किम् ॥ २७ ॥

एवं प्रियावचः श्रुत्वा चकितो ज्ञोऽपि राट् स्वयम् ॥
अलर्क इति नाम्ना तं चकारात्मभुवं मुदा ॥ २८ ॥

विक्रान्तमेकदाऽऽहूय रहस्याह नृपः सुतम् ॥
चर स्वार्थं किमर्थं त्वं जडवत्कुरु सत्क्रियाम् ॥ २९ ॥

स प्राह प्रतिभात्येष कर्मौघो विगुणोऽधुना ॥
किं तेनोत्पन्नबोधस्य तात मेऽद्य प्रयोजनम् ॥ ३० ॥

शास्त्रादिधर्मकर्मादि राज्यं स्वर्गोऽपि वा ध्रुवः ॥
सुखं नेदं परं दुःखं सुखं तन्निर्गुणं परम् ॥ ३१ ॥

आद्यन्तवन्तः स्पर्शोत्था भोगा ज्ञस्य सुखाय नो ॥
सुखमात्यन्तिकं तत्तु लभ्यं नैष्कर्म्यसिद्धितः ॥ ३२ ॥

॥ २७ ॥ आत्मभवं पुत्रम् ॥ २८ ॥ २९ ॥ तेन विगुणकर्मौघेन । अद्य जीवन्मुक्तदशायाम् ॥ ३० ॥ 'सर्वमेव दुःखं विवेकिनाम्' इति पातञ्जलाद्वैषयिकसुखमपि दुःखम् । यन्निर्गुणं तदेव परं सुखं स्वरूपम् ॥ ३१ ॥ स्पर्शोत्था इन्द्रियजन्या भोगा आदिमध्यान्ततो दुःखरूपाः । ज्ञस्य ज्ञानिनः यदात्यन्तिकं तत्सुखं नैष्कर्म्यसिद्धिलभ्यम् ॥ ३२ ॥ त्वया

मया ज्ञातमिदं मातुरनुभूतं च तत्पितः ॥
अतोऽक्रियश्चरे मुक्तो भ्रातरावपि मे तथा ॥ ३३ ॥
तच्छ्रुत्वा कुपितो राजा भार्यासामीप्यमेत्य ताम् ॥
प्रवृत्तिमार्गनिरत इदं वचनमब्रवीत् ॥ ३४ ॥
मूढे त्वं किं करोषीदं वंशनाशकरं वचः ॥
पुत्रेभ्यः शंससि कथं का गतिर्नाविवितः परम् ॥ ३५ ॥
एतेनैवोपदेशेन साधुनैव भविष्यति ॥
पुण्यः प्रवृत्तिमार्गोऽयं प्रमाणमिह केशवः ॥ ३६ ॥
पितरो देवलोकस्थाः केचित्तिर्यक्त्वमागताः ॥
प्रेतत्वं चान्यभावं च क्षुत्तृट्शान्ता भवन्ति ते ॥ ३७ ॥
सुपुण्या वाऽप्यपुण्या ये ते निवापोपजीविनः ॥
तद्वार्ता ब्रह्मणोक्तेयं मूढे ज्ञाता न किं त्वया ॥ ३८ ॥
नृदेवपितृभूताद्याः कृमिकीटादयोऽपि च ॥
गृहिभ्य एव जीवन्ति धर्म एष सनातनः ॥ ३९ ॥
तस्मात्प्रिये त्रयो नष्टाः पुत्रास्ते कर्ममार्गतः ॥
अद्याप्यस्मा अलर्काय कर्ममार्गमुपादिश ॥ ४० ॥

कुतो ज्ञातं । मातुः सकाशात् । क्रियातीतः सन् महीं चरे । न केवलमहं भ्रातरावपि तथा ॥ ३३ ॥ ३४ ॥ नौ आवयोः ॥ ३५ ॥ एतेन तत्त्वोपदेशेन । 'नापुत्रस्य लोकोऽस्ति' इति श्रुतेः ॥३६॥ तिर्यक्त्वं पश्वादियोनिम् ॥ ३७ ॥ निवापः पितृदानम् । ब्रह्मणा विधिना वेदेन वा ॥ ३८ ॥ यज्ञादिभिर्जीवन्ति ॥ ३९ ॥ ते त्वया ॥ ४० ॥ सम्यगकपटम् । आत्मैव

मदालसाऽऽह भोः स्वामिन्मया साधु कृतं खलु ॥
जय्य आत्मैव लोकोऽयं प्रजया किमिति श्रुतम् ॥४१॥

तथापीदं नरश्रेष्ठ सद्वृतं चेन्न रोचते ॥
अलर्कायोपदेक्ष्येऽद्य क्रियामार्गं यथोदितम् ॥ ४२ ॥

इत्युक्त्वाऽस्मै त्रिवर्ग्यं सा धर्मं वर्णाश्रमोचितम् ॥
षड्विधां राजनीतिं च प्रजारञ्जनकर्म च ॥ ४३ ॥

मात्रैवमुपदिष्टः स राजाऽलर्को बुधः सुधीः ॥
परिणीय वधूः काले पुत्रांश्चाजनयच्छुभान् ॥ ४४ ॥

पित्राऽभिषिक्तः साम्राज्ये पित्राज्ञापालकोऽभवत् ॥
भुक्तभोगोऽथ राजाऽगाद्भार्यया तपसे वनम् ॥ ४५ ॥

प्रयाणकाल आहेदं मातालर्कं मदालसा ॥
धर्मतः कुर्वतो राज्यं यदा ते दुःखमुद्भवेत् ॥ ४६ ॥

तदेयं पत्रिका प्रेक्ष्या तावद्गोप्या प्रयत्नतः ॥
हितं विलिखितं त्वत्र दृष्ट्वा चर तदैव भोः ॥ ४७ ॥

लोकः प्रबोधपुत्रेण जय्यः । ‘ किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः ’ इति श्रुतेः ॥ ४१ ॥ ४२ ॥ प्रजारञ्जनकर्म युक्तदण्डरूपम् । कामन्दकः–‘उद्वेजयति तीक्ष्णेन मृदुना परिभूयते । दण्डेन नृपतिस्तस्माद्युक्तदण्डः प्रशस्यते’ इति ॥४३॥४४॥४५॥ दुःखं दायादजम्॥४६॥४७॥

इत्युक्त्वा मुद्रिकां तस्मै ददौ योग्याशिषोऽपि च ॥
ऋतध्वजो वनं गत्वा सभार्यः सद्गतिं ययौ ॥ ४८ ॥

अलर्कस्त्वकरोद्राज्यं पितृवत्पालयन्प्रजाः ॥
शिक्षां दुष्टेषु शिष्टेषु रक्षां दीनेषु वै कृपाम् ॥ ४९ ॥

चकार सोऽर्थं धर्मेण धर्मं चार्थेन नीतिमान् ॥
तयोरेवाविरोधेन दिव्यार्थानभजत्सदा ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्यां उपासनाकाण्डे पञ्चमाष्टके तृतीयोऽध्यायः ॥३॥

॥४८॥ दुष्टेषु दण्डयेषु । दीनेष्वार्तदरिद्रेषु ॥ ४९ ॥ धर्मेण भूषष्ठांशग्रहणादिना । अर्थान् विषयान् ॥ ५० ॥ इति श्रीदत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्यां उपासनाकाण्डे टीकायां पञ्चमाष्टके तृतीयोऽध्यायः ॥ ३ ॥

इति मदालसया पुत्रत्रयज्ञानोपदेशश्चतुर्थाय प्रवृत्तिमार्गकथनं नाम पञ्च० तृती० ॥ ५।३ ॥

---

## अथालर्कबोधोपायनिरूपणं नाम पञ्चमाष्टके चतुर्थोऽध्यायः ॥ ५।४ ॥

हरिः ॐ ॥ प्रब्रह्मैकपरत्वाज्ञः परिसंख्यामपि भ्रमात् ॥
मेने राट् चोदनां मत्वा रतामिषसुरादिषु ॥ १ ॥

राज्यं कुर्वन्यजन्वीरां यज्ञैश्च बहुदक्षिणैः ॥
षट्षष्ट्यब्दसहस्रं स पशुभोग्यार्थभागभृत् ॥ २ ॥

सुबाहुस्तादृशं विद्वान्बुबोधयिषुरात्मनि ॥
काशिराजसहायार्थी स पुनर्योद्धुमाययौ ॥ ३ ॥

ज्येष्ठभ्रात्रे देहि राष्ट्रमिति प्राग्बोधितोऽपि सः ॥
काशिराजेन सोऽलर्को मत्तोऽमंस्त न तद्धितम् ॥ ४ ॥

सुबाहुः काशिराजश्च चतुरङ्गबलान्वितः ॥
भित्त्वा दुर्गान्सपालांश्च तद्राष्ट्रं स्ववशेऽनयत् ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥

षट्त्रिंशेऽलर्कबोधाय काशिराजसहायतः ॥
चक्रेऽलर्कं भ्रष्टराज्यं सुबाहुः सोऽभ्यगाद्गुरुम् ॥ १ ॥

सर्वस्यापि प्रकृष्टवेदस्य ब्रह्मैकपरत्वमविद्वान् ' ऋतौ भार्यामुपेयात् ' इत्यादिलक्षणां परिसंख्यां भ्रमाच्चोदनामपूर्वविधिं मत्वा मैथुनादिषु रेमे॥ १ ॥ षट्षष्टिवर्षसहस्रपर्यन्तं पशुप्रायैर्भोक्तुं योग्यानर्थान्विषयान्भजतीति तथा ॥ २ ॥ आत्मनि मनांसि ॥ ३ ॥ एकं राष्ट्रं देहीति युद्धात्पूर्वं साम्ना बोधितोऽपि श्रीमत्तः ॥ ४ ॥ ५ ॥ तत्र विरुद्धान्कांश्चित् बलिनो दानेन । अयं

कांश्चिद्दानेन साम्ना च कांश्चिद्भेदेन चापरान् ॥
दण्डेनापि वशं निन्ये सामन्तान्मन्त्रिणोऽपि च ॥ ६ ॥

भ्रात्रा रुद्धं पुरं क्षीणान्कोशान्परवशांश्च तान् ॥
मन्त्र्यादीन्वीक्ष्य सोऽलर्को भीतो दुद्राव पीडितः ॥७॥

एकाकी सोऽश्वमारुह्य रात्रौ गत्वा वनं स्थितः ॥
ऋष्याश्रमे स्मरन्मातुरुपदेशं तदा नृपः ॥ ८ ॥

प्रातः स्नात्वा स निष्कास्य मुद्रां कृतसुमङ्गलः ॥
वाचयामास विप्रेण मात्रा विलिखितं हितम् ॥ ९ ॥

त्याज्यः सर्वात्मना सङ्गः स चेत्त्यक्तुं न शक्यते ॥
स सद्भिः सह कर्तव्यः सन्तो दुःसङ्गभेषजम् ॥ १० ॥

कामः सर्वात्मना हेयो हातुं चेच्छक्यते न सः ॥
मुमुक्षां प्रति कर्तव्यः सैव कामार्तिभेषजम् ॥ ११ ॥

इति श्रुत्वा मातृहार्दं बुध्वा सह्याद्रिसंस्थितम् ॥
ज्ञात्वा सत्तममात्रेयं निर्विण्णः शरणं ययौ ॥ १२ ॥

दीनो भ्राता भागी कार्य इति समञ्जसान्साम्ना । येऽतिबलिनस्तान् स्वाम्यधिकारकरणलक्षणदानेन । विघ्नकारिणो निर्बलान् दण्डेनेत्येवं सामन्तान्मन्त्रिणोऽपि वशं निन्ये ॥ ६ ॥ दुद्राव पलायनमकरोत् ॥ ७ ॥ ८ ॥ ॥ ९॥ सर्वथा सर्वसङ्गस्त्याज्यः । सन्तस्त्रैणादिदुष्टसङ्गस्यौषधम् ॥ १० ॥ मुमुक्षां मोक्षेच्छाम् ॥ ११ ॥ हार्दं हृदयाभिप्रायम् ॥ १२ ॥ अपाकुरु

प्रणम्याह स भो ब्रह्मन्प्रसादं कुरु मे प्रभो ॥
दैवाद्दुःखं समुत्पन्नं कृपया तदपाकुरु ॥ १३ ॥
भगवांस्तद्वचः श्रुत्वा ज्ञात्वाऽलर्कं महामतिम् ॥
मदालसागर्भरतं प्रहस्येदमभाषत ॥ १४ ॥
दुःखं नृप किमर्थं ते कस्त्वं दुःखं च कस्य च ॥
विचार्याङ्गानि चात्मानं क्व दुःखं सत्यमिद्वद ॥ १५ ॥
इत्युक्तः स चिरं ध्यात्वा विमृश्य च पुनःपुनः ॥
विहस्याहात्मनात्मानं ज्ञात्वा सर्वाककारणम् ॥१६॥
खं वायुरग्निरम्बु क्ष्मा नाहं तज्जानि चेह तु ॥
संघेऽहमिति मन्तुस्तद्भाति दुःखाद्यसद्विभो ॥ १७ ॥
नित्यो मे महिमा नास्य क्षयो वृद्धिश्च यद्यपि ॥
भौतिके तौ सुखाद्यं वा किं पारक्येन तेन मे ॥ १८ ॥
नित्यः सदैकरूपोऽहं परिणामः कुतो मम ॥
सङ्गे देहस्य संत्यक्ते दुःखादि क्वोपलक्ष्यते ॥ १९ ॥

दूरीकुरु ॥ १३ ॥ १४ ॥ त्वं कः अस्मिन्संघाते कुत्र दुःखं वा तत्सत्यमेव वद ॥ १५ ॥ आत्मना निश्चयात्मिकया बुद्ध्यात्मानं निश्चित्य सर्वदुःखकारणं ज्ञात्वालर्कः प्राह ॥ १६ ॥ खादिपञ्चभूतानि तज्जानि प्राणेन्द्रियान्तःकरणानि नाहम्। देहादिसंघेऽभिमानकर्तुर्मिथ्याभूतं देहादि भासते ॥१७॥ सच्चिदानन्दस्य मे महिमा नित्यः 'एष नित्यो महिमा' इति श्रुतेः। तद्यदि देहादौ उपलभ्यते तेन परकीयदुःखेन मम किम् ॥१८॥ मम वार्धक्यादिपरिणामः कुतः। देहस्य सङ्गेऽभिमाने परित्यक्ते ॥१९॥ तर्हि दुःखस्य क

स्थूलेऽत्र भौतिके सूक्ष्मे तन्मात्रावस्थितेऽपि च ॥
उत्थितं त्रिविधं दुःखं पश्यतो मम तेन किम् ॥ २० ॥

मनो मतिरहंकारश्चित्तं च न भवाम्यतः ॥
अन्तःकरणजैर्दुःखैः संबन्धो न परस्य मे ॥ २१ ॥

राज्यं करोत्वग्रजोऽत्र किं मे संघाभिमानतः ॥
स चाहं देहतोऽन्योऽपि पार्थक्यं न सतो हि मे ॥२२॥

यस्य भूतस्य हस्तादिसंबन्धो नात्मनः पुनः ॥
केभाश्वकोशराष्ट्राद्यैरसङ्गस्य चिदात्मनः ॥ २३ ॥

तस्मान्नारिर्न मे मित्रं सुखं दुःखं पुरं बलम् ॥
पुरोत्पन्नोऽपि मोहोऽयं नष्टो भवदनुग्रहात् ॥ २४ ॥

यथैकमपि खं भाति बहुधोपाधिभेदतः ॥
तथाहं काशिपो भ्राता न भेदः पारमार्थिकः ॥ २५ ॥

आधार इत्यत आह—अत्र भौतिके स्थूलदेहे तन्मात्रावस्थिते सूक्ष्मदेहे चोत्थितं आधिभौतिकादि त्रिविधं दुःखं पश्यतस्तस्य साक्षिणो मम तेन किम् ॥ २० ॥ 'अन्नमयं हि सोम्य मनः' इति श्रुतेः मन आदेर्भौतिकत्वम् । विमतानि मन आदीनि भूतकार्याणि भवितुमर्हन्ति भूतान्वयानुविधायित्वात् यद्यदन्वयव्यतिरेकानुविधायि तत्तत्कार्यं मृदन्वयव्यतिरेकानुविधायिघटवत् । तच्च 'षोडशकलः सोम्य' इति श्रुतेर्मन आदिरूपोऽहं न ॥२१॥ देहतोन्योऽपि चिदन्वयदृष्ट्याहम् ॥ २२ ॥ भूतस्य शरीरिणः ॥ २३ ॥ भवद्दर्शनात्पुरा पूर्वम् ॥ २४ ॥ घटाद्युपाधिभेदतः । खमाकाशम् ॥ २५ ॥

असम्यग्दर्शनाद्दुःखं मतं मे स्वप्नसंनिभम् ॥
निर्ममो निरहंकारस्तन्नेक्षेऽद्य सुखाब्धिगः ॥ २६ ॥
यथौतुभक्षिते दुःखं शुकादौ ममतावृते ॥
न तथा ममताहीने वृकादौ तद्वदत्र तु ॥ २७ ॥
न दुःखी न सुखी सोऽहं निर्ममः प्रकृतेः परः ॥
यो भूताभिभवो भूतैः सुखदुःखात्मकः स च ॥ २८ ॥
श्रीदत्तः प्राह भूपेन्द्र सम्यग्व्यवसितं त्वया ॥
दुःखमूलं ममेत्यस्य निवृत्तिर्न ममेति च ॥ २९ ॥
ब्रह्मनिष्ठोत्थ मे प्रश्नात्स्वानुभूत्या निराकृता ॥
ममता शाल्मलीतूल इव वातेन तेऽधुना ॥ ३० ॥
अज्ञानबीजोऽहंकाराङ्कुरोऽयं ममतालतः ॥
गृहक्षेत्रविशाखो द्रुर्दारपुत्राप्तपल्लवः ॥ ३१ ॥

निरहंकार इत्यनेन यावद्यावदहंकारविलयाच्चित्तस्य सूक्ष्मता तावत्तावत्स्वरूपसुखाभिव्यक्तिः। अत्रायं प्रयोगः—अहंकारसंकोचविशिष्टक्षणेषु द्वितीयादिक्षणः स पूर्वस्मात्क्षणादधिकनिजसुखाविर्भाववान् अहंकारसंकोचविशेषयुक्तकालत्वात् अहंकारसंकोचयुक्ताद्यक्षणवदिति । 'यावद्यावदहंकारो विस्मृतोऽभ्यासयोगतः। तावत्तावत्सूक्ष्मदृष्टेर्निजानन्दोऽनुमीयते' इति ॥२६॥ ममतावृते पालिते शुकादौ । वृकादौ मूषकादौ । अनेन न्यायेन । 'ममेति बध्यते जन्तुर्न ममेति विमुच्यते' ॥ २७ ॥ अभिभवः पराभवः । शत्रूणां चेत्सुखात्मकः । स्वेष्टादेश्चेद्दुःखात्मकः ॥ २८ ॥ व्यवसितं निश्चितम् ॥ २९ ॥ हे ब्रह्मनिष्ठोत्थ हे मदालसाज ॥ ३० ॥ अज्ञानं बीजं यस्य । अहंकारोऽङ्कुरो यस्य । देहादिममता लताः शाखा यस्य । छायाः पल्लवा यस्य ॥ ३१ ॥ पुण्यपापे पुष्पे यस्य । सुखदुःखे फले यस्य ।

पुण्यापुण्यप्रसूनश्च सुखदुःखफलोऽनवः ॥
महान्मोक्षपथव्यापी मूढसत्सङ्गिसेवितः ॥ ३२ ॥

विधित्साभ्रमरव्याप्ताः श्रान्ता भ्रान्त्येह संश्रिताः
सौख्यं क्वात्यन्तिकं तेषां वृक्षेऽस्मिन्मायिकोपमे ॥३३॥

छिन्नोऽसङ्गासिना यैर्यैर्लब्धमार्गास्ततश्च ते ॥
गत्वा परं पदं शान्तं विश्राम्यन्ति न चेतरे ॥ ३४ ॥

राज्यं भूतेन्द्रियग्रामो जगदेतच्चराचरम् ॥
गुणात्मकोऽयं संघातः क्षेत्रं तज्ज्ञस्य तेन किम् ॥३५॥

मशकोदुम्बरेषीकामुञ्जाब्जापां यथा तथा ॥
क्षेत्रात्मनः पृथग्भावो विज्ञातः सोऽधुना त्वया ॥ ३६ ॥

अलर्कः प्राह भगवत्प्रसादाज्ज्ञातवानिदम् ॥
अहंकारात्मपार्थक्यं दुर्ज्ञेयं कल्पकोटिभिः ॥ ३७ ॥

देवदेव जगन्नाथ दयाब्धे भगवन्प्रभो ॥
वासनाक्रान्तचित्तत्वात्कथं तिष्ठेदिदं मयि ॥ ३८ ॥

अनवः पुरातनः । स सुखेच्छया सेवितः ॥ ३२ ॥ विधित्सा कर्तुमिच्छा, एव भ्रमरास्तैर्व्याप्ताः । भवश्रान्ताः सुखभ्रान्त्या तं श्रिताः ॥ ३३ ॥ असङ्गासिना असङ्गशस्त्रेण । पदं वासुदेवाख्यं ब्रह्म ॥ ३४ ॥ भूतेन्द्रियग्रामः शरीरम् ॥३५॥ औदुम्बरफलान्मशकः, मौञ्जादीषिका, अद्भ्यो मत्स्यादयो यथा भिन्नास्तथा क्षेत्रादात्मनः पृथग्भावः ॥ ३६ ॥ ३७ ॥ ३८ ॥ येन

भूयो न भूयां येनेश निर्गुणत्वमियां कथम् ॥
तं योगं ब्रूहि चैकत्वं व्रजेयं ब्रह्मणा यतः ॥ ३९ ॥
इदमेव परं कार्यं नरेण हितमिच्छता ॥
क्रान्तापावृतमुक्तिद्वार्नृजन्मच्युतिरन्यथा ॥ ४० ॥
संपृष्ट इत्यलर्केण भगवानत्रिनन्दनः ॥
तस्मै सत्कृत्य योगीन्द्रो गुह्यं योगमुपादिशत् ॥ ४१ ॥
शृणुष्वावहितोऽलर्क मुक्तये कारणं त्रयम् ॥
तत्त्वज्ञानं मनोभङ्गो वासनाक्षय इत्यदः ॥ ४२ ॥
हृच्छुद्धिं प्राप्य सत्कृत्यैः सर्वं संन्यस्य सद्गुरोः ॥
तत्त्वज्ञानमवाप्याथ जह्याद्योगेन तद्द्वयम् ॥ ४३ ॥
अन्वयव्यतिरेकाभ्यां देहेऽधीशं चिदन्वयात् ॥
ज्ञात्वाऽभ्यसेदमुं योगं यतो मुक्तिर्ध्रुवाऽचिरात् ॥ ४४ ॥
सा मुक्तिर्ब्रह्मणा योगो वियोगः प्राकृतैर्गुणैः ॥
सङ्गत्यागात्स तु प्राप्यः स वैराग्येण नान्यथा ॥ ४५ ॥
ज्ञानादेव च वैराग्यं तज्ज्ञानं च विवेकतः ॥
विवेकः सदसद्वस्तुविचारात्सोऽत्र कथ्यते ॥ ४६ ॥

योगेन भूयो जन्मभाङ् न भूयाम् ॥ ३९ ॥ क्रान्तं यन्मुक्तिकपाटं मुक्तिद्वारभूतं नृजन्म ततो भ्रंशः ॥ ४० ॥ ४१ ॥ ४२ ॥ नित्यनैमित्तिकैः सत्कृत्यैर्गुरोर्ज्ञानं लब्ध्वा नतु स्वबुध्यनुभवमात्रेण ॥ ४३ ॥ अधीशमन्तर्यामिणं साक्ष्यन्वयात् । अन्वय्येवानुमानं न व्यतिरेकि ॥ ४४ ॥ प्राकृतैर्दुःखादिरूपैर्वियोगः ब्रह्मणा योगश्च मुक्तिः । संयोगश्चित्तविक्षेपकरदारादिसंगात्प्राप्यः ॥ ४५ ॥ सः सदसद्वस्तुनिर्णयः ॥ ४६ ॥ ते अनात्मभूता

देहेन्द्रियमनःप्राणाहंकारा भौतिका अमी ॥
साद्यन्ताः सविकाराश्च न सन्तस्तेऽन्विता अपि ॥४७॥
अन्योन्याध्यासतोऽग्न्यक्तलोहवच्चित्त्वमस्य च ॥
जडत्वं चात्मनो मोहात्साक्षिणः केवलस्य च ॥ ४८ ॥
देहाद्यध्यासतोऽहंता ततः कर्मास्य बन्धकम् ॥
कर्मणैवावशं शश्वद्भ्रमणं यन्त्रवन्नृणाम् ॥ ४९ ॥
तस्माज्ज्ञात्वा विवेकेन स्वात्मानं सुविरक्त इत् ॥
स्वस्थो भवत्यसावेव विमुक्तो मुच्यतेऽचिरात् ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे पञ्चमाष्टके चतुर्थोऽध्यायः ॥ ४ ॥

देहाद्या अन्विताः संहता अपि न सन्तः पुनः कथं वाच्यमेकैकस्य सत्त्वम् ॥ ४७ ॥ अग्नियुक्तलोहवत्संघातस्यात्माध्यासादात्मनो जडत्वं च भ्रमादेवेन्यर्थः ॥ ४८ ॥ ४९ ॥ विमुक्तो जीवन्मुक्तोऽचिराद्विमुच्यते विदेहकैवल्यं यास्यतीत्यर्थः ॥ ५० ॥ इति श्रीदत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां उपासनाकाण्डे टीकायां पञ्चमाष्टके चतुर्थोऽध्यायः ॥ ४ ॥

॥ इति श्रीदत्त० पञ्चमाष्टके चतुर्थोऽध्यायः ॥ ५।४ ॥

---

योगिराजेनालर्कायाष्टाङ्गयोगकथनं नाम
पञ्चमाष्टके पञ्चमोऽध्यायः ॥ ५।५ ॥

हरिः ॐ ॥ यदद्य सूर्यधीशेदं कथितं तच्चलात्मना ॥
कथं लभ्यमिति श्रीशो राज्ञा पृष्टोऽब्रवीदिदम् ॥ १ ॥

अभ्यासेनापि दुर्जेयो जय्य आत्मा स नान्यथा ॥
अभ्यासोऽष्टांगयोगाख्यः सुलभोपाय एष तु ॥ २ ॥

यमाद्यैरात्मयमनमासनैः स्थैर्यमात्मना ॥
दोषशोषोऽसुयामैश्च प्रत्याहारेण गोजयः ॥ ३ ॥

पापनाशो धारणयाऽऽत्मैक्यं ध्यानसमाधितः ॥
दाह्या इत्यात्मगा दोषा धातुदोषा यथानले ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥

सप्तत्रिंशे ह्यलर्कायाष्टाङ्गयोगं ससाधनम् ॥
सिद्धिचिह्नानि विघ्नांश्च तन्नाशं चाह योगिराट् ॥ १ ॥

हे सूरीणामधीश । चलात्मना चञ्चलेन मनसा ॥ १ ॥ दुर्जेयोऽप्यात्मा मनः योगेन जेतुं शक्यः ॥ २ ॥ आत्मनो देहस्य कफादिदोषशोषणम् । गोजय इन्द्रियजयः ॥ ३ ॥ प्रत्यक्परात्मैक्यम् । इत्येवंप्रकारेण चित्तगा दोषा दाह्याः ॥ ४ ॥ स्वेदानुमेयो लघुप्राणायामः । कम्पानुमेयो मध्यमः ।

प्राणापाननिरोधोऽयं प्राणायामः स तु त्रिधा ॥
लघुमध्योत्तमभिधा स्वेदकम्पस्थितिप्रदः ॥ ५ ॥
लघुर्द्वादशमात्रः स द्वित्रिघ्नो मध्य उत्तमः ॥
रेचकोऽत्र तदर्धेन तदर्धेन च पूरकः ॥ ६ ॥
शनैर्वश्यो यथा व्याघ्रो मृगान्हन्ति न मानवान् ॥
साधितः पवनस्तद्वद्दोषान्हन्ति न नुस्तनुम् ॥ ७ ॥
शुभाशुभक्रियाणां यो जायते फलसंक्षयः ॥
तदा चित्तकषायत्वाद्ध्वस्तिरेषा निरुच्यते ॥ ८ ॥
लोभमोहात्मकान्कामानैहिकामुष्मिकान्यदा ॥
निरुध्यते प्राप्तिरेषा योगिनोऽभीष्टकामदा ॥ ९ ॥
रूढयोगो यदा वेत्ति गतैष्यार्थांस्त्रिलोकजान् ॥
वित्संपत्त्यापि गुप्तान्सा संवित्प्राणजयस्थितिः ॥ १० ॥
प्रसीदन्तीन्द्रियाण्यर्था धातवो हृच्च स स्मृतः ॥
प्रसाद इत्यवस्थाः स्युश्चतस्रो योगसिद्धिजाः ॥ ११ ॥
सुखासनसमासीनो यतास्यः समविग्रहः ॥
दन्तैरसंस्पृशेद्दन्तान्यतात्मा नतमस्तकः ॥ १२ ॥

ब्रह्मरन्ध्रस्थितिप्रद उत्तमः । द्विघ्नश्चतुर्विंशतिमात्रः । त्रिघ्नः षट्त्रिंशन्मात्रः । तदर्धेन कुम्भकार्धेन ॥ ५ ॥ ६ ॥ नुः पुरुषस्य कफादिदोषान् ॥ ७ ॥ शुभाशुभकर्मफलं कषायस्तद्ध्वस्तिर्नाशः ॥ ८ ॥ ९ ॥ अर्थान्विषयान-प्रकटितानपि । वित्संपत्त्या ज्ञानलाभात् ॥ १० ॥ शरीरधारणाद्धातव इन्द्रियाणि ॥ ११ ॥ यतास्यः पिहितमुखः । यतात्मा जितमनाः ॥ १२ ॥

नासाग्रदृष्टी रजसा तमोवृत्तीर्निरुध्य च ॥
सत्त्वेन राजसीः सत्त्वस्थितो युञ्जीत योगवित् ॥ १३ ॥

जिते प्राणे हृदार्थेभ्यो गुणान्प्रत्याहरेद्यथा ॥
कूर्मोऽङ्गानि सुखेनैव पश्यन्नात्मानमात्मनि ॥ १४ ॥

नाभ्यादिदेशे चित्तस्य संबन्धो धारणा मता ॥
ततो दोषाः प्रणश्यन्ति स्वस्थता चोपजायते ॥ १५ ॥

ध्यानेनैकाग्र्यमायाति साक्षात्कारः समाधिना ॥
योगीक्षते परं ब्रह्म प्राकृतांश्च गुणान्पृथक् ॥ १६ ॥

सुसूक्ष्मान्परमाणूंश्च परात्मानं च निर्मलम् ॥
न तस्य पुण्यपापादिसंबन्धो मुक्त एव सः ॥ १७ ॥

एवं हितमिताहारः प्राणानायम्य योगवित् ॥
जित्वा शनैः शनैर्भूमिमारुहेदुत्तरोत्तराम् ॥ १८ ॥

ब्रह्मरन्ध्रे प्राणरोधः प्राणायाम इति स्मृतः ॥
कालः स पञ्चविपलद्विपलात्माऽस्य कीर्तितः ॥ १९ ॥

युञ्जीत मनः समाहितं कुर्यात् ॥ १३ ॥ मनसा विषयेभ्य इन्द्रियाणि प्रत्याहरेत् ॥ १४ ॥ १५ ॥ समाधिनाऽपरोक्षसाक्षात्कारः । प्रकृतिजान्गुणान्स्वस्मात्पृथगीक्षते ॥ १६ ॥ १७ ॥ हितः पथ्यः । मितश्चतुर्थांशोनः ॥ १८ ॥ अस्य प्राणायामस्य ॥ १९ ॥ अक्षा इन्द्रियाणि । अर्थग्रहो

येन प्रत्याह्रियन्तेऽक्षाः प्रत्याहारः स उच्यते ॥
तत्त्वसंख्यापलात्माऽस्य कालोऽत्रार्थग्रहो नहि ॥ २० ॥

धारणेत्युच्यतेऽभीष्टे धार्यते यन्मनोऽनया ॥
कालोऽत्र पञ्चनाड्योऽसौ दोषव्याधिहरा मता ॥ २१ ॥

नाभिहृद्वत्सकण्ठास्यनासादृक्कूर्चमूर्धसु ॥
भूपैवं धारणासिद्धिः प्रदद्यादक्षरात्मताम् ॥ २२ ॥

पीडितः क्षुधितः शान्तो योगी व्याकुलचेतनः ॥
युञ्जीत योगं सिध्यर्थं नैव दुर्जनसंनिधौ ॥ २३ ॥

नातिशीतोष्णपवनवृष्टिकाले भयावहे ॥
नदीश्मशानशुष्कद्रुभीतिहेतुस्थलेषु च ॥ २४ ॥

युनक्त्येतेषु मूढश्चेत्ततो विघ्ना भवन्त्यमी ॥
स्मृतिलोपश्च बाधिर्यं मूकत्वं जडतान्धता ॥ २५ ॥

उत्थिता यद्यमी दोषाः कार्याऽत्रेयं प्रतिक्रिया ॥
स्निग्धां यवागूमत्युष्णां पीत्वा तत्रैव धारयेत् ॥ २६ ॥

बाह्यविषयभानं न ॥ २० ॥ अभीष्टे प्रतिमादौ । असौ धारणा ॥ २१ ॥ वत्सं वक्षस्थलम् । कूर्चं भ्रूमध्यम् । अक्षरात्मतामृतंभराख्यां प्रज्ञाम् ॥ २२ ॥ रोगादिपीडितो न युञ्जीतेति सर्वत्र संबध्यते ॥ २३ ॥ २४ ॥ एतेषु पूर्वोक्तेषु युनक्ति चेत्स्मृतिलोपादिविघ्नाः ॥ २५ ॥ प्रतिक्रिया चिकित्सा । 'यवागूः षड्गुणजले रचिता विरलोदना' इत्युक्तलक्षणा पीत्वा यत्र दोषस्तत्र मनोवृत्तिं धारयेत् ॥ २६ ॥ सर्वत्र यवागूः पेया देहकम्पे चेतसि

वातादिर्यत्र तच्छान्त्यै कम्पे शैलं च चेतसि ॥
वचोविघाते वचसि बाधिर्ये श्रवणे तथा ॥ २७ ॥
ध्यात्वा स्वेष्टफलं धार्या धारणा यत्र तत्र च ॥
दाहे शीतां शैत्य उष्णां स्मृतिलोपे तु मूर्धनि ॥ २८ ॥
कीलं धृत्वेध्ममिध्मेन ताडनादीशचिन्तनात् ॥
रोदसी धारणातोऽपि सर्वविघ्नात्ययः क्षणात् ॥ २९ ॥
वाताग्निधारणा भूताद्यावेशे चेति रक्षणम् ॥
मोक्षद्वारशरीरस्य गोपनीयं प्रयत्नतः ॥ ३० ॥
प्रसादोऽस्याल्पविण्मूत्रे सुस्वरो वह्निदीपनम् ॥
सद्गन्धोऽलौल्यमारोग्यं सिद्धिचिह्नं त्विदं पुरा ॥ ३१ ॥
सादोऽप्यङ्गेऽन्तरानन्दो द्वितीयं सिद्धिलक्षणम् ॥
शीतोष्णाद्यैर्यदात्युग्रैर्बाध्यते न बिभेति च ॥ ३२ ॥
कुत्रापि भयहेतुभ्यः सिद्धिलक्षणमुत्तमम् ॥
अत्रोपसर्गा जायन्ते जय्यास्ते योगिना हठात् ॥ ३३ ॥
काम्याः क्रिया भोगकामा दिव्यं द्रव्यं तथैहिकम् ॥
श्रियं क्रियादानफलं विद्यां मायां जयं यशः ॥ ३४ ॥

पर्वतं धारयेत् ॥ २७ ॥ स्मृतिलोपे नाड्यन्तरं प्राणे याते न्यस्तस्य मूर्धनि ॥ २८ ॥ इध्मेन काष्ठेन रोदसी द्यावापृथिव्यौ ॥ २९ ॥ शरीरे भूताद्यावेशो वाताग्निधारणा ॥ ३० ॥ अस्य योगिनोऽन्तरङ्गे प्रसन्नता शोभनस्वरो जाठराग्निदीपनं शोभनो गन्ध इन्द्रियचापल्याभाव आरोग्यं चेति प्रथमयोगिसिद्धिलक्षणम् ॥ ३१ ॥ सादः कार्श्यम् ॥ ३२ ॥ ३३ ॥ उपसर्गानाह—क्रियादानयोः सद्यःफलम् ॥ ३४ ॥ स्वैरां स्वच्छन्दाम् ।

राज्यं देवत्वमीशत्वं रसायनरसक्रियाः ॥
खाम्ब्वग्निक्ष्मागतिं स्वैरां तथानशनमर्हताम् ॥ ३५ ॥
देवतामन्त्रसिद्धिं च नूत्नकर्मप्रवर्तनम् ॥
इच्छेद्योगी त एते स्युरुपसर्गा महाभयाः ॥ ३६ ॥
नश्यन्त्यमीशभक्त्यैव पुनश्चामी भवन्त्यथ ॥
वेदशास्त्रार्थकाव्यार्थविद्याशिल्पादिनैपुणम् ॥ ३७ ॥
प्रतिभाति भा यदास्यायं प्रातिभो योगिनो न सन् ॥
शब्दार्थान्वेत्त्यशेषेण शब्दं गृह्णाति दूरतः ॥ ३८ ॥
श्रावणोऽयं तथा दैवो देवयोनिप्रदर्शकः ॥
निरालम्बेन भ्रमणं भ्रमो विभ्रमहेतुकः ॥ ३९ ॥
तोयावर्त इवाज्ञानावर्ते चित्तविनाशकः ॥
आवर्तोऽयममी योगविघ्नाय कटुकोदयाः ॥ ४० ॥
योगिनं व्याप्तमेतैस्तु देवा अभिभवन्त्यतः ॥
युञ्ज्यादीशाश्रयाद्योगं विघ्ना न प्रभवन्त्यतः ॥ ४१ ॥
पृथक्क्ष्माम्ब्वग्निवाताभ्रधृत्यात्मानं स मन्यते ॥
तत्तद्रूपं ततो गन्धादींस्त्यक्त्वा सौक्ष्म्यमेति सः ॥४२॥

आहारानिच्छां । लोकेऽर्हतां पूज्यतां ॥ ३५ ॥ नूत्नमप्रसिद्धम् ॥ ३६ ॥ नैपुणं प्रवीणता स्वत एव ॥ ३७ ॥ नानादेशीयभाषार्थान् ॥ ३८ ॥ निरालम्बं निराधारम् ॥ ३९ ॥ कटुकोदया विघ्नकराः ॥ ४० ॥ अभिभवन्ति पराभवन्ति ॥ ४१ ॥ पृथक्पञ्चधारणादिभिः पृथ्व्यादिरूपेणात्मानं मन्यते तदा गन्धादींस्त्यक्त्वा सूक्ष्मतामेति ॥ ४२ ॥ मनोधीधारणाभ्यां

मनोधीधारणातोऽपि त्यक्त्वा सौक्ष्म्याणि योगिराट् ॥
असंसक्तो वशी भूत्वा प्राप्नुयात्तत्परं पदम् ॥ ४३ ॥

सप्तैवं धारणाः सूक्ष्मा वैराग्याय ततोऽमृतम् ॥
यो गन्धादिषु संसक्तः पुनरावृत्तिमेति सः ॥ ४४ ॥

एताभिर्धारणाभिश्चेत्क्रमादत्येति योगिराट् ॥
शब्दादीन्नैव चाप्नोति सङ्गं कुत्रापि निर्वृतः ॥ ४५ ॥

मुक्तसङ्गोऽनहंवादी धृत्या सौक्ष्म्यं गतो वशी ॥
ध्यानेनैति परं ब्रह्म नात्र कार्या विचारणा ॥ ४६ ॥

जितासनो जितप्राणो यद्यप्येष जितेन्द्रियः ॥
जितात्माऽपि महासिद्धीर्दृष्ट्वा योगी विमुह्यति ॥४७॥

सावधानेन राजेन्द्र योगिना सिद्धिमिच्छता ॥
तस्मात्सर्वप्रयत्नेन त्याज्या दूरेण सिद्धयः ॥ ४८ ॥

सिद्धीनां यत्फलं तत्तु मायिकं क्षणभङ्गुरम् ॥
ज्ञानस्य यत्फलं तत्तु सर्वानर्थहरं ध्रुवम् ॥ ४९ ॥

अलर्कः प्राह ताः सिद्धीः श्रोतुमिच्छाम्यशेषतः ॥
ज्ञानोत्तरं हि संन्यासः क्रियते विघ्नरूपिणः ॥ ५० ॥

सौक्ष्म्याणि त्यक्त्वा ॥ ४३ ॥ ४४ ॥ शब्दादीनतिक्रामति ॥४५॥ धृत्या धारणया ॥ ४६ ॥ जितात्मा जितमनस्कोऽपि ॥ ४७ ॥ ४८ ॥ ४९ ॥ ॥ ५० ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां

**इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे पञ्चमाष्टके पञ्चमोऽध्यायः ॥ ५ ॥**

संहितायां वासुदेव्यामुपासनाकाण्डे पञ्चमाष्टके टीकायां पञ्चमोऽध्यायः ॥ ५ ॥

**इति श्रीदत्त० योगिराजेनालर्कायाष्टाङ्गयोगकथनं नाम पञ्च० पञ्चमोऽध्यायः ॥ ५।५ ॥**

---

**अलर्काय दत्तात्रेयेण सिद्धयोगचर्योंकारोपासनकथनं नाम पञ्चमाष्टके षष्ठोऽध्यायः ॥ ५।६ ॥**

**हरिः ॐ ॥ प्रत्युत्तरमिदं प्राह संपृष्टो भूभृता प्रभुः ॥**
**शृणु राजन् सिद्धयोऽष्टौ दश चैवोपसिद्धयः ॥ १ ॥**
**अणिमा महिमा भूप गरिमा लघिमा तथा ॥**
**प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ॥ २ ॥**
**सूक्ष्मात्सूक्ष्मतरोऽणीयान्पूज्यत्वान्महिमा भृशम् ॥**
**गरिमातिगुरुत्वाच्च लघुत्वाल्लघिमा गुणः ॥ ३ ॥**
**प्राप्तिः कामितयोगित्वादीशित्वं चेश्वरो यतः ॥**
**प्राकाम्यमस्य व्यापित्वाद्वशित्त्वं चानुकूल्यतः ॥ ४ ॥**

॥ श्रीगणेशाय नमः ॥

अष्टत्रिंशे सिद्धयोगचर्या ओंकृत्युपासनम् ॥
तन्मात्रर्ष्यादिकं चाह श्रीदत्तोऽलर्कभूभुजे ॥ १ ॥

योगभुवो बिभर्तीति योगभृत्तेन ॥ १ ॥ २ ॥ योऽतिसूक्ष्माणुरूपे मयि धारणां कुर्यात्स सूक्ष्मरूपो भवति सोऽणीयानणिमासिद्धिः । एवं सर्वत्र पूज्यत्वान्महिमा 'मह पूजायां'। यद्वा पृथिव्यादिमहारूपे मयि धारणया महिमासिद्धिः । पर्वतादिगुरुरूपे गरिमा । तूलादिलघुरूपे लघिमा । अमी देहजाः ॥ ३ ॥ दूरस्थकामितयोगात्प्राप्तिः । भूतभौतिकेशत्वम् । भूताद्यानुकूल्याद्वशित्वम् । कामावसायित्वं पूर्णता । हे नृप, अमी सिद्धिरूपा ईश्वरगुणाः । परकायप्रवेशाकाशगमनाद्या दशेतरा उपसिद्धयः ॥ ४ ॥

संप्राप्तेश्वरभावस्य योगिनः प्रभवन्त्यमी ॥
यत्र कामावसायित्वं गुणास्तेऽमी नृपेश्वराः ॥ ५ ॥
परकायप्रवेशाद्याः सिद्धयोऽपि तथेतराः ॥
कर्तव्यात्र न संसक्तिर्ध्येयं तन्निर्गुणं परम् ॥ ६ ॥
सगुणं निर्गुणं ध्यानं तत्राद्यं विष्णुचिन्तनम् ॥
द्वितीयं निर्गुणं ब्रह्म वाक्यलक्ष्यं सनातनम् ॥ ७ ॥
ध्यातृध्याने क्रमात्त्यक्त्वा ध्येयैकविषयं यदा ॥
निवातदीपवत्स्वान्तं समाधिः सोऽभिधीयते ॥ ८ ॥
अनेनास्य मनोभङ्गो वासनासंक्षयोऽपि च ॥
ततो न जायते योगी वर्धते न न नश्यति ॥ ९ ॥
परिणामोऽस्य न क्लेदश्छेदो दाहश्च शोषणम् ॥
सर्गेऽपि नोद्भवो नान्तः प्रलयेऽप्येकरूपिणः ॥ १० ॥
भूतभौतिकसंबन्धो नास्य शब्दादयोऽपि च ॥
न भोक्तायं न कस्यापि भोज्यो ह्येकत्वमास्थितः ॥११॥
ये निर्दग्धा मला योगैर्नैक्यं क्वाप्यस्य तैः पुनः ॥
नासौ विश्लेषमाप्नोति ब्रह्मणास्यैक्यमिष्यते ॥ १२ ॥
यथाभ्रेऽभ्रं जलं सिन्धावैक्यं गत्वा न भिद्यते ॥
ब्रह्मणैक्यं गतः क्वापि पृथग्भावं न यात्यसौ ॥ १३ ॥

॥ ५ ॥ ६ ॥ ७ ॥ स्वान्तं मनः ॥ ८ ॥ ९ ॥ परिणामो वार्धक्यादिः ॥ १० ॥ ११ ॥ मला रागाद्याः । विश्लेषं वियोगम् ॥ १२ ॥ १३ ॥

तस्माज्ज्ञात्वा योगचर्यां योगं युञ्ज्यात्प्रयत्नतः ॥
ब्रह्मणा न वियोगोऽस्य कदापि हि भविष्यति ॥ १४ ॥
योगचर्यां शृणुष्वेमां योगसिद्धिप्रदायिनीम् ॥
ब्रह्मवर्त्मानुसार्येषा यया योगी न सीदति ॥ १५ ॥
मानावमानौ संत्याज्यौ प्रीत्युद्वेगकरौ यतः ॥
योगिनो विपरीतौ चेद्योगसिद्धिकरौ च तौ ॥ १६ ॥
तौ सुधाविषदृष्ट्या चेद्गृहीतौ बन्धदौ तराम् ॥
तौ विषामृतदृष्ट्या चेद्गृहीतौ मोक्षदौ तराम् ॥ १७ ॥
दृक्पूतं विन्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ॥
शास्त्रपूतं वदेद्वाक्यं चित्तपूतं च चिन्तयेत् ॥ १८ ॥
आतिथ्यश्राद्धयज्ञादौ देवयात्रोत्सवादिषु ॥
महाजन्ये च गमनं वर्ज्यं सिध्द्यार्थिनामुना ॥ १९ ॥
व्यस्तेऽवधूमे व्यङ्गारे योगविद्भुक्तवज्जने ॥
अटेतालोलुपो भैक्ष्यं न च तेष्वेव नित्यशः ॥ २० ॥
यथैनमवमन्यन्ते लोकाः परिभवन्ति च ॥
तथाभूतश्चरेद्योगी सतां धर्ममदूषयन् ॥ २१ ॥

युञ्ज्यादभ्यसेत् ॥ १४ ॥ १५ ॥ मानः प्रीतिकरः । अपमान उद्वेगकरः ॥ १६ ॥ सुधादृष्ट्या मानो विषदृष्ट्यापमानश्च बन्धदः ॥ १७ ॥ पूतं पवित्रम् ॥ १८ ॥ महाजन्ये जनसमूहे ॥ १९ ॥ व्यस्ते जनैस्त्यक्तव्यापारे । धूमाङ्गाररहिते गृहे । अलोलुपो जितेन्द्रियः । ' संभवे बहुगेहानां न च तेष्वेव नित्यशः । अभावे बहुगेहानां तेषु भिक्षेदलोलुपः' इत्यत्रिविष्णूक्तेः ॥ २० ॥ अवमन्यन्ते तिरस्कुर्वन्ति ॥ २१ ॥ यायावरं धान्य-

ये यायावरवृत्तिस्थास्ततो भिक्षा प्रशस्यते ॥
शीलिनः श्रोत्रिया दान्तास्ततो भिक्षा तु मध्यमा ॥२२॥
अत ऊर्ध्वं गृहस्थेषु दैवाल्लब्धाधमा मता ॥
माधूकरं हीनतोऽपि सदेकान्नं सदप्यसत् ॥ २३ ॥
यवागूर्यावकं भैक्षं कणपिण्याकसक्तवः ॥
विपक्वं फलमूलादि पयो गव्यं च तक्रकम् ॥ २४ ॥
आहारोऽयं योगसिद्धिप्रद आहृत्य तं सकृत् ॥
समर्प्य विष्णवे योगी भुञ्जीयात्तं यथाविधि ॥ २५ ॥
अस्तेयं ब्रह्मचर्यं च त्यागो हिंसादिवर्जनम् ॥
अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् ॥ २६ ॥
स्वाध्यायाभ्यास इत्येते नियमा योगसिद्धिदाः ॥
सारभूतमुपादेयं शास्त्रेष्वेषु बहुष्वपि ॥ २७ ॥
इदं ज्ञेयमिदं ज्ञेयमितीच्छंस्तृषितश्चरेत् ॥
कल्पेऽपि नाप्नुयात्पारं तत्त्यजेद्विघ्नकारणम् ॥ २८ ॥
मुक्तसङ्गो जितक्रोधो लघ्वाहारः स्थिरो वशी ॥
धीन्द्रियाणि पिधायान्तर्ध्याने चित्तं नियोजयेत् ॥२९॥

याच्ञा । शीलिनः शिलोञ्छवृत्तयः ॥ २२ ॥ 'एकभिक्षा न कर्तव्या वसिष्ठसदनादपि । माधूकरं प्रकर्तव्यं चण्डालसदनादपि' इति स्मृतेः । वसिष्ठवच्छान्तः । अलं चण्डश्चण्डालोऽत्यन्तकोपी न रूढितः ॥ २३ ॥ ॥ २४ ॥ सकृदेकवारम् ॥ २५ ॥ २६ ॥ २७ ॥ तृषितः तृष्णायुक्तः । 'नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत्' इति श्रुतेः ॥ २८ ॥ एकान्तसेवी धीन्द्रियाणि ज्ञानेन्द्रियाणि षण्मुखीमुद्रयाच्छाद्य ॥ २९ ॥

यत्र तूपद्रवो नास्ति दर्यां शून्ये वनेऽपि वा ॥
तत्र योगी नित्ययुक्तो ध्यानं सम्यगुपक्रमेत् ॥ ३० ॥

मनोदण्डोऽस्य योगो वाग्दण्डो मौनं निरीहता ॥
देहदण्डस्त्रिदण्डीत्थं नैव दण्डीह वेणुभिः ॥ ३१ ॥

सर्वं स्वात्मनि सर्वत्र स्वात्मानं योऽभिवीक्षते ॥
योगेन कोऽप्रियस्तस्य प्रियो वा समदर्शिनः ॥ ३२ ॥

समाहितो विशुद्धात्मा समलोष्टाश्मकाञ्चनः ॥
योगेन शाश्वतं स्थानं गत्वा नावर्तते पुनः ॥ ३३ ॥

वेदाच्छ्रेष्ठा मखास्तेभ्यो जपो ज्ञानं ततस्ततः ॥
ध्यानं ततोऽप्यनुभवो यं लब्ध्वा नावसीदति ॥ ३४ ॥

समाहितः प्रसन्नात्मा सन्नेकान्तरतिर्वशी ॥
इमं महामतिर्योगं ज्ञात्वा पाशैर्न बध्यते ॥ ३५ ॥

एवं योगेन यो युक्तो बाह्याभ्यन्तरवर्जितः ॥
स न च्यावयितुं शक्यः कल्पकोटिशतैरपि ॥ ३६ ॥

प्रतिबन्धेन नैकाग्र्यं याति हृद्यस्य कस्यचित् ॥
तेन विष्णुः सदा सेव्यः सहस्राङ्घ्रिकराक्षिकः ॥३७॥

दर्यां गुहायाम् । उपक्रमेदारभेत् ॥ ३० ॥ योगो मनोदण्डः । मौनं वाग्दण्डः । निरिच्छत्वं देहदण्डः ॥ ३१ ॥ लोष्टं मृत्पिण्डः ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ ३५ ॥ च्यावयितुं पातयितुम् ॥ ३६ ॥ ३७ ॥

तद्वाचकोऽयमोंकारो यतिनैकान्तसेविना ॥
अतिदीर्घं समुच्चार्यस्तेनैवाशु मनोलयः ॥ ३८ ॥
सार्धत्रिमात्र ओंकारोऽकारोकारमकारकाः ॥
मात्रास्तिस्रोऽस्य सूक्ष्मार्धा यानुच्चार्या विशेषतः ॥३९॥
निर्गुणा योगिगम्या सा सुसूक्ष्मा ब्रह्मरन्ध्रगा ॥
गान्धारीत्युच्यते प्राज्ञैर्गान्धारस्वरसंश्रयात् ॥ ४० ॥
पिपीलिकागतिस्पर्शा प्रमुक्ता मूर्ध्नि लक्ष्यते ॥
समुच्चार्यो यथोंकारः प्रतिनिर्याति मूर्धनि ॥ ४१ ॥
तेनोंकारमयो योगी योगेनानेन जायते ॥
तल्लक्ष्यं परमं ब्रह्म विध्याद्धीसारथी रथी ॥ ४२ ॥
धन्वौपनिषदं धृत्वाऽऽयम्य भावितचेतसा ॥
निशितात्मेषुणा सम्यग्वेद्धव्यं सूक्ष्मलक्ष्यतः ॥ ४३ ॥
ओंकारो धनुरात्मेषुर्ब्रह्म वेध्यमनुत्तमम् ॥
अप्रमत्तेन वेद्धव्यं बाणवत्तन्मयो भवेत् ॥ ४४ ॥
ऋषिरग्निरकारस्य छन्दो गायत्रिका विधिः ॥
देवता पीतवर्णः क्लीं बीजं शक्तिः क्रियात्मिका ॥ ४५ ॥
अवस्था जागृतिः स्थानं भूरुदात्तः स्वरो मतः ॥
ऋग्वेदोऽग्निर्गार्हपत्यो विश्व आत्मा रजोगुणः ॥ ४६ ॥

॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ आत्मानं रथिनमित्यर्थतः पठति ॥ ४२ ॥ धनुर्गृहीत्वेति द्वयमर्थतः पठति ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

वैखरी वाङ्महीं तत्त्वं प्रातःसवनमीक्षणम् ॥
स्थानं भूः स्थूलदेहोऽत्र स्थूलभोगो बुधैः स्मृतः ॥४७॥
ऋषिर्वायुरुकारस्य त्रिष्टुप्छन्दश्च देवता॥
श्रीविष्णुर्लोहितो वर्णः श्रीं बीजं ज्ञानशक्तिरित् ॥ ४८ ॥
स्वप्नावस्था भुवः स्थानमनुदात्तः स्वरो मतः ॥
यजुर्वेदो दक्षिणाग्निस्तैजसात्मा च मध्यवाक् ॥ ४९ ॥
सत्त्वं गुणो नभस्तत्त्वं सूक्ष्मो देहो गले स्थितिः ॥
माध्यंदिनं च सवनं प्रविविक्ताख्यभोग इत् ॥ ५० ॥
ऋषिः सूर्यो मकारस्य जगती छन्द ईश्वरः ॥
देवता श्वेतवर्णश्च ह्रीं बीजं द्रव्यशक्तिका ॥ ५१ ॥
निद्रावस्था सुवः स्थानं स्वरितः स्वर उच्यते ॥
प्रज्ञात्माऽऽहवनीयोऽग्निः पश्यन्ती वाक् तमोगुणः॥५२॥
द्यौस्तत्वं कारणं देहः सामवेदो हृदि स्थितिः ॥
आनन्दभोगः सवनं तृतीयमिह संहृतिः ॥ ५३ ॥
वरुणस्त्वर्धमात्राया ऋषिश्छन्दो विराट् पुरः ॥
देवः क्रों बीजं विज्ञानशक्तिर्वर्णास्तथाखिलाः ॥ ५४ ॥
तुर्यावस्था भूर्भुवःस्वः स्थानं सर्वे स्वरा गुणाः ॥
शुद्धः सांवर्तकोऽग्निश्च सर्वाणि सवनानि च ॥ ५५ ॥
नादो वेदः प्रत्यगात्मा त्रीणि तत्त्वानि वाक् परा ॥
मूर्धा स्थितिश्च निरतिशयानन्दस्त्वतीन्द्रियः ॥ ५६ ॥

४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥
संहृतिः सर्वज्ञानोपसंहारः ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥

अस्मिताविद्यमानत्वान्महाकारणविग्रहः ॥
ध्वनेर्ब्रह्मा ऋषिर्देवः परात्मा व्यक्तसंज्ञितः ॥ ५७ ॥

गायत्रीछन्दश्चिच्छक्तिरवस्था च मनोन्मनी ॥
स्वात्मैक्यावस्थितिः स्थानमाकाशोऽत्रास्मितालयः ५८

विश्वतैजससौषुप्तान्संपश्येद्व्यष्टिसंज्ञितान् ॥
भेदशान्त्यै समष्ट्याख्यैर्विराट्सूत्राक्षरात्मभिः ॥ ५९ ॥

ह्रस्वेयं प्रथमा मात्रा द्वितीया दीर्घसंज्ञिता ॥
प्लुता तृतीयार्धमात्रा वाङ्मनोगोचरा परा ॥ ६० ॥

व्यक्तेयं प्रथमा मात्रा द्वितीयाऽव्यक्तसंज्ञिता ॥
मात्रा तृतीया चिच्छक्तिरर्धमात्रा परं पदम् ॥ ६१ ॥

अनेनैव क्रमेणैता विज्ञेया योगभूमयः ॥
ॐमित्युच्चारणेनैव जेतव्या आरुरुक्षुणा ॥ ६२ ॥

इत्येतदक्षरं ब्रह्म परमोंकारसंज्ञितम् ॥
सम्यगभ्यस्य यो ध्यायेत्स तल्लयमवाप्नुयात् ॥ ६३ ॥

ज्ञात्वा स्वमृत्युं तुर्योक्त्या ब्रह्मोच्चार्यं ततोऽमृतम् ॥
वैखर्याप्यक्षीणबन्धैस्तेषामपि भवान्तरे ॥ ६४ ॥

५७॥५८॥५९॥६०॥६१ ॥ ६२ ॥ तल्लयं मुक्तिम् ॥ ६३ ॥ तुर्योक्त्या परापश्यावाचा ओंकाराख्यं ब्रह्मोच्चार्य ततो मोक्षः अक्षीणबन्धैर्वैखर्याप्युच्चार्यस्तेषामपि भवान्तरे मोक्षः ॥ ६४ ॥ इति श्रीदत्तात्रेयपुराणे सार्धत्रि-

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां उपासनाकाण्डे पञ्चमाष्टके षष्ठोऽध्यायः ॥ ६ ॥

साहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां उपासनाकाण्डे पञ्चमाष्टके टीकायां षष्ठोऽध्यायः ॥ ६ ॥

इति श्रीदत्त० पञ्चमाष्टके षष्ठोऽध्यायः ॥५।६॥

---

## अलर्काय दत्तात्रेयेण मृत्युचिह्नोपदेशः तेन जगद्गुरोः स्तुतिर्नाम पञ्चमे सप्तमः ॥ ५ । ७ ॥

हरिःॐ ॥ तिस्रो वाचस्त्वतीता यैस्तेषां मुक्तिः कथं गुरो ॥
वैखर्यापि वदन्मुच्येत्कथं ज्ञोऽपि भवान्तरे ॥ १ ॥
मृत्युस्त्वसिद्धयोगेन सिद्धयोगेन वा पुनः ॥
कथं ज्ञेयो यतो ज्ञानादुत्क्रान्तौ नैव सीदति ॥ २ ॥
इत्यलर्केण संपृष्टो भगवान्स त्र्यधीश्वरः ॥
उवाच तं महाबाहो शृण्वेदं समाहितः ॥ ३ ॥
गुरुदेवप्रसादेन तारध्यानाच्च योगिराट् ॥
जीवन्मुक्तोऽपि देहेऽत्र यावदारब्धमीहते ॥ ४ ॥
ततो विदेहकैवल्यं विहाय सकलाः कलाः ॥
यात्येष मृत्युरित्युक्तो महाप्रलयसंज्ञितः ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥

मृत्युचिह्नान्युवाचोनचत्वारिंशेऽत्रिनन्दनः ॥
अलर्काय स तुष्टाव कृतकृत्यो जगद्गुरुम् ॥ १ ॥

अलर्कः पृच्छति—कर्मोपासनाज्ञानकाण्डप्रतिपादका वेदवाचो यैस्त्वतीताः तेषामपि मुक्तानां कथं मृत्युः 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुतेः संशयः ॥ १ ॥ २ ॥ ३ ॥ तारः प्रणवः । ईहते चेष्टते 'तस्य तावदेव चिरम्' इति श्रुतेः ॥ ४ ॥ सकलाः षोडशकलाः । एष महाप्रलयः ॥५॥

योगी विज्ञाय तं कालं द्वारः संयम्य सर्वशः ॥
मनो निरुध्य हृदये प्राणांश्चाधाय मूर्धनि ॥ ६ ॥
ॐमिति व्याहरन्ब्रह्म परात्मानमनुस्मरन् ॥
यः प्रयाति त्यजन्देहं स याति परमं पदम् ॥ ७ ॥
अक्षीणकर्मबन्धोऽपि तारोपास्त्या भवान्तरे ॥
मुच्यते नात्र संदेहस्तारशक्तेर्यतोऽमृतम् ॥ ८ ॥
यद्येकमात्रां ध्यायीत तेन संवेदितो द्रुतम् ॥
भूम्यां संपद्यते ऋक्तं नृजन्मोपनयत्यरम् ॥ ९ ॥
स तत्र तपसा ब्रह्मचर्येण श्रद्धयापि च ॥
संपन्नोऽनुभवत्येव महिमानमुपास्तितः ॥ १० ॥
संपद्यते मनस्येष ध्यायते यो द्विमात्रतः ॥
उन्नीयते सोऽन्तरिक्षं सोमलोकं स तत्र च ॥ ११ ॥

वामपार्ष्णिना गुदमवष्टभ्य मेढ्रोर्ध्वे द्वितीयं गुल्फं विन्यस्य षण्मुख्याः श्रोत्रादिद्वारः संयम्य षट्चक्रभेदपूर्वकं सुषुम्णामार्गेण प्राणान्मूर्ध्न्याधाय ओंकारं ब्रह्मोच्चैर्वदन् तल्लक्ष्यं परमात्मानमनुस्मरन् यो मूर्धानं भित्त्वा स्थूलदेहं त्यजन्प्रयाति स देशाद्यनवच्छिन्नं पदं ब्रह्म याति । तटस्थाभिप्रायेणेदमुक्तं 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते' इति श्रुतेस्तस्य गन्तव्याभावाच्च ॥ ६ ॥ ७ ॥ तारोपास्त्या प्रणवोपासनेन । यतस्तारशक्तेर्मोक्ष एव ॥ ८ ॥ यदि प्रणवस्याकारसंज्ञां विश्वादिलक्षणां मात्रां ध्यायीत तेन ध्यानेन संपन्नो भवति तमृगभिमानिनी देवता पुनर्मनुष्यलोकं अरं शीघ्रं प्रापयति ॥ ९ ॥ तत्र नृजन्मनि ॥ १० ॥ द्विमात्रोपासकोऽन्तरिक्षमुन्नीयते यजुर्भिरिति शेषः ॥ ११ ॥

विभूतिमनुभूयेह पुनरावर्तते ततः ॥
त्रिमात्रेणापि ध्यायीत परं पुरुषमव्ययम् ॥ १२ ॥
सूर्ये तेजसि संपन्नः पापमुक्तः स सामभिः ॥
उन्नीयते ब्रह्मलोकं ध्रुवं जीवघनादतः ॥ १३ ॥
परात्परं स पुरुषं वीक्षते नात्र संशयः ॥
एवं विद्वानुपास्त्यास्य मुच्यतेऽज्ञोपि बन्धनात् ॥ १४ ॥
देवमार्गं ध्रुवं शुक्रं सोमच्छायामरुन्धतीम् ॥
यो न पश्येन्न जीवेत्स मर्त्यः संवत्सरात्परम् ॥ १५ ॥
सूर्यबिम्बमरश्मिं चाग्निं पश्येदंशुमालिनम् ॥
स त्वेकादशमासोर्ध्वं न जीवति नरः किल ॥ १६ ॥
सुवर्णं रजतं मूत्रं पुरीषं वापि यो वमेत् ॥
स्वप्ने जाग्रति वा जीवेद्दशमासोत्तरं न सः ॥ १७ ॥
पश्येत्प्रेतपिशाचादिगन्धर्वनगराणि च ॥
सुवर्णवर्णवृक्षान्वा नवमासं स जीवति ॥ १८ ॥

विभूतिमैश्वर्यम् । इह नृलोके ॥ १२ ॥ १३ ॥ अज्ञस्य सकामस्य ब्रह्मलोकप्राप्तिः । 'अप्रतीकालम्बनान्नयतीति बादरायण उभयत्र' 'अथ दोषात्तत्क्रतुश्च' इति कामानुसारेण फलप्राप्तिः । सकामस्य ब्रह्मलोक उक्तः । तर्हि तस्य तत्त्वज्ञानं नेति चेत् 'इमं मानवमावर्तं नावर्तते न स पुनरावर्तते' । 'ब्रह्मणा सह ते सर्वे' इति श्रुतिस्मृतिसद्भावान्न पुनरावृत्तिः । भवशब्दोऽत्र दैवरूपान्तरबोधकः । एतस्माज्जीवघनाज्जीवसमष्टिरूपाद्धिरण्यगर्भात्परमुत्कृष्टं पुरुषं निरुपाधिकं ईक्षते साक्षात्करोति । 'ईक्षतिकर्मव्यपदेशात्सः' इति न्यायात् ॥ १४ ॥ कृष्णे नभसि गङ्गास्रोतोवद्दृश्यमानं देवमार्गं ध्रुवाद्याः ॥ १५ ॥ अंशुमालिनं सकिरणम् ॥ १६ ॥ १७ ॥ १८ ॥

कृशः स्थूलः कृशः स्थूलः सहसा यर्हि जायते ॥
प्रकृतेश्च निवर्तेद्यस्तस्यायुश्चाष्टमासिकम् ॥ १९ ॥

खण्डं यस्य पदं पार्ष्णेः पादस्याग्रेऽथवा भवेत् ॥
धूलिमध्ये कर्दमादौ सप्तमासं स जीवति ॥ २० ॥

कपोतगृध्रकाकोलक्रव्यात्काकासिताण्डजाः ॥
एषामन्यतमो मूर्ध्नि स्पृशेच्चेदयनान्मृतिः ॥ २१ ॥

हन्यान्मूर्ध्नि यदा काकः पञ्चमासाच्च तन्मृतिः ॥
चेत्स्वच्छायान्यथा दृष्टा मृतिर्मासचतुष्टयात् ॥ २२ ॥

दक्षिणाशाश्रिता विद्युदनभ्रे दृश्यते यदि ॥
वारिणीन्द्रधनुश्चापि त्रिमासं तस्य जीवितम् ॥ २३ ॥

यः पश्येदशिरस्कां च तैलादावात्मनस्तनुम् ॥
द्विमासोर्ध्वं न जीवेत रक्षिता यद्यपीश्वरः ॥ २४ ॥

यस्य मस्तिसमो गन्धो गात्रे शवमयोऽपि वा ॥
पक्षमात्रं हि तस्यायुर्निश्चितं योगवित्तमैः ॥ २५ ॥

यस्य हि स्नातमात्रस्य हृत्प्रदेशोऽवशुष्यति ॥
पिबतश्च जलं शुष्येद्दशाहं तस्य जीवनम् ॥ २६ ॥

प्रकृतेः स्वभावात् ॥१९॥ खण्डमपूर्णत्वेनाङ्कितम् ॥२०॥ क्रव्यान्मांसाशी । असिताण्डजाः कृष्णखगाः ॥२१॥ अन्यथा विपरीता ॥२२॥ दक्षिणादिक्स्था । अनभ्रे मेघं विना ॥२३॥ शिरोदर्शनरहिताम् ॥२४॥२५॥२६॥

संभिन्नो मारुतो यस्य मर्मस्थानं निकृन्तति ॥
न हृष्यतीन्दुसंस्पर्शात्तस्य मृत्युर्ह्युपस्थितः ॥ २७ ॥
गायन्ती वा हसन्ती वा कृष्णा रक्ताम्बरावृता ॥
दक्षिणाशां नयेन्नारी यं स्वप्ने तन्मृतिर्द्रुतम् ॥ २८ ॥
नग्नः क्षणपकः स्वप्ने हसमानः प्रदृश्यते ॥
तैलाभ्यक्तस्तथान्यो वा तस्य मृत्युरुपस्थितः ॥ २९ ॥
पङ्के गोमयगर्ते वा निमग्नं स्वप्न ईक्षते ॥
य आमस्तकमात्मानं स सद्यो म्रियते नरः ॥ ३० ॥
केशाङ्गारास्थिभस्मानि क्रुद्धाहिमजलां महीम् ॥
स्वप्ने पश्यति यो मृत्युर्दशाहं सोऽत्र जीवति ॥ ३१ ॥
करालैर्विकटैः कृष्णैः पुरुषैरुद्यतायुधैः ॥
अश्मभिस्ताडितः स्वप्ने स सद्यो मृत्युमाप्नुयात् ॥३२॥
सूर्योदये यस्य शिवा क्रोशन्ती याति संमुखम् ॥
विपरीतं व्रजेद्वापि स सद्यो मृत्युमृच्छति ॥ ३३ ॥
यस्य नुभुक्तमात्रस्य क्षुधात्यन्तं प्रजायते ॥
जायते व्रणदन्तश्च तस्य मृत्युरुपागतः ॥ ३४ ॥
अन्नादिगन्धं नो वेत्ति विधूमं च तथा निशि ॥
आत्मानं चान्यनेत्रस्थं वीक्षते स न जीवति ॥ ३५ ॥

संभिन्नो वेगात्संलग्नः ॥ २७ ॥ दक्षिणाशां दक्षिणादिशम् ॥ २८ ॥ २९ ॥ ॥ ३० ॥ क्रुद्धसर्पम् ॥ ३१ ॥ करालैर्दन्तुरैः ॥ ३२ ॥ शिवा क्रोष्ट्री । अप्रदक्षिणम् ॥ ३३ ॥ ३४ ॥ ३५ ॥

इन्द्रायुधं निशीथे च दिवा च भगणं तथा ॥
यो दृष्टमिति मन्येत स शीघ्रं मृत्युमेष्यति ॥ ३६ ॥
नासिका वक्रतामेति कर्णान्तावतिशीतताम् ॥
नेत्रं च वामं स्रवति यस्य तस्यायुरुद्गतम् ॥ ३७ ॥
जिह्वेति कृष्णतां यस्य मुखं चारक्ततां तथा ॥
प्रक्षीणेन्द्रियसंघस्य तस्य मृत्युरुपस्थितः ॥ ३८ ॥
यः खरोष्ट्रादियानेन प्रयायाद्दक्षिणां दिशम् ॥
स्वप्ने बद्धोपि वा तस्य सद्यो मृत्युर्न संशयः ॥ ३९ ॥
पिधाय कर्णौ निर्घोषं न शृणोत्यान्तरं तु यः ॥
न पश्येच्चक्षुषोर्ज्योतिस्तस्य मृत्युरुपस्थितः ॥ ४० ॥
भ्रान्तोर्ध्वा यस्य दृङ् नाभिः सच्छिद्रो योपि हन्यते ॥
रुष्टैर्भूतैस्तथा स्वप्ने गर्तेऽप्स्वग्नौ पतेत्ततः ॥ ४१ ॥
नावर्तते जाग्रति यः सुवस्त्रं वीक्ष्यतेऽन्यथा ॥
पूर्वं सभ्योऽपि सन्व्यस्तस्वभावः पूज्यनिन्दकः ॥४२॥
सोऽप्यासन्नमृतिर्ह्येवं मृत्युलक्ष्माणि वीक्ष्य सन् ॥
त्यक्त्वा भयं सदा योगं युञ्जीत मरणावधि ॥ ४३ ॥
प्रतिबन्धत्रये नष्टे गुणातीतो विमुच्यते ॥
योगभ्रष्टोऽपि भूत्वेह यतिर्भूयो लभेद्गतिम् ॥ ४४ ॥

३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ घोषमनाहतध्वनिम् ॥ ४० ॥ ततो जलादेः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ऐतरेयपञ्चमारण्यके शान्तिर्द्रष्टव्या ॥ ४४ ॥ सूर्यकान्तो वह्निम्। चन्द्रकान्तो

सूर्यचन्द्रकरावेशात्तत्कान्तौ वह्निवारिणी ॥
शीघ्रं जनयतः सेयमुपमा योगसिद्धये ॥ ४५ ॥

सति गेहे वसन्त्येते भङ्गेऽन्यत्र व्रजन्ति च ॥
पिपीलिकाखुकीटाद्याः सोपमा योगसिद्धये ॥ ४६ ॥

वभ्र्यल्पास्येन मृद्राशिं कुरुते सोपमा यतेः ॥
कालेन वर्धतेऽल्पोऽपि योगो वत्सविषाणवत् ॥ ४७ ॥

पिपीलिका सधान्योर्ध्वं शनैर्याति पतन्त्यपि ॥
सिद्धिदा सोपमा च द्रुः कीटाद्यार्तोऽपि वर्धते ॥ ४८ ॥

यो जाग्रत्स्वप्नयोरात्मा चालको भासकोत्र तम् ॥
अभ्यासात्तत्त्वतो योगी ज्ञात्वैति कृतकृत्यताम् ॥ ४९ ॥

करोति कार्यं करणैर्गृही साक्षी यथा पुरः ॥
तथा पारक्यचित्ताद्यैर्योगी स्वार्थं प्रसाधयेत् ॥ ५० ॥

इति श्रुत्वा ततोऽलर्कः प्रश्रयावनतः सुधीः ॥
अभिवाद्य प्रभुं प्राह तारितोऽस्मि भवाम्बुधेः ॥ ५१ ॥

यद्भवान्वन्दनेनैव क्षणान्मामुद्दधार तत् ॥
वर्ते वन्दनभक्त्या ते यावद्देहोऽत्र तिष्ठति ॥ ५२ ॥

जलम् ॥ ४५ ॥ ममतात्यागे दृष्टान्तः ॥ ४६ ॥ वभ्री तदेवाळवीति प्रसिद्धा ॥४७॥ वभ्री उदेवाळवी इति प्रसिद्धा । द्रुर्वृक्षः । यत्नशैथिल्याकरणे दृष्टान्तः ॥ ४८ ॥ ४९ ॥ करणैः कर्मकारजनैः ॥ ५० ॥ ५१ ॥ ५२ ॥

धन्या मे धीमती माता यत्प्रसादाद्भवत्पदम् ॥
दृष्टं समूढपुण्येन योगिनामपि दुर्लभम् ॥ ५३ ॥

धन्यो ममाग्रजो येन पशुतुल्यं विलोक्य माम् ॥
त्यक्त्वा ब्राह्मीं स्थितिं स्वीयामुपकारमिमं व्यधात् ॥५४॥

दिष्ट्या स काशिपभ्रात्रा जितोऽस्म्युपकृतिर्हि सा ॥
दिष्ट्या कोशो हृतोऽन्ये च दिष्ट्या मातृवचः स्मृतम् ॥५५

दिष्ट्या वो दर्शनं जातं दिष्ट्या विज्ञानमर्पितम् ॥
कृतकृत्योऽस्म्यसंदेहो मातृभ्रातृभवद्दृशा ॥ ५६ ॥

गार्हस्थ्यं स्मृतिहृत्त्यक्त्वा विधिनागत्य काननम् ॥
चरिष्ये भवदादिष्टं पुनर्येन न मे भ्रमः ॥ ५७ ॥

श्रीदत्तः प्राह राजेन्द्र कृतकृत्योऽसि गच्छ भोः ॥
निर्ममो निरहंकारस्तथा चर विमुक्तये ॥ ५८ ॥

इत्युक्तः प्रभुणा प्रेम्णा तुष्टाव स कृताञ्जलिः ॥
रोमाञ्चिताङ्गः स गलत्प्रेमाश्रुर्गद्गदाक्षरः ॥ ५९ ॥

वन्दे देवं हेत्वात्मानं सच्चिद्रूपं सर्वात्मानम् ॥
विश्वाधारं मुन्याकारं स्वेच्छाचारं वाग्हृद्दूरम् ॥ ६० ॥

समूढं पुञ्जितम् ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ स्मृतिहृत्प्रमादकारणम् ॥ ५७ ॥ ५८ ॥ ५९ ॥ हेत्वात्मानं कारणरूपं सर्वात्मानं प्रत्यग्रूपं अधिष्ठानत्वेन विश्वाधारं वशमायत्वात्स्वेच्छाचारं अविषयत्वात्सूक्ष्मत्वाच्च वाग्हृद्दूरम् ॥६०॥ मायाप्रतिबिंब ईशो मायातीतो ब्रह्मेति द्वौ मायाकल्पित-

मायोपाध्या यो ब्रह्मेशोऽविद्योपाध्याप्यात्मानीशः ॥
तत्त्वज्ञानान्मायानाशे तर्ह्येकस्त्वं नेशोऽनीशः ॥ ६१ ॥
रज्ज्वज्ञानात्सर्पस्तत्र भ्रान्त्या भाति शैवं ह्यत्र ॥
जीवभ्रान्तिस्त्वेषा मिथ्या सा मेऽथारं नष्टाऽऽप्तोक्त्या॥६२
धन्योऽस्म्यद्य त्वद्दृक्पूतो जातोऽस्म्यद्य ब्रह्मीभूतः ॥
त्वं ब्रह्मैवासीशोऽरूपो मायायोगान्नानारूपः ॥ ६३ ॥
दत्तात्रेयः प्रज्ञामेयो वेदैर्गेयो योगिध्येयः ॥
त्वं विश्वात्मा कस्त्वामीश स्तोतुं ध्यातुं ज्ञातुं वेशः॥६४॥
वृद्धः क्वापि प्रौढः क्वापि बालः क्वापि ब्रह्म क्वापि ॥
अङ्गी भोगी रागी क्वापि त्यागी योगी संगी क्वापि ॥६५॥
स त्वं बुद्धः सिद्धः शुद्धः श्रद्धाबद्धोऽप्यन्याविद्धः ॥
श्रीशो मायाधीशो धीशो विज्ञानेशो निर्वाणेशः ॥६६॥
धर्माधर्मातीतो गीतो वेदैर्भेदैर्हीनोऽनूनः ॥
त्वां तं सन्तं भक्त्या मुक्त्या ईशं त्रीशं वन्दे वन्दे ॥६७॥

भेदौ। अविद्याप्रतिबिंबोऽनीशो जीव 'अनीशया शोचति' इति श्रुतेः। अविद्यातीतः प्रत्यक् एवमविद्याकल्पितौ द्वौ। कूटस्थो ब्रह्मजीवेशावित्येवं चिच्चतुर्विधेत्युक्तेः ॥ ६१ ॥ अत्रात्मनि। अरं शीघ्रं। आप्तोक्त्या भवदुपदेशेन ॥ ६२ ॥ 'इन्द्रो मायाभिः' इति श्रुतेर्मायावेशात् ॥ ६३ ॥ प्रज्ञामेयो बुद्धिवेद्यः। 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुतेः। हे ईश, ध्यातुं वा क ईशः समर्थः ॥ ६४ ॥ अङ्गी साकारः ॥ ६५ ॥ अन्यैर्मायाधर्मैरविद्धः। अधीशोऽन्तर्यामी ॥ ६६ ॥ ईश्वरत्वाद्धर्माधर्मतत्फलातीतः। वेदैरुपनिषद्भिः देशादिभेदहीनोऽत एवानूनः सन्तं सत्यं मुक्त्यै वन्दे ॥ ६७ ॥ इति

**इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्या-मुपासनाकाण्डे पञ्चमाष्टके सप्तमोऽध्यायः ॥ ७ ॥**

श्रीदत्तपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्यां उपासनाकाण्डे पञ्च-माष्टके टीकायां सप्तमोऽध्यायः ॥ ७ ॥

**इति श्रीदत्तपुराणे पञ्चमाष्टके सप्तमोऽध्यायः ॥ ५।७ ॥**

---

# सुबाहुना कृतकृत्यमलर्कमागतं वीक्ष्य काशिपायोपदेशो नाम पञ्चमाष्टकेऽष्टमोऽध्यायः ५।८

हरिः ॐ॥ दूरात्त्यक्ता मयाऽहन्ता ममता च चिरागता॥
भवत्प्रसादात्स्वस्थोऽद्य मुक्तसङ्गश्चरे महीम् ॥ १ ॥
इत्युक्त्वेशं प्रणम्याशु गत्वाऽलर्कः प्रसन्नधीः ॥
स काशीशं सुबाहुं स प्रोवाच प्रहसन्निव ॥ २ ॥
राज्यकामुक काशीश भुंक्ष्व राज्यमकण्टकम् ॥
त्वं वा सुबाहवे चाद्य प्रयच्छेदं यथारुचि ॥ ३ ॥
काशीशः प्राह किं राज्यं परित्यक्तं रणं विना ॥
भवान्क्षत्रियदायादो नेदं त्वय्युपपद्यते ॥ ४ ॥
प्रनष्टामात्यसेनोऽपि त्यक्त्वा मरणजं भयम् ॥
लक्ष्यं शत्रुं समुद्दिश्य संदधीत नृपः शरान् ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥

चत्वारिंशेऽप्यलर्कं तं कृतकृत्यं समागतम् ॥
सुबाहुः प्रेक्ष्य हृष्टोऽभूत्काशिपं चोपदिष्टवान् ॥ १ ॥

स्वस्मिन्नभेदेन प्रत्यग्रूपे तिष्ठतीति स्वस्थः ॥ १ ॥ 'स्वल्पमप्युपकारं यो न वेत्ति पुरुषाधमः ॥ कृतघ्नः स तु विज्ञेयो ब्रह्मघ्नादपि पापकृत्' इत्युक्तेः कृतोपकारज्ञत्वेन हसन्नतु राज्यापहरणेन खिन्नः ॥ २ ॥ ३ ॥ नोपपद्यते योग्यं न भवति ॥ ४ ॥ अमात्यादिनाशे त्यक्ष्यामीत्यत आह—प्रनष्टेति ॥ ५ ॥ चोदितः शास्त्रोक्तः । तत्र मृतानां गतिः स्मर्यते—

हतो वा याति स स्वर्गं जित्वा वा स भुनक्ति गाम् ॥
नोभयत्रास्य हानिर्हि यज्ञवच्चोदितो रणः ॥ ६ ॥

जित्वारीन्नृपतिर्भोगान्यथाभिलषितान्हितान् ॥
दिव्यान्भुञ्जीत संसिध्द्यै यजेतेशं महामखैः ॥ ७ ॥

आततायिनमायान्तं दृष्ट्वा भीतो यदा नृपः ॥
पलायते स हित्वेह कीर्तिं प्रेत्यैति दुर्गतिम् ॥ ८ ॥

प्राहालर्कः पुरैतादृङ् मतं मेऽभूत्तु सांप्रतम् ॥
न तथाऽहं हि नो देहः क्षत्रियत्वं पुनः कुतः ॥ ९ ॥

यथा भौमो जडः कुम्भस्तथेयं देहिनस्तनूः ॥
गुणाः प्राणा मनश्चापि चित्सांनिध्यात्सचेतना ॥ १० ॥

'द्वावेव कृतिनौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे योऽभिमुखो हतः' इति ॥ ६ ॥ ७ ॥ 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रसीमापहर्ता च षडेते ह्याततायिनः' इतिस्मरणादाततायिनोऽस्माज्जहि । 'नाततायिवधे दोषो हन्तुर्भवति कश्चन' इत्याततायिवधदोषाभावात् 'चेदर्थशास्त्रात्प्रबलं धर्मशास्त्रम्' इति स्मृतेस्तस्य दुर्बलत्वाद्धर्मशास्त्रस्य मम न प्रयोजनमित्याह—नेति ॥ ८ ॥ नाहं देहः कुतः क्षत्रियत्वं 'वर्णाश्रमादयो देहे मायया परिकल्पिताः' इत्युक्तेः ॥ ९ ॥ भवतु जडा तनुः प्राणाद्याश्चेतना इत्यत आह—चित्सान्निध्यादिति ॥ १० ॥

चिच्छक्तिरेक एवायं यदा नान्योऽस्ति कश्चन ॥
कुतस्तदारिमित्रादिधीरज्ञानाद्यतो हि सा ॥ ११ ॥
त्वन्निमित्तेन यद्दुःखं मायिकं मेऽभवत्ततः ॥
दत्तात्रेयप्रसादोऽभून्मयि येनेदृशोऽभवम् ॥ १२ ॥
निर्जितारीन्द्रियगणस्त्यक्त्वा सङ्गमशेषतः ॥
मनो ब्रह्मणि संधास्ये जयः सर्वत्र तज्जये ॥ १३ ॥
नारिर्मे त्वं न चाहं ते सुबाहुस्तूपकारकृत् ॥
भेददृष्टिः क्व मे सर्वं मयि सर्वत्र चाप्यहम् ॥ १४ ॥
इति तद्वचनं श्रुत्वा तमालिङ्ग्य मुदा दृढम् ॥
दिष्ट्योक्तं भ्रातरित्युक्त्वा सुबाहुः प्राह काशिपम् ॥१५॥
यदर्थं काशिराजेह त्वामहं शरणं गतः ॥
निःशेषं तन्मया लब्धं यास्यामि स्वस्ति तेऽस्तु भोः॥१६
काशिपः प्राह मां ब्रूहि निष्पन्नोऽर्थः कथं तव ॥
किमर्थमागतोऽसि त्वं कौतुकं प्रतिभाति मे ॥ १७ ॥
पित्र्यं राज्यं ममाक्रान्तं भ्रात्रा निर्जित्य तं हि मे ॥
देहीति शरणं प्राप्य मामद्यात्थान्यथा कथम् ॥ १८ ॥
सुबाहुः प्राह काशीश यदर्थमयमुद्यमः ॥
विहितस्त्वत्सहायेन शृणु तत्कारणं त्विदम् ॥ १९ ॥

अज्ञानादलातचक्रभ्रमवत् ॥ ११ ॥ १२ ॥ तज्जये मनोजये ॥ १३ ॥ 'यस्मिन्सर्वाणि' इति श्रुत्यनुभवमाह—नेति ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ तं भ्रातरं निर्जित्य मे राज्यं देहीत्यात्थ ब्रवीषि ॥ १८ ॥ विहितः कृतः ॥ १९ ॥

विद्वांसौ वातरशनौ विमुक्तौ भ्रातरौ मम ॥
तयोर्मम च यन्मात्रा बाल्ये स्तन्यं यथा मुखे ॥ २० ॥

सिक्तं तथैव बोधोऽपि विन्यस्तः कर्णयोस्तथा ॥
नास्य कर्णेऽपतद्दैवात्पशुप्रायोऽनुजोऽभवत् ॥ २१ ॥

स्त्रीषु स्त्रैणेषु सततं संसक्तोऽयं यथा पशुः ॥
जैह्वयौपस्थ्यसुखासक्त्यानाऽयमल्पोऽभवत्कुधीः ॥२२॥

यथैकसार्थयातानामेकस्मिन्नेव सीदति ॥
दुःखं भवति सार्थानां तथाऽस्माकमभून्नृप ॥ २३ ॥

लब्ध्वा गार्हस्थ्यमात्मानं सुखिनं मन्यते स्म सः ॥
भ्रान्तिरस्येति संप्रेक्ष्य खेदोऽस्माकमभून्नृप ॥ २४ ॥

ततो मया विनिश्चित्य दुःखं वैराग्यकारणम् ॥
कृतं भवत्सहायेन तथैवार्थोऽभवन्मम ॥ २५ ॥

दुःखमस्मै मया दत्तं विरक्तोऽभूत्ततस्त्वयम् ॥
मम कार्यं हि संसिद्धं भद्रं तेऽस्तु व्रजाम्यहम् ॥ २६ ॥

माता मदालसाऽस्माकं योगिमान्यापि तत्पयः ॥
पीत्वा यन्न पतत्वेवं मनस्यानीय यत्नतः ॥ २७ ॥

वातरशनौ नग्नौ । स्तन्यं दुग्धम् ॥ २० ॥ २१ ॥ २२ ॥ सीदति विषीदति सति ॥ २३ ॥ २४ ॥ २५ ॥ ते तुभ्यम् । 'मद्रभद्र-कुशल' इत्यादिना चतुर्थी ॥ २६ ॥ २७ ॥ स्वरूपानन्दतः ' श्रोत्रियस्य

भवत्संश्रयतः सर्वं निष्पन्नं किं ममामुना ॥
मर्त्यराज्येन साम्राज्यं स्वरूपानन्दतो मम ॥ २८ ॥
नोपेक्ष्यो विदुषा राजन्सीदमानः स्वबान्धवः ॥
उद्धर्तव्यः प्रयत्नेन विद्वत्ता सैव तस्य हि ॥ २९ ॥
सुहृदि स्वजने बन्धौ समर्थे योऽवसीदति ॥
धर्मार्थकाममोक्षेभ्यो निन्द्यास्ते नात्र संशयः ॥ ३० ॥
इत्युक्तः काशिराजोऽपि क्षणसत्सङ्गनिर्वृतः ॥
भूत्वा दीनमनाः प्राह सुबाहुं कृपयान्वितम् ॥ ३१ ॥
उपकारो ह्यलर्कस्य कृतः साधो त्वया महान् ॥
कथं ममोपकाराय न करोषि मनः सखे ॥ ३२ ॥
फलदो हि सतां सङ्ग इत्युक्तिः कथमन्यथा ॥
तस्मान्मामपि संसारात्समुद्धर विचक्षण ॥ ३३ ॥
इत्युक्तः स सुबाहुस्तं प्रहस्य प्राह काशिप ॥
सत्यमेव त्वया प्रोक्तं किंतु कालोऽत्र युज्यते ॥ ३४ ॥
धर्मार्थकाममोक्षाख्याः पुरुषार्था इहोदिताः ॥
त्रिवर्गः सफलस्तेऽत्र शिष्टो मोक्षः स साधनैः ॥ ३५ ॥
विना न सिध्यति ततो यतितव्यं प्रयत्नतः ॥
तत्ते संक्षेपतो वक्ष्ये यतेथाः श्रेयसे ततः ॥ ३६ ॥

चाकामहतस्य ' इति श्रुतेः ॥ २८ ॥ २९ ॥ ३० ॥ मह्यमीदृग्लाभो न लब्ध इति दीनमनाः ॥ ३१ ॥ ३२ ॥ ३३ ॥ अत्र मोक्षविषये ॥ ३४ ॥ ॥ ३५ ॥ साधनैर्विना न सिद्ध्यतीति संबन्धः । श्रेयसे मोक्षाय ॥ ३६ ॥

प्रत्ययोऽहंममेत्येवं कर्तव्यो न पुनस्त्वया ॥
अहंममेति संज्ञेयं कस्येत्यालोचयानिशम् ॥ ३७ ॥
अव्यक्तादिविशेषान्तं सविकारमचेतनम् ॥
व्यक्ताव्यक्तं त्वया ज्ञेयं ततोऽसङ्गत्वमेष्यसि ॥ ३८ ॥
आत्मानात्मविचारेण ज्ञातव्यमखिलं ततः ॥
स्वात्मानमेकमालोच्य कृतकृत्यो भविष्यसि ॥ ३९ ॥
यद्यप्यलर्को दैवेन भोगासक्तोऽपि कामुकः ॥
विशुद्धो मातृकृपया क्षणाल्लेभे गुरोः कृपाम् ॥ ४० ॥
त्वमिदानीं विरक्तोऽपि प्रतिबद्धोऽस्यतोऽनिशम् ॥
यतः स्वप्रतिबन्धान्ते मुक्तिमेष्यस्यसंशयम् ॥ ४१ ॥
इत्युक्त्वालर्कमालिङ्ग्य तमुवाच प्रसन्नधीः ॥
राज्यं कुरु वनं व्रैहि नातः कुत्रापि लिप्यसे ॥ ४२ ॥
विद्वंस्तव न दोषोऽस्ति यथेच्छसि तथा कुरु ॥
अलर्कः प्राह भो बन्धो मूढोऽहं केवलः पुरा ॥ ४३ ॥
जडीभूतः स्थितो राज्ये प्रसादात्तेऽद्य मोचितः ॥
एकोदरसमुत्पन्ना मान्यनारीसुता वयम् ॥ ४४ ॥
अद्यैव समतां प्राप्तास्तत्पुण्यं मातुरेव नः ॥
इत्युक्तोऽथ सुबाहुः स प्रययौ वनमुत्तमम् ॥ ४५ ॥

प्रत्ययः प्रतीतिः । 'आ सुप्तेरा मृतेः कालं नयेद्वेदान्तचिन्तया' इत्युक्तेरनिशम् ॥ ३७ ॥ अव्यक्तं प्रधानं सविशेषं भूतभौतिकादिगृहदारादिष्वसङ्गत्वम् ॥ ३८ ॥ ३९ ॥ ४० ॥ एहि मया सहागच्छ ॥ ४१ ॥ ४२ ॥ ४३ ॥ अजडोऽपि जडत्वं प्राप्तः । अभूततद्भावे च्विः ॥ ४४ ॥ ४५ ॥

स्वपुरं काशिराजोऽपि गत्वा यत्नपरोऽभवत् ॥
अलर्कः पुरमासाद्य पुत्रं राज्येऽभिषिच्य च ॥ ४६ ॥
वनं जगाम संत्यज्य सर्वसङ्गविमुक्तये ॥
तत्र कालेन महता निर्द्वन्द्वो निष्परिग्रहः ॥ ४७ ॥
प्राप योगर्द्धिमतुलां पूर्णां निर्वाणलक्षणाम् ॥
पश्यन्विश्वमिदं सर्वं सदेवासुरमानुषम् ॥ ४८ ॥
पाशैर्गुणमयैर्बद्धं बध्यमानं च नित्यशः ॥
स्त्रीपुत्रभ्रातृमित्रारिस्वपारक्यादिभावितैः ॥ ४९ ॥
आकृष्यमाणं करणैः संभ्रान्तं भीमदर्शनम् ॥
अज्ञानपङ्कमग्नं च स्वात्मानमपि तादृशम् ॥ ५० ॥
समुत्तीर्णं समाज्ञाय गाथामेतामगायत ॥
अहो कथं तदस्माभिः पूर्वं राज्यमनुष्ठितम् ॥ ५१ ॥
अपि पश्चान्मया ज्ञातं योगान्नास्त्यपरं सुखम् ॥
यद्भूम्यां धनधान्यस्त्रीपुत्रादिसुखभावितम् ॥ ५२ ॥
तृष्णाक्षयसुखस्येदं कलां नार्हति षोडशीम् ॥
तृष्णासत्त्वे तु तत्सर्वं नैकस्यार्तिदमप्यलम् ॥ ५३ ॥

४६ ॥ निर्द्वन्द्वः दुःखादिरहितः। निष्परिग्रहो योगक्षेमादिचिन्तारहितः ॥ ४७ ॥ निर्वाणं मोक्षो यस्यां तां योगर्द्धिम् ॥ ४८ ॥ गुणमयैः स्नेहादिरूपैः पाशैः ॥ ४९ ॥ स्वस्वविषयग्रहणार्थं वागादिकरणैराकृष्यमाणम् ॥ ५० ॥ अज्ञानपङ्कात्समुत्तीर्णम् ॥ ५१ ॥ न विद्यते परं यस्मात् ॥ ५२ ॥ अपर्याप्तं अनलमत्यर्थमार्तिदं वा अनलवत्तापकं वा ॥ ५३ ॥ भूम्न आत्मनो रूपं

सुखं भूमात्मरूपं तदविद्वान्मूढधीर्बहिः ॥
मृगयत्यवशस्तेन सर्वदा दुःखभाजनः ॥ ५४ ॥

सत्यं ज्ञानमनन्तं यद्ब्रह्मज्योतिः सनातनम् ॥
तदेवात्मैक एवाहं भूमा सुखमयः सदा ॥ ५५ ॥

भ्रातुर्मातुः प्रसादेन श्रीदत्तानुग्रहेण च ॥
कृतं कृत्यं प्रापणीयं मया प्राप्तं न संशयः ॥ ५६ ॥

एवमुक्त्वा महात्मा स समभ्यस्य प्रयत्नतः ॥
संप्राप्तश्चरमां भूमिं यत्र द्वैतस्मृतिर्न च ॥ ५७ ॥

ततः प्रारब्धभोगान्ते निर्गतोपाधिकः स च ॥
दत्तलोके विलीनोऽभून्नामरूपादिवर्जितः ॥ ५८ ॥

इति पुत्रेण पित्रेऽसौ योगचर्योपदेशिता ॥
सेयं समासतस्तत्र ग्रथिता बुद्धिशुद्धये ॥ ५९ ॥

पुत्रः प्राह ततैवं त्वं योगाभ्यासं समाचर ॥
प्राप्स्यसे तत्परं ब्रह्म यत्र गत्वा न शोचति ॥ ६० ॥

सुखम् । बहिः स्त्र्यादौ ॥ ५४ ॥ ५५ ॥ कृत्यं श्रेयः । कृतम् संपादितम् । प्रापणीयं स्वरूपं प्राप्तं विस्मृतकण्ठमणिन्यायेन ॥ ५६ ॥ हि इति श्रुतिप्रसिद्धम् 'यत्र त्वस्य सर्वमात्मैवाभुत्तत्केन कं पश्येत्' इति ॥५७॥ स्थूलाद्युपाधिरहितः ॥५८॥ पुत्रेणाष्टादशाध्यायोक्तेन॥५९॥ हे तत तात॥६०॥

तद्ब्रह्माऽहं न संसारी किं मेऽध्ययनकर्मभिः ॥
कृतकृत्यस्य करणमस्ति चेन्न स तत्त्ववित् ॥ ६१ ॥

एतत्ते सर्वमाख्यातं तव प्रश्नानुसारतः ॥
ममोदन्तश्च कथितो यतमानो भवाधुना ॥ ६२ ॥

इत्युक्त्वा पितरं नत्वा ततोऽनुज्ञामवाप्य च ॥
संत्यक्ताखिलसङ्गोऽसौ गां चचार समाहितः ॥ ६३ ॥

तत्पितापि सुनिर्विण्णो वानप्रस्थविधानतः ॥
शुद्धिं प्राप्याथ संन्यस्य जातो नैष्कर्म्यसिद्धिभाक् ॥ ६४ ॥

इत्यलर्ककथा धन्या गेया ध्येया मनीषिभिः ॥
प्रमाणं यत्र भगवानवधूतो दिगम्बरः ॥ ६५ ॥

किं वर्ण्यते भगवतो भक्तवात्सल्यमद्भुतम् ॥
योऽलर्काय ददौ मुक्तिं तुष्टो वन्दनमात्रतः ॥ ६६ ॥

मध्यमं चरितं त्वेतद्यदलर्ककथान्वितम् ॥
भुक्तिमुक्तिप्रदं रम्यं त्रीशसंतोषकारकम् ॥ ६७ ॥

शश्वत्ते वन्दनं कुर्वे माधवातीन्द्रिय प्रभो ॥
संतुष्टः सौभगं त्वं न आयजस्व त्र्यधीश्वर ॥ ६८ ॥

६१ ॥ उदन्तो वृत्तान्तः ॥ ६२ ॥ गां भूमिम् ॥ ६३ ॥ ६४ ॥ ॥ ६५ ॥ ६६ ॥ ६७ ॥ सुष्ठु भगानां भावः सौभगम् । आयजस्व देहि । पञ्चमाष्टकसमाप्तिरपि द्योतिता ॥ ६८ ॥ इति श्रीमद्दत्तात्रेयपुराणे

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे पञ्चमाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥

सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे पञ्चमाष्टके टीकायां अष्टमोऽध्यायः ॥ ८ ॥

इति सुबाहुना कृतकृत्य० वीक्ष्य काशिपायोपदेशो नाम पञ्च० अष्ट० ॥ ५।८ ॥

॥ इति श्रीमद्दत्तपुराणे पञ्चमाष्टकः संपूर्णः ॥

---

## ।। अथ श्रीमद्दत्तात्रेय० षष्ठाष्टकप्रारम्भः ।।

——:0:——

### आयूराजस्य दास्यकथनं श्रीदत्तात्रेयस्य दानादिकथनं नाम षष्ठाष्टके प्रथमोऽध्यायः ।। ६।१ ।।

हरिः ॐ ।। य इन्द्रतुल्यो नहुषस्तत्प्रभावोऽधुनोच्यते ।।
तेन श्रीदत्तदेवस्य दातृत्वादि प्रकाश्यते ।। १ ।।

कश्चिद्राजा सोमवंश्य आयुर्नाम महामतिः ।।
सम्राड् दाता वशी धन्यः सोऽनपत्यत्वदुःखितः ।।२।।

श्रीदत्तात्रेयमाहात्म्यं श्रुत्वा मुनिसमीरितम् ।।
सह्याद्रौ स प्रभुं भक्त्या पुत्रार्थी शरणं ययौ ।। ३ ।।

धृत्वाङ्के युवतीं शश्वत्पिबन्तं मद्यमुत्तमम् ।।
सर्वभोगाढ्यमप्यार्यं मत्वा भक्त्या ननाम सः ।। ४ ।।

।। श्रीगणेशाय नमः ।।
आयूराजस्यैकचत्वारिंशे दास्यं प्रगीयते ।।
तेन श्रीदत्तदेवस्य दानादीह प्रदर्श्यते ।। १ ।।

धन्यः पुण्यवान् ।। १ ।। २ ।। धन्यत्वात् क्षुद्रदेवतां विहाय पुत्रकामनयाप्यर्थी भगवद्भक्तोऽभूत्।।३।। मायाविनिर्मितां युवतीम् । 'यूनस्तिः'।।४।।

निर्भर्त्सितोऽपि बहुशः श्रीदत्तेन महात्मना ॥
भेजे दृढव्रतो नित्यमायुर्भक्त्या त्र्यधीश्वरम् ॥ ५ ॥

दासभावं समाश्रित्य शताब्दं सोऽभजन्मुदा ॥
प्राहैकदा प्रभुः कार्यं किं व्रात्येन मया तव ॥ ६ ॥

राजोवाच भवान्धीशो गोविन्दः पुरुषोत्तमः ॥
अत्रिपुत्रोऽपि मायावी निस्त्रैगुण्योऽस्ति केवलः ॥७॥

वर्णा बद्धा यया त्वद्वाक् सा त्रयी तच्छिरस्यज ॥
वर्तते त्वत्स्वरूपज्ञो बन्धस्ते किं पुनस्तया ॥ ८ ॥

त्रय्या विधिनिषेधाभ्यां त्वद्रूपाज्ञः पराङ्मुखः ॥
नियोजित इति ज्ञात्वा भजे त्वां पाहि मां हरे ॥ ९ ॥

श्रीदत्तोऽवददेवं चेत्कपालेन सुरां नृप ॥
मांसं च संस्कृतं रुच्यं देहि मेऽनुक्षणं त्विति ॥ १० ॥

सोऽप्यदादुक्तवत्साक्षात्पशुसोमधियान्वहम् ॥
हृष्टोऽवदत्प्रभुस्तेन वृणीष्वेष्टं वरं नृप ॥ ११ ॥

दृढं भजनव्रतं यस्य सात्त्विकत्वात् ॥ ५ ॥ धीशः बुद्धिप्रेरकः ॥ ६ ॥ ७ ॥ वर्णा ब्राह्मणाद्याः यया श्रुत्या विधिनिषेधाभ्यां बद्धाः सा वेदत्रयी तस्याः शिरसि त्वत्स्वरूपज्ञो वर्तते किं पुनस्तया वाण्या तव बन्धः ॥ ८ ॥ पाहि विधिकैंकर्यपरिहरणेन रक्ष ॥ ९ ॥ मांसदानं पशुयागः मद्यदानं सोम इति बुद्ध्येश्वरप्रीत्यै न स्वभोगाय । तर्ह्ययं संवादिभ्रमः । न । धीशो गोविन्द इति ज्ञानपूर्वकं दानश्रवणात् ॥ १० ॥ ११ ॥

राजाऽऽह पुत्रं सर्वज्ञं देवविप्रपरं प्रभुम् ॥
सुरासुरैरप्रजेयं कविं दक्षं प्रजापतिम् ॥ १२ ॥

पूज्यं शूरं रणक्रूरं शरणागतवत्सलम् ॥
धार्मिकं देहि भोक्तारं यज्वानं च बहुप्रदम् ॥ १३ ॥

पितृगुर्वतिथिश्लाघ्यं धन्यः स्यां येन पूर्वजैः ॥
प्रभुः प्राह तथैवास्तु पुत्रो वैष्णव उत्तमः ॥ १४ ॥

जिष्णुर्जिष्णूपमः साक्षाद्दिगन्तरलुठद्यशाः ॥
राजन्फलमिदं पत्न्या इन्दुमत्यै प्रयच्छ भोः ॥ १५ ॥

तथेत्युक्त्वाभिवाद्येशं हृष्टोऽगात्स्वपुरं नृपः ॥
पत्न्यै ददौ फलं सापि ऋतुस्नाताऽभजन्मुदा ॥ १६ ॥

सा चिरप्रोषिता तं च विधिनाऽऽश्लिष्य कामिनी ॥
सान्द्रानन्दं पदं लेभे क्षणाद्गर्भं च दैविकम् ॥ १७ ॥

ततः सा महिषी स्वप्ने महापुरुषलक्षणम् ॥
हारकंकणकेयूरनूपुरालंकृतं शुभम् ॥ १८ ॥

॥ १२ ॥ यज्वा विधिनेष्टवान् । 'सुयजोर्ङ्वनिप्' ॥ १३ ॥ १४ ॥ जिष्णुर्जयशीलः । 'ग्लाजिस्थश्च' इति ग्स्नुः ॥१५॥१६॥ चिरं प्रोषितत्वात् सुरतविधिनाऽऽलिङ्ग्य । कामिनीत्यनेन धर्माविरुद्धकामोद्दीपनं ज्ञेयम् । सान्द्रानन्दं पदमित्यनेन शुक्रद्रावोपलक्षितरत्यन्ते क्षणं जीवन्मुक्तिसुखाभासः सूचितः । क्षणाद्त्युत्सवात् । दैविकं दिक्पालांशभूतं 'प्रजातिरमृतमानन्द इत्युपस्थः' इति श्रुत्युक्तं फलं लेभे ॥ १७ ॥ १८ ॥

किरीटकुण्डलधरं श्वेतस्रग्वस्त्रलेपनम् ॥
मणिभ्राजद्बहुफणशेषच्छत्रं शुचिस्मितम् ॥ १९ ॥
मुक्ताफलं चार्पयन्तं क्षीरपूर्णेन कम्बुना ॥
स्वात्मानमभिषिञ्चन्तं दृष्ट्वा हृष्टाप्यबुध्यत ॥ २० ॥
शश्वत्स्मृत्वा प्रबुध्यापि हृष्टा पत्ये शशंस तत् ॥
प्रातर्नृपोऽपि संशुद्धः स्वप्नं शौनकमब्रवीत् ॥ २१ ॥
शौनकः प्राह राजेन्द्र भाग्यवानसि सांप्रतम् ॥
अनसूयागर्भरत्नदत्तात्रेयार्पितं फलम् ॥ २२ ॥
यद्भक्षितं तत्प्रभावात्त्वत्पत्न्या गर्भ उत्तमः ॥
लोकपालानुभावानुप्रविष्टो धृत एव भोः ॥ २३ ॥
धर्मात्मा वैष्णवः पुत्रः श्रीसोमान्वयभूषणः ॥
ख्यात्योपेन्द्रसमो दिव्यवीर्यो वेदोपवेदवित् ॥ २४ ॥
सम्राट् सर्वगुणोपेतो हुण्डासुरनिषूदनः ॥
भविष्यतीति स्वप्नेन सूचितं नात्र संशयः ॥ २५ ॥
अग्निर्देवमुखोऽभ्येतु त्वद्गर्भं सर्वतोऽवतु ॥
मृत्युपाशाच्च वरुणो दशमे मासि सूतवे ॥ २६ ॥

बहुफणा एव छत्रं यस्य ॥१९॥२०॥ 'मैथुनादुत्थिता नारी शुचिः स्यादशुचिः पुमान्' इत्युक्तेः शुद्धः। बहुषु सभ्येषु वृद्धेन वक्तव्यं तद्बहुत्वे ऋकूशाखीयेनेत्यत आह शौनकः ॥२१॥२२॥ लोकपालसामर्थ्यानुप्रविष्टः। 'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः' इति स्मृतेः ॥२३॥२४॥२५॥ देवप्रथमः 'अग्निरैतु प्रथमो देवतानाम्' इति लिङ्गात्। अवतु रक्षतु ॥२६॥

इति दत्त्वाशिषोऽगच्छच्छौनकः सत्कृतो गृहम् ॥
प्रहृष्टोऽभूद्दत्तदत्तचित्तो राजा सभार्यकः ॥ २७ ॥

काञ्चनाख्यपुरे कश्चिद्धुण्डनामा महासुरः ॥
आक्रान्ता येन भूर्द्यौश्च देवा अपि पराजिताः ॥ २८ ॥

याऽशोकसुन्दरी नाम शिवकन्या बलाद्धृता ॥
तया यः शप्तो नहुषस्त्वां हनिष्यति खल्विति ॥ २९ ॥

अत्रान्तरेऽस्य हुण्डस्य तनया नन्दनं वनम् ॥
वयस्याभिगता तत्र चारणानां परस्परम् ॥ ३० ॥

भाषतां वचनादायुःपुत्रो हुण्डासुरान्तकः ॥
भविष्यतीति सा श्रुत्वा गत्वा पित्रे शशंस तत् ॥३१॥

तच्छ्रुत्वाऽशोकसुन्दर्याः स्मृत्वा शापं च सोऽसुरः ॥
भीतभीतो द्रुतं गत्वा ददर्शेन्दुमतीं शुभाम् ॥ ३२ ॥

कृष्णाग्रपीवरकुचां प्रभातेन्दुमुखीमपि ॥
तेजोलावण्यरूपाढ्यां रञ्जितां विष्णुतेजसा ॥ ३३ ॥

॥ २७ ॥ द्यौः स्वर्गः ॥ २८ ॥ २९ ॥ नन्दनं देवोद्यानम् ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥ कृष्णमुखौ स्थूलौ कुचौ यस्याः । प्रातःकालीनेन्दुवन्निस्तेजस्कं मुखं यस्याः । वाग्भटः 'क्षामता गरिमा कुक्षेर्मूर्च्छा छर्दिररोचनम् ॥ जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम् ॥ अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ' इति । 'नाविष्णुः पृथिवीपतिः' इति

चण्डभास्करबिम्बाभां देवीमिव दुरत्ययाम् ॥
रक्षां सुदर्शनाभां च भ्रमन्तीं तत्समंततः ॥ ३४ ॥
दुरात्मा दानवो दुष्टो दृष्ट्वैवं चकितोऽभवत् ॥
नूनं शत्रुर्ममैवैष हन्तव्यो मे प्रयत्नतः ॥ ३५ ॥
इति निश्चित्येन्दुमत्यै स दुःस्वप्नान्यदर्शयत् ॥
संधौ जाग्रत्सुषुप्त्योस्तन्नाशहेतूनि भूरिशः ॥ ३६ ॥
दानव्या मायया चास्या भयं नाभूत्सुरक्षया ॥
श्रीदत्तरक्षितो गर्भो नापि बभ्रंश भाग्यवान् ॥ ३७ ॥
सुदर्शनोपमा रक्षा हुण्डेनैव निरीक्षता ॥
नेन्दुमत्या हि सा स्वप्नभियाऽर्कं शरणं ययौ ॥ ३८ ॥
भो देव सवितर्विश्वं दुरितं मे परासुव ॥
परासुव च दुःस्वप्न्यं भद्रं यत्तन्म आसुव ॥ ३९ ॥
इति स्तुत्वेन्दुमत्यर्कं स्वस्थाऽभून्निर्भया सदा ॥
दानवस्योद्यमाः सर्वे दैवाज्जाता निरर्थकाः ॥ ४० ॥
नष्टाभीष्टो दुरात्मा स त्यक्त्वाऽन्नं पानमन्वहम् ॥
छिद्रान्वेषी स तत्रैव तस्थौ गुप्तः स्वमायया ॥ ४१ ॥
यथाकालं स राजापि क्रियाः पुंसवनादिकाः ॥
चकार विधिना सर्वाः प्रहृष्टः स यथाक्रमम् ॥ ४२ ॥

स्मारयितुं विष्णुतेजसेत्युक्तम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ 'संध्यं तृतीयं स्थानम्' इति स्वप्नस्य संधित्वम् ॥ ३६ ॥ ३७ ॥ ३८ ॥ परासुव दूरे गमय। आसुव आगमय। 'विश्वानि देव सवितर्दुरितानि परासुव। यद्भद्रं तन्म आसुव' इति श्रुतेः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ काले दशमे

कालेऽतीतेऽपि नासूत साऽत्रोपायं व्यधान्नृपः ॥
श्रुतं हवं मेऽश्विनौ द्राक् सप्तवध्रिं च मुञ्चतम् ॥ ४३ ॥
नाथमानमृषिं भीतं दशमास्यं यथासुखम् ॥
इति मन्त्रे प्रयुक्तेऽसावासन्नप्रसवाऽभवत् ॥ ४४ ॥
ततः सुशोभने काले तुङ्गस्थे ग्रहपञ्चके ॥
असूर्यगे महाभागमसूतेन्दुमती सुतम् ॥ ४५ ॥
जातमात्रस्य बालस्य तेजसातीव भास्वता ॥
निस्तेजसोऽभवन्सर्वे निशीथेऽपि प्रदीपकाः ॥ ४६ ॥
दीप्त्यातीवाबभौ बालो यथा भास्वान्नभस्थले ॥
दृष्ट्वा तं सुभगं बालं ननन्देन्दुमती सती ॥ ४७ ॥
आयूराजापि तं श्रुत्वा पुत्रोद्भवमहोत्सवम् ॥
स्नात्वा तत्रैव सोऽपश्यद्दत्तसेवाफलं महत् ॥ ४८ ॥
हेम्ना पितॄन्समभ्यर्च्य स्वस्तिवाचनपूर्वकम् ॥
सहिरण्यनिकाषाज्यमधुनी विधिवन्नृपः ॥ ४९ ॥

मास्यतिक्रान्ते । भो अश्विनौ, मया कृताह्वानं श्रुतं सप्तवध्रिं गर्भे मां मोचयेति प्रार्थयमानं यथासुखं मुञ्चतम् । 'श्रुतं मे अश्विना हवं सप्तवध्रिं च मुञ्चतम् । भीताय नाधमानाय ऋषये सप्तवध्रये' इति मन्त्रात् ॥ ४३ ॥ ॥ ४४ ॥ उच्चस्थेऽनस्तंगते ग्रहपञ्चके ॥ ४५ ॥ ४६ ॥ ४७ ॥ महत्त्वं श्रुत्योक्तं 'ज्योतिर्ह पुत्रः परमे व्योमन्' 'पिता पुत्रस्य जातस्य' इत्यादि ॥ ४८ ॥ 'जातकर्मणि नान्नेन' इति निषेधादामान्नेन । 'कुमारं जातं पुरान्यैरालम्भात्सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत्' इत्युक्तेः ॥ ४९ ॥

प्राशयित्वेन्दुवक्त्रं तं दृष्ट्वाऽवघ्राय मूर्ध्नि सः ॥
मन्त्रवन्मेन आत्मानमपर्णं क्षेमभाजनम् ॥ ५० ॥
स ददौ द्विजमुख्येभ्यो गोभूवस्त्रधनादिकम् ॥
इतरेभ्योऽपि चार्थिभ्योऽवदन्माहात्म्यमीशितुः ॥ ५१ ॥
हुण्डो दृष्ट्वापि सकलं तेजीयांसं च बालकम् ॥
कार्यसिध्द्यै भगवतीं मोहिनीं शरणं ययौ ॥ ५२ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां उपासनाकाण्डे षष्ठाष्टके प्रथमोऽध्यायः ॥ १ ॥

अपर्णं पित्रृणमुक्तम् ॥ ५० ॥ नालच्छेदनात्पूर्वं दानादेर्नाशौचं च ॥ ५१ ॥ ५२ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे षष्ठाष्टके टीकायां प्रथमोऽध्यायः ॥ १ ॥

॥ इति षष्ठाष्टके प्रथमोऽध्यायः ॥ ६।१ ॥

---

## हुण्डेन हन्तुं नीतस्य बालकस्य वसिष्ठाश्रमे गुप्तिर्नाम षष्ठाष्टके द्वितीयोऽध्यायः ॥ ६ । २ ॥

हरि ॐ ॥ वयमु त्वा महामाये देवीं श्रेष्ठां मनामहे ॥
मोहिन्यै ते नमो नोऽद्य दयस्वेष्टं प्रसाधय ॥ १ ॥
एवं तेन स्तुता देवी हृष्टाभूत्कार्यसिद्धिदा ॥
काचिदत्रान्तरेऽरिष्टाद्धात्र्येका बहिरागता ॥ २ ॥
हुण्डासुरोऽपि मायावी तस्या अङ्गं प्रविश्य सः ॥
सिध्द्या समाययौ तत्र निर्भयं सूतिकागृहम् ॥ ३ ॥
दत्तात्रेयोऽप्यधीशस्तज्ज्ञात्वापि निजलीलया ॥
तूष्णीमास प्रभुरपि मोहिनीं बहु मानयन् ॥ ४ ॥
यन्नामस्मरणान्माया सकार्यापि विलीयते ॥
तस्यातिमायिकस्याग्रे मायिदैत्यस्य का कथा ॥ ५ ॥
गत्वा हुण्डोऽथ दास्यङ्गसंस्थोऽरिष्टं सुबालकम् ॥
नेतुकामो जजापेमां लघुप्रस्वापिनीं विधेः ॥ ६ ॥

॥ श्रीगणेशाय नमः ॥
हुण्डेन हन्तुं बालो द्विचत्वारिंशे हृतः स तु ॥
दैवाद्वासिष्ठसदने गुप्तो गत इतीर्यते ॥ १ ॥

हुण्डो मोहिनीं स्तौति ॥ १ ॥ अरिष्टात्सूतिकागृहात् ॥ २ ॥ परकायप्रवेशसिद्ध्या ॥ ३ ॥ ४ ॥ अतिमायिकस्य श्रीदत्तस्याग्रे ॥ ५ ॥ लघु क्षिप्रं प्रस्वापयतीति तन्नामिका ॥ ६ ॥ स्वप्नाधिकरणे कण्ठे । 'स्वप्नः

देवि स्वप्नाधिकरण एतान्निष्वापय द्रुतम् ॥
आसूर्यं मृतवत्प्रातः पूर्ववच्च प्रबोधय ॥ ७ ॥
प्रस्वापिन्यां प्रयुक्तायामेवं सर्वेऽपि मोहिताः ॥
निद्रागृहीतसंज्ञा नो विदुर्दैत्यस्य चेष्टितम् ॥ ८ ॥
तत्र सुप्तेषु सर्वेषु देव्या संमोहितेष्वथ ॥
प्रादुर्भूय स्वरूपेण दैत्यो बालं जहार सः ॥ ९ ॥
विहायसाऽऽशु पक्षीव काञ्चनाख्यं पुरं स्वकम् ॥
गत्वा प्रियां समाहूय बालं दत्वाऽसुरोवदत् ॥ १० ॥
प्रिये समक्षमेव त्वं घातयित्वार्भमप्यमुम् ॥
तन्मांसं प्रातराशाय सास्रं मे देहि पाचितम् ॥ ११ ॥
सा प्राह नाथ पोतोऽयं साहसं नात्र युज्यते ॥
भवान्कार्यं कुतो धत्ते शास्त्रगर्ह्यं तदीदृशम् ॥ १२ ॥
दैत्योऽवदत्प्रिये देवैर्निर्मितोऽयं ममान्तकः ॥
महाकष्टेन मे लब्धः कर्तव्यात्र कथं दया ॥ १३ ॥
संरक्ष्योऽयं त्रिवर्गार्थं प्रेयानात्मा सुदुर्लभः ॥
नष्टेऽस्मिन्न कुतः स्वार्थः श्रुतं गुरुमतं न किम् ॥ १४ ॥

स्वप्नाधिकरणे' इति श्रुतेः ॥ ७ ॥ निद्रया गृहीता संज्ञा ज्ञानं येषाम् ॥ ८ ॥ ९ ॥ विहायसाऽऽकाशमार्गेण ॥ १० ॥ अक्ष्णोः समीपं समक्षं 'अव्ययं विभक्तिसमीप—'इत्यव्ययीभावः । सास्रं सरक्तम् ॥ ११ ॥ पोतः शिशुः ॥ १२ ॥ १३ ॥ स्वार्थो विषयभोगरूपः । गुरोर्विरोचनस्य ॥ १४ ॥

तथेत्युक्त्वाऽसुरस्त्री सा बालमादाय निर्दयम् ॥
प्राहैकलाख्यां सैरन्ध्रीं हत्वैनमविचारतः ॥ १५ ॥

पक्त्वोत्तमं प्रदेहि त्वं प्रियभोजनहेतवे ॥
इत्युक्त्वाऽदाच्छिशुं सापि सूदहस्ते तथा ददौ ॥ १६ ॥

यस्य यो विहितो मृत्युः स केनापि न वार्यते ॥
इत्यज्ञात्वाऽध्रुवात्मेच्छोर्गुरुशास्त्रेण किं भवेत् ॥ १७ ॥

विश्वासेनैव हुण्डस्य प्रिया दत्त्वार्भकं स्वयम् ॥
जाता कार्यान्तरासक्ता सैरन्ध्र्येकात्र संस्थिता ॥ १८ ॥

दिव्यं सद्योजातमपि दृष्ट्वा बालं स निर्दयः ॥
चिच्छेद सुशितास्त्रेण तथापि स न विव्यथे ॥ १९ ॥

हठाद्द्विवारं भूयोऽपि बालेऽस्त्रं बल्लवोऽत्यजत् ॥
श्रीदत्तचक्रगुप्तत्वाच्छस्त्रं भग्नं स नो हतः ॥ २० ॥

न पफालेषदप्यस्त्रं तं हसन्तं च बालकम् ॥
सैरन्ध्री प्रेक्ष्य सूदश्च नृशंसावपि विस्मितौ ॥ २१ ॥

भाविबालसुदैवेन शान्ता क्रूराऽपि सैकला ॥
सूदं प्राह त्वया बालो न वध्योऽयं महामते ॥ २२ ॥

सैरन्ध्रीभावा नियमेन परवेश्मस्था । सूदः सूपकारः ॥ १५ ॥ ॥ १६ ॥ अध्रुवात्मेच्छोर्नश्वरदेहेच्छोः ॥ १७ ॥ अत्र विशसनस्थाने ॥१८॥ सुतीक्ष्णशस्त्रेण । 'व्यथ भयसंचलनयोः' इति धातोर्न चचाल न बिभेति स्म वा ॥१९॥२०॥ नृशंसौ क्रूरौ ॥२१॥ एकला सैरन्ध्री ॥२२॥

रत्नोपमोऽयं तेजस्वी महापुरुषलक्षणः ॥
देवगुप्तोऽस्त्यमुं बालं को हन्यात्पामरोऽधमः ॥ २३ ॥

सूदोऽप्याह न सैरन्ध्रि हन्म्येनं दैवरक्षितम् ॥
तेजस्वी देववद्बालो राजचिह्नान्वितः शुभः ॥ २४ ॥

पशुघ्नस्यापि चित्ते तु यं दृष्ट्वा जायते दया ॥
दुरात्मा घातयत्येनं कुतोऽयं दानवाधमः ॥ २५ ॥

येषां प्रदक्षिणं दैवं तेषां कर्मैव रक्षकम् ॥
को हन्याद्देवगुप्तांस्तान्येषामिन्द्रो युवा सखा ॥ २६ ॥

आपत्स्था अपि मुच्यन्ते दुर्गेभ्योऽपि नदीजवात् ॥
को हन्यात्तान्विषाग्न्यस्त्रैर्येषामिन्द्रो युवा सखा ॥ २७॥

इत्युक्त्वाऽस्त्रं स तत्याज भाविबालविधीरितः ॥
एकलाऽप्यूच आवाभ्यां नेतव्यः क्वाप्ययं शिशुः ॥२८॥

अथ तौ तु कृपाविष्टौ तदैवादाय तं द्रुतम् ॥
द्वाराद्बहिर्निधायर्षेर्वसिष्ठस्यागतौ पुनः ॥ २९ ॥

देवगुप्तो देवरक्षितः ॥ २३ ॥ २४ ॥ २५ ॥ इन्द्र ईश्वरः ।
युवाऽविकारः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

मृगशावं निहत्यैकं पक्त्वा सूदः सुसंस्कृतम् ॥
तन्मांसं दैत्यराजाय धूर्तो विश्वासयन्ददौ ॥ ३० ॥
तदाऽसुरो हृष्टतरो भूत्वा मूढस्तदामिषम् ॥
भुक्त्वाऽऽत्मानं कुधीर्मेने कृतकृत्यं हतान्तकम् ॥३१॥
ततः प्रभाते विमले वसिष्ठो ज्ञानिनां वरः ॥
बहिरेत्यार्भकं द्वारि ददर्श मुनिवृन्दयुक् ॥ ३२ ॥
दिव्यलक्षणसंपन्नं पूर्णचन्द्रनिभाननम् ॥
विशाललोचनं सौम्यं राजलक्षणलक्षितम् ॥ ३३ ॥
सद्योजातमिवाभातं देवगर्भनिभं शुभम् ॥
दृष्ट्वा विस्मयमापन्न उवाचारुन्धतीपतिः ॥ ३४ ॥
मुनयः पश्यतात्रैष बालः कस्यास्ति सुन्दरः ॥
रात्रौ केन समानीय स्थापितस्तं न विद्महे ॥ ३५ ॥
प्रसूः का वाऽस्य सुभगा जनकः कोऽस्य भाग्यवान् ॥
बालरत्नं ययोरीदृग्महतस्तपसः फलम् ॥ ३६ ॥
मुनयस्तं शिशुं दृष्ट्वा विस्मिता अपि तेऽभवन् ॥
वसिष्ठस्तु तदा ध्यात्वा योगी प्राह त्रिकालवित् ॥३७॥
आयुषः सोमवंश्यस्य दत्तसेवाफलोद्भवः ॥
श्रीदत्तगुप्तः पुत्रोऽयमायुष्मान्राजलक्षणः ॥ ३८ ॥

शावं पोतं । धूर्तो वञ्चकः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ सद्योऽधुनैव जातमिव ॥ ३४ ॥ भो मुनयः ॥ ३५ ॥ प्रसूर्माता ॥ ३६ ॥ ॥ ३७ ॥ प्रशस्तमायुर्जीवितकालोऽस्यासौ आयुष्मान् ॥ ३८ ॥ ३९ ॥

स्वर्भानुपुत्रीन्दुमतीगर्भरत्नं न संशयः ॥
हुण्डेन स्वान्तकं मत्वा हृतो दैवादिहागतः ॥ ३९ ॥

मैत्रावरुणिरित्युक्त्वा ज्ञानीशोऽपि विमोहितः ॥
कराभ्यां दययाऽऽदाय स्वाश्रमं तमनीनयत् ॥ ४० ॥

वसिष्ठ आह श्रीदत्तप्रसादादमरान्नरान् ॥
शीघ्रं विपद उद्धृत्य सम्राड्जिष्णुर्भविष्यति ॥ ४१ ॥

इति ब्रुवति मौनीशे पुष्पाणि ववृषुः सुराः ॥
ननृतुश्चाप्सरोवर्गा गन्धर्वाः सुस्वरं जगुः ॥ ४२ ॥

ऋषयोऽपि तदा हृष्टाः कुमारायाशिषो ददुः ॥
स्वांशेनेदं ततं येन स त्वमीशात्रिनन्दन ॥ ४३ ॥

मुञ्च मुञ्च विपद्भ्योऽमुं रक्ष रक्ष हरे शिशुम् ॥
प्रातर्मध्यंदिने सायं निशि चाप्यव सर्वतः ॥ ४४ ॥

दुर्दृग्गोधूलिभूतार्तिगृहमातृग्रहादिकान् ॥
छिन्धि छिन्ध्यखिलारिष्टं कमण्डल्वरिशूलधृक् ॥ ४५ ॥

त्राहि त्राहि विभो नित्यं त्वद्रक्षालंकृतं शिशुम् ॥
सुप्तं स्थितं चोपविष्टं गच्छन्तं क्वापि सर्वतः ॥ ४६ ॥

मित्रश्च वरुणश्च 'देवताद्वन्द्वेच' इत्यानङ् । तयोरयम् । 'उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधिजातः । सत्रेह जात' इत्यादिश्रुतेः । नयतेरकथितत्वाद्द्विकर्मकत्वम् ॥४०॥४१॥४२॥ स्वांशेनेति चतुर्भिराशिषः । ततं व्याप्तम् ॥४३॥४४॥ दुर्दृक् दुष्टदृष्टिः । अरिः सुदर्शनम् ॥४५॥४६॥

भो देवावश्विनावेष कुमारो वामनामयः ॥
दीर्घायुरस्तु सततं सहओजोबलान्वितः ॥ ४७ ॥
नामकर्माथ विधिवद्वसिष्ठस्तस्य चाकरोत् ॥
नहनं बन्धनं योऽरेः कर्ताऽसौ निजशक्तितः ॥ ४८ ॥
लोके नहुष इत्येवं लोकख्यातो भविष्यति ॥
न क्वापि बालभावैस्ते दूषितं यन्नराधिप ॥ ४९ ॥
तस्मान्नहुषनाम्ने ते स्वस्त्यस्त्वमरपूजित ॥
कृत्वेत्थं जातकर्माभं वात्सल्येन जुगोप सः ॥ ५० ॥
अरुन्धती सती साऽपि बालमौरसवत्सदा ॥
ररक्ष दैवनाथं तं वात्सल्याल्लालनादिना ॥ ५१ ॥
अरुन्धतीं वसिष्ठं च पितरौ मन्यते स्म सः ॥
दिने दिने स ववृधे पोषितो बालचन्द्रवत् ॥ ५२ ॥
प्राप्तेऽथैकादशे वर्षे यथाविध्युपनीय तम् ॥
संस्कृतं वर्णिनं दान्तं सम्यक् शिक्षितवान्मुनिः ॥ ५३ ॥
वेदमग्राहयत्सार्थं साङ्गं च सपदक्रमम् ॥
विद्याः सर्वाः कलाश्चापि शास्त्राणि च यथार्थतः ॥५४॥

सोमकाय साहदेव्याय वामदेवदत्ताशिषमर्थतः पठति । वां युवयोः । प्राणेन्द्रियशरीरबलैर्युक्तोऽस्त्विति सर्वत्र योज्यम् । 'एष वां देवावश्विनौ' इति लिङ्गात् ॥ ४७ ॥ 'नह बन्धने' इत्यन्वर्थकं साधयति ॥ ४८ ॥ ४९ ॥ ॥ ५० ॥ ५१ ॥ ५२ ॥ क्षत्रियत्वादेकादशेऽब्दे ॥ ५३ ॥ साङ्गं शिक्षादिसहितम् ॥ ५४ ॥

सरहस्यं धनुर्वेदं सविधानं विशेषतः ॥
ज्ञानशास्त्रं राजनीतिं सेतिहासपुराणकम् ॥ ५५ ॥
नहुषोऽपि विनीतात्मा शिष्यत्वेन यथाविधि ॥
सिषेवे श्रीगुरुं भक्त्या मनोवाक्कायकर्मभिः ॥ ५६ ॥
इत्थं सर्वगुणापूर्णो नहुषो गतमत्सरः ॥
श्रीवसिष्ठप्रसादेन सर्वा विद्यास्ततार सः ॥ ५७ ॥
सोमवंश्योऽपि नहुष एवं श्रीदत्तरक्षितः ॥
संस्कारांश्चाददे विद्याः सूर्यवंश्यगुरोर्विधेः ॥ ५८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्ड-
मण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे
षष्ठाष्टके द्वितीयोऽध्यायः ॥ २ ॥

रहस्यं प्रयोगोपसंहारादि । ज्ञानमौपनिषदम् ॥५५॥५६॥५७॥ आददे जग्राह ॥५८॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे षष्ठाष्टके द्वितीयोऽध्यायः ॥ २ ॥

इति हुण्डेन हन्तुं नीतस्य बालकस्य वसिष्ठाश्रमे गुप्तिर्नाम
षष्ठा० द्विती० ॥ ६।२ ॥

पुत्रहरणेन दुःखितयोरिन्दुमतीनृपयोर्नारदेन
शोकहरणं नाम षष्ठाष्टके तृतीयोऽध्यायः ॥ ६।३ ॥

प्रकृतात्याह्यघादित्थं सकृद्ये प्रार्थयन्त्यपि ॥
तान्पात्यतो नित्ययुक्तभक्तोपेक्षा कथं हरेः ॥ १ ॥
नीते हुण्डासुरेणार्भे प्रातःकाल उपागते ॥
प्रस्वापिन्यां गतायां च जनः सुप्तोत्थितोऽभवत् ॥२॥
वीतनिद्रेन्दुमत्यर्भमपश्यन्ती समन्ततः ॥
विललाप तदा तन्वी सा हाहाकारपूर्वकम् ॥ ३ ॥
केन मे सर्वलक्ष्माढ्यः सुतो देवसुतोपमः ॥
विधे पापात्मना नीतो हन्त हन्त करोमि किम् ॥ ४ ॥
दुष्करैर्नियमैर्यत्नैस्तपोभिर्दारुणैरुत ॥
कष्टेनैवोपलब्धोऽसौ हृतः केन दुरात्मना ॥ ५ ॥
दुरगम्यसुमाहात्म्यं यस्य तेन प्रसादतः ॥
दत्तो दत्तेन गुप्तश्च कथं केन हृतस्त्वितः ॥ ६ ॥
हा पुत्र वत्स हा बाल हा गुणाकर सुन्दर ॥
क्वासि केन कथं तात नीतोऽसि वद नन्दन ॥ ७ ॥

॥ श्रीगणेशाय नमः ॥

सस्त्रीकस्य नृपस्य त्रिचत्वारिंशे जगद्गुरुः ॥
जहार नारदद्वारा शोकं पुत्रसमुद्भवम् ॥ १ ॥

प्रकृतादुःखाद्रक्षेत्येकवारम् ॥ १ ॥ प्रस्वापिन्यां मन्त्रशक्त्याम् ॥ २ ॥ ॥ ३ ॥ ॥ ४ ॥ ॥ ५ ॥ इतः स्थानात् ॥ ६ ॥ ॥ ७ ॥

धिङ्मां तमोगुणाविष्टां यतो निद्रावशान्मया ॥
वियोजितोऽसि राजेन्द्र सोमवंशसुभूषण ॥ ८ ॥

रे दोहदप्रभृत्यद्य यावद्यद्दर्शितं सुखम् ॥
स्वप्नवत्तत्कथं जातं भारभृत्त्वं कथं मृषा ॥ ९ ॥

किं करोमि क्व याम्यद्य राजन्तं राजलक्षणैः ॥
त्वां विनास्मि मृतप्राया त्वं प्राणो मेऽसि दिव्यदृक्॥१०॥

विलीयसे क्व हा पुत्र पयो मे स्रवते वृथा ॥
नष्टोऽसि जातमात्रस्त्वं लालनाद्यपि नो कृतम् ॥ ११ ॥

हन्त हन्त कथं भग्नं दैवं मे बत हा विधे ॥
जातमात्रोऽपि नष्टोऽर्भो मायेयं कस्य दुर्धरा ॥ १२ ॥

पूर्वकर्मविपाकोऽयमुदितो मे दुरात्मनः ॥
कृतं न्यासापहरणं मया दुष्टधिया खलु ॥ १३ ॥

किंवान्यस्य हृतो बालो रत्नान्यपहृतानि वा ॥
तेन मे पुत्ररत्नं हि दिव्यं नष्टं न संशयः ॥ १४ ॥

विरहितोऽसि ॥ ८ ॥ नवमासं भारवहनत्वं कथं मृषा अपितु नैवं स्वप्नः ॥ ९ ॥ १० ॥ विलीयसे लीनो भूत्वा क्व तिष्ठसि ॥ ११ ॥ हन्त बतेति खेदे ॥ १२ ॥ विपाकः परिणामः । विश्वासेन द्रव्यादिस्थापनं न्यासस्तस्यापहरणम् ॥ १३ ॥ १४ ॥

भुञ्जानस्याग्रतो मेऽन्नं हृतं वा पूर्वजन्मनि ॥
मित्रद्रोहः कृतो वापि सांप्रतं तत्फलं त्विदम् ॥ १५ ॥
एवं सा पतिता भूमौ कदलीवानिलाहता ॥
शोकेन महता राज्ञी मूर्च्छिताभून्मृतोपमा ॥ १६ ॥
राज्याप्यप्रियमाकर्ण्य प्राप्यारिष्टं ददर्श ताम् ॥
निश्वासान्मुञ्चमानां गां वत्सहीनामिव प्रियाम् ॥ १७ ॥
स्वयमप्युरुशोकेन दुःखेन महता वृतः ॥
भूत्वाऽतिविह्वलो दीनो विलपन्निदमब्रवीत् ॥ १८ ॥
धिक् प्राकारान्सपरिखान् धिक् सौधान्सारराार्गलान् ॥
धिग्बलं मन्त्रजालं च कोऽपीहासीन्न यत्प्रभुः ॥ १९ ॥
इह धर्मफलं नास्ति नास्ति वै तपसः फलम् ॥
नास्ति दानफलं नष्टे सुपुत्रे निश्चिनोम्यदः ॥ २० ॥
ज्ञात्वा मेऽप्यनपत्यत्वं जन्मयोगोत्थमुत्कटम् ॥
मौर्ख्यात्तप्तं तपो व्यर्थं किं जातं तेन मेऽधुना ॥ २१ ॥
दत्तात्रेयप्रसादस्य श्रुतं मे फलमक्षयम् ॥
लब्धोऽपि सुगुणः पुत्रस्तत्र विघ्नं कथं त्विदम् ॥ २२ ॥

१५ ॥ १६ ॥ १७ ॥ १८ ॥ जलपूर्णपरिखासहितान्प्राकारान्वरणान् । सौधान् राजसदनानि । साररान् सकपाटान् । प्रभुः समर्थः ॥ १९ ॥ २० ॥ बृहस्पतेः पञ्चमेशस्य लग्नपञ्चमनवमायानां च षष्ठाष्टद्वादशाश्रयात् सूचितं उत्कटं शुभयोगाभावादपरिहार्यं जन्मयोगोत्थानपत्यत्वम् । मे मया ॥ २१ ॥ २२ ॥

पुत्र आत्मा स नष्टोऽतो नष्टोऽद्यार्तोऽस्मि भो हरे ॥
दीनवत्सल मां पाहि श्रीदत्तानन्यमातुरम् ॥ २३ ॥
इत्यज्ञातात्मतत्त्वौ तौ खिन्नौ गौणात्मशोकतः ॥
चिन्ताव्याकुलितात्मानौ स्थितौ दत्तार्पितान्तरौ ॥२४॥
ईश्वरे योऽनुरक्तोऽस्मिन्नार्तोऽर्थी वापरोऽपि सः ॥
न नश्यति स्वयं तस्य समुद्धर्तास्ति हि प्रभुः ॥ २५ ॥
प्राक्कर्मवासनादार्ढ्याच्च्यवन्तमपि तत्त्वतः ॥
स्वाविष्टचित्तमचिरात्ततोऽप्युद्धरतीश्वरः ॥२६॥
इत्थं भक्तेः प्रभावोऽयं यद्भक्तो नैव नश्यति ॥
दुराचारोपि चेत्पूर्वं भक्त्या शुद्धः शमं व्रजेत् ॥ २७ ॥
राजाप्यर्थीशसेवाप्तस्वार्थोऽप्यार्तोऽभवद्विधेः ॥
तद्वृद्धभक्तिमुद्धर्तुं नारदायैरयत्प्रभुः ॥ २८ ॥

पुत्र एवात्मा। 'आत्मा वै पुत्रनामासि' इति श्रुतेः। त्वां विना न विद्यतेऽन्य आश्रयो यस्य तमनन्यम् ॥ २३ ॥ अज्ञातमात्मनः प्रतीचस्तत्त्वं याभ्याम्। यथा लोके सिंहस्त्रिविधः पञ्चास्यादिलक्षणो मुख्यः क्रौर्यादिलक्ष्यो देवदत्तो गौणः। धावत्क्रोष्टरि सिंहोऽयमिति भ्रमो मिथ्याभूतः। एवं कूटस्थो मुख्यः 'सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः' इति प्रतिनिधीभूतः पुत्रो गौणः। देहो मिथ्यात्मेति विवेकः ॥२४॥ अपरो जिज्ञासुः 'न मे भक्तः प्रणश्यति' 'तेषामहं समुद्धर्ता' इति स्मृतेः ॥ २५ ॥२६॥ पूर्वं दुराचारोऽपि भक्त्या शुद्धः शान्तिं व्रजेत्। 'अपि चेत्सुदुराचारः' इति स्मृतेः ॥२७॥ राजा पूर्वं पुत्ररूपार्थार्थी सन्नीश्वरप्रसादात्प्राप्तार्थोऽपि दैवादार्तोऽभूत्। तस्माद्वृद्धा भक्तिर्यस्य तं उत् ऊर्ध्वं हर्तुं जिज्ञासुं कर्तुं नारदाय प्रैरयत् ॥ २८ ॥

रणद्वीणो हरिं गायन्नारदः प्राप तत्र तम् ॥
प्रत्युद्गत्याप्यरं राजाभ्यर्च्य दुःखं न्यवेदयत् ॥ २९ ॥
नारदोऽपि प्रहस्याह सकृद्यत्स्मरणान्नृप ॥
सद्योऽस्त्यखिलदुःखान्तस्तद्दासस्त्वं कुतोऽन्यथा ॥३०॥
निर्गुणोऽप्यत्रिजोऽभूद्यो भक्तगुप्त्यै तमीश्वरम् ॥
शतवर्षं भजन्राजन् शोकस्यान्तं न गच्छसि ॥ ३१ ॥
किं नश्वरेण पुत्रेण गृहेणाङ्गेन वा तव ॥
लोकः सुखोऽस्ति ह्यात्मा दत्तोऽमुं शरणं व्रज ॥ ३२ ॥
यं तु शोचसि हुण्डेन हन्तुं नीतोऽपि दैवतः ॥
कस्यचिन्मुनिवर्यस्य गृहेऽस्ति स सुरक्षितः ॥ ३३ ॥

संमुखं गत्वा ॥ २९ ॥ ३० ॥ गुप्त्यै रक्षणाय ॥ ३१ ॥ पुत्रस्त्वजायमानोऽपि पितरौ क्लेशयेत् किं पुनर्जातः । यदुक्तम्—'अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् ॥ लब्धोऽपि गर्भपातेन प्रसवेन च बाधते ॥ जातस्य ग्रहरोगादिः कुमारस्य च मूर्खता ॥ उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पण्डिते ॥ यूनश्च पारदारादि दारिद्र्यं च कुटुम्बिनः ॥ पित्रोर्दुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा ॥ एवं विविच्य पुत्रादौ प्रीतिं त्यक्त्वा निजात्मनि ॥ निश्चित्य परमां प्रीतिं वीक्षेतान्तमहर्निशम्' इति । ईदृशशोकदेन किम् । तथा विवेकधैर्यादिपुरुषसारहरेण गृहेण गृहिण्या वापि 'गृहिणी गृहमुच्यते' 'बाह्येऽस्थिस्नायुमज्जापलरुधिरवसाचर्ममेदोयुगन्तर्विण्मूत्रश्लेष्मपूर्णं स्वपरवपुः' इत्युक्तेरङ्गेन अङ्गं शरीरम् । अङ्गान्यस्येत्यङ्गं अर्श आदित्वादच् । मनुः—'अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपनम् । चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥ जराशोकसमाविष्टं रोगायतनमातुरम् ॥ रजस्वलमनित्यं च भूतावासमिमं त्यजेत्' इति ॥ भारतीतीर्थश्च—'मांसपुत्तलिका-

विद्वान्हत्वाऽसुरं सार्धं पत्न्याऽऽगत्याशु शत्रुहा ॥
भुक्त्वेह राज्यमैन्द्रं च पदं मर्त्योऽपि मोक्ष्यति ॥३४॥
इत्युक्त्वा नारदः स्वर्गं ययौ राजापि हर्षितः ॥
गत्वाऽरिष्टं नारदोक्तं मुदा पत्न्यै शशंस सः ॥ ३५ ॥
देवर्ष्युक्तिः प्रिये सत्या वरः सत्योऽपि चेशितुः ॥
प्रसादो नान्यथा तस्माच्छोकं जह्यङ्गशोषणम् ॥ ३६ ॥
इन्दुमत्यपि तच्छ्रुत्वा मृतसंजीवनोपमम् ॥
स्मृत्वाऽऽत्रेयं भक्तिवृद्धप्रेमबन्धाऽस्तुवन्नता ॥ ३७ ॥
त्वं परः पूरुषो वेधाः परात्माऽधोक्षजो विभुः ॥
गुणात्माहंयुसंसारकारणोऽप्यस्यकारणः ॥ ३८ ॥

यास्तु यन्त्रलोलेऽङ्गपञ्जरे ॥ स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियः किमिव शोभनम्' इति । लोक्यते परप्रेमास्पदत्वेनानुभूयत इति लोकः । सुखयतीति सुखः सः आत्मा परानन्दरूपः परप्रेमास्पदत्वात् । यः परानन्दो न स निरतिशयप्रेमविषयोऽपि न । यथा घटादिरेवं केवलव्यतिरेकी । स दत्तोऽमुम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ अरिष्टं सूतिकागृहम् ॥ ३५ ॥ ३६ ॥ ॥३७॥ स्तवनमाह । वेधा जगन्निर्मापकः । किं ब्रह्मात्मा गुणात्मा प्रधानं । न । चेतनः पुरुषः । 'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः' इति श्रुत्युक्तः । देहेन्द्रियबुद्धिरूपपुरामन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य सर्वव्यवहारास्पदो यः स पुरुषः स एव पूरुषः । किं जीवः । न । परः । किं कूटस्थचैतन्याख्यासङ्गधीस्थजीवः । न । अधोक्षजः । अत एव विभुः सर्वव्यापी परमात्मा । स्वयं कारणरहितोऽपि सन्नहंकारवज्जीवानां जन्मादिकारणो विवर्तन्यायेन ॥ ३८ ॥

शुद्धः सच्चित्सुखात्मापि त्रीशो धीरोऽपि केवलः ॥
स्वभक्तिवृध्द्यै जातोपि माययेहात्रिनन्दनः ॥ ३९ ॥
निष्कामाह्लादको यो द्राक् स्मृत्योद्धर्ता भवांबुधेः ॥
नत्यापोऽभीष्टदो दत्त शरण्यं त्वार्तिहं भजे ॥ ४० ॥
योऽदाद्दिव्यं सुतं तं स सर्वदा पातु सर्वतः ॥
अनन्यायाः स विश्वात्मा भगवान्मेऽस्तु सद्गतिः ॥४१॥
आयूराजाप्युवाचेश पुरुषाध्यक्ष सद्गुरो ॥
दत्तात्रेय जगन्नाथ त्राहि मां भवसंकटात् ॥ ४२ ॥
सर्वसौख्यनिधानं यद्देहिनां दुर्लभं ध्रुवम् ॥
नय मां त्वत्पदं तद्धो न काङ्क्षेऽन्यत्किमप्यज ॥४३॥
एवं तौ दंपती स्तुत्वा स्मृत्वा माहात्म्यमीशितुः ॥
त्यक्त्वा चिन्तां शुचं चाशु सुखमासतुरन्वहम् ॥४४॥
वसिष्ठोऽप्येकदाऽऽहूय नहुषं तत्र तं जगौ ॥
क्षत्रोऽसि त्वं वने हिंस्रान्निहन्तुं मृगयां चर ॥ ४५ ॥
तच्छ्रुत्वा स तथेत्युक्त्वा धन्वी तूणी ययौ वनम् ॥
कृत्वा गुरूक्तवद्वाणीं शुश्रावाऽभ्रसमीरिताम् ॥ ४६ ॥

ननु तत्संबन्धात्तद्गुणादिलिप्तः । न । शुद्धः केवलः सच्चिदानन्दः । तर्हि कथं साकारताऽत आह—भक्तीति ॥ ३९ ॥ निष्कामा मुक्ताः । मुमुक्षूणामुद्धर्ता । सकामानां नत्या आप्तुं योग्यः ॥ ४० ॥ पुत्रार्थं स्तौषि । न । स त्वं मे सती निर्बाधा गतिर्भव ॥ ४१ ॥ जगन्नाथस्येशस्य सद्गुरोर्भवसंकटात्तारकत्वमीषत्करम् । 'एतस्यैवानन्दस्य' इति श्रुतेः सर्वसौख्यनिधानं । वैराग्यं विना न नीयत इत्यत आह—नेति ॥ ४२ ॥ ४३ ॥ ॥ ४४ ॥ क्षतो दुःखात्त्रायत इति क्षत्रः । हिंस्रान्व्याघ्रादीन् ॥ ४५ ॥ आकाशवाणीं श्रुतवान् ॥ ४६ ॥

आयुःसुतोऽयं नहुष इन्दुमत्यात्मजो विधेः ॥
मात्रा वियोजितो बाल्ये वसिष्ठेनाभिपालितः ॥ ४७ ॥
दुःखितावस्य तातौ च शिवजाऽशोकसुन्दरी ॥
एतमुद्वाहितुं तेपे हुण्डकारास्थिता तपः ॥ ४८ ॥
श्रुत्वैवं विस्मितोऽभ्येत्य गुरुं नत्वा शशंस तत् ॥
वसिष्ठोऽप्यादितः सर्वं कथयित्वा तमब्रवीत् ॥ ४९ ॥
वीरायुष्मन्महाबाहो धनुर्विद्याविशारद ॥
दत्तात्रेयाभिगुप्त त्वं गत्वा हुण्डासुरं जहि ॥ ५० ॥।

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां श्रीवासुदेव्यां उपासनाकाण्डे षष्ठाष्टके तृतीयोऽध्यायः ॥ ३ ॥

॥ ४७ ॥ तपस्तपतीति शेषः ॥ ४८ ॥ ४९ ॥ वीरादिविशेषणानि जयद्योतकानि ॥ ५० ॥ इति श्रीदत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां उपासनाकाण्डे षष्ठाष्टके टीकायां तृतीयोऽध्यायः ॥ ३ ॥

पुत्रहरणेन दुःखितयोरिन्दुमतीनृपयो० शोकहरणं नाम षष्ठ० तृती० ॥ ६।३ ॥

---

## नहुषेण हुण्डासुरवधपूर्वं अशोकसुन्दरीवरणं नाम षष्ठाष्टके चतुर्थोऽध्यायः ॥ ६।४ ॥

हरिः ॐ॥ त्वावतः पाहिनः शिष्यानित्यङ्घ्र्योः पतितं मुनिः॥
उत्थाप्यालिङ्ग्य नहुषं मूर्ध्न्यवघ्राय सोऽब्रवीत् ॥१॥
ब्राह्मणाः पितरो देवा दुरितात्पान्तु रोदसी ॥
पूषा च मा प्रभवतु दुःशंसः सर्वथा जय ॥ २ ॥
इति प्रस्थापयामास लब्धाशीः सोऽपि तं गुरुम् ॥
भक्त्या प्रणम्य श्रीदत्तं संस्मृत्य नहुषोऽब्रवीत् ॥३॥
यो निषेकप्रभृत्यद्य यावत्स्नेहाद्ररक्ष माम् ॥
स चात्रिनन्दनो युद्धे जयं दत्त्वाऽवतु प्रभुः ॥ ४ ॥
सदा सुगोऽस्तु पितुमान्पन्था माऽवन्तु देवताः ॥
विजये सुभगो मेऽस्तु पुनश्चागमनं सुखात् ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥
हत्वा हुण्डं स तु चतुश्चत्वारिंशे सुरान्वितः ॥
वृत्वा गुर्वाज्ञयाऽशोकसुन्दरीं पितरौ ययौ ॥ १ ॥

तवेमे त्वावन्तस्तान् । अङ्घ्र्योः पादयोः ॥ १ ॥ रोदसी द्यावापृथिव्यौ । दुःशंसः शत्रुकृतशापादिः त्वां मा प्रभवतु । 'ब्राह्मणासः पितरः' इति संग्रामाशिषः ॥ २ ॥ प्रस्थापयामास गमयामास ॥ ३ ॥ निषेको गर्भाधानम् ॥ ४ ॥ प्रस्थानार्थं सदा सुगः इत्यर्थतः पठति । सुगः सुखेन गन्तुं शक्यः । पितुमानन्नयुक्तः ॥ ५ ॥

यं युध्यमाना अवस आह्वयन्तीन्द्र स त्वमित् ॥
यतो बिभेमि मघवंस्ततो मामभयं कुरु ॥ ६ ॥
एवमुक्त्वा प्रतस्थेऽसौ हन्तुं हुण्डासुरं तदा ॥
पुष्पाणि ववृषुर्देवा नेदुर्दुन्दुभयो दिवि ॥ ७ ॥
मृगाः प्रदक्षिणं जग्मू राज्ञोऽस्य शुभसूचकाः ॥
दृष्ट्वा तं विरथं प्राह शक्रोऽप्याहूय सारथिम् ॥ ८ ॥
साश्वं रथं गृहीत्वा त्वं शीघ्रं सोपस्करं भुवि ॥
नहुषस्य सहायार्थमाहवे गच्छ मातले ॥ ९ ॥
इत्याज्ञप्तः स हर्यश्वं गृहीत्वा सायुधं रथम् ॥
नहुषं प्राप्य देवेन्द्रप्रेरितोऽस्मीत्युवाच तम् ॥ १० ॥
सवर्मेषुधिचापास्त्रं सच्छत्रमुकुटध्वजम् ॥
रथमास्थाय हर्यश्वं दिव्यं हुण्डासुरं जहि ॥ ११ ॥
तच्छ्रुत्वा नहुषो हृष्टो रथं नत्वाऽऽरुरोह तम् ॥
पायूक्तमन्त्रैः संनद्धो ययौ हन्तुं महासुरम् ॥ १२ ॥
किरीटी कवची छत्री रथी धन्वी सुसारथिः ॥
श्रीदत्तगुप्तो नहुषः शुशुभे खे रविर्यथा ॥ १३ ॥
विज्ञायात्रान्तरेऽशोकसुन्दर्या नहुषागमम् ॥
आगत्य प्रेरिता रम्भा दीना नहुषमब्रवीत् ॥ १४ ॥
प्राप्ताऽस्म्यशोकसुन्दर्यास्तपस्विन्प्रेरितेह भोः ॥
हुण्डं हत्वा चिरं रुद्धां तामुद्वोढुं त्वमर्हसि ॥ १५ ॥

स्यर्थत इन्द्रं प्रार्थयति ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ 'जीमूतस्येव भवती'त्यादि पायूक्तम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

राजाऽऽह रम्भे गच्छ त्वं ज्ञातं सर्वं मयाऽऽदितः ॥
हते हुण्डासुरे देव्या दर्शनं मे भविष्यति ॥ १६ ॥
इत्युक्ता सा ययौ रम्भा नहूषोऽप्यसुरालयम् ॥
अत्रान्तरे सहायार्थं प्रापुर्दैत्यारिसैनिकाः ॥ १७ ॥
सिद्धगुह्यकगन्धर्वयक्षविद्याधरोरगैः ॥
कृतं कलकलाशब्दं श्रुत्वा भीतोऽसुरोऽब्रवीत् ॥ १८ ॥
दूत गच्छागतः कोऽसौ कुतोऽरिः किंबलोऽस्त्यमुम् ॥
ज्ञात्वैहि शीघ्रं यत्नेन युज्येतातः प्रतिक्रिया ॥ १९ ॥
गत्वा दूतोऽपि यत्नेन ज्ञात्वैत्याहायुरात्मजः ॥
शूर इन्द्ररथारूढो नहुषो जेय आगतः ॥ २० ॥
इत्याकर्ण्यासुरः क्रुद्धो भार्यां दासीं च बल्लवम् ॥
हतो न वाऽर्भो ब्रूतेति पप्रच्छ स पुनः पुनः ॥ २१ ॥
ते हतो भवता लीढः सत्यमित्यूचुरासुरः ॥
तर्ह्येवं प्रतिकूलं किं दैवं मे किं करोम्यतः ॥ २२ ॥
इत्युक्त्वाऽऽहूय सकलान्दैत्यान्प्राहोग्रशासनः ॥
सर्वैर्योद्धुं मया सार्धं गन्तव्यं द्रागसंशयम् ॥ २३ ॥
ये भीरवो न यास्यन्ति तान्हन्मीह क्षणार्धतः ॥
इत्यादिश्यासुरान्योद्धुं सन्नद्धोऽगात्स तैः सह ॥ २४ ॥

॥१७॥१८॥ ज्ञात्वा एहि ॥१९॥ जेयो जेतव्यमात्रः न जय्यः ॥२०॥
२१॥ लीढः भक्षितः ॥२२॥ उग्रं भयंकरं शासनं यस्य ॥२३॥ २४॥

रथी हुण्डो ददर्शैत्य ककुत्स्थं नहुषं रिपुम् ॥
शूरमिन्द्ररथारूढं चण्डार्कमिव दुर्धरम् ॥ २५ ॥

सेनानीः प्रेरयामास युयुधुस्तेऽपि दैवतैः ॥
शूलशक्त्यृष्टिपरशुप्रासखड्गेषुभिर्भृशम् ॥ २६ ॥

महारथा महेष्वासाः शरजालैर्निषादिनः ॥
कृतप्रतिकृता दैत्या अकुर्वन्पीडितान्सुरान् ॥ २७ ॥

दृष्ट्वाऽऽर्तान्नहुषो देवान्विष्फार्यैन्द्रं धनू रिपून् ॥
ज्याशब्देनाकरोद्भ्रान्तान्मूर्च्छितान्युयुधे भृशम् ॥ २८ ॥

मुमोच तेषु बाणौघान्स तोयार्नाव तोयदः ॥
बलिनोऽपि खरैर्विद्धा नेशुस्ते नहुषेषुभिः ॥ २९ ॥

न दिवा न निशा यत्र भ्राजते तुमुले तराम् ॥
एक एव रणे वीरो नहुषो ययुधेऽरिभिः ॥ ३० ॥

चापांश्चिच्छेद केषांचित्स्यन्दनान्साश्वसारथीन् ॥
बाहूंश्चिच्छेद केषांचिद्भुवि शीर्षाण्यपातयत् ॥ ३१ ॥

चण्डो माध्याह्निकः ॥ २५ ॥ २६ ॥ इषवो बाणा अस्यन्ते क्षिप्यन्ते एभिरितीष्वासाः । महान्त इष्वासा एषाम् । 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् ॥ शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः ॥ अयुतान्योधयेद्यस्तु संप्रोक्तोऽतिरथो हि सः ॥ रथी त्वेकेन यो युध्येत्तन्न्यूनोऽर्धरथो मतः' इति तल्लक्षणानि । निषङ्गिणो हस्त्यारोहाः॥२७॥ २८॥ नेशुः समर्था न बभूवुः ॥२९॥ तुमुले रणसंकुले ॥३०॥३१॥

दैत्यान्कांश्चिद्द्विधा चक्रे कांश्चिन्मध्ये विदारितान् ॥
केचिन्मृता निपतिता भीताः केचिज्जहू रणम् ॥ ३२ ॥
हस्तिनो वाजिनो विद्धा मृता भग्ना रथा अपि ॥
असुराणां ववू रक्तस्रवन्त्यो मांसकर्दमाः ॥ ३३ ॥
हाहाकारो महानासीद्धूण्डसैन्ये तदा सुराः ॥
नहुषं मुनयोऽप्यूचू राजन्स्वस्त्यस्तु ते जय ॥ ३४ ॥
क्षीयमाणबलं दृष्ट्वा शत्रुं च जितकाशिनम् ॥
क्रुद्धो हुण्डः समभ्येत्य नहुषं प्राह भीमवाक् ॥ ३५ ॥
मा गर्ज गर्ज मर्त्योत्थ हुण्डोऽस्मीह प्रतापवान् ॥
जीवन्नैष्यसि पश्चात्त्वं सह देवैर्ममाग्रतः ॥ ३६ ॥
शास्ता शूरोऽस्मि जगतां दुःसहं किं न वेत्सि माम् ॥
जीवनेच्छाऽस्ति चेदेहि शरणं मां गतायुधः ॥ ३७ ॥
राजाऽऽह सोमवंश्यस्य चरितं क्वापि नेदृशम् ॥
शूरोऽसि यदि युध्यस्व वावदूकतयाऽत्र किम् ॥३८॥
स्थिरोऽस्मि समरे धीरो विद्धि त्वां हन्तुमागतम् ॥
जनन्या मे प्रसूताया महादुःखं त्वया कृतम् ॥ ३९ ॥
मां हन्तुमुद्यतस्यापि तव प्राणहरोऽस्म्यहम् ॥
दत्तात्रेयाभिगुप्तोऽस्मि को मूढो मां प्रधर्षयेत् ॥ ४० ॥

३२ ॥ स्रवन्त्यो नद्यः ॥ ३३ ॥ ३४ ॥ जितं जयः । नपुंसके भावे क्तः । तेन काशते प्रकाशतेऽसौ जितकाशी तम् ॥ ३५ ॥ हे मर्त्योत्थ अस्मद्भक्ष्य मर्त्यपोत । 'आतोऽनुपसर्गे कः' ॥ ३६ ॥ ३७ ॥ वावदूकतया अतिवक्तृतया ॥३८॥३९॥४०॥ आ कर्णादाकर्णम् । 'आङ् मर्यादा-

इत्युक्त्वा निष्ठुरं चापमुद्यम्याकर्णमाशुगान् ॥
संधाय मातलिं प्राह दैत्यचेष्टां प्रदर्शयन् ॥ ४१ ॥

मातले पश्य मायावी परिभ्रमति मायया ॥
तमालक्ष्य रथं शीघ्रं वाहयस्वाद्य हन्मि तम् ॥ ४२ ॥

इत्युक्तः सम्मुखे तस्य निदधौ मातली रथम् ॥
हुण्डोऽप्यपश्यन्नहुषं दुर्धर्षमिव भास्करम् ॥ ४३ ॥

तयोर्विक्रमतोरेवं देवर्ष्याश्चर्यकारकम् ॥
कृतप्रतिकृतं युद्धं परस्परजयैषिणोः ॥ ४४ ॥

शक्त्यृष्टितोमरासीषुगदाशूलपरश्वधैः ॥
दिव्यास्त्रमन्त्रितो हुण्डो जघान नहुषं भृशम् ॥ ४५ ॥

नहुषोऽप्येकबाणेन सर्वांश्चिच्छेद लीलया ॥
अमितान्यपि वाक्यानि सिद्धान्तीवैकवाक्यतः ॥४६॥

नहुषत्यक्तबाणेन छिन्नो भिन्नो महासुरः ॥
रेजे पुष्पितपर्णाभश्चचाल च मुमोह च ॥ ४७ ॥

धैर्यं धृत्वा तथाप्युग्रो बाणैराच्छाद्य तं नृपम् ॥
तेने जिघांसया मायां जगर्जोच्चैः पुनः पुनः ॥ ४८ ॥

भिविध्योः' इत्यव्ययीभावः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ॥ ४६ ॥ पुष्पाण्यस्य संजातानि पुष्पितः । 'तदस्य संजातम्' इतीतच् । स चासौ पर्णः पलाशस्तस्याभेवाभा यस्य॥४७॥तेने विस्तारयामास॥४८॥

आच्छन्नं नहुषं दृष्ट्वा गर्जमानं च दानवम् ॥
विषादं मुनयो देवा जग्मुरिन्द्रपुरोगमाः ॥ ४९ ॥
विषण्णान्वीक्ष्य देवादीन्महाबाहुः प्रतापवान् ॥
दूरीकृत्याऽऽसुरीं मायां संरब्धो युयुधे भृशम् ॥ ५० ॥
छित्त्वा चापं रथं साश्वं शीघ्रं हुण्डस्य सारथिम् ॥
हत्वाऽस्मै दर्शयामास नहुषो हस्तलाघवम् ॥ ५१ ॥
सोऽप्यन्यं रथमास्थाय मुक्तवाञ्छक्तिमुल्बणाम् ॥
नहुषेण निरस्ता सा कृत्वा बाणेन खण्डशः ॥ ५२ ॥
गुरुं प्रणम्य संस्मृत्य विजयं चात्रिनन्दनम् ॥
धन्वाकर्णं समाकृष्य युगपत्संदधे शरौ ॥ ५३ ॥
तिग्मौ तावर्धचन्द्राभौ तद्बाह्वोर्विससर्ज सः ॥
सास्त्रौ कृत्तौ भुजौ ताभ्यां पतितौ भुवि तालवत् ॥५४॥
हुण्डः कृत्वा महाशब्दं वज्रनिष्पेषनिष्ठुरम् ॥
व्यात्तास्यो रक्तदिग्धाङ्गो नृपमत्तुमधावत ॥ ५५ ॥
संधाय द्वौ पुनर्बाणौ तत्पादौ सोऽच्छिनद्रुषा ॥
ततोऽप्युदास्योरगवद्दुर्वार्यः स नृपं ययौ ॥ ५६ ॥
ऐन्द्रीं शक्तिं मुमोचास्मै तया भिन्नो ममार सः ॥
शिष्टा दैत्या हते तस्मिंस्त्रस्ता जग्मू रसातलम् ॥ ५७ ॥

॥ ॥ ४९ ॥ ५० ॥ ५१ ॥ उल्बणां तीक्ष्णाम् ॥ ५२ ॥ युगपदेकवारम् ॥ ५३ ॥ तिग्मौ खरौ । कृत्तौ छिन्नौ ॥ ५४ ॥ व्यात्तास्यः प्रसारितमुखः ॥ ५५ ॥ उरगेणोर्ध्वमुखसर्पवत् ॥ ५६ ॥ ५७ ॥

तदा पुष्पमुचो देवाः स्वाधिकारान्यथा पुरा ॥
भेजुः सर्वे तदादिष्टाः प्रहृष्टा हतकंटकाः ॥ ५८ ॥

तमेत्य जयिनं सार्धं रम्भयाऽशोकसुन्दरी ॥
प्राहास्मि धर्मपत्नी ते नहुषोपयमस्व माम् ॥ ५९ ॥

स प्राहाग्रे वरिष्यामि गुरोर्मे यदि रोचते ॥
तथेत्युक्त्वा रथे तस्य सा रम्भा चास्थिता मुदा ॥६०॥

नहूषोऽभ्येत्य गुरवे नत्वा सर्वं न्यवेदयत् ॥
हृष्टो वसिष्ठ उद्वाहं सुलग्नेऽकारयत्तयोः ॥ ६१ ॥

द्रष्टुं प्रस्थापयामास पितरौ नहुषं मुनिः ॥
नत्वा गुरुं रथारूढः प्रभयाऽर्क इव स्त्रिया ॥ ६२ ॥

पितरावेत्य तच्छोकं जहार परिसान्त्वयन् ॥
सरथं मातलिं रम्भां स्वर्गाय प्रैरयन्नतः ॥ ६३ ॥

प्रभोर्वरं गुरोर्वाक्यं श्रुत्वाऽऽयुश्चेन्दुमत्यपि ॥
रतिस्मरोपमौ दृष्ट्वा स्नुषापुत्रौ ननन्दतुः ॥ ६४ ॥

॥५८॥ उपयमस्व उद्वाहय ॥५९॥६०॥ पञ्चाङ्गशुध्द्या सुष्टु शोभने लग्ने खलग्रहचन्द्रवर्जिते भौमशुभवर्जिताष्टमे शुक्रचन्द्रोनषष्ठे सर्वग्रहोनसप्तमे बुधोनदशमे चन्द्रोनद्वादशे राहुवर्जितचतुर्थे खलयुतत्रिषष्टाष्टमे ॥ ६१ ॥ ॥ ६२ ॥ ६३ ॥ प्रभोः श्रीदत्तस्य । मुनेर्नारदस्य ॥ ६४ ॥ पितुरागतं

पित्राभिषिक्तो विधिवत्पित्र्यं राज्यं शशास सः ॥
सम्राट् चैन्द्रं पदं भेजे चिरं तेनैव वर्ष्मणा ॥ ६५ ॥
वानप्रस्थविधानेन महिष्याऽऽयुः समं वनम् ॥
उषित्वाऽत्रिसुतं ध्यायँल्लेभे सायुज्यमक्षयम् ॥ ६६ ॥
एवं श्रीदत्तमर्थार्थी भजन्मुक्तः क्रमान्नृपः ॥
तद्भक्तिमहिमा त्वेष कोऽपि भक्तो न नश्यति ॥ ६७ ॥
अतः कोऽप्येकया भक्त्या सकामोऽपि भजेत्प्रभुम् ॥
भक्त्यैवेह विनिर्धूतमलो मुक्तिं क्रमाद्व्रजेत् ॥ ६८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां श्रीवासुदेव्यामुपासनाकाण्डे षष्ठाष्टके चतुर्थोऽध्यायः ॥ ४ ॥

पित्र्यम् । वर्ष्मणा देहेन ॥ ६५ ॥ ६६ ॥ कोऽप्यार्तादिः ॥ ६७ ॥ ॥ ६८ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे षष्ठाष्टके टीकायां चतुर्थोऽध्यायः ॥४॥

इति नहुषेण हुण्डासुरवधपूर्वं अशोकसुन्दरीवरणं नाम षष्ठा० चतु० ॥ ६।४ ॥

---

**यदवे चतुर्विंशतिगुर्वाप्तज्ञानदानं कृष्णावतारकथनं नाम षष्ठाष्टके पञ्चमोऽध्यायः ॥ ६।५ ॥**

हरि ॐ ॥ आ त्वावतोऽपि सर्वेषां मनोहारि जगद्गुरो ॥
धर्म्यं यशस्यमायुष्यमवाचि चरितत्रयम् ॥ १ ॥
आसीद्राजा यदुर्नाम सोमवंश्यो महामतिः ॥
धर्मात्मा नीतिमान्दक्षः श्रीदत्तार्चनतत्परः ॥ २ ॥
राज्यं शशास बह्वब्दं कदाचित्पर्यटन्स गाम् ॥
ददर्श निर्भयं दक्षमवधूतं कविं सुधीः ॥ ३ ॥
तं नत्वोचे जनः प्रायः श्र्यायुःकीर्त्यृद्धिहेतुकः ॥
पुमर्थानीहते त्वं तु कल्पोऽपि न तथा कथम् ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥

चतुर्विंशतिगुर्वाप्तज्ञानं यदव उत्तमम् ॥
कृष्णावतारश्च पञ्चचत्वारिंश उदाहृतः ॥ १ ॥
उक्तं प्रभुप्रभावाढ्यं धर्म्यं सच्चरितत्रयम् ॥
यशस्यं कामदं रम्यं वक्ष्येऽथो यद्वनुग्रहम् ॥ २ ॥

आत्वावतं तावकमारभ्येत्यात्वावान् तस्मात् ॥ १ ॥ सौम्यः सोमवंशीयः ॥ २ ॥ पितृशापाच्छत्रुवर्जितोऽपि स्वदायं राज्यं बह्वब्दं शशास ॥ ३ ॥ नत्वा ऊचे । श्रीः संपत् आयुर्जीवितकालः कीर्तिर्यशः एषां समृद्धौ हेतुः कामो यस्य । पुमर्थान् पुरुषार्थानीहते स्पृहयति । तुशब्दाज्जनाद्वैलक्षण्यम् । कथं नेहसे । असामर्थ्यादिति चेत्तत्राह । कल्पः समर्थोऽपि सन् ॥ ४ ॥ काम एव वह्निः 'कामरूपेण कौन्तेय

तप्यमाने जने कामवह्निनाऽपि न तप्यसे ॥
निष्कामोऽसि कुतोऽकर्ता रोचते चेद्वद प्रभो ॥ ५ ॥

इत्युक्तस्तं प्रभुः पुंसां श्रेयसे प्राब्रवीत्परम् ॥
तत्त्वं बुध्द्याश्रितगुरुशिक्षितज्ञानमात्मनः ॥ ६ ॥

मदर्चकोऽस्यतो राजन्समाधाय मनः शृणु ॥
चतुर्विंशतिराचार्याः सन्ति मे बुध्द्युपाश्रिताः ॥ ७ ॥

यच्छिक्षयेदृशो भूमा मुक्तसङ्गश्चरे महीम् ॥
वक्ष्ये येभ्यो मया यद्यच्छिक्षितं शीघ्रमुक्तिदम् ॥ ८ ॥

न दैवानुगभूतार्तः क्ष्मेव धीरः सृतेश्चलेत् ॥
सदा परार्थोद्भवेहो नगाच्छिक्षेत्परात्मताम् ॥ ९ ॥

प्राणवृत्त्याऽक्षिप्तहृद्वाग्विद्धृत्तुष्येन्न गोप्रियैः ॥
तद्धुग्दोषगुणास्पृग्विधर्मासक्तश्च देहगः ॥ १० ॥

गुणाश्रयो गुणैर्युज्येन्न गन्धैर्वायुवत्स्वदृक् ॥
कालोत्थगुणतेजोऽब्भूमयभावस्पृगित्पुमान् ॥ ११ ॥

वायूत्थाद्यास्पृक्खवच्चान्तस्थेनाभिदसंगतो ॥
भाव्ये सर्वान्वयव्याप्त्या ब्रह्मात्मत्वात्ततात्मनः ॥१२॥

दुष्पूरेणानलेन च ' इति स्मृतेः । तेन जने तप्यमानेऽपि त्वं न तप्यसेऽपितु निष्कामोऽकर्ता चासि । एतद्वेदितुमिच्छामि हे प्रभो रोचते चेद्वद ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अवधूतगीता गुरुचरितचतुर्थाध्यायटीकायां व्याख्याता । अतोऽत्र मूलमात्रं लिख्यते ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

रस्यः स्निग्धः प्रकृत्याच्छोऽज्ञोब्वधाम्ना पुनाति नॄन् ॥
छन्नः स्पष्टोऽपि काम्यर्चैः प्रागुदग्दात्त्रघं दहन् ॥१३॥

क्वापि भुङ्क्ते तपस्तेजोदीप्तोऽक्षोभ्योऽपरिग्रहः ॥
मलास्पृक् सर्वभक्षोऽपि ज्ञोऽग्निवच्चेन्धसीयते ॥ १४ ॥

तत्तद्रूपः स्वमायोत्थोच्चासत्स्थेशोऽग्निहेतिवत् ॥
कालान्नित्येऽपि दृश्येते नात्मभूतोद्भवक्षती ॥ १५ ॥

देहः कलावद्विकारी कालेनात्माऽब्जवद्ध्रुवः ॥
भात्यात्मा तत्स्थवद्व्यक्तो न स्वस्थो बुध्यतेऽर्कवत् १६

स्थूलबुध्याऽर्कवद्गोभिर्गा यथास्वं गुणैर्गुणान् ॥
आदत्ते विसृजत्यत्र सदा योगी न युज्यते ॥ १७ ॥

नातिस्नेहप्रसङ्गात्को नश्येद्दीनः कपोतवत् ॥
कश्चित्कपोतः कपोती क्रीडादौ चेरतुर्वने ॥ १८ ॥

प्रेम्णाऽशङ्कं मिथो बद्धध्यक्ष्यङ्गौ पाति स श्रमात् ॥
तर्पयन्ती साऽसूताऽर्भांस्तांस्तौ पुपुषतुर्मुदा ॥ १९ ॥

कदाचिल्लुब्धको नीडाद्बहिःस्थांस्ताञ्छिचाददे ॥
क्रोशन्तीं पतितान् दुःखार्त्तां तं चापस्मृतिं तथा ॥२०॥

द्वन्द्वारामः प्रियाऽशान्तो गृहासक्तो विवर्नरः ॥
क्रान्तापावृतमुक्तिद्वार्नृजन्मच्युत एव सः ॥ २१ ॥

॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

क्वाप्यस्त्यैन्द्रियसौख्यं तन्नेच्छेदाजगरोऽक्रियः ॥
यदृच्छयाऽऽप्तं महान्तं ग्रासं वाऽल्पं रसारसम् ॥ २२ ॥

भक्षेच्चेन्नाप्तोऽनशनो दैवभुक् सर्पवत्स्वपन् ॥
विनिद्रोऽक्रियबल्यङ्गधृग्गोमानपि नेहते ॥ २३ ॥

पूर्णो हीनोऽप्यजपरो न सर्पति न शुष्यति ॥
ज्ञोऽब्धिवत्सिन्धुभिर्निम्नोऽनन्तपारो दुरत्ययः ॥ २४ ॥

सदाऽक्षोभ्यो दुर्विगाह्यः प्रसन्नस्तिमिताब्धिवत् ॥
नाऽवशोऽग्नौ विवन्नश्येत्स्त्रीलीलारूपमोहितः ॥ २५ ॥

गृह्णीयात्सर्वतः सारं रमेन्नैकत्र चाल्पभुक् ॥
संग्रहे नाशबीजेऽपि मधुकृद्वन्मुनिः सदा ॥ २६ ॥

बध्येत नाङ्गनास्पर्शाच्छूरैर्हन्येत वेभवत् ॥
अन्योऽकात्संचितं लुब्धैर्न भुक्तं नार्पितं धनम् ॥ २७ ॥

भुङ्क्तेऽकार्जितगृह्यन्नं प्राग्भिक्षुमधुहेव च ॥
ना बध्येतैणवद्गीतान्नृत्याद्वाऽप्यृष्यशृङ्गवत् ॥ २८ ॥

प्रमाथिजिह्वया नैति बडिशैर्मत्स्यवल्लयम् ॥
जय्याल्पभुक्त्या साऽसक्त्या जितं सर्वं जिते रसे ॥२९॥

वेश्यैकार्थदकान्ताशा ध्वस्तनिद्रा सुखावहम् ॥
चिन्ताहेतुं हि निर्वेदं गत्वाऽऽत्मस्थं रतार्थदम् ॥ ३० ॥

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

रामं हित्वा कुवृत्त्याऽन्यं भीशुङ्मोहदमध्रुवम् ॥
काङ्क्षे धिङ् मात्मनात्मानं रमे क्रीत्वाऽमुनेति सा ॥ ३१ ॥

मत्वा तथाऽभूध्याशा कं नैराश्यं परमं सुखम् ॥
परिग्रहोऽकाय तज्ज्ञोऽस्वोऽप्यनन्तसुखायते ॥ ३२ ॥

सामिषं कुररं हन्ति शूरोऽतो व्यामिषः सुखी ॥
मानावमानचिन्तोनः स्वक्रीडः स्वरतिः सुखी ॥ ३३ ॥

बालवद्धि जडोऽज्ञोऽर्भश्चात्मानन्दो गुणातिगः ॥
भंक्त्वैकैकं महारावान् रणन्तौ द्वौ कुमार्यपि ॥ ३४ ॥

पाण्योर्धृत्वैकैकशङ्खं रहःकृत्येऽलभत्सुखम् ॥
कलिर्भूम्नि द्वयोर्वार्ता ह्येकस्तच्छङ्खवच्चरेत् ॥ ३५ ॥

एकचार्यप्रमत्तोऽल्पवाग्गुहास्थोऽगृहो मुनिः ॥
एकोऽहिवद्धृत्यलक्ष्यो गृहारम्भोऽध्रुवात्मनः ॥ ३६ ॥

विफलोऽकायसर्पोऽन्यकृतधाम्न्येधते सुखम् ॥
जितश्वासासनेनेशे वैराग्याभ्यासबद्धहृत् ॥ ३७ ॥

संयुक्तं वासनां मुक्त्वा सत्ववृध्द्यैत्यनिन्धनम् ॥
निर्वाणं वेत्यतो नान्तर्बहिस्थं मुनिरात्मदृक् ॥ ३८ ॥

यथेष्विताल्मेषुकृन्नो वेदेनं यान्तमग्रतः ॥
प्रेम्णाऽप्यचलहृध्द्यानाद्विष्णोः सारूप्यमेति ना ॥ ३९ ॥

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

प्राग्रूपमुत्सृजन्पेशस्कृध्यानात्कीटवद्द्रुतम् ॥
यथोर्णनाभिस्ततोर्णाविहार्यन्तेऽत्ति तां तथा ॥ ४० ॥

प्राक्स्वमायासृष्टमेकः संहृत्याऽभूत्क्षयेऽद्वयः ॥
शक्त्याऽखिलाश्रयः सर्वेट् कालेनात्मानुभावतः ॥४१॥

साम्येतसत्वादिशक्तिः प्रधानपुरुषेडजः ॥
व्युपाधिः परमानन्दो मोक्षाख्यः सः परावरः ॥ ४२ ॥

गुणात्मिकां स्वमायां स क्षोभयन्स्वानुभावतः ॥
तया सृजति सूत्रं सा त्रिगुणा शक्तिरासृजत् ॥ ४३ ॥

विश्वं यस्मिन्प्रोतमेतद्येन संसरते पुमान् ॥
देहात्स्तो बोधवैराग्ये पारवयात्सोद्भवक्षयात् ॥ ४४ ॥

आत्मेष्टभृत्सृष्टबीजः प्रियेच्छुर्नश्यति द्रुवत् ॥
गावः स्वार्थे सपत्नीवत्तं लुनन्ति हि दुर्लभम् ॥ ४५ ॥

मत्वा नृजन्म तद्वित्क्ष्मां चरेन्मुक्तोऽनहंकृतिः ॥
तच्छ्रुत्वा समचित्तोऽभून्मुक्तसङ्गो यदुर्द्रुतम् ॥ ४६ ॥

कृतार्चनप्रभावेन संजातत्र्यात्मदर्शनः ॥
तेनैव बोधितः साक्षात्सोऽयमात्मेति वेद तम् ॥ ४७ ॥

नत्वा त्रीशं तदादिष्टो यदुः स्वैरं चचार गाम् ॥
तद्रूपं पूजयन्विश्वं सत्तास्फूर्त्यन्वितं मितम् ॥ ४८ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ अत्र हेयादेयतया पृथिव्यादिगुरवो ज्ञेयाः ॥ ४७ ॥ मितमेकदेशे वर्तमानम् ॥ ४८ ॥

दत्तप्रसादात्तद्वंशविस्तरोऽभूदिहोन्नतः ॥
कृष्णोऽजः सकलो वृष्णिकुले भूभारहाऽभवत् ॥ ४९ ॥
स्वान्तं मत्वा स्वसुः पुत्राद्देवक्यास्तां च तत्पतिम् ॥
वसुदेवं निगृह्यार्भांस्तयोः कंसो जघान षट् ॥ ५० ॥
तद्गर्भः सप्तमोऽजांशो रोहिण्यां मायया व्रजे ॥
क्षिप्त ईशाज्ञया सोऽथ बलभद्राभिधोऽभवत् ॥ ५१ ॥
देवक्याः प्रादुरासाजः स्वधाम्ना प्राह मां व्रजे ॥
नन्दजां चानयेहेति पितरं स तथाकरोत् ॥ ५२ ॥
कैरपीदं न च ज्ञातं विष्णुमायाप्रभावतः ॥
तत्कन्यां हन्तुमुद्युक्तात्कंसात्साप्युत्पपात खे ॥ ५३ ॥
सा माया प्राह रे दुष्ट त्वच्छत्रुः क्वापि वर्धते ॥
तच्छ्रुत्वा दुष्टसङ्गी स बालान्हन्तुं समुद्यतः ॥ ५४ ॥
तेनेरिता पूतनैत्य व्रजे स्तन्यमिषाद्विषम् ॥
कृष्णायापाययत्सोपि पपौ तदसुभिः समम् ॥ ५५ ॥
बकधेनुकवात्याघकेश्यादीन्कंसचोदितान् ॥
समागतान्स्वनाशार्थं मायार्भोऽप्यहनद्धरिः ५६ ॥

**कलांशो** बलभद्रस्तेन सहितः ॥ ४९ ॥ निगृह्य कारायां बध्वा । **अर्भान्** **पुत्रान्** ॥ ५० ॥ ५१ ॥ अजः कृष्णः । स्वधाम्ना विष्णुरूपेण । **सः** **वसुदेवः** ॥ ५२ ॥ सा चासौ कन्या च । खे आकाशे ॥ ५३ ॥ **सः** **कंसः** ॥ ५४ ॥ ईरिता प्रेरिता । तस्याः पूतनाया असुभिः प्राणैः ॥५५॥ **मायार्भो** मायाबालः ॥ ५६ ॥ वत्साश्च पालाश्च तादृशगोगोपालशङ्का-

धात्रा कृष्णपरीक्षार्थं वत्सपालास्तदग्रतः ॥
नीताः स्वलोकं तद्रूपं तादृक्सृष्टिकरोऽहरत् ॥ ५७ ॥
तत्स्नेहबद्धो भगवान्गव्यस्तेयादिलीलया ॥
व्रजस्थान्हर्षयञ्छ्रीदपुत्रशापमपाकरोत् ॥ ५८ ॥
ववर्ष कल्पवद्गोष्ठे गर्वितेन्द्रोऽपमानतः ॥
गोवर्धनधरोऽरक्षत्सप्ताब्दोऽपि हरिः स्वकान् ॥ ५९ ॥
भक्तिं ज्ञात्वा व्रताद्गोपीरासोल्लासभरो निशि ॥
वेणुध्वन्याहूय सर्वा रमयामास सर्वशः ॥ ६० ॥
यथाऽऽप्तकामोऽप्यात्मैको बुद्धिवृत्तीः सहस्रशः ॥
तदन्तस्थो रमयतीवानुरूपस्तथाप्ययम् ॥ ६१ ॥
एवमाद्या व्रजे लीलाः कृत्वाऽऽनीतः पुरं हरिः ॥
कंसं समल्लं लीलातोऽहनद्रेमे च कुब्जया ॥ ६२ ॥

दिसृष्टिकरः ॥ ५७ ॥ श्रीदपुत्रौ नलकूबरमणिग्रीवौ ॥ ५८ ॥ ५९ ॥ कात्यायन्यर्चनव्रतात् । षण्मासात्मिकायां निशि ॥ ६० ॥ यथाप्तकाम इति व्रिदर्शनं । कृष्ण एवाप्तकामोऽन्यनिदर्शनाभावात् 'गगनं गगनाकारम्' इतिवत् । तयोर्द्वयोर्द्वयोर्वृत्त्योरन्तस्तिष्ठतीति तदन्तस्थः । इवशब्देन साक्षान्मन्मथमन्मथस्य स्वात्मन्यवरुद्धसौरतस्यात्मारामस्य गोपीभिः समं जारस्य जारिणीभिः सममिव न रमणम् । अनुरूप इत्यत्र विष्णुपुराणे 'सोऽपि कैशोरिकवयो मानयन्मधुसूदनः ॥ रेमे ताभिरमेयात्मा क्षपासु क्षपिताहितः' ॥ हरिवंशेपि 'युवतीर्गोपकन्याश्च रात्रौ संकल्पकालवित् ॥ कैशोरिकं मानयानः सह ताभिर्मुमोद ह' इति ॥ ६१ ॥ कंसेनाक्रूरं प्रेषयित्वा घातयितुं मथुरामानीतः । लीलयाऽनायासेन ॥ ६२ ॥ मुचकुन्ददृष्ट्या घातयित्वा ।

यवनं घातयित्वा तु जरासंधबलापहा ॥
निर्माय द्वारकामुग्रं यादवेशं चकार सः ॥ ६३ ॥
श्रीरुक्मिणीं स्वयं वव्रे प्रमथ्य तरसा नृपान् ॥
जघान शिशुपालादीन्पाण्डवेभ्योऽपरानरीन् ॥ ६४ ॥
भौमं हत्वा षोडशस्त्रीसहस्रेशोऽभवत्स्वयम् ॥
कृत्वाप्यर्जुनसारथ्यमुत्तीर्य च भुवो भरम् ॥ ६५ ॥
स्वकुलं ब्रह्मशापेन मत्तं नाथोऽप्यनाशयत् ॥
भूभारोऽपि हृतो येन कल्पं धामापि तज्जहौ ॥ ६६ ॥
कण्टकं कण्टकेनेव द्वयं चापीशितुः समम् ॥
लोकं सपरिवारोऽगाद्भूयोऽपि हि दयानिधिः ॥ ६७ ॥
स गीताद्यात्मभूतं स्वभक्तोद्धृत्यै निधाय सत् ॥ ६८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे षष्ठाष्टके पञ्चमोऽध्यायः ॥ ५ ॥

पाश्चिमाब्धिनिकटे द्वारवतीं निर्माय ॥ ६३ ॥ तरसा बलेन । चैद्यादीन्नृपान् अपरान् जरासन्धकौरवादीन् ॥ ६४ ॥ भौमकारामुक्तषोडशस्त्रीसहस्रेशोऽभवत् ॥ ६५ ॥ स्वयं नाथोपि स्वबलतो मत्तं कुलम् । कल्पं समर्थम् । धाम शरीरम् ॥ ६६ ॥ ६७ ॥ गीतादि आत्मभूतं स्वरूपम् ॥ ६८ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे षष्ठाष्टके टीकायां पञ्चमोऽध्यायः ॥ ५ ॥

इति यदवे चतुर्विंशतिगुर्वाप्तज्ञानदानं कृष्णावतारकथनं नाम षष्ठा० पञ्च० ॥ ६।५ ॥

---

# सांशकालचतुर्दशमन्वन्तरब्रह्माण्डकथनं
# नाम षष्ठाष्टके षष्ठोऽध्यायः ॥ ६।६ ॥

हरिः ॐ ॥ आप्रबोधकृताशेषकर्मणा मुक्तिदोऽस्ति यः ॥
संन्यस्तेनात्मतृप्त्यै स सर्वतोऽवतु भक्तपः ॥ १ ॥
कालद्रव्यगुणैर्दत्तस्त्रिधैकोऽपि स्वमायया ॥
लीलां धत्ते स्वयं स्वस्मिन्सृष्टिस्थित्यप्ययात्मिकाम् ॥२॥
तद्भ्रूभङ्गो हरः कालः स सूक्ष्मः परमाणुकः ॥
तौ द्वावणुस्त्रयं ते तु त्रसरेणुश्च तैस्त्रुटिः ॥ ३ ॥
लवस्तत्त्रिशतं ते च निमेषस्ते त्रयः क्षणः ॥
ते पञ्च काष्ठास्ताः पञ्चदश लघ्वपि नाडिका ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥

षट्चत्वारिंश उदितः सांशकालश्चतुर्दश ॥
मन्वन्तराणि क्रमशो ब्रह्माण्डश्च समासतः ॥ १ ॥

आत्मनः प्रीतये प्रबोधपर्यन्तं कृतेनाशेषकर्मणा फलाभिसंध्यहंकाररहितेन यो मुक्तिदः स भक्तपालको भक्तानविद्यादिभ्यो रक्षतु ॥ १ ॥ कालः परमाण्वादिः परार्धान्तश्च । पृथ्व्यादिद्रव्याणि । सत्वादिगुणाः । अप्ययो लयः ॥ २ ॥ हरति संहरतीति हरः स कालो यद्भ्रूभङ्गरूपः परमाणुः सुसूक्ष्मः । तौ द्व्यणुः । ते त्रयस्त्रसरेणुः । त्रिभिस्त्रसरेणुभिस्त्रुटिः ॥ ३ ॥ तत्त्रिशतं लवः । त्रिलवा निमेषः । त्रिनिमेषाः क्षणः । पञ्चक्षणाः काष्ठा । पञ्चकाष्ठा लघु । लघुपञ्चदशकं नाडिका ॥ ४ ॥ द्वे नाड्यौ मुहूर्तः ।

ते द्वे मुहूर्तोऽहोरात्रस्त्रिंशत्ते दश पञ्च च ॥
पक्षस्तौ शुक्लकृष्णाख्यौ तौ मासौ द्वावृतुश्च सः ॥ ५ ॥

अयनं तैस्त्रिभिस्ते द्वे नृणामब्दः शतायुषाम् ॥
मासेन पैत्राहोरात्रो नृवर्षेण च दैवतः ॥ ६ ॥

नृविंशतिसहस्राढ्यत्रिचत्वारिंशल्लक्षके ॥
चतुर्युगं दिनं स्रष्टुस्तत्सहस्रं तथैव निट् ॥ ७ ॥

सर्गोऽह्नि निशि कल्पोऽस्य मनवोऽह्नि चतुर्दश ॥
मनुः कल्पेऽत्र वाराहे पूर्वः स्वायंभुवः स्वराट् ॥ ८ ॥

प्रियव्रतोत्तानपादौ शतरूपोत्थतत्सुतौ ॥
यज्ञ इन्द्रो मरीच्याद्या विप्राः स्युः स्तुषिताः सुराः॥९॥

सपत्नमातृवाग्विद्धो ध्रुव औत्तानपादजः ॥
पञ्चाब्दोऽपि तपस्तप्त्वा विष्णोर्लेभे ध्रुवं पदम् ॥१०॥

त्रिंशन्मुहूर्ता अहोरात्रः । पञ्चदशाहोरात्राः पक्षः । शुक्लकृष्णाख्यौ पक्षौ मासः । द्वा मासावृतुः ॥ ५ ॥ तैस्त्रिभिरयनम् । ते दक्षिणोत्तरसंज्ञेऽब्दः । नृणामायुः शताब्दम् ॥ ६ ॥ नृमासेन पैत्राहोरात्रः । नृवर्षेण देवानामहोरात्रः । नृमानेन विंशतिसहस्राधिकचत्वारिंशत्सहस्राब्दं युगं दैवम् । तत्सहस्रं ब्रह्मदिनं । तथैव निशा ॥ ७ ॥ अह्नि भूतसर्गः निशि प्रलयश्च । विद्यमाने वाराहकल्पे पूर्व आद्यः स्वयं भवतीति स्वयंभूः 'भुवः संज्ञान्तरयोः' इति क्विप् । तस्यायं स्वायंभुवः ॥ ८ ॥ शतरूपा तत्स्त्री । विप्रा ऋषयः । स्तुषिता देवाः ॥ ९ ॥ उत्तानपादात्सुनीत्यां जातो ध्रुवः सपत्नमात्रा सुरुच्या वाग्बाणैर्विद्धः 'त्वं पित्रुत्सङ्गेऽनर्हः' इति ॥ १० ॥

कल्पाद्यास्तत्सुता आसन्येषां वंशोऽत्र विस्तृतः ॥
प्रियव्रतस्यापि पुत्रा आग्नीध्राद्यास्तपस्विनः ॥ ११ ॥
स्वायंभुवः सुनन्दायां पदैकेनास्थितस्तपः ॥
तप्त्वा वीतैषणः शुद्धो भेजे भागवतीं गतिम् ॥ १२ ॥
मनुः स्वारोचिषो नाम द्वितीयोऽग्निसुतोऽभवत् ॥
पुत्रा द्युमत्सुषेणाद्यास्तस्यासन्ख्यातमङ्गलाः ॥ १३ ॥
दत्तोऽत्रिश्च्यवनः स्तम्बः प्राणः कश्यप एव च ॥
और्वो बृहस्पतिश्चैते ऋषयोऽत्र महाव्रताः ॥ १४ ॥
इन्द्रो विरोचनोऽत्रासीद्देवाश्च स्तुषिताभिधाः ॥
वेदशीर्ष्ण ऋषेः पुत्रो विभुर्नाम हरेः कला ॥ १५ ॥
तृतीयश्चोत्तमो नाम प्रियव्रतसुतो मनुः ॥
यज्ञहोत्रादयस्तस्य पुत्रा विख्यातकीर्तयः ॥ १६ ॥
प्रमदाद्या वसिष्ठस्य पुत्राः सप्तर्षयस्त्विह ॥
इन्द्रोऽभूत्सत्यजिद्भद्राः सत्या वेदश्रुताः सुराः ॥ १७ ॥
हर्यंशः सत्यसेनाख्यो धर्माज्जातोऽत्र येन तु ॥
भूतद्रुहो भूतगणा इन्द्रमित्रेण संहृताः ॥ १८ ॥
चतुर्थस्तामसो नाम मनुरुत्तानसोदरः ॥
पृथुख्यात्यादयस्तस्य दश पुत्रा महौजसः ॥ १९ ॥
सत्यस्त्रिशीर्षा शक्रश्च तथा सप्तर्षयोऽत्र तु ॥
ज्योतिर्धामाद्या हरयः सत्यका अमरास्तथा ॥ २० ॥

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ कला अवतारः ॥ १५ ॥ १६ ॥
॥ १७ ॥ येनेन्द्रमित्रेण सत्यसेनेन ॥ १८ ॥ १९ ॥ २० ॥ यैर्विधृ-

अन्ये विधृतिपुत्राश्च स्वधाम्ना यैरिहान्तरे ॥
उद्धृताः श्रुतयो नष्टा याः कालेन जवीयसा ॥ २१ ॥
स्वांशेनाजोऽवतीर्येह ग्राहग्रस्तं हरिः स्वयम् ॥
उद्दधार गजेन्द्रं द्राक् प्रपन्नं दीनवत्सलः ॥ २२ ॥
पञ्चमस्तामसभ्राता नाम्नाभूद्रैवतो मनुः ॥
बलिविन्ध्यादयस्तस्य सुता भूतरयादयः ॥ २३ ॥
अमरा ऋषयस्तूर्ध्वबाह्वाद्या भगवानिह ॥
वैकुण्ठाख्योऽभवद्यस्य गुणान्केऽपीह नो विदुः ॥ २४ ॥
कल्पितो येन वैकुण्ठः सर्वलोकनमस्कृतः ॥
ध्रुवं तिष्ठन्ति गत्वात्र मुक्ता भागवतोत्तमाः ॥ २५ ॥
चाक्षुषाख्यो मनुः षष्ठश्चक्षुःपुत्रोऽभवत्सुताः ॥
सुद्युम्नाद्यास्तस्य देवा आप्याद्या ऋषयस्त्विह ॥ २६ ॥
हविष्मद्वियर्कमुखा इन्द्रो मन्त्रद्रुमोऽभवत् ॥
अजिताख्यो मथित्वाब्धिं देवेभ्योऽदात्सुधामपि ॥२७॥
विवस्वतः सुतः श्राद्धदेवाख्यः सप्तमो मनुः ॥
इक्ष्वाकुशर्यातिमुखा दश तत्तनयास्तथा ॥ २८ ॥
वसुरुद्रादित्यविश्वमरुदश्विमुखाः सुराः ॥
कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रश्च गौतमः ॥ २९ ॥
जमदग्निर्वसिष्ठश्च ऋषयोऽत्र पुरन्दरः ॥
इन्द्रो देव उपेन्द्रोऽत्र वामनोऽदितिजः स्वराट् ॥३०॥

तिपुत्रैर्देवैः स्वसामर्थ्येन ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥
अजिताख्यो हर्यवतारः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

मन्वन्तरमिदं त्वत्र विभुशक्त्युपबृंहितम् ॥
वर्तमानमितोऽन्यानि सप्तैष्याणीह वच्मि हि ॥ ३१ ॥

विश्वकर्मसुते संज्ञाछाये जाये विवस्वतः ॥
संज्ञाऽसह्यद्युतिपतिभियाऽभूद्वडवा वने ॥ ३२ ॥

भूत्वा तदनुरूपोऽर्कस्तां भेजेऽथाश्विनौ ततः ॥
भूत्वाऽथ पूर्ववत्सोऽपि भेजेऽर्कं दीप्ततेजसम् ॥३३॥

यमो यमी श्राद्धदेवः संज्ञायामभवन्रवेः ॥
शनिः सावर्णिस्तपती छायायामभवत्तथा ॥ ३४ ॥

सावर्णिर्भविता देवीप्रसादादष्टमो मनुः ॥
निर्मोकाद्यास्तस्य पुत्रा इन्द्रः सर्वस्वदो बलिः ॥ ३५ ॥

देवाः सुतपसस्तत्र विरजा अमृतप्रभाः ॥
श्रीव्यासो गालवो रामो दीप्तिमान्द्रोणजः कृपः ॥३६॥

ऋष्यशृङ्गो भविष्यन्ति योगस्था ऋषयोऽधुना ॥
नवमो दक्षसावर्णिर्वारुणो भविता मनुः ॥ ३७ ॥

भूतकेत्वादयः पुत्रास्तस्य चेन्द्रोऽद्भुतः सुराः ॥
पारामरीचिगर्भाद्या ऋषयो द्युतिमन्मुखाः ॥ ३८ ॥

३१॥ असह्या द्युतिर्यस्य तस्मात्पत्युः सूर्याद्भिया वडवाश्विनी । ततोऽश्विन्याः ॥३२।३३॥३४॥ 'सूर्याज्जन्म समासाद्य सावर्णिर्भविता मनुः' इति मार्कण्डेयोक्तेः सावर्णिरष्टमो भविता ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

उपश्लोकात्मजो ब्रह्मसावर्णिर्दशमो मनुः ॥
तत्पुत्रा भूरिषेणाद्या हविष्मत्प्रमुखर्षयः ॥ ३९ ॥

शंभुः सुरेन्द्रो देवाश्च सुवासनमुखा इह ॥
मनुर्वै धर्मसावर्णिर्भवितैकादशोऽस्य च ॥ ४० ॥

सप्त धर्ममुखाः पुत्रा निर्वाणरुचयोऽमराः ॥
ऋषयश्चारुणमुखा देवेन्द्रो विधृतिस्त्विह ॥ ४१ ॥

हर्यंशो धर्मसेत्वाख्यस्त्रैलोक्यं धारयिष्यति ॥
भविता रुद्रसावर्णिर्द्वादशो वारुणोऽस्य च ॥ ४२ ॥

देवश्रेष्ठमुखाः पुत्रा अमरा हरितादयः ॥
तपोमूर्त्यादयो विप्रा ऋतधामा सुरेश्वरः ॥ ४३ ॥

अवतारःस्वधामाख्यो हरेर्मन्वन्तरर्द्धिकृत् ॥
त्रयोदशो मनुर्देवसावर्णिस्तत्र तत्सुताः ॥ ४४ ॥

चित्रसेनमुखा इन्द्रो दिवस्पतिरुतामराः ॥
सुत्रामसंज्ञा निर्मोकाद्या विप्रो योगिराड्ढरिः ॥ ४५ ॥

चतुर्दशो मनुस्त्विन्द्रसावर्णिस्तत्सुतास्तदा ॥
उर्वाद्याश्चाक्षुषा देवाः शुचिरिन्द्रो महर्षयः ॥ ४६ ॥

॥ ३९ ॥ ४० ॥ ४१ ॥ हरेरवतारो धर्मसेत्वाख्यः ॥ ४२ ॥ विप्रा ऋषयः । ऋतधामेन्द्रः ॥ ४३ ॥४४॥ योगिराडवतारः ॥४५॥ ॥४६॥

अग्निबाहुमुखा देवा बृहद्भानुर्हरेः कला ॥
चतुर्दशैवं मनवो ज्ञेया ब्रह्मैकवासरे ॥ ४७ ॥

स्वायंभुवमनोः पुत्रो योगैश्वर्यातिप्रियव्रतः ॥
परात्मानुगृहीतोऽत्र सप्तधा विभजन्महीम् ॥ ४८ ॥

भ्रामयन्स्वरथं नेमिनिम्नैरब्धिं च सप्तधा ॥
भूसंस्थानं नदीशैलवनग्रामविभागशः ॥ ४९ ॥

सीमाश्च लोकभद्राय प्रतिद्वीपं विभागशः ॥
कृत्वाऽग्नीध्रादिपुत्रेभ्यो दत्त्वोपशममाप सः ॥ ५० ॥

ततःप्रभृत्यसौ पृथ्वी सप्तद्वीपेति गीयते ॥
जम्बुप्लक्षकुशक्रौञ्चशाकशाल्मलपुष्कराः ॥ ५१ ॥

सप्ताब्धिपरिखाः सप्तद्वीपा एते भुवः कृताः ॥
क्षारेक्षुरसमध्वब्धिर्घृतोदः क्षीरसागरः ॥ ५२ ॥

मण्डोदः शुद्धजलधीरेकैकद्वीपसागराः ॥
अनुव्रतास्तस्य सुता आग्नीध्राद्या द्विपेश्वराः ॥ ५३ ॥

जम्बुद्वीपेश आग्नीध्रः पूर्वचित्त्यां नवात्मजान् ॥
उत्पाद्य कृत्वा द्वीपेशान्स्त्रैणोऽगादप्सरःपुरम् ॥ ५४ ॥

बृहद्भानुरवतारः ॥ ४७ ॥ परात्मना विष्णुना कृतानुग्रहः ॥ ४८ ॥ ४९ ॥ उपशमं मोक्षम् ॥ ५० ॥ ५१ ॥ ५२ ॥ अनुव्रताः पितृकल्पाः ॥ ५३ ॥ पूर्वचित्यामप्सरसि । स्त्रैणत्वान्न मुक्तः ॥ ५४ ॥

तज्जो नाभिस्त्वीशभक्तो मेरुदेव्यां तपोव्रतैः ॥
ऋषभाख्यं हरेरंशं निर्ममे धर्मधारकम् ॥ ५५ ॥

यूने दत्त्वा भुवं तस्मै स नाभिर्निर्वृतिं ययौ ॥
ऋषभोऽप्यम्बुवृष्ट्येन्द्रगर्वं योगीश्वरोऽहरत् ॥ ५६ ॥

लेभे पत्न्यां जयन्त्यां स शतपुत्रान्स्वधर्मवित् ॥
तत्रैकाशीतिरभवन्विप्राः सौम्या धृतव्रताः ॥ ५७ ॥

कव्यन्तरिक्षप्रबुद्धाविर्होत्रकरभाजनाः ॥
द्रुमिलश्चमसः पिप्पलायनो हरिरित्यमी ॥ ५८ ॥

मुनयो वातरशनाः सन्त्यद्यापि हि वैष्णवाः ॥
ज्येष्ठा भरतमुख्यास्ते जाताः स्वद्वीपखण्डपाः ॥ ५९ ॥

ऋषभो विधिदर्शी गां योगीन्द्रो जडवच्चरन् ॥
वेणूत्थहुतभुग्दग्धजडात्माऽगात्स्वधाम तत् ॥ ६० ॥

कृताशेषक्रियः पश्च स्वपुत्रानभिषिच्य च ॥
स्वनामान्वितखण्डेऽगान्निःसङ्गो भरतो वनम् ॥६१॥

आग्नीध्रपुत्रो नाभिः ॥ ५५ ॥ निर्वृतिं मोक्षम् ॥ ५६ ॥ ५७ ॥ ५८ ॥ वातरशना दिगम्बराः ॥ ५९ ॥ विधिदर्शी प्रारब्धभोगदर्शकः । जडात्मा देहः ॥ ६० ॥ स्वनामान्विते भारते वर्षे ॥ ६१ ॥ दैवादागामिप्रति-

गृहीतयोगचर्योऽपि दैवादैणार्भसंगतः ॥
भ्रष्टोऽप्यतीत्यैणजन्म जीवन्मुक्तो भवान्तरे ॥ ६२ ॥

वृद्धोऽपि मनुवंशोऽत्र समासादुक्त उत्तमः ॥
वक्तुः श्रोतुः पावनोऽयं तथा मन्वन्तराण्यपि ॥ ६३ ॥

भूलोकः सप्तावरणब्रह्माण्डान्तःस्थितस्त्वयम् ॥
स्वराडनन्तकमठवराहैरुद्धृतो महान् ॥ ६४ ॥

पातालान्यस्य सप्ताधो यत्र सन्त्यसुरादयः ॥
कले चतुर्विधा जीवाः स्वकर्माधीनजीवनाः ॥ ६५ ॥

सप्तोर्ध्वलोका भूराद्यास्तारतम्यादिहामराः ॥
इन्द्राद्या अष्टदिक्पाला इतरेऽप्याधिकारिकाः ॥ ६६ ॥

परप्रकाश्यग्रहर्क्षमण्डलं भ्रमतीह तु ॥
पराग्गतेन्यथा बद्धा स्वधिष्ण्येभग्रहाहिताः ॥ ६७ ॥

ब्रह्माण्डरूपं धामैतत्पौरुषं त्वस्य चिन्तके ॥
प्रीतो विधत्ते सायुज्यं त्रीशः सच्चित्सुखात्मकः ॥ ६८ ॥

बन्धार्तिसिंहभिया मृग्या त्यक्तस्यार्भस्य रक्षणेच्छया कृतसंसर्गाद्योगभ्रष्टोऽपि मृगजन्मातीत्य मुक्तः ॥ ६२ ॥ ६३ ॥ ६४ ॥ पूर्वापेक्षयोत्तराणि दशगुणानि । असुराः सर्पाश्च ॥ ६५ ॥ इतरे सूर्याद्याः ॥ ६६ ॥ पर ईश्वरः अन्यथा प्रागतिकाः सनक्षत्रं ग्रहाणां पूर्वतो गतिश्चक्रस्य पराग्गतिः ॥६७॥ पौरुषं धाम पुरुषस्वरूपं विराडाख्यम् ॥ ६८ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां श्रीवासुदेव्यामुपासनाकाण्डे षष्ठाष्टके षष्ठोऽध्यायः ॥ ६ ॥

षष्ठाष्टके षष्ठोऽध्यायः ॥ ६ ॥

इति सांशकालचतुर्दशमन्वन्तरब्रह्माण्डकथनं नाम षष्ठाष्टके षष्ठोऽध्यायः ॥ ६।६ ॥

---

# सूर्यवंशोपक्रमेण श्रीरामचरितकथनं नाम षष्ठाष्टके सप्तमोऽध्यायः ॥ ६।७ ॥

हरिः ॐ ॥ इन्द्राय सामरायालं यन्मखा भूरिदक्षिणाः ॥
उभयार्द्धं गतः सोऽत्र सूर्यवंशो निरूप्यते ॥ १ ॥

विष्णोर्नाभेर्विधिस्तस्मान्मरीचिः कश्यपस्ततः ॥
जज्ञेऽदित्यां ततः सूर्यः श्राद्धदेवो मनुस्ततः ॥ २ ॥

तस्याभूत्पुत्रकामेष्ट्यां तद्धोतृव्यभिचारतः ॥
पुत्रीलाख्यापि तां निन्ये पुंस्त्वं सुतपसा मनुः ॥ ३ ॥

सुद्युम्नाख्योऽपि भूयोऽगात्स स्त्रीत्वं साश्वसैनिकः ॥
प्रियाप्रीत्यै शंभुशप्तवनावेशनहेतुना ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥

सप्तचत्वारिंश उक्तः सूर्यवंशः समासतः ॥
श्रीरामचरितं चापि संक्षेपेण च पावनम् ॥ १ ॥

सदेवायेन्द्राय यत्कृता यज्ञा अलं पर्याप्ता जाताः ॥ १ ॥ ततः कश्यपाददित्यां सूर्यः ॥ २ ॥ मनोः पुत्रकामेष्ट्यां राज्ञ्यनुमतेन होत्रा कृतव्यभिचारादिलाख्या पुत्री जाता तामपि मनुस्तपसा पुंस्त्वं निन्ये ॥ ३ ॥ योऽत्रागमिष्यति स स्त्री भविष्यतीति पार्वत्याः प्रीत्यै महादेवेन दत्तशाप-

तस्याः पुरूरवाः सौम्याज्जातो यत्नाद्गुरोः पुनः ॥
मासं स्त्रीत्वं च पुंस्त्वं च सुद्युम्नः प्राप्य भूमिपः ॥५॥

तस्योत्कलाद्या अभवन्पुत्रा दक्षिणभूमिपाः ॥
मनुर्भूयोप्यजनयद्दशोग्रतपसा सुतान् ॥ ६ ॥

इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकुरूषकाः ॥
पृषध्रनाभागकविनरिष्यास्ते पितृव्रताः ॥ ७ ॥

ततः पृषध्रो ज्ञानोत्थगोहत्यातो हरिं भजन् ॥
जीवन्मुक्तो ययौ दावदग्धदेहः परं पदम् ॥ ८ ॥

कविर्बाल्याद्विरक्तोऽगाद्भुक्तारब्धो हरेः पदम् ॥
कारूषाख्या नृपा जाताः करूषादन्तरास्थिताः ॥ ९ ॥

विप्रा धृष्टात्सुमत्याद्या नृगस्तिर्यक्त्वमेत्य सः ॥
प्रमादाद्ब्रह्मगोदानान्मुक्तः कृष्णप्रसादतः ॥ १० ॥

नरिष्याच्चित्रसेनाद्या दिष्टान्नाभागपूर्वकाः ॥
मरुत्तोऽत्र कुले जातः श्रुतयो यद्यशो जगुः ॥ ११ ॥

वनप्रवेशात् ॥ ४ ॥ सौम्याद्बुधात् । गुरोः बृहस्पतेः ॥ ५ ॥ ६ ॥ ७ ॥
॥ ८ ॥ ९ ॥ प्रमादात्स्वगोत्रजमिश्रितब्राह्मणगोदानात् सरठत्वम् ॥ १० ॥
मरुतः परिवेष्टार इति जगुः ॥ ११ ॥ तदु शार्यात्यङ्गीरसो वै स्वर्गायेति

द्वितीयेह्नयङ्गिरःसत्रे वक्त्रा शर्यातिनात्मजा ॥
दत्ता सुकन्यागःशान्त्यै सुजरच्च्यवनर्षये ॥ १२ ॥
प्राप्याश्विन्यां यौवनं स ताभ्यां भागं सवे व्यधात् ॥
हृत्वेन्द्रगर्वं च्यवनो दृग्दं यच्चरितं श्रुतम् ॥ १३ ॥
आनर्ताद्याश्च शर्यातेरानर्ताद्रेवतस्ततः ॥
आनर्तेशाच्छतं पुत्रा रेवत्याद्याश्च कन्यकाः ॥ १४ ॥
वासुदेवाय रामाय सा दत्ता विध्यनुज्ञया ॥
नाभागो नभगः षष्ठे ह्यङ्गिरःसत्र आह यः ॥ १५ ॥
वैष्णवोऽस्मादम्बरीषो विरूपाद्याश्च तत्सुताः ॥
विरूपात्पृषदश्वोऽस्मात्क्षेत्रजाभों रथीतरः ॥ १६ ॥
विकुक्षिनिमिदण्डाद्या इक्ष्वाकोरात्मजाः शतम् ॥
जयो विकुक्षेस्तत्पुत्रोऽनेनास्तस्मात्पृथुस्ततः ॥ १७ ॥
विश्वरन्धिस्ततश्चन्द्रो युवनाश्वस्ततस्ततः ॥
श्यावोऽथ बृहदश्वोऽस्माद्धुन्धुमारस्ततस्ततः ॥ १८ ॥
दृढाश्वोऽस्माच्च हर्यश्वोऽस्मान्निकुम्भोऽस्य बर्हणः ॥
ततो निकुम्भः कृशाश्वोऽस्मात्तस्मात्सेनजित्ततः ॥१९॥

श्रुत्युक्तवद्वक्त्रा नेत्रवेधरूपापराधशान्त्यै सुतरां वृद्धाय च्यवनर्षये वज्रस्तम्भनेनेन्द्रगर्वं हृत्वा सवे यज्ञे ताभ्यामश्विभ्याम् । 'शर्यातिं च सुकन्यां च च्यवनं शुक्रमश्विनौ ॥ भोजनान्ते स्मराम्येतान्यतश्चक्षुर्न हीयते' इति दृग्दम् । 'युवं च्यवानममश्विना जरन्तम्' इति श्रुतेः ॥ १२ ॥ १३ ॥ ब्रह्मवचनेन बलरामाय दत्ता ॥ १४ ॥ 'ये यज्ञेन दक्षिणयेति' 'नाभानेदिष्ठं शंसती'ति श्रुत्युक्तमुवाच ॥ १५ ॥ पृषदश्वक्षेत्रे रथीतरः ॥ १६ ॥ ॥ १७ ॥ १८ ॥ १९ ॥ इष्टयां स्वयं चरुप्राशनाद्युवनाश्वोदरान्मान्धाता ।

यौवनाश्वस्तदुदरान्मान्धाता चक्रवर्त्यतः ॥
पुरुकुत्सोऽम्बरीषः स्वः सेनानीर्मुचुकुन्दकः ॥ २० ॥

त्रसद्दस्युः पौरुकुत्स्योऽनरण्योस्माच्च तत्सुतः ॥
हर्यश्वोऽभूत्तस्य पुत्रोऽरुणोऽस्यास्यनिबन्धनः ॥ २१ ॥

सत्यव्रतोऽस्य त्रिशङ्कुस्ततः स्वर्गेऽस्ति यस्ततः ॥
हरिश्चन्द्रो यो धर्मात्मा विश्वामित्रपरीक्षितः ॥ २२ ॥

रोहितोऽस्य श्रुतौ ख्यातो हरितोऽतोऽस्य चम्पकः ॥
सुदेवोऽतोऽस्माद्विजयो भरुकोऽस्मात्ततो वृकः ॥ २३ ॥

बाहुकोऽतोऽतः सगरोऽयोध्येशश्चक्रवर्त्यभूत् ॥
अन्वर्थकोऽस्य केशिन्यां पुत्रो नाम्नाऽसमंजसः ॥२४॥

सगराख्याः सुमत्यां च षष्टिसाहस्रकास्तु यैः ॥
सागरो वर्धितो दग्धा ये रुषा कपिलर्षिणा ॥ २५ ॥

पितृयज्ञाश्वहृद्भ्रान्त्यात्मानं हन्तुं समुद्यताः ॥
असमंजसजोऽन्वीक्ष्य पितृव्यानंशुमान्मृतान् ॥ २६ ॥

अस्मात्त्रयस्तत्र देवसेनानीर्मुचुकुन्दः ॥ २० ॥ २१ ॥ धर्मधैर्यज्ञानाय विश्वामित्रेण परीक्षितः ॥ २२ ॥ 'हरिश्चन्द्रो ह वैधसः' इत्यादिश्रुतौ ख्यातः ॥ २३ ॥ २४ ॥ सुमत्यां द्वितीपत्न्याम् ॥ २५ ॥ यज्ञाश्वहरोऽयमिति भ्रान्त्या कपिलं हन्तुमुद्यतास्ते तेन दग्धाः । असमंजसजोऽ-

तपश्चरंस्तदुद्धृत्यै मृतस्तज्जो दिलीपकः ॥
तादृक् सोऽपि मृतस्तज्जो धर्मात्माभूद्भगीरथः ॥२७॥

पूर्वोद्धृत्यै स्वरानिन्ये गङ्गां गां यत्नतोऽघहाम् ॥
श्रुतोऽस्मात्तस्य नाभोऽस्य सिन्धुद्वीपोऽस्य चायतः २८

ऋतुपर्णोऽस्त्यस्य सर्वकामस्तस्य सुदासकः ॥
तस्य मित्रसहो ब्रह्मरक्षस्त्वं द्वादशाब्दकम् ॥ २९ ॥

गुरुशापात्प्राप्य तत्र ब्राह्मणीशापमाप यः ॥
मुक्तो वसिष्ठप्रसादादश्मकोऽस्य च मूलकः ॥ ३० ॥

ततो दशरथोऽस्यैडविडो विश्वसहोऽस्य च ॥
खट्वाङ्गश्चक्रवर्ती यो मुहूर्ताद्ब्रह्मभूयभाक् ॥ ३१ ॥

दीर्घबाहुस्ततस्तस्य सार्वभौमो रघुस्ततः ॥
अजो दशरथोऽस्यासीच्चतुर्धाजोऽर्भतां गतः ॥ ३२ ॥

शुमान् ॥ २६ ॥ तज्जोंऽशुमत्पुत्रः ॥ २७ ॥ स्वः स्वर्गात् ॥ २८ ॥ कपटिसेवकेन नरमांसं दत्तम् । ततः क्रुद्धस्य गुरोः शापाद्द्वादशाब्दं ब्रह्मराक्षसत्वम् ॥ २९ ॥ ततो ब्राह्मणवधात् मैथुने कृते मरिष्यसीति ब्राह्मणीशापं प्राप । तत्क्षेत्रजोऽश्मकः ॥ ३० ॥ देवरक्षां कृत्वा ततो मुहूर्तावशिष्टायुर्ज्ञात्वा ज्ञानं संपाद्य मुक्तः ॥ ३१ ॥ अजो विष्णुः ॥ ३२ ॥

पुलस्त्याद्विश्रवास्तस्मात्कैकस्यां ये त्रयोऽभवन् ॥
दुःकाले रतिदानेन दशास्यो रावणोऽस्रपः ॥ ३३ ॥

कुम्भकर्णश्च शान्तात्मा चिरजीवी बिभीषणः ॥
नृन्विनागादमरतां विधिमाराध्य रावणः ॥ ३४ ॥

दासांश्चक्रेऽमराँल्लङ्कास्थोऽपि त्रैलोक्यकण्टकः ॥
विधिं तद्भारमग्ना क्ष्मा शरणं प्राप सामरा ॥ ३५ ॥

क्षीराब्धिं कोऽपि तैः सार्धं गत्वा तुष्टाव तं हरिम् ॥
तुष्टः सोऽप्याह यास्येऽहं चतुर्धाऽऽजस्य पुत्रताम् ॥ ३६ ॥

तच्छ्रुत्वाऽऽह विधिर्देवान्भवद्भिः प्राप्य कीशताम् ॥
हरेः सहायं कर्तव्यमिति तेऽपि तथाऽभवन् ॥ ३७ ॥

ऋष्यशृङ्गं वसिष्ठं च वृत्वा दशरथोऽप्रजः ॥
चकार पुत्रकामेष्टिं साक्षाद्यत्रोदितोऽनलः ॥ ३८ ॥

पायसं स्वर्णपात्रस्थं दत्त्वाहाग्निरनेन ते ॥
चतुर्धा पुत्रतां राजन्नजोऽप्येष्यति केशवः ॥ ३९ ॥

प्रयोजनार्थं कथान्तरम् । पुलस्त्यात्तृणबिन्दुपुत्र्यां विश्रवाः । दुःकाले संध्यायाम् । अस्रपो राक्षसः ॥३३॥३४॥ सामरा देवैः सहिता भूमिः ॥३५॥ को ब्रह्मा । अजस्य गोत्रापत्यमाजः दशरथः । 'अपत्यं पौत्रप्रभृति गोत्रम्' इत्यपत्यार्थेऽण् ॥३६॥ कीशतां वानरताम् ॥३७॥३८॥ ॥३९॥

ततो ऋष्याज्ञया राजा कौसल्यायै ददौ चरुम् ॥
कैकेय्यै च सुमित्रायै स्वांशार्धं ददतुश्च ते ॥ ४० ॥

ततो महिष्यो गर्भिण्यो जाता देव्य इव त्विषा ॥
कालेऽथ चैत्रे कौसल्या नवम्यां सुषुवे सुतम् ॥ ४१ ॥

अदित्यृक्षेऽनस्तमितपञ्चोच्चग्रह उद्गते ॥
कर्कटे प्राग्वरस्मृत्यै स्वधाम्नाविर्बभूव सः ॥ ४२ ॥

कौसल्ययार्थितो मात्रा बाल्यमापाखिलेश्वरः ॥
सुगात्र इन्द्रनीलाभो राजलक्षणलक्षितः ॥ ४३ ॥

कैकेय्येकं सुमित्रा द्वौ सुषुवेऽथ नृपोऽकरोत् ॥
जातकर्म द्विजेभ्योऽदाद्गोभूस्वर्णादिकं मुदा ॥ ४४ ॥

रामोऽग्र्यो भरतश्चान्यः कैकेयीजश्च लक्ष्मणः ॥
शत्रुघ्न इति नाम्ना तेऽन्वर्थकेनैव संस्कृताः ॥ ४५ ॥

रामेण लक्ष्मणो नित्यं शत्रुघ्नो भरतेन च ॥
द्वन्द्वीभूय चरन्तौ तौ पायसांशानुसारतः ॥ ४६ ॥

स्वांशार्धं स्वभोग्यभागार्धमितम् ॥ ४० ॥ ४१ ॥ पुनर्वसुनक्षत्रे मेषकर्कतुलामकरमीनस्थरविगुरुशनिभौमशुक्रयुते काले कर्कटे उदिते स्वधाम्ना विष्णुरूपेण ॥४२॥ अर्थितः बालो भवेति प्रार्थितः ॥४३॥ ४४ ॥ अग्र्यः कौसल्याजः रमणाद्रामः । कैकेयीजो भरणाद्भरतः । लक्षणान्वितो लक्ष्मणः । शत्रुहननाच्छत्रुघ्नः । द्वौ सुमित्राजौ ॥४५॥ ४६॥

अथोपनीतास्ते काले वसिष्ठेन सुशिक्षिताः ॥
लीलामर्त्या अभूवंस्ते वेदशास्त्रकलाविदः ॥ ४७ ॥
कौशिकेनाध्वरे नीतो मार्गे हत्वा च ताटिकाम् ॥
ऋष्याज्ञयाऽहनद्रामः सुबाहुं लक्ष्मणान्वितः ॥ ४८ ॥
सिन्धौ तत्याज बाणेन भ्रामयञ्छतयोजनम् ॥
मारीचं लक्ष्मणो शेषाञ्जघ्ने बाल्येऽपि राक्षसान् ॥४९॥
शप्तां वधूं गौतमेन शक्रसंभोगदूषिताम् ॥
शिलाभूतामपि प्राग्वच्चक्रे रामोऽपि धूलितः ॥ ५० ॥
जनकस्य गृहे गत्वा धनुर्भक्त्वैश्वरं समम् ॥
राजगर्वं जानकीं स वव्रे सह जयश्रिया ॥ ५१ ॥
तत्रैव मिलिताः सर्वे सदारा भ्रातरोऽभवन् ॥
यास्यन्नयोध्यां सस्त्रीको रामोऽभूद्रामगर्वहा ॥ ५२ ॥
सत्यपाशोततातस्य धृत्वाऽऽज्ञां शिरसा वनम् ॥
सलक्ष्मणः सपत्नीको द्विसप्ताब्दं चचार सः ॥ ५३ ॥
भरद्वाजार्चितश्चित्रकूटे वाल्मीकिसत्कृतः ॥
आश्वास्य भरतं नीत्या मृतपित्रे गतिं ददौ ॥ ५४ ॥
गत्वात्रेराश्रमं लब्धजयाशीर्दत्तसंमतः ॥
विराधाय गतिं दत्त्वा दण्डकारण्यमास्थितः ॥ ५५ ॥

॥ ४७ ॥ अध्वरे जनकधनुर्यागे ॥ ४८ ॥ ४९ ॥ वधूमहल्यां पूर्ववच्छुद्धाम् ॥ ५० ॥ राजगर्वेण सह धनुर्भङ्क्त्वा विजयश्रिया सह जानकीं वव्रे ॥ ५१ ॥ तत्र मिथिलायां । भार्गवरामगर्वहा ॥ ५२ ॥ कैकेयि, तवाभीष्टं करोमीति सत्यपाशबद्धस्य ॥ ५३ ॥ ५४ ॥ ५५ ॥

रावणस्य स्वसां शूर्पणखां भ्रात्रा विरूपताम् ॥
कारयित्वाऽहनत्प्राप्तान्खरादीन्कोटिशोऽसुपान् ॥५६॥
स्वर्णैणरूपिमारीचसहायी रावणोऽहरत् ॥
सीतां भूत्वा यती रामे सानुजे दूरगे बलात् ॥ ५७ ॥
तद्वियोगातुरो रामो दत्त्वा मोक्षं जटायुषे ॥
ततो रक्षोहृतां ज्ञात्वाऽन्वेष्टुं तां दक्षिणां ययौ ॥ ५८ ॥
कबन्धतारः शबरीपूजितो हनुमद्गिरा ॥
कृत्वा सुग्रीवमैत्रीं तत्स्त्रीहृद्वालिं जघान सः ॥ ५९ ॥
सुग्रीवेणेरिताः सीतामन्वेष्टुं कपयोऽमिताः ॥
तत्रैत्य हनुमाँल्लङ्कां तीर्त्वाब्धिं शतयोजनम् ॥ ६० ॥
सीतां दृष्ट्वाऽऽभाष्य वनं भङ्क्त्वाऽऽभाष्य सुरद्विषम् ॥
दग्ध्वा लङ्कां चतुर्थांशं बलं हत्वाऽगमत्पुनः ॥ ६१ ॥
कृतं न्यवेदयत्सर्वं रामाय स ततोऽभ्यगात् ॥
भ्रात्रा सुग्रीवेण चाष्टादशपद्मसुवानरैः ॥ ६२ ॥
सेतुं संस्थाप्य रामेशं बध्वाब्धौ शतयोजनम् ॥
रामो लङ्कां रुरोधैत्य बिभीषणसुसेवितः ॥ ६३ ॥
रावणं सकुलं हत्वा दत्त्वा राज्यं बिभीषणे ॥
पत्न्या भ्रात्रा कीशयुक्च पुष्पकेण ययौ पुरम् ॥ ६४ ॥

भ्रात्रा लक्ष्मणेन नासाकर्णच्छेदनरूपां विरूपताम् ॥५६॥ स्वर्णवर्णमृगरूपधरमारीचराक्षससहायेन ॥५७॥५८॥५९॥६०॥६१॥६२॥६३॥६४॥

राज्येऽभिषिक्तो मुनिभिर्देवेड्यो भ्रातृसंमतः ॥
रामोऽयुताब्दं शशास सौराज्यं रञ्जयन्प्रजाः ॥ ६५ ॥
साध्वी गुर्विण्यपि त्यक्ता जानकी दुर्यशोमिषात् ॥
कुशीलवौ वनेऽसूत सा वाल्मीकिरयोजयत् ॥ ६६ ॥
रामेण सीता दिव्येन ययौ वैकुण्ठमग्रतः ॥
दत्त्वा राज्यं सुताभ्यां च रामोऽपि परिवारयुक् ॥६७॥
रामायणाभिधां कीर्तिं निधायात्र मलापहाम् ॥
इत्यर्कवंशः संक्षेपादुक्तोऽयं पावनोऽमलः ॥ ६८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां श्रीवासुदेव्यामुपासनाकाण्डे षष्ठाष्टके सप्तमोऽध्यायः ॥ ७ ॥

६५ ॥ ६६ ॥ तौ कुशीलवौ कालान्तरेण वाल्मीकिः रामेणायोजयत् ॥ ६७ ॥ सा दिव्येन प्रमाणेन । मलापहां पापघ्नीम् ॥ ६८ ॥ इति श्रीदत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे षष्ठाष्टके टीकायां सप्तमोध्यायः ॥ ७ ॥

इति सूर्यवंशोपक्रमेण श्रीरामचरितकथनं नाम षष्ठा० सप्त० ॥ ६।७ ॥

---

## सोमवंशवर्णनं नाम
## षष्ठाष्टकेऽष्टमोऽध्यायः ॥ ६ । ८ ॥

हरि ॐ ॥ सोमः पुनानः स्वर्योऽस्ति तद्वंशोऽथोच्यतेत्र तु ॥
श्रीदत्तानुगृहीतानामुभयर्द्धिः स्फुटा यतः ॥ १ ॥

वंशेऽस्मिन्नेव भगवान् श्रीकृष्णः सकलोऽभवत् ॥
राजर्षयश्च बहुशो जयिनः कीर्तिशालिनः ॥ २ ॥

विष्णोः कोऽत्रिस्ततोस्येन्दुर्गुरुपत्न्यां ततो बुधः ॥
ततः पुरूरवा ऐलः शापभ्रष्टोर्वशीरतः ॥ ३ ॥

ययोर्यशो जगौ वेदस्तत्पुत्राः षट् सुकीर्तयः ॥
आयुः श्रुतायुः सत्यायुरयश्च विजयो जयः ॥ ४ ॥

क्रमेण तज्जा नहुषो वसुमांश्च श्रुतंजयः ॥
एको भीमोऽभितो भीमात्काश्चनोऽस्य च होत्रकः ॥५॥

॥ श्रीगणेशाय नमः ॥

अष्टाचत्वारिंशकेऽस्मिन् सोमवंशो वितन्यते ॥
श्रीदत्तानुगृहीतानामुभयर्द्धिः स्फुटा यतः ॥ १ ॥

॥ १ ॥ २ ॥ को ब्रह्मा भरतमुनिशापाद्भुवि पतितायामुर्वश्यां रतः ॥ ३ ॥ 'हये जाये' इति सूक्ते जगुः ॥ ४ ॥ तज्जास्तत्पुत्राः ॥ ५ ॥

येन गण्डूषीकृता स्वर्गङ्गा जह्नुः स तत्सुतः ॥
पुरुस्ततोऽतो बलाकोऽजकोऽस्यास्य कुशस्ततः ॥६॥

कुशांबुस्तस्य गाधीतः कन्या सत्यवती तु याम् ॥
ऋचीको भार्गवो वव्रे शुल्कमश्वमयं ददन् ॥ ७ ॥

जमदग्निस्तयोः पुत्रः पौत्रो रामस्तु राजवत् ॥
इष्ट्यां चरुव्यत्ययेन योऽवधीत्क्षत्रमुद्धतम् ॥ ८ ॥

गीतः शौनःशेपवृत्ते ब्रह्मर्षित्वं तपोबलात् ॥
योगाद्द्रष्टा च गायत्र्या विश्वामित्रः स गाधिजः॥९॥

ब्राह्मणोऽयमपि क्षत्रः क्षत्रो रामो द्विजोऽप्यभूत् ॥
इदं तन्मातृविहितचरुव्यत्यासजं फलम् ॥ १० ॥

पश्चायोर्नहुषाद्याः स्युः क्षत्रवृद्धात्सुहोत्रकः ॥
तज्जाः काश्यः कुशो गृत्समदोऽस्माच्छुनकस्त्वृषिः॥११

काश्यात्काशिस्ततो राष्ट्रस्ततो दीर्घतमास्ततः ॥
रुग्णो धन्वन्तरिस्तस्य केतुर्भीमस्ततस्ततः ॥ १२ ॥

तत्सुतः सुहोत्रसुतो जह्नुः ॥ ६ ॥ इतो गाधितः ॥ ७ ॥ ८ ॥ अथ ह विश्वामित्रस्याङ्कमाससादेति गीतः ' विश्वस्य ह वै मित्रं विश्वामित्र आस ' इति श्रुतेः । ' मित्रे चर्षौ ' इत्यानङ् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

दिवोदासो द्युमांस्तस्मात्ततः कुवलयाश्वकः ॥
मदालसा यस्य पत्नी दत्तेशेन मृतापि या ॥ १३ ॥

जातं जातं सुतं तत्त्वज्ञानाद्यानयदात्मताम् ॥
योगी सम्राट् ततोऽलर्को राज्यं धर्मेण योऽकरोत् ॥ १४ ॥

षट्षष्ट्यब्दसहस्रं यः श्रीदत्तेन समुद्धृतः ॥
तत्पुत्रः संततिस्तस्मात्सुनीथाद्या महाधियः ॥ १५ ॥

ययातिर्नाहुषो वव्रे कचशप्तां स शुक्रजाम् ॥
देवयानीं तत्सेवार्थं शर्मिष्ठां कृतकिल्बिषाम् ॥ १६ ॥

शौक्ल्या यदुस्तुर्वसुश्चान्यातोऽनुद्रुह्युपूरवः ॥
भ्रष्टप्रतिज्ञो जरसा राजा शुक्रेण योजितः ॥ १७ ॥

तां जरामाददे पूरुः कामुकस्य पितुर्मुदा ॥
सहस्राब्दं भुक्तभोगो विरक्तो दैवतो नृपः ॥ १८ ॥

भीमाद्दिवोदासः ॥ १३ ॥ १४ ॥ १५ ॥ नहुषपुत्रो ययातिः । कचशापो गुरुचरिते उक्तः । संभ्रमात्स्ववस्त्रपरिधानतो धिक्कृतया शर्मिष्ठया कूपे त्यक्ता देवयानी ययातिनोध्दृता वृता च । अपराधशान्त्यै दासीत्वेन शर्मिष्ठाङ्गीकृता ॥ १६ ॥ शौक्ल्याः देवयान्याः । अन्यातः शर्मिष्ठायाः अङ्गसङ्गं न करिष्यामीति प्रतिज्ञातो भ्रष्टः ॥ १७ ॥ १८ ॥ कांचिन्मेषीं

भार्गव्यै प्राहाजगाथां तत्रायं श्लोक उत्तमः ॥
मात्रा स्वस्रा दुहित्रा वा नाविभक्तासनो भवेत् ॥१९॥

बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥
स्वां जरां पुनरादाय पूर्ववत्तद्वयोऽर्पयत् ॥ २० ॥

विरक्तः सर्वभोगेभ्यो दत्त्वा राज्यं विभागशः ॥
पुत्रेभ्यो लब्धसंज्ञोऽगादाद्यं पदमनुत्तमम् ॥ २१ ॥

पुरोर्जन्मेजयोऽस्य प्रचिन्वांस्तस्य प्रवीरकः ॥
ततो नमस्युश्चार्वङ्घ्रिस्ततो सुद्युस्ततस्ततः ॥ २२ ॥

बहुगुस्तस्य संयातिस्तस्याहंयातिरस्य च ॥
रौद्राश्वोऽर्भान्घृताच्यां योऋतेय्वादीन्दशालभत् ॥२३॥

ऋतेयो रन्तिभारोऽस्य सुध्याप्रतिरथध्रुवाः ॥
मध्यान्मेधातिथिप्रस्कण्वाद्या जाता महर्षयः ॥ २४ ॥

रैभ्यः सुधीतो दुष्यन्तस्तस्य यो मृगयां चरन् ॥
मेनकायां समुद्भूतां विश्वामित्रात्तपस्विनः ॥ २५ ॥

शकुन्तलां वधूरत्नभूतां कण्वाश्रमस्थिताम् ॥
गान्धर्वविधिना वव्रे ततोऽभूद्भरतो महान् ॥ २६ ॥

कूपे पतितां यत्नान्निष्कास्य तया रेमे । मीढ्वान्मेषः स मेषपतिना भग्नाण्डः कृत इत्यादि ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ घृताच्यामप्सरसि ॥ २३ ॥ मध्यादप्रतिरथात् ॥ २४ ॥ २५ ॥ २६ ॥ यज्वा विधिनेष्टवान् 'सुय-

यद्दक्षहस्ते चक्राङ्कः पद्मचिह्नं च पादयोः ॥
सम्राड्भूत्वाऽभवद्यज्वा श्रुतयो यद्यशो जगुः ॥ २७ ॥

महाकर्मास्य जाता नो जनिष्यन्ते न चेदृशः ॥
तत्पत्न्योऽसदृशान्पुत्राञ्जघ्नुर्भर्तृभिया ततः ॥ २८ ॥

मरुतोऽदुर्भरद्वाजं राज्ञे यज्ञेन तर्पिताः ॥
प्रजावत्यां च गर्भिण्यां जीवो रेमे ततः पुनः ॥ २९ ॥

गर्भोऽस्थात्तं भिया सैच्छत्त्यक्तुं तामब्रुवन्सुराः ॥
मूढे भर द्वाजमिमं भर द्वाजं बृहस्पते ॥ ३० ॥

इत्युक्तैर्यो भरद्वाजो दत्तकोऽभूत्स भारतः ॥
त्यक्तः पितृभ्यां मरुतोऽबिभ्रन्तेस्मै ददुर्मुदा ॥ ३१ ॥

प्राप्तो वितथवंशेऽसौ वितथो मन्युरस्य च ॥
बृहत्क्षत्रमहावीर्यनरगर्गजयास्ततः ॥ ३२ ॥

नरजः संस्कृतिस्तज्जौ रन्तिदेवगुरू शुभौ ॥
गर्गात्क्षत्रान्महावीर्यादुद्भूता द्विजयोनयः ॥ ३३ ॥

जोर्ड्वनिप्' । 'हिरण्येन परीवृतान्' इति जगुः ॥ २७ ॥ भर्तुरसदृशान् ॥ २८ ॥ प्रजावत्यां भ्रातुरुतथ्यस्य भार्यायाम् ॥ २९ ॥ तं स्थितं गर्भं त्यक्तुमैच्छत् । 'इषुगमियमां छः' इति छकारः ॥ ३० ॥ वाजं वीर्यं भरत् द्वाभ्यां जातं द्वाजं तस्मै भरताय ॥३१॥ ततो मन्योः ॥३२॥ ३३॥

बृहत्क्षत्राद्धस्तिनेशो हस्तीतः पुरुमीढकः ॥
अजमीढो द्विर्मीढश्च मध्यादृबृहदिषुस्ततः ॥ ३४ ॥

बृहद्धनुर्बृहत्कायोऽस्यास्य पुत्रो जयद्रथः ॥
विशदोऽस्य ततः सेनजित्तस्य रुचकादयः ॥ ३५ ॥

विप्राद्यु मीढान्नीलर्क्षौत्रजर्मीढाच्च नीलतः ॥
शान्तिः सुशान्तिस्ततोऽतः पुरुजोऽर्कोऽस्य तस्य च ३६

भार्म्यश्वोऽस्मान्मुद्गलाद्या ज्येष्ठात्क्षत्रः प्रतापवान् ॥
दिवोदासोऽस्मान्मित्रेयुश्च्यवनोऽस्य सुदासकः ॥ ३७ ॥

ततोऽस्य सहदेवोऽस्य सोमकोऽस्य पृषत्ततः ॥
द्रुपदो द्रौपदी धृष्टद्युम्नपूर्वास्ततोऽथ च ॥ ३८ ॥

ऋक्षात्संवरणस्तस्य कुरुर्जह्नन्वादयस्ततः ॥
इतो जरासन्धमुखाः सुरथो जह्नुजस्ततः ॥ ३९ ॥

विदूरथो राट् च ततो जयसेनोऽस्य राधिकः ॥
ततो युतः क्रोधनोऽतोऽस्य दैवातिथिरस्य च ॥ ४० ॥

ऋष्यस्तस्य दिलीपोऽस्य प्रतीपस्तस्य शन्तनुः ॥
बाह्लीको योगिदेवापिः सोमदत्तोऽथ बाह्लिकात् ॥ ४१ ॥

हस्तिनापुरीशः मध्यादजमीढात् ॥ ३४ ॥ ३५ ॥ द्युमीढाद्विप्रजातयः । अजमीढान्नीलो ऋक्षश्च ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ॥ ४० ॥ शन्तनोर्गङ्गायां भीष्मः अपरस्यां कन्यावस्थायां शक्त्यात्पराशरादस्यां सत्यवत्यां व्यासस्तस्यामेवोद्वाहोर्ध्वं शन्तनोर्विचित्रवीर्यः ॥ ४१ ॥

ततो भूर्याद्या गङ्गायां सन्भीष्मः शन्तनोर्यतः ॥
शाक्त्यात्कानीनो विष्णवंशोऽव्यासोऽस्यां चित्रवीर्यकः

तत्क्षेत्रजावन्धपाण्डू गोलौ व्यासाच्च पाण्डवाः ॥
धर्मभीमार्जुनाः कुण्डा यमवातेन्द्रतोऽश्वितः ॥ ४३ ॥

नकुलः सहदेवश्च पुत्रा एषां रणे हताः ॥
अर्जुनादभिमन्युस्तज्जः परीक्षिद्धरिप्रियः ॥ ४४ ॥

जनमेजयराजोऽतः श्रुतस्तिष्येऽहिसत्रकृत् ॥
धृतराष्ट्राच्छतं दुर्योधनाद्यास्ते रणे मृताः ॥ ४५ ॥

पाण्डवा ईदृशोऽपीशभक्त्या पूता दिवं गताः ॥
सर्वदाभिमता साध्वी द्रौपदी पञ्चपत्न्यपि ॥ ४६ ॥

लाक्षागाराद्गराद्घोराद्वनवासच्छलाद्रणात् ॥
कौरवोपद्रुतान्पार्थान्पर्यरक्षज्जनार्दनः ॥ ४७ ॥

श्रीकृष्णः सारथिर्येषां कुतस्तेषां पराभवः ॥
अनोः सभाद्या बभ्र्वाद्या द्रुह्योर्वह्निश्च तुर्वसोः ॥ ४८ ॥

॥ ४२ ॥ मृते भर्तरि व्यासात्क्षेत्रजौ धृतराष्ट्रपाण्डू गोलकौ । पाण्डुक्षेत्रे कुन्त्यां यमाद्धर्मः वायोर्भीम इन्द्रादर्जुनः । अश्विभ्यां माद्र्यां नकुलसहदेवौ । एते कुण्डाः । 'अमृते जारजः कुण्डो मृते भर्तरि गोलकः' इत्युक्तेः ॥४३॥ ॥४४॥ तिष्ये कलौ । सर्पसत्रकृत् ॥४५॥ कानीनगोलकजाः स्वयं कुण्डा अपीदृशाः सर्वैः सदा मान्या सर्वदेन कृष्णेनाभिमता त्रा ॥४६॥४७॥४८॥

यदोश्चत्वारः सहस्रजितोऽत्र शतजित्ततः ॥
हैहयस्तस्य धर्मोऽस्य नेत्रः कुन्तिस्ततस्ततः ॥ ४९ ॥

सोहंजिस्तज्जो महिष्मान्भद्रोऽस्य धनकोऽस्य च ॥
कृतवीर्यो दत्तभक्तोऽर्जुनोऽस्यास्यामिता हताः ॥ ५० ॥

वृष्णिः शिष्टान्मधोस्तस्माद्वार्ष्णेयं यादवं कुलम् ॥
क्रोष्टोर्वृजिनवान्श्वोहिस्ततस्तस्माद्रुशेकुरित् ॥ ५१ ॥

चित्रोऽस्य शशबिन्दुर्योग्यमितार्भः पृथुश्रवाः ॥
ततोऽस्य धर्म उशनास्तस्यास्य रुचकस्ततः ॥ ५२ ॥

ज्यामघोऽस्माद्विदर्भोऽस्य क्रथः कुन्तिस्ततस्ततः ॥
धृष्टिस्ततो निवृत्तिस्तज्जो दशार्होऽस्य व्योमकः॥५३॥

जीमूतोऽस्यास्य विकृतिस्तस्य भीमरथस्ततः ॥
नवरथो दशरथोऽस्य तस्य शकुनिस्ततः ॥ ५४ ॥

करम्भिर्देवरातोऽस्य देवक्षत्रस्ततस्ततः ॥
मधुः कुरवशोऽस्यास्यानुस्तस्य पुरुहोत्रकः ॥ ५५ ॥

तस्यायुः सात्वतस्तस्य भजमानोऽस्य वृष्णिकः ॥
युधाजित्तस्यानमित्रोऽस्यास्य वृष्णिर्विदूरथः ॥ ५६ ॥

चत्वारः पुत्राः ॥ ४९ ॥ अस्य पुत्रा रामेण हताः ॥ ५० ॥
अवशिष्टान्मधोः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ कृती

तस्यास्य शूरोऽथ तस्य भजमानस्ततः शिनिः ॥
स्वयं भोजोऽस्यास्य हृदीकोऽस्य शूरः कृती ततः॥५७॥
वसुदेवोऽस्य बहवो रामकृष्णाविहेश्वरौ ॥
वृष्ण्यन्यवंशेन्धकोग्रसेनकंसादयोऽमिताः ॥ ५८ ॥
यदोर्नलारिसंज्ञौ यौ तद्वंशोऽपि महानभूत् ॥
सोमवंशस्य विस्तारः संक्षेपेणात्र दर्शितः ॥ ५९ ॥
इह योगीन्द्रराजर्षिपुण्यश्लोका अनन्तशः ॥
कलया भगवान्साक्षाद्वासुदेव इहाभवत् ॥ ६० ॥
उक्तप्रायोऽवतारोऽयं कृष्णस्य परमात्मनः ॥
रुक्मिण्यादिवधूत्पन्नाः कामाद्या अमिताः सुताः ॥६१॥
सर्वेशतः सुरा जाता भूमिभारापनुत्तये ॥
कृष्णसेवां विधायान्ते स्वधामापुः सहात्मना ॥ ६२ ॥
वैकुण्ठं गत इत्येष व्यवहारस्तु मायिकः ॥
द्वार्वत्यां मथुरायां चाद्यापि सन्निहितो हरिः ॥ ६३ ॥
तथैव रामोऽयोध्यायां द्वौ चेमौ कामदौ नृणाम् ॥
स्वांशसृष्टौ यथैकोऽयं श्रीदत्तो भ्राजतेतराम् ॥ ६४ ॥
रामकृष्णौ तथार्केन्दुवंशयोरपि कामदौ ॥
राजानो मनुवंशीया बहवोऽर्केन्दुवंशजाः ॥ ६५ ॥

पुण्यवान् शूरः ॥ ५७ ॥ ५८ ॥ ५९ ॥ कलया बलभद्रेण ॥ ६० ॥ ॥ ६१ ॥ ६२ ॥ ६३ ॥ स्वांशा मरीच्यत्र्यादयः ॥ ६४ ॥ ६५ ॥

कृत्वेश्वरे परां भक्तिं भेजुः सायुज्यमात्मना ॥
एवं येऽमुं निर्विशेषं साक्षात्कर्तुमनीश्वराः ॥ ६६ ॥
मन्दा अपि दुराचारा विषयाकृष्टचेतसः ॥
सर्वे तेऽप्यनुकम्प्यन्ते सगुणब्रह्मशीलनात् ॥ ६७ ॥
अष्टकैरेभिरत्रोपासनाकाण्डं निरूपितम् ॥
प्रीयाद्भक्तिप्रियोऽनेन भक्तिगम्यस्त्वधीश्वरः ॥ ६८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां
संहितायां वासुदेव्यामुपासनाकाण्डे
षष्ठाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥

उपसंहरति—एवमिति ॥ ६६ ॥ ६७ ॥ ६८ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यामुपासनाकाण्डे षष्ठाष्टके टीकायां अष्टमोऽध्यायः ॥ ८ ॥

॥ इति षष्ठाष्टकः समाप्तः ॥ उपासनाकाण्डं संपूर्णम् ॥

---

## ॥ श्रीमद्दत्तपुराणे कर्मकाण्डे सप्तमाष्टकः ॥

—:0:—

### अथ कर्मकाण्डम् । सुन्दोपसुन्दचरितं नाम सप्तमाष्टके प्रथमोऽध्यायः ॥ ७।१ ॥

हरि ॐ ॥ प्रणम्य तं जगद्योनिमनाद्यन्तं त्र्यधीश्वरम् ।
तदीरितो ब्रुवे कर्मकाण्डं तं भक्तिभावनम् ॥ १ ॥

अहिंसाद्यष्टगुणयुक् द्विजो नियतकर्मकृत् ॥
ब्राह्मं पदमवाप्नोति न भूयश्च्यवते ततः ॥ २ ॥

भक्तिज्ञानकृतं यत्तच्छ्रुत्युक्तं वीर्यवत्तरम् ॥
निःश्रेयसं कर्मणां हि धार्यते शब्दलक्षणम् ॥ ३ ॥

स्फुटं वैदिकशब्दार्थः स्मृत्युक्तं चापि लौकिकम् ॥
यस्याकर्मणि दोषस्तं नियतं प्रजनोदितम् ॥ ४ ॥

॥ श्रीगणेशदत्तगुरुभ्यो नमः ॥

पूर्वद्व्यष्टकोक्तज्ञानाप्तयेऽष्टकैश्चतुर्भिरुपासनोक्ता तत्रान्तःकरणशुद्ध्यर्थं कर्मकाण्डमुच्यते । अस्योपोद्धातो गुरुचरितचतुर्दशाध्यायटीकोक्तोऽनुसंधेयः । योनिं कारणम् ॥ १ ॥ नियतं नित्यं नैमित्तिकं च ॥ २ ॥ भक्त्या ज्ञानेन च । शब्दो वेदः ॥ ३ ॥ अकर्मण्यकरणे । प्रजनो गुरुः ॥ ४ ॥

तत्संस्कृतत्रिवर्णानां वेदाध्ययनमप्युत ॥
पत्याधिक्रियते पत्नी न पृथुक् चान्यथाऽन्यवत् ॥ ५ ॥

मन्त्रपाठश्रवणयोर्दोषश्चास्या व्रतादिके ॥
गौश्छेद्यान्त्यस्य वेदोक्त्या त्रपुच्छाद्ये श्रुती श्रुतौ ॥ ६ ॥

विप्रोक्ताश्रौतमन्त्रैस्तु क्रिया पत्याज्ञया स्त्रियाः ॥
स्तेयदोषः प्रोषिते च पत्यौ नैमित्तिके कृते ॥ ७ ॥

अपि नियतम् । अन्यवच्छूद्रवत् ॥ ५ ॥ अस्याः स्त्रियाः पाठश्रवणयोर्दोषः न यज्ञसंयोगे । अन्त्यस्य शूद्रस्य गौर्जिह्वा छेद्या । श्रुती कर्णौ । 'श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च' इति न्यायात् । भाष्यकृतोऽपि इतश्च न शूद्रस्याधिकारो वेदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधौ । भवति वेदश्रवणप्रतिषेधे वेदाध्ययनप्रतिषेधादर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य । स्मर्यते श्रवणप्रतिषेधस्तावत् 'अथास्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमिति' 'पद्यु हवा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्' इति च । अत एवाध्ययनप्रतिषेधः । यस्य समीपे नाध्येतव्यं भवति स कथं श्रुतमधीयीत । भवति वेदोच्चारणे जिह्वाच्छेदो धारणे-शरीरभेद इति । अत एव तदर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति । 'न शूद्राय मतिं दद्यात्' इति 'द्विजातीनामध्ययनमिज्या दानम्' इति च । येषां पुनः पूर्वसंस्कारवशाद्विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिस्तेषां न शक्यते फलप्राप्तिः प्रतिबद्धुं ज्ञानस्यैकान्तिकत्वात् 'श्रावयेच्चतुरो वर्णान्' इति चेतिहासपुराणाधिगमे चातुर्वर्ण्याधिकारस्मरणात् । वेदपूर्वकस्तु नाधिकारः शूद्राणामिति स्थितमिति ॥ ६ ॥ अश्रौताः पौराणिकाः । प्रोषिते देशान्तरस्थे ॥ ७ ॥

गृहिद्विजस्य नियतमाधानं तु विवाहतः ॥
ततो होमौ पार्वणेष्टी चातुर्मास्यं च संभवे ॥ ८ ॥
पशुसोमो वा तु ते दुर्ब्राह्मण्यादिहरा यतः ॥
सायंप्रातर्भोजनर्तुमर्तीस्वस्त्रीगमादिकम् ॥ ९ ॥
परिसंख्यातः संध्यावत्पञ्चयज्ञाश्च पैतृकम् ॥
आगन्तुसाधनं त्वत्र वक्ष्येऽथो दत्तसंमतम् ॥ १० ॥
प्रियशिष्योऽर्जुनः श्रीशमेकदैत्य प्रणम्य तम् ॥
पप्रच्छाऽप्सु महाशीते प्रातः क्लिश्यन्त्यमी कुतः ॥११॥
श्रीदत्तः प्राह राजेन्द्र त्रय्योपायोऽयमीरितः ॥
विस्मृतात्मस्वरूपाणां सदा नानासुखार्थिनाम् ॥ १२ ॥
सत्त्वशुद्धिकरो रम्यः शनैश्चित्तप्रकाशकः ॥
माघस्नानादिरूपोऽत्र सकामोऽप्याशु तारकः ॥ १३ ॥
किं शरीरेण पुष्टेन रक्षितेन बलीयसा ॥
अनित्येनाशुद्धजेन स्वतोऽप्यशुचिनाऽमुना ॥ १४ ॥
अस्थिस्तंबस्नायुबद्धं रक्तमांसविलेपितम् ॥
चर्मबद्धं सुदुर्गन्धं मलमूत्रादिपूरितम् ॥ १५ ॥
जराशोकविपद्व्याप्तं तापरोगालयं जरत् ॥
नित्यं रजस्वलं सर्वदोषदूषितमातुरम् ॥ १६ ॥

ल्यब्लोपे पञ्चमी । विवाहमारभ्याग्न्याधानं सायंप्रातर्होमौ च ॥ ८ ॥ संभवे सति पशुसोमो वा परिसंख्यात इति पूर्वान्वयि ॥ ९ ॥ १० ॥ ११ ॥ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

परोपतापपापार्तिपरद्रोहादिकारणम् ॥
लोलुपं पिशुनं क्रूरं कृतघ्नं क्षणभङ्गुरम् ॥ १७ ॥

सच्छिद्रमनुविस्रावि तापदोषादिकारणम् ॥
दुःपूरं दुर्धरं दृसं तृष्णाव्याप्तं च मोहदम् ॥ १८ ॥

निसर्गतोऽधर्मरतं दुष्टं जरदनुक्षणम् ॥
नानासंबन्धममताहन्ताबन्धादिकारणम् ॥ १९ ॥

सदा कामक्रोधलोभनरकद्वारसंस्थितम् ॥
कृमिविड्भस्मरूपान्तं परिणामे शुनां हविः ॥ २० ॥

ईदृशेन शरीरेण बुद्बुदा इव वारिणि ॥
जायन्ते च म्रियन्ते च जीवास्तेषां सुदुर्गतिः ॥ २१ ॥

अत एतादृशे लब्धे शरीरे बहुपुण्यतः ॥
यो योजयति धर्मे स दुर्गं तरति नेतरः ॥ २२ ॥

मकरस्थे रवौ यो हि शीतार्तोऽप्युदिते रवौ ॥
स्नाति पापैर्विमुक्तः स क्रमाद्ब्रह्माधिगच्छति ॥ २३ ॥

माघमासे रटन्त्याप ईषदभ्युदिते रवौ ॥
महापापमपि क्षिप्रं स्नानमात्रात्पुनीमहे ॥ २४ ॥

१७ ॥ १८ ॥ १९ ॥ २० ॥ दुर्गतिः कष्टा गतिः ॥ २१ ॥ दुर्गं संसारम् ॥ २२ ॥ २३ ॥ ईषदभ्युदिते अर्धोदये ॥ २४ ॥

ज्ञानतोऽज्ञानतो वापि वाङ्मनःकायजं ह्यघम् ॥
स्वल्पं वापि महद्वापि माघस्नानात्प्रणश्यति ॥ २५ ॥

एतदर्थं पुरावृत्तं शृणु राजर्षिसत्तम ॥
ऋचीका नाम कल्याणी ब्राह्मणी भार्गवी शुभा ॥२६॥

बालवैधव्यदुःखार्ता तपस्तेपे सुदारुणम् ॥
विन्ध्याचले महाक्षेत्रे रेवाऽत्रामरकण्टके ॥ २७ ॥

महाव्रता तत्र साऽभून्नारायणपरायणा ॥
सदाचारान्विता नित्यं दुष्टसंसर्गवर्जिता ॥ २८ ॥

मितसत्याल्पवाक् शान्ता जितकामा जितेन्द्रिया ॥
सुशीला धर्मनिरता देहशोषणशालिनी ॥ २९ ॥

पितृदेवद्विजार्थिभ्यो दत्तमग्नौ तया हुतम् ॥
उञ्छवृत्त्या षष्ठभागे भुङ्क्ते सापि यथाविधि ॥ ३० ॥

पराकतप्तकृच्छ्रातिकृच्छ्रचान्द्रायणव्रतैः ॥
श्रीविष्णुचिन्तनेनैव कालं नयति सर्वदा ॥ ३१ ॥

संस्नाताः कपिले रेवासंगमे विधिवत्तया ॥
षष्टिमाघास्ततो दैवान्मृता तत्रैव सा सुखात् ॥ ३२ ॥

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ उञ्छवृत्तिरस्वामिककणोपादानम् । षष्ठकाले मन्दीभूतेऽर्के ॥ ३० ॥ ३१ ॥ ‘ शतवृश्चिकदष्टस्य या पीडा सानुभूयते ’ इत्यस्य निषेधाय सुखादित्युक्तम् ॥ ३२ ॥

माघस्नानादिपुण्येन वैकुण्ठं प्राप साऽमला ॥
क्रीडन्ती सुविमानेन चतुर्युगसहस्रकम् ॥ ३३ ॥
सुन्दोपसुन्दनाशार्थं विधिनोत्तारिता पुनः ॥
विष्णुं प्रार्थ्य ब्रह्मलोके नाम्नाऽभूत्सा तिलोत्तमा ॥ ३४ ॥
रूपलावण्यसौन्दर्यधीचातुर्यप्रभाखनिः ॥
स्त्रीरत्नमुत्तमं साऽभूद्देवानामपि मोहिनी ॥ ३५ ॥
विधातुर्निपुणस्यापि साऽभवच्चित्तहारिणी ॥
न काऽप्यप्सरसां मध्ये सौन्दर्यलहरीदृशी ॥ ३६ ॥
तां सत्कृत्य विधिः प्राह देवि याहि तिलोत्तमे ॥
त्रिलोकीकण्टकौ सुन्दोपसुन्दावसुरौ जहि ॥ ३७ ॥
तथेत्युक्त्वाऽथ सा वीणां रणन्त्याप महीतलम् ॥
ब्रह्मलोकात्खमार्गेण यत्र तौ दनुजौ स्थितौ ॥ ३८ ॥
पूर्वमाप्लुत्य रेवायाः पवित्रे निर्मले जले ॥
परिधायाम्बरं रक्तं चोलीं विद्युत्प्रभां दृढाम् ॥ ३९ ॥
सिञ्जन्नूपुरवलयां मुक्तावल्या श्रितस्तनीम् ॥
पदे पदे केशपाशपतत्सुमनसं तु ताम् ॥ ४० ॥
गायन्तीं सुस्वरं प्रेक्ष्य सुस्निग्धं कोमलं कलम् ॥
वल्लकीं वादयन्तीं च दूतो गत्वाऽसुरौ जगौ ॥ ४१ ॥
युवां रत्नभुजौ लोके स्त्रीरत्नं चेदृशं प्रभू ॥
गत्वाऽशोकवने शीघ्रं पश्यतां काममोहिनीम् ॥ ४२ ॥

३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ खमार्गेण आकाशमार्गेण ॥ ३८ ॥ ३९ ॥ वल्लकीं वीणाम् ॥ ४० ॥ ४१ ॥ हे प्रभू ॥ ४२ ॥

सुन्दोपसुन्दावसुरौ तच्छ्रुत्वैवाशनादिकम् ॥
त्यक्त्वा ससीधुपात्रं स्त्रीरत्नकोटीश्च तामितौ ॥ ४३ ॥
भिन्नदेहावपि पुरा भ्रातरावेकमानसौ ॥
तां दृष्ट्वैव तदा जातौ मोहितौ भिन्नमानसौ ॥ ४४ ॥
भ्रातर्विरम भार्येयं ममैवास्तु वधूत्तमा ॥
त्वमेवार्य त्यजैनां मे भार्याऽस्त्वित्ति परस्परम् ॥ ४५ ॥
मत्तेभाविव संरब्धौ गदया तौ परस्परम् ॥
जघ्नतुः संप्रहारेण मृतौ द्वावपि तत्क्षणम् ॥ ४६ ॥
कृत्वैवं देवकार्यं सा ब्रह्मलोकं गता पुनः ॥
ब्रह्मा तामाह सत्कृत्य तिष्ठ त्वं सूर्यमण्डले ॥ ४७ ॥
भुक्त्वा भोगाननेकांस्त्वं सूर्येण सह संचर ॥
आकल्पं ब्रह्मसायुज्यं ततो गच्छ ध्रुवं शुभे ॥ ४८ ॥
इत्युक्त्वा सूर्यलोकं सा गतैवं कृतकृच्छ्रतः ॥
उदारेदृक् फलं लेभे ततः किं देहलालनात् ॥ ४९ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां श्रीवासुदेव्यां कर्मकाण्डे सप्तमाष्टके टीकायां प्रथमोऽध्यायः ॥ १ ॥

सीधु मद्यम् । इतौ प्राप्तौ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ आकल्पं कल्पपर्यन्तम ॥ ४८ ॥ देहकृच्छ्रदृष्ट्यभावादुदारा ॥ ४९ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां कर्मकाण्डे सप्तमाष्टके टीकायां प्रथमोऽध्यायः ॥ १ ॥

इति सुन्दोपसुन्दचरितं नाम सप्तमाष्टके प्रथमोऽध्यायः ॥ ७।१ ॥

---

## अथ हेमकुण्डलाह्वयवैश्यचरितकथनं नाम सप्तमाष्टके द्वितीयोऽध्यायः ॥ ७।२ ॥

हिन्वन्ति येऽसुवित्ताशां जिन्वन्ति करणानि च ॥
त एव श्रुतिमार्गेण गच्छन्ति परमं पदम् ॥ १ ॥
शृणु राजन् पुरावृत्तं नैषधे नगरे पुरा ॥
हेमकुण्डलनामाऽभूत्कुलीनो वैश्य उत्तमः ॥ २ ॥
सर्वस्ववृत्तिसंपन्नः सद्वृत्तो धनदोपमः ॥
गोमहिष्यश्वदासाढ्यो धनधान्यसमन्वितः ॥ ३ ॥
धार्मिको विविधोपायैर्दानशीलः स सत्यवाक् ॥
उत्पादयामास धनमष्टौ हाटककोटिकाः ॥ ४ ॥
एवं महाधनो वैश्यो ज्ञात्वाऽऽयुः क्षणभङ्गुरम् ॥
स्वयं धर्मार्जितधनषष्ठांशस्याकरोद्व्ययम् ॥ ५ ॥
वापीकूपतडागादि व्यरचन्निर्जलस्थले ॥
वटाश्वत्थोद्यापनानि शिवविष्ण्वालयानि च ॥ ६ ॥
उद्यानानि विचित्राणि तथा पुष्पवनानि च ॥
अन्नं ददौ याचकेभ्य उदयास्तमयावधि ॥ ७ ॥

॥ श्रीगणेशाय नमः ॥

असुवित्ताशां प्राणद्रव्यवाञ्छां त्यजन्ति । करणानि मनःषष्ठानीन्द्रियाणि । श्रुतिमार्गेण शास्त्राधारेण ॥ १ ॥ पुरावृत्तमितिहासम् ॥ २ ॥ कृषिगोरक्षवाणिज्यसंपन्नः ॥ ३ ॥ हाटकं स्वर्णम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

प्रपाः संस्थापयामास ददौ दानानि भूरिशः ॥
ज्ञाताज्ञाताघनाशार्थं प्रायश्चित्तं समाचरत् ॥ ८ ॥

देवब्रह्मातिथिपरः पुराणश्रवणोद्यतः ॥
गृहमृद्धं स्वपुत्राभ्यां दत्त्वाऽगात्तपसे वने ॥ ९ ॥

तत्राराध्य हरिं भक्त्या तदाकारमनाः स विट् ॥
त्यक्त्वा देहं स्वपुण्येन विष्णोर्लोकं ययौ शुभम् ॥१०॥

तत्पुत्रावुद्धतौ नाम्ना श्रीकुण्डलविकुण्डलौ ॥
युवानौ रूपसंपन्नौ लब्धेनार्थेन गर्वितौ ॥ ११ ॥

त्यक्त्वा धर्मं दुरात्मानौ दुःशीलौ व्यसनातुरौ ॥
वृद्धमातृवचोऽतीत्य परस्त्रीसक्तमानसौ ॥ १२ ॥

गीतवादित्रसंसक्तौ वारस्त्रीशतसंगतौ ॥
चाटुकारिनरैर्युक्तौ विटगोष्ठीविशारदौ ॥ १३ ॥

सुवेषौ चारुवसनौ नानालंकारधारिणौ ॥
क्रीडमानौ रथेभाश्वैर्मद्यमांसनिषेविणौ ॥ १४ ॥

वाराङ्गनानटविटबन्दिष्वेवं पितुर्धनम् ॥
ताभ्यामसद्व्ययैः सर्वं त्यक्तं बीजमिवोषरे ॥ १५ ॥

प्रपाः पानीयशालाः । अघनाशार्थं पापनाशार्थम् ॥ ८ ॥ ब्रह्मा विप्रः । ऋद्धं धनधान्ययुक्तम् ॥ ९ ॥ विट् वैश्यः ॥ १० ॥ ११ ॥ अतीत्यातिक्रम्य ॥ १२ ॥ वारस्त्रियो वेश्याः । चाटुकारिभिः प्रेम्णा मिथ्याविकत्थनकारिभिः ॥ १३ ॥ १४ ॥ ऊषरे ऊषवद्देशे ॥ १५ ॥ भूसुरा विप्राः ।

न दत्तं न हुतं ताभ्यां कदापि विधिनाऽमराः ॥
नार्चिता भूसुराश्चापि जातौ निष्किञ्चनावुभौ ॥ १६ ॥
अथ तौ दुःखितौ दैवान्निर्धनौ मानवर्जितौ ॥
क्षुत्क्षामौ वस्त्ररहितौ संत्यक्तौ स्वजनैरपि ॥ १७ ॥
ताभ्यां चौर्यं समारब्धं राजभीत्या पुराद्बहिः ॥
वने स्थित्वा धनुर्बाणकराभ्यां बहुयत्नतः ॥ १८ ॥
हत्वा भिल्लसहायौ तौ श्वापदान्पक्षिणोऽपि च ॥
जग्ध्वा मांसं प्रपीड्यारं पथिकान्पथि तस्थतुः ॥१९॥
अथैकदा हतो ज्येष्ठः शार्दूलेन बलीयसा ॥
पापिष्ठोऽपि कनिष्ठश्च सर्पदष्टो मृतिं ययौ ॥ २० ॥
यमदूतास्तदैत्योभौ बध्वा पाशैः सुनिर्दयम् ॥
दुर्गमेन पथा निन्युर्यमस्य पुरतो द्रुतम् ॥ २१ ॥
आमन्त्र्य चित्रगुप्तेन धर्मराजोऽनुगान् जगौ ॥
घोरेऽग्र्यो रौरवे स्थाप्यः स्वर्गे चैवानुजो द्रुतं ॥ २२ ॥
ततो दूतैर्विनिक्षिप्तो रौरवेऽग्र्यः सुदुःसहे ॥
कनिष्ठोऽपि विमानेन नीतः स्वर्गं यथासुखम् ॥ २३ ॥

निष्किञ्चनौ दरिद्रौ ॥ १६ ॥ क्षुत्क्षामौ क्षुधितौ ॥ १७ ॥ १८ ॥ जग्ध्वा भक्षयित्वा ॥ १९ ॥ २० ॥ पापित्वाद्द्रुतं निन्युः । 'त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीयते यमकिंकरैः' इति गारुडोक्तेः ॥ २१ ॥ 'आदित्यचन्द्रावनलोऽनिलश्च द्यौर्भूमिरापो हृदयं मनश्च ॥ अहश्च रात्रिश्च उभे च संध्ये कालश्च जानाति नरस्य वृत्तम्' इति साक्षिप्रश्नपूर्वकं आमन्त्र्य विचार्य ॥ २२ ॥ २३ ॥

गच्छन्स प्राह भो दूता आवामेकोद्भवौ समौ ॥
तुल्यक्रियौ तुल्यमृत्यू गतिर्भिन्नाऽऽवयोः कथम्॥२४॥
दूता ऊचुर्यथैकद्रौ विश्राम्यन्त्यमिताः खगाः ॥
निश्चयह्नि च वियुज्यन्ते संसारेऽर्मी तथाऽवशाः ॥२५॥
येन यद्यत्कृतं कर्म तत्तद्भोग्यं हि तेन च ॥
अवशः स्वकृतं भुङ्क्ते नान्योऽन्यस्य कदाचन ॥२६॥
कर्मैव कारणं तात जीवानां सुखदुःखयोः ॥
बन्धाय कारणं कर्म कर्म मोक्षाय केवलम् ॥ २७ ॥
देही करोति कर्मैकः कृतस्यैकोऽश्नुते फलम् ॥
अन्यो न लिप्यतेऽन्यस्य कर्मणेति विनिश्चितम् ॥२८॥
तात त्वया कृतं पुण्यं तेन स्वर्गस्तवोचितः ॥
त्वद्भ्रात्रा विहितं पापं गतस्तेन सुदुर्गतिम् ॥ २९ ॥
तच्छ्रुत्वाऽऽश्चर्यमापन्नो विकुण्डल उवाच तान्
भो दूताः परिपृच्छामि संशयो मे महानयम् ॥ ३० ॥
आबाल्यान्मे मनः पापे निरतं न वृषे त्विदम् ॥
जन्मान्तरीयपुण्यस्य फलं वा ब्रूत यत्कृतम् ॥ ३१ ॥
यदि प्राक्तनजं पुण्यं तर्हि पापस्य का गतिः ॥
अत्रैव चेत्कृतं किं तन्न जाने ब्रूत मुक्तिदम् ॥ ३२ ॥

आवयोरिति छेदः ॥२४॥ द्रौ वृक्षे ॥ २५ ॥ २६ ॥ केवलं निष्कामकर्म ॥ २७ ॥ २८ ॥ विहितं कृतम् ॥ २९ ॥ ३० ॥ वृषे धर्मे न निरतम् । यत्कृतं कर्म ॥ ३१ ॥ कृतप्रणाशप्रसङ्गात्पापस्य का गतिः ॥ ३२ ॥ भोः

ज्येष्ठभ्राता तथैवाहमुभौ पातकतत्परौ ॥
तयोर्मे स्वर्गहेतुः कः कृपया ब्रूत साधवः ॥ ३३ ॥

दूता ऊचुः शृणुष्वार्य त्वया यत्सुकृतं कृतम् ॥
जानीमो निखिलं तत्त्वं लुप्तज्ञान न वेत्सि तत् ॥ ३४ ॥

हरिविप्रात्मजो विप्रः सुमित्रो वेदपारगः ॥
य आसीदाश्रमे रम्ये कालिन्द्या दक्षिणे तटे ॥ ३५ ॥

यदैव निर्धनो भूत्वा भ्रात्रा सह वनं गतः ॥
तदैव दैवयोगेन जातस्तस्य समागमः ॥ ३६ ॥

सतां साप्तपदी मैत्री पुनात्युरुतरादघात् ॥
सैवेह भवबन्धघ्नी किं पुनर्दीर्घकालजा ॥ ३७ ॥

सततं तेन सख्यं ते जातं दैवाद्वनान्तरे ॥
तत्सङ्गेन त्वया चीर्णं माघस्नानं द्विवारतः ॥ ३८ ॥

यमुनापुण्यपानीये सर्वाघौघहरे वरे ॥
पापप्रणाशनाख्ये तु सुतीर्थे लोकमङ्गले ॥ ३९ ॥

साधवः देवदूताः ॥ ३३ ॥ हे आर्य कुलीन, तन्निखिलं जानीम इति पूर्वान्वयि । अविद्यया लुप्तं ज्ञानं यस्य तत्संबुद्धौ, त्वं तत्पुण्यं न वेत्सि । 'अज्ञानेनावृतं ज्ञानम्' इति स्मृतेः ॥ ३४ ॥ कालिन्द्या यमुनायाः ॥ ३५ ॥ ॥ ३६ ॥ सतां साधूनाम् । उरुतरादघान्महापापात् । सैव साप्तपदी मैत्री । इह संसारे ॥ ३७ ॥ तेन हरिमित्रेण ॥ ३८ ॥ ३९ ॥ एकेन माघस्नानेन ।

एकेन सर्वपापेभ्यो निर्मुक्तस्त्वं परेण च ॥
महत्स्वर्गफलं भुंक्ष्व गतिः सत्सङ्गजा त्वियम् ॥ ४० ॥

कृतपुण्यप्रभावेन मोदस्व सुचिरं दिवि ॥
तवाग्रजोऽस्ति नरके भुनक्ति यमयातनाम् ॥ ४१ ॥

छिद्यमानोऽसिना भ्राता भेद्यमानश्च मुद्गरैः ॥
चूर्ण्यमानः शिलापृष्ठे सोऽस्त्यङ्गारेषु भर्जितः ॥ ४२ ॥

इत्याकर्ण्य स तद्वाक्यं भ्रातृदुःखेन दुःखितः ॥
विनयावनतः प्राह सुदीनः पुलकाङ्कितः ॥ ४३ ॥

भवद्भिर्यत्समाख्यातं तत्तथैव न चान्यथा ॥
सत्सङ्गं संस्मरे येन मुक्तोऽहं वृजिनार्णवात् ॥ ४४ ॥

सतां साप्तपदी मैत्रीत्युक्तं तत्स्मर्तुमर्हथ ॥
भवत्तः श्रोतुमिच्छामि धर्मं स्वर्गतिदं ध्रुवम् ॥ ४५ ॥

इति ते तेन संपृष्टा दूता ऊचुः शृणुष्व भोः ॥
स्वर्गदुर्गतिदावेतौ धर्माधर्मौ सुनिश्चितौ ॥ ४६ ॥

**अपरेण** द्वितीयेन ॥ ४० ॥ ४१ ॥ ४२ ॥ विनयेनावनतो भूत्वा संजा-तरोमाञ्चः प्राह । स्मारितपुण्यानीति शेषः ॥ ४३ ॥ दुःखसमुद्रात् ॥ ४४ ॥ **भवत्तो** युष्मत्तः ॥ ४५ ॥ सुनिश्चितौ वेदैरिति शेषः ॥ ४६ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्ड-
मण्डितायां संहितायां श्रीवासुदेव्यां कर्मकाण्डे
सप्तमाष्टके द्वितीयोऽध्यायः ॥ २ ॥

कर्मकाण्डे सप्तमाष्टके द्वितीयोऽध्यायः ॥ २ ॥

इति हेमकुण्डलाह्वयवैश्यचरितकथनं नाम सप्तमाष्टके
द्वितीयोऽध्यायः ॥ ७।२ ॥

---

## देवदूतैर्वैश्यपुत्राय देवताभजनादिधर्महार्दकथनं नाम सप्तमाष्टके तृतीयोऽध्यायः ॥७।३॥

हरिः ॐ ॥ धर्ता योऽखिलशक्तीनां तमाराध्य स्वकर्मणा ॥
परपीडां न कुर्वन्ति न ते यान्त्यन्तकालयम् ॥१॥
ये प्राणिहिंसकास्ते तु वेदयज्ञतपोमुखैः ॥
युक्ता अपि न यान्त्यूर्ध्वं भक्तिहीनश्च तादृशः ॥ २ ॥
शास्त्रेण चोदिता हिंसा सैव धर्मः परो मतः ॥
सैवेह परमं दानं सैवेह परमं तपः ॥ ३ ॥
मशकान्मत्कुणान्दंशान्यूकादीन्पीडकानपि ॥
आत्मौपम्येन येऽवन्ति ते नरा धर्मशीलिनः ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥

वैश्यपुत्रेण संपृष्टाः श्रद्धया ऊचिरे परे ॥
देवदूता धर्महार्दं देवताभजनादिकम् ॥ १ ॥

अखिलप्राणिकारकशक्तिधरं हृषीकेशं स्वाश्रमोचितकर्मणा ॥ १ ॥ वेदादियुक्ता अप्यूर्ध्वं न यान्ति किमन्यत् । भक्तिहीनश्च नोर्ध्वं याति ॥ २ ॥ ननु तर्हि हिंसाभिया यज्ञा न कार्याः अत आह—शास्त्रेण कल्पादिमुखेन चोदिता विधिनोद्दिष्टा हिंसा वैदिकत्वात्स्वर्ग्या च । अन्यच्च 'जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते ॥ अहिंसया हि भूतानां जपयज्ञः प्रवर्तते'इति ॥ ३ ॥ तदतिरिक्ताऽस्वर्ग्या । अत एव 'अहिंसा परमो धर्मः' इति मत्वा सर्वान्रक्षेदित्याह ॥ ४ ॥ 'दानं वितरणं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥

तप्ताङ्गारमयं मार्गं दुर्गां वैतरणीं नदीम् ॥
दुर्गतिं नैव पश्यन्ति कृतान्तं चापि ते नराः ॥ ५ ॥
ये हिंस्राः प्रेत्य तेऽन्योन्यं खादन्त्यन्योन्यघातिनः ॥
परस्त्रीधनहर्तारो नरकं यान्ति दारुणम् ॥ ६ ॥
ये हिंसन्तीह भूतानि जीवनार्थं परत्र ते ॥
स्वमांसभोजिनोऽत्यन्तं क्लिश्यन्त्येवास्रपूयपाः ॥ ७ ॥
स्थावरास्ते भविष्यन्ति नरकान्निर्गता अपि ॥
तिर्यग्योनीरुषित्वाऽथ सुचिराद्यान्ति मर्त्यताम् ॥ ८ ॥
तत्रापि च भवन्त्यन्धाः काणाः कुब्जाश्च पङ्गवः ॥
अङ्गहीना दरिद्राश्च स्वाघचिह्नैश्च चिह्निताः ॥ ९ ॥
परद्रोहो न कार्योऽतः कायेन मनसा हृदा ॥
यतो लोकद्वयाद्भ्रंशो द्रोग्धुर्हि परतो भयम् ॥ १० ॥
स्यन्दमाना यथा नद्यः सर्वा यान्ति महाम्बुधिम् ॥
अहिंसायां तथा धर्माः प्रविशन्त्यखिलाः खलु ॥ ११ ॥
दत्ताभयः पुमानेव सर्वधर्मसमावृतः ॥
अचलं पदमाप्नोति न भूयश्च्यवते ततः ॥ १२ ॥

इयं सा तीर्यते यस्मात्तस्माद्वैतरणी नदी' इत्युक्तलक्षणाम् ॥ ५ ॥ कृतान्तं यमम् ॥ ६ ॥ ७ ॥ ८ ॥ तत्र मनुष्यजन्मनि स्वपापज्ञापकलिङ्गैः ॥ ९ ॥ यतः परतः घातितसंबन्धिभ्यो यमाच्च ॥ १० ॥ स्यन्दमाना गच्छन्त्यः। 'अहिंसा परमो धर्मः' इति तत्रैव सर्वधर्मान्तर्भावः ॥ ११ ॥ 'अभयं सर्वभूतेभ्यो मत्तः' इति कृतसंन्यासोऽचलमिति स्वर्गाद्व्यतिरेक उक्तः। तत आत्मत्वेनाधिगतात्पदात् ॥ १२ ॥ पश्यन्ति विचारयन्ति तथा चरन्ति

स्वधर्मान्वेदशास्त्रोक्तान्देशकालोचितानपि ॥
ये पश्यन्तीह ते नैव पश्यन्ति यमयातनाम् ॥ १३ ॥

स्ववर्णाश्रमिणो ये च स्वाचारनिरताः सदा ॥
शीलवत्योऽपि नार्यश्च नाकपृष्ठे वसन्ति ते ॥ १४ ॥

यथोक्ताचारिणः सर्वे जितकामा जितेन्द्रियाः ॥
स्वकर्मनिरता यान्ति ब्रह्मलोकमकल्मषम् ॥ १५ ॥

इष्टापूर्तरता ये च यदृच्छालाभहर्षिताः ॥
दयान्विता दानशीलास्ते न यान्ति यमालयम् ॥१६॥

वेदपाठरता नित्यं ब्राह्मणा येऽग्निहोत्रिणः ॥
स्वर्यान्ति तेऽपि भूपाश्च रणे येऽभिमुखे हताः ॥ १७ ॥

अनाथगोद्विजातिस्त्रीशरणागतरक्षणे ॥
ये मृता धर्मसंग्रामे ते न यान्ति यमालयम् ॥ १८ ॥

पङ्गून्दीनाञ्छिशून्वृद्धान्रुग्णानार्तान्भयातुरान् ॥
ये पुष्णन्त्यभयं दत्त्वा रमन्ते ते चिरं दिवि ॥ १९ ॥

च ॥ १३ ॥ १४ ॥ अकल्मषं निरुपद्रवम् ॥ १५ ॥ १६ ॥ १७ ॥
॥ १८ ॥ रुग्णान् रोगग्रस्तान् ॥ १९ ॥ दुर्विधं दरिद्रम् । यमक्षयं

गां दृष्ट्वा पङ्कमग्नां ये रुग्णं विप्रं च दुर्विधम् ॥
उद्धरन्ति ततो ये ते नैव यान्ति यमक्षयम् ॥ २० ॥

गोग्रासदा नरा ये च ये कामं गोनिषेविणः ॥
प्रपासंस्थापका ये च ते न यान्ति यमक्षयम् ॥ २१ ॥

यावत्पिबन्ति पानीयं वापीकूपतडागतः ॥
जीवास्तावद्धि तिष्ठन्ति तत्कर्तारः सुखाद्दिवि ॥ २२ ॥

जीवानां जीवनं वारि तद्यो दास्यति यत्नतः ॥
जीवत्वं स विहायैव परे ब्रह्मणि मोदते ॥ २३ ॥

धात्रीकपित्थबिल्वांस्त्रीन्पञ्चाम्रान्दश तिन्तिणीः ॥
पिचुमन्दाश्वत्थवटान्वप्ता न नरकं व्रजेत् ॥ २४ ॥

वरं त्रयो भूमिरुहा न तु कोष्ठरुहा दश ॥
पत्रैः पुष्पैः फलैस्ते हि कुर्वन्ति पितृतर्पणम् ॥ २५॥

घनच्छायो द्रुमो जीवान् गृहिभ्योऽप्यधिकं त्विह ॥
छायादिनाऽऽश्वासयति ततोऽपि फलदः फली ॥ २६॥

सुच्छायाफलपुष्पाढ्यं वृक्षं प्राणिनिषेवितम् ॥
ये छिन्दन्ति नरा मूढास्ते यान्ति नरकं ध्रुवम् ॥२७॥

यमगृहम् ॥ २० ॥ २१ ॥ २२ ॥ जीवत्वमविद्यादिदोषवत्त्वम् ॥ २३ ॥ धात्र्यामलकी एतान्वृक्षान् वप्ता बीजवापादिना निर्मापकः 'डुवप् बीजसंताने' इति धातोः ॥ २४ ॥ 'रुह प्रादुर्भावे' इत्युपलक्षणात्। कोष्ठरुहाः पुत्राः। पितृतर्पणं वप्तृतृप्तिम् ॥ २५ ॥ फली सफलः ॥ २६ ॥ शोभना छाया यस्य आ समन्तात्फलानि पुष्पाणि च तैराढ्यम् ॥ २७ ॥

यद्द्वारि तुलसीदेवी तीर्थभूतं हि तद्गृहम् ॥
रोपणात्पालनात्सेकाद्दर्शनात्स्पर्शनान्नृणाम् ॥ २८ ॥

तुलसी हरते पापं वाङ्मनःकायसंभवम् ॥
सर्वतीर्थाप्लुतिफलं तुलसीस्पर्शनात्स्मृतम् ॥ २९ ॥

गङ्गाप्लुत्या हरिस्मृत्या रेवादृष्ट्या सुरार्चनैः ॥
समानस्तुलसीस्पर्शो विष्णुलोकगतिप्रदः ॥ ३० ॥

पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितोऽमलाः ॥
वासुदेवादयो देवा निवसन्ति तुलस्यधः ॥ ३१ ॥

तुलसीमञ्जरीभिर्यो विष्णुं संपूजयेन्नरः ॥
त्रिकालमेककालं वा वैकुण्ठे स महीयते ॥ ३२ ॥

विष्णुमन्त्रजपी यस्तु तुलसीकाष्ठभूषितः ॥
विष्णुव्रतपरो विष्णुपूजको विष्णुलोकभाक् ॥ ३३ ॥

तथैव शिवभक्तोऽपि पूजयेत्सांबमीश्वरम् ॥
बिल्वैर्जपेच्छैवमन्त्रं कैलासे स महीयते॥ ३४ ॥

जलसेकात् ॥ २८ ॥ आप्लुतिः स्नानम् ॥ २९ ॥ यदुक्तं मार्कण्डेयवायवीययोः—'त्रिभिः सारस्वतं तोयं सप्ताहेन तु यामुनम् ॥ सद्यः पुनाति गाङ्गेयं दर्शनादेव नर्मदा' इति । नर्मदादर्शनं तारकं तत्समस्तुलसीस्पर्शः । अयमशुचित्वे रात्रौ च निषिद्धः ॥ ३० ॥ ३१ ॥ वैकुण्ठे ब्रह्मसायुज्ये वा महीयते पूज्यो भवति ॥ ३२ ॥ विष्णुव्रतमेकादशी व्यापकत्वालोचनं वा ॥ ३३ ॥ साम्बं गौरीयुतम् ॥ ३४ ॥ स्वयं भवतीति स्वयंभूः ।

रेवासमुद्भवे बाणलिङ्गे यः पूजयेच्छिवम् ॥
स्फाटिके रत्नलिङ्गे वा पार्थिवे वा स्वयंभुवि ॥ ३५ ॥
शैले वा स्थापिते क्वापि शिवव्रतपरो नरः ॥
प्रदोषे पूजयेद्भक्त्या स मुक्तो नात्र संशयः ॥ ३६ ॥
रुद्राक्षभूषितो रुद्रजापी भस्मत्रिपुण्ड्रधृक् ॥
स क्वापि न शृणोत्येव यमलोककथां नरः ॥ ३७ ॥
शिवपूजाप्रभावेण शैवाः शिवरता नराः ॥
मोदन्ते शिवलोके ते शिवेन सह सर्वदा ॥ ३८ ॥
प्रसङ्गेनापि शाठ्येन दम्भेनेशं च लोभतः ॥
येऽर्चन्ति ते विमुच्यन्ते किं पुनर्भक्तिभाविताः ॥ ३९ ॥
नेशार्चनात्परं पुण्यं सर्वपापप्रणाशनम् ॥
सर्वैश्वर्यप्रदं दुर्गात्तारकं मृत्युहारकम् ॥ ४० ॥
द्रव्यमन्नं फलं तोयं शिवस्वं न स्पृशेत्क्वचित् ॥
लङ्घयेन्नैव निर्माल्यं कूपे सर्वं विनिक्षिपेत् ॥ ४१ ॥
मक्षिकापादमात्रं यः शिवस्वमुपजीवति ॥
लोभेन वाऽथ मोहेन नरके स तु पच्यते ॥ ४२ ॥

'भुवः संज्ञान्तरयोः' इति क्विप् तस्मिन्नोंकारादौ ॥ ३५ ॥ ३६ ॥ क्वापीह परत्र च । 'भस्मदिग्धशरीरस्तु भस्मशायी जितेन्द्रियः ॥ सततं रुद्रजाप्योऽसौ परां मुक्तिमवाप्स्यति ॥ १ ॥ रोगवान् पापवांश्चैव रुद्रं जप्त्वा जितेन्द्रियः ॥ रोगात्पापाद्विनिर्मुक्तो ह्यतुलं सुखमश्नुते' इति । रुजं दुःखं शोकं च द्रावयतीति रुद्र इति ॥ ३७ ॥ ३८ ॥ शाठ्येन कापट्येन ॥ ३९ ॥ दुर्गात्कष्टात् ॥ ४० ॥ शिवस्वं शिवद्रव्यम् ॥ ४१ ॥ ४२ ॥

कृत्वैकदेवभक्तिं ये मात्सर्येण द्विषन्ति च ॥
अन्यदेवं च तद्भक्तं ते यान्ति नरकं ध्रुवम् ॥ ४३ ॥
विष्णुः शिवो गणेशोऽर्कः शक्तिश्चेति पृथङ् न हि ॥
एकोऽजः पञ्चधा जातः कुतो भेदोऽस्ति दैवतैः ॥४४॥
एतानीशाङ्गानि तृप्येदेकस्यापीह तर्पणात् ॥
यथाऽऽस्याक्ष्यादितृप्त्याङ्गी चोद्विजेदेकनिन्दया ॥४५॥
देवद्रोहस्ततस्त्याज्यस्तद्भक्तस्यापि सर्वदा ॥
यथारुचीश्वरः सेव्यो नान्यथाभेदमाचरेत् ॥ ४६ ॥
वर्षालैर्ये तृणैः पर्णैः कुर्वन्तीहेश्वरालयम् ॥
ते यान्ति सुस्थिरं लोकं सर्वभोगसमन्वितम् ॥ ४७ ॥
गोशालां धर्मशालां वा मार्गे विश्राममन्दिरम् ॥
यतेर्मठं द्विजगृहं कृत्वा स्वर्गे वसन्ति ते ॥ ४८ ॥
नूतनालयनिर्माणाज्जीर्णोद्धारः प्रयत्नतः ॥
कार्यो देवादिगेहानां तत्फलं द्विगुणं भवेत् ॥ ४९ ॥
मठाधिपत्यं यः कुर्याल्लोभाद्वा मोहतोऽपि वा ॥
यतिदेवगुरूणां च स पापैर्युज्यते भृशम् ॥ ५० ॥
वर्ज्यं मठाधिपस्यान्नं भुक्त्वा चान्द्रायणं चरेत् ॥
स्पर्शमात्राच्चरेत्स्नानं देवद्रव्योपजीविनाम् ॥ ५१ ॥
कुर्वन्ति देवपूजार्थं ये नराः पुष्पवाटिकाम् ॥
निर्लोभास्ते चरिष्यन्ति स्वर्याने नन्दने वने ॥ ५२ ॥

॥ ४३ ॥ ४४ ॥ ईशस्याङ्गानि ॥ ४५ ॥ अन्यथाभेदं मत्सरादिम् ॥ ४६ ॥
वर्षालैर्वर्षाभयहरैः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

संमार्जनादिना येऽलंकुर्वन्तीश्वरमन्दिरम् ॥
निस्पृहास्ते नरा नित्यं स्वर्गे लोके वसन्ति हि ॥५३॥
य इच्छेदात्मनो मुक्तिं देवसद्गुरुसंगतिम् ॥
स कुर्याद्बन्धदां नैव शिश्नोदरतृपां क्वचित् ॥ ५४ ॥
यादृशी प्रीतिरज्ञानां विषयेष्वनपायिनी ॥
परेश्वरे तादृशी चेत्को न मुच्येत बन्धनात् ॥ ५५ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां श्रीवासुदेव्यां कर्मकाण्डे सप्तमाष्टके तृतीयोऽध्यायः ॥ ३ ॥

अलंकुर्वन्ति भूषयन्ति ॥ ५३ ॥ देवाभिन्नगुरुसंगतिम् । शिश्नोदरतृपां विषयासक्तानाम् ॥ ५४ ॥ ईश्वरे विषये तादृश्यनपायिनी चेत्सर्वोपि मुच्येतेत्यर्थः ॥ ५५ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां त्रिकाण्डमण्डितायां वासुदेव्यां कर्मकाण्डे सप्तमाष्टके टीकायां तृतीयोऽध्यायः ॥ ३ ॥

देवदूतैर्वैश्यपुत्राय देवताभजनादिधर्महार्दकथनं नाम सप्तमा० तृतीयो० ॥ ७।३ ॥

---

देवदूतैर्वैश्यायान्नवस्त्रादिदानविधिकथनं
नाम सप्तमाष्टके चतुर्थोऽध्यायः ॥ ७४ ॥

हरिः ॐ ॥ असर्जीदं जगद्येन गुणकर्मविभागशः ॥
तं स्वधर्मेण योऽभ्यर्चेत्सोऽधिगच्छति तत्पदम् ॥ १ ॥

स्वधर्माचरणादत्र प्रीणाति परमेश्वरम् ॥
यथाज्ञापालनाद्राज्ञा तथेशः शास्त्रसत्कृतेः ॥ २ ॥

द्विजदेवातीथीन्ये च प्रीणयन्त्यन्वहं मुदा ॥
पाशानिहैव ते छित्त्वा ब्रह्मलोके वसन्ति हि ॥ ३ ॥

मूर्खो वा पण्डितो वापि श्रोत्रियः पतितोऽपि वा ॥
मध्याह्ने यः समायातो ब्रह्मतुल्योऽतिथिर्हि सः ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥

द्विपञ्चाशत्तमे प्रोक्ता दूतैर्वैश्याय पृच्छते ॥
तैरेव चान्नवसनदानादिविविधा वृषाः ॥ १ ॥

असर्जि सृष्टम् ॥ १ ॥ शास्त्रं श्रुतिस्मृतिरूपं 'श्रुतिस्मृती ममैवाज्ञे इत्यपीश्वरभाषितम्' इत्युक्तेः ॥ २ ॥ पाशानविद्यादीन् ॥ ३ ॥ पण्डितः शास्त्रज्ञः । श्रोत्रियो वैदिकः ॥ ४ ॥ पथि मार्गे 'स इद्भोजो यः' इति

पथि श्रान्ताय विप्राय क्षुधिताय कृशाय ये ॥
अन्नपानादि यच्छन्ति ते वसंति चिरं दिवि ॥ ५ ॥

मार्गे श्रान्ताः क्षुधाविष्टा भोक्तुकामाः समागताः ॥
तांस्तर्पयन्ति ये भूम्यां ब्रह्मलोके वसन्ति हि ॥ ६ ॥

न याति विमुखो यस्मादतिथिस्तद्गृहं गृहम् ॥
अतिथिर्विमुखो यस्मात्तद्गृहं वनमुच्यते ॥ ७ ॥

नैवातिथिसमो बन्धुर्न धर्मो न हितो धनम् ॥
अतिथीनां प्रभावेन मुनित्वं देवतापि च ॥ ८ ॥

पक्वान्नं भिक्षवे यज्ञात्प्राग्दद्यादपि तत्फलम् ॥
तस्मिन्पराङ्मुखे यज्ञो नैवास्यादानदोषहृत् ॥ ९ ॥

तस्मै भक्त्यार्पितं ग्रासमात्रमप्यन्नमद्रिवत् ॥
तस्मात्सर्वप्रयत्नेन यतयेऽन्नं प्रदीयताम् ॥ १० ॥

भारतं वर्षमाश्रित्य दत्त्वान्नादीन्यकामतः ॥
विष्णुमभ्यर्च्य मेधावी जीवन्मुच्येदसंशयम् ॥ ११ ॥

श्रुतेः ॥ ५ ॥ ६ ॥ वनमित्यत्र 'न स सखाय' इति श्रुतिः ॥ ७ ॥ हितो मित्रं देवता देवत्वं तस्य भाव इति तल् । यज्ञा द्वैश्वदेवात्प्राक् तत्फलं वैश्वदेवफलम् । तस्मिन्यतौ । यज्ञो वैश्वदेवः । अस्यादातुरदानजन्यदोषहरो न ॥ ८ ॥ ९ ॥ तस्मै यतये ॥ १० ॥ अकामतः ईश्वरप्रीत्यै ॥ ११ ॥

नान्नदानसमं पुण्यं नोपकारश्च तादृशः ॥
अन्ने प्रतिष्ठिताः प्राणा ह्यन्नदः प्राणदो मतः ॥ १२ ॥

योऽतिथिभ्यो ददात्यन्नमन्नकामेभ्य उत्तमः ॥
स्वर्गे सौख्यं चिरं भुक्त्वा भूयोऽप्यत्र धनी भवेत्।१३।

पुरा यमोऽवदत्स्वर्गाच्च्यवन्तं केसरिध्वजम् ॥
देह्यन्नं तत आत्मानं पुनरप्युद्धरिष्यसि ॥ १४ ॥

इति श्रुतं यमवचस्ततोऽन्नं तारकं परम् ॥
अन्नदानसमं दानं न भूतं न भविष्यति ॥ १५ ॥

ग्रीष्मे सुशीतलं तोयं हेमन्ते काष्ठमंशुकम् ॥
दद्याद्वर्षासु विश्रान्तिमर्थिभ्योऽन्नं तु सर्वदा ॥ १६ ॥

ज्ञाताज्ञातेषु पापेषु क्षुद्रेषु च महत्स्वपि ॥
वारंवारं चरेद्विद्वान्प्रायश्चित्तं यथाविधि ॥ १७ ॥

निष्कल्मषो नरो भूत्वा ज्ञानी मुच्येदिहैव तु ॥
प्रायश्चित्तमकृत्वेह नरो नरकमश्नुते ॥ १८ ॥

वाङ्मनःकायसंभूतं पापं यो नाशयेदिह ॥
अतोऽज्ञोऽपि समाप्नोति ब्रह्मलोकं महासुखम् ॥ १९ ॥

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ हेमन्ते काष्टं वस्त्रं च ॥ १६ ॥ महत्सु सुरापानादिषु ॥ १७ ॥ ज्ञानी चेदिति प्रतिबन्धाभावे जीवन्मुक्तिरिति सूचितम् ॥ १८ ॥ अज्ञ इति समुच्चयोपासको ग्राह्योऽन्यथा ब्रह्मलोकप्राप्त्यसंभवात् ॥ १९ ॥ मनुः ' जप्येनैव तु संशुद्ध्येद्ब्राह्मणो नात्र संशयः ॥

कृत्वापि बहुपापानि योऽनुतप्तो जपेद्द्विजः ॥
गायत्रीं वेदमन्त्रान्वा सोऽत्र पापैर्वियुज्यते ॥ २० ॥
नित्यकर्मरतो यस्तु वेदाभ्यासरतो वशी ॥
न ज्ञानोत्थेन पापेन लिप्यते स न संशयः ॥ २१ ॥
महाव्रतो यमी यस्तु नित्यं तीर्थोपसेवकः ॥
पितृदेवाचार्यसेवी दुर्गं स्वप्नेपि नेक्षते ॥ २२ ॥
यो यस्यान्नं समश्नाति स तस्याश्नाति दुष्कृतम् ॥
ज्ञात्वैवं दुर्गतिभिया परान्नस्य रुचिं त्यजेत् ॥ २३ ॥
आपदि प्रतिगृह्णीयाद्दानं नैव च भोजनम् ॥
पुण्यहानिकरी भुक्तिस्तथैवान्यवधूरतिः ॥ २४ ॥
नित्यस्नानेन पूयन्ते पापात्मानोपि जन्तवः ॥
बाह्याभ्यन्तरपापघ्नं प्रातःस्नानं सुसिद्धिदम् ॥ २५ ॥
अस्नातादशुचेर्यान्ति विमुखाः पितृदेवताः ॥
विना स्नानेन यो भुंक्ते मलाशीति स कथ्यते ॥ २६ ॥
स्नानहीनो नरः पापी नरकं याति दारुणं ॥
तस्माद्यः स्नाति गङ्गादौ कुयोनिं स न गच्छति ॥२७॥
दुःस्वप्ननाशनं पुण्यं प्रातःस्नानं विशोधनम् ॥
स्नानं विनेह शक्तस्य नाधिकारोऽन्यकर्मसु ॥ २८ ॥

कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' इति ॥ २० ॥ २१ ॥ **दुर्गं** दुर्गतिम् ॥ २२ ॥ २३ ॥ अन्यवधूरतिः पारदार्यम् ॥ २४ ॥ २५ ॥ अशुचेः शौचरहितात् ॥ २६ ॥ २७ ॥ अन्यकर्मसु नित्यादिषु ॥ २८ ॥

संध्योपासनयज्ञादीन् भक्त्या यो विधिवच्चरेत् ॥
सङ्गं त्यक्त्वा फलं चापि न स पश्यति दुर्गतिम् ॥२९॥

बह्वल्पं वेह यल्लब्धं तत्तु प्राग्जन्मदानतः ॥
इति ज्ञात्वा यथाशक्ति धर्मार्थं दीयतां धनम् ॥ ३० ॥

गोभूतिलहिरण्याज्यवासोधान्यगुडादि यः ॥
ददाति सात्त्विको नैव नारकी तस्य यातना ॥ ३१ ॥

सुक्षेत्रे पर्वणि शुभे यो ददाति जुहोति च ॥
भक्त्या जपति तं याम्या न स्पृशन्ति भटाः खलु ॥ ३२ ॥

प्रियव्रतः सत्यवादी मौनी दानदयापरः ॥
शान्तो दान्तस्तितिक्षुश्च शुद्धो दाक्षिण्यसंयुतः ॥ ३३ ॥

निर्मत्सरो निष्कपटो ब्रह्मचर्येण संयुतः ॥
परस्य स्वं तृणं वापि मनसापि न यः स्पृशेत् ॥ ३४ ॥

आदिशब्दादग्निहोत्रम् । श्रुतिश्च ' यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान्हिनस्ति ' । सम्यक्क्रियमाणेष्वग्निहोत्रादिषु तदनुरूपेण भूरादयः सत्यन्ताः सप्तलोकाः प्राप्यन्ते तेनैवंभूतकर्मणा त्वप्राप्यत्वाद्धिंस्यन्त इवाया-समात्रमतो हिनस्तीत्युक्तम् । पिण्डदानेन वा संबध्यमानाः पित्रादित्रयः स्वापकारकाः पुत्रादित्रयः स्वसहिताः सप्तलोका हिंस्यन्त इति श्रुत्यर्थः ॥ २९ ॥ ३० ॥ दातव्यमिति सात्त्विकम् ॥ ३१ ॥ ३२ ॥ प्रियंवदः सूनृतवाक् 'प्रियवशे वदः खच्' इति खच् ॥ ३३ ॥ स्वं द्रव्यम् ॥ ३४ ॥

स नेच्छन्नपि मुच्येत बन्धादज्ञानसंभवात् ॥
इच्छन्नपि न मुच्येत कृतघ्नो यो हि दुर्मतिः ॥ ३५ ॥

न तीर्थैर्न तपोभिश्च कृतघ्नस्यास्ति निष्कृतिः ॥
स याति यातनां घोरामवकीर्णी तथैव च ॥ ३६ ॥

क्रूरारुंतुददुर्वार्णीवक्ता स नरकागतः ॥
धर्मत्यागी च दुष्टोऽपि पुनर्यास्यति दुर्गतिम् ॥ ३७ ॥

तस्मात्सौम्यो नरो भूत्वा निजधर्मं समाचरेत् ॥
सत्सङ्गनिरतो नित्यं तीर्थवासपरो भवेत् ॥ ३८ ॥

न तीर्थे पातकं कुर्यात्त्याज्यस्तीर्थे प्रतिग्रहः ॥
दुर्जरं पातकं तीर्थे दुर्जरश्च प्रतिग्रहः ॥ ३९ ॥

'स्वल्पमप्युपकारं यो न वेत्ति पुरुषाधमः ॥ कृतघ्नः स तु विज्ञेयो ब्रह्मघ्नादपि पापकृत्' इत्युक्तेर्दुर्मतिः ॥ ३५ ॥ अवकीर्णी क्षतव्रतः । स्मृतिश्च 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते ततः ॥ प्रायश्चित्तं न पश्यामो येन शुद्धयेत्स आत्महा' इति । न्यायश्च 'न चाधिकारिकमिति पतनानुमानात्तदयोगात्' इति । 'भ्रष्टोर्ध्वरेतसो नास्ति प्रायश्चित्तमथास्ति वा ॥ अदर्शनोक्तेर्नास्त्येव व्रतिनो गर्दभः पशुः ॥ उपपातकमेतद्वै व्रतिनो मधुमांसवत् ॥ प्रायश्चित्ताच्च संस्काराच्छुद्धिर्यत्नपरं वचः' ॥ शुद्धस्याप्यस्योपादेयत्वे व्यासः—'बहिस्तूभयथापि स्मृतेराचाराच्च' इति । 'शुद्धः शिष्टैरुपादेयस्त्याज्यो वा दोषहानितः ॥ उपादेयोऽन्यथा शुद्धिः प्रायश्चित्तकृता वृथा ॥ आमुष्मिके च शुद्धिः स्यात्ततः शिष्टास्त्यजन्ति तम् ॥ प्रायश्चित्तादृष्टवाक्यादशुद्धिस्त्वैहिकीष्यते' ॥ ३६ ॥ क्रूरां कठिनाम् । अरुंतुदां मर्मस्पृशम् । दुर्वार्णीं वक्तेति ॥ ३७ ॥ ३८ ॥ दुर्जरं दुष्परिहारम् ॥ ३९ ॥

व्रतं दानं तपो यज्ञः पवित्राण्यपराणि च ॥
गङ्गाबिन्द्वभिषेकस्य कलां नार्हन्ति षोडशीम् ॥ ४० ॥

धर्मद्रवो ह्यपां बीजं श्रीविष्णुचरणच्युतम् ॥
शंकरेण धृतं मूर्ध्ना गङ्गाम्भः पावयेन्न किम् ॥ ४१ ॥

गङ्गेत्युच्चारणान्मुक्तिः किं पुनः स्नातपानतः ॥
स्नातव्यं तत्प्रयत्नेन सुधीभिर्गाङ्गवारिणि ॥ ४२ ॥

असमर्थोऽपीह दातुमादातुं यो न सज्जते ॥
महाव्रतधरः प्रेत्य भास्वत्तारात्वमेति सः ॥ ४३ ॥

सदा योगरतः पश्येन्मातृवत्परकामिनीम् ॥
परद्रव्यं च विषवत्सोऽचिरान्मुच्यते भयात् ॥ ४४ ॥

स्त्रीणां तु भर्तृसेवैव तारणं शीलपालनम् ॥
श्रेष्ठसेवेह शूद्राणां तारका नातिमानिनाम् ॥ ४५ ॥

**कलामंशम्** ॥ ४० ॥ पवित्रीकुर्यान्न किम् ॥ ४१ ॥ ४२ ॥ इह तीर्थादौ **आदातुं न सज्जते** । 'अपि वा मातरं गच्छेन्न तु गङ्गाप्रतिग्रहः' इति निषेधात् ॥ ४३ ॥ भयाद्द्वैतात् । 'द्वितीयाद्वै भयम्' इति श्रुतेः ॥ ४४ ॥ '**गायत्र्या** ब्राह्मणमसृजत त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छन्दसा शूद्रमित्यसंस्कारो विज्ञायत इति शूद्रश्चतुर्थो वर्ण एकजातिः' इति वचनाच्छूद्रेणातिमानिता त्याज्या ॥ ४५ ॥ इति श्रीमद्दत्तात्रेयपुराणे

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां
त्रिकाण्डमण्डितायां श्रीवासुदेव्यां कर्मकाण्डे
सप्तमाष्टके चतुर्थोऽध्यायः ॥ ४ ॥

सा० संहि० त्रिका० श्रीवा० कर्मकाण्डे सप्तमाष्टके टीकायां
चतुर्थोऽध्यायः ॥ ४ ॥

इति देवदूतैर्वैश्यायान्नवस्त्रादिदानविधिकथनं
नाम सप्तमा० चतु० ॥ ७।४ ॥

---

**वैष्णवधर्माणामेकादश्यादिव्रतानां च नियमकथनं नाम सप्तमाष्टके पञ्चमोऽध्यायः ॥ ७ । ५ ॥**

हरि ॐ ॥ पुरोपार्जितपुण्येन माघस्नानोद्भवेन विट् ॥
त्वं तु वैष्णवसङ्गेन पूतो वैकुण्ठभागसि ॥ १ ॥
दुराचारोऽकुलीनोऽपि पापरूपोऽपि यो भजेत् ॥
वैष्णवं नैव स प्रेक्ष्य इत्यूचे किंकरान्यमः ॥ २ ॥
तस्मात्पापा अपि नरा ये तु वैष्णवसंगताः ॥
यमलोकं न ते यान्ति तेषां विष्णुपुरं ध्रुवम् ॥ ३ ॥
पावनी वैष्णवी भक्तिस्तथा वैष्णवसंगतिः ॥
संभवन्त्यपि पापिष्ठाः साधवोऽत्र द्रुतं यया ॥ ४ ॥
नेहान्यः सुलभोपायः संततुं नरकाम्बुधिम् ॥
विष्णुभक्तिं विना तस्मात्स्वीकार्या सा प्रयत्नतः ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥

वैष्णवानां च ये धर्मा एकादश्या व्रतस्य च ॥
नियमास्ते त्रिपञ्चाशत्तमाध्याये प्रकीर्तिताः ॥ १ ॥

हे विट् वैश्य ॥ १ ॥ २ ॥ ३ ॥ विष्णुभक्त एव वैष्णवो न तप्तमुद्राधारी ब्राह्मणानां तन्निषिद्धत्वात् । 'अतप्ततनूः' इति श्रुतेर्ज्ञानपरत्वात् 'एकजातेरयं धर्मो न द्विजातेः कथंचन' इति शूद्रपरत्वात् ॥ ४ ॥ ५ ॥ श्वादश्व-

भक्त्या शुध्यति वैष्णव्या श्वादोऽपि किमतः परम् ॥
त्रिलोकीं बाह्यवर्णोऽपि पुनाति खलु वैष्णवः ॥ ६ ॥

यत्कुले वैष्णवो भक्तस्तत्कुलं नैति दुर्गतिम् ॥
संगत्या विष्णुभक्तस्य पापोऽप्यूर्ध्वगतिं लभेत् ॥ ७ ॥

वैष्णवानां च ये दासा वैष्णवान्नभुजोऽथ वा ॥
ते यान्ति वैष्णवं धाम दुराचाररता अपि ॥ ८ ॥

आकाङ्क्षेद्वैष्णवादन्नं तदभावे जलं पिबेत् ॥
संगतिं तदभावेऽपि यः कुर्यात्स विमुक्तिभाक् ॥ ९ ॥

येन केन प्रकारेण वदेन्नारायणेति यः ॥
म्रियमाणोऽपि पापी स विष्णुलोके महीयते ॥ १० ॥

नार्थवादोऽयमत्रैव प्रमाणं भगवान्स्वयम् ॥
अजामिलगजग्राहमुखा अत्र निदर्शनम् ॥ ११ ॥

तस्माद्भक्तो विनीतात्मा यो विष्णुं संस्मरेत्सदा ॥
जन्मसंसारबन्धात्स मुच्यते नात्र संशयः ॥ १२ ॥

ण्डालः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ प्रकारेण दम्भादिनापि ॥ १० ॥ 'म्रियमाणो हरेर्नाम गृणन्पुत्रोपचारितम् ॥ अजामिलोऽप्यगाद्धाम किं पुनः श्रद्धया गृणन्' इत्युक्तेर्नार्थवादः । निदर्शनं दृष्टान्तः ॥ ११ ॥ १२ ॥

अष्टार्णं द्वादशार्णं वा विधिना वापि भक्तितः ॥
जपन्ति वैष्णवं मन्त्रं ये ते विष्णुमयाः स्मृताः ॥१३॥

स्वमतेऽत्याग्रहस्त्याज्यो निन्द्यं नान्यमतं च यत् ॥
सद्गुरूक्तं परं तत्त्वं श्रद्धाभक्त्याऽभ्यसेत्सुधीः ॥१४॥

ये सेवन्ते सदा विष्णुं ते सायुज्यादिभागिनः ॥
निदिध्यासनतो विष्णोः सायुज्यं सुधियामिह ॥ १५ ॥

हृदि सूर्ये जले वह्नौ यन्त्रेऽर्चायामथापि वा ॥
येऽभ्यर्चन्ति हरिं भक्त्या तेषां विष्णुपदं ध्रुवम् ॥१६॥

शालग्रामशिलाचक्रे वज्रकीटविनिर्मिते ॥
तिष्येऽपि विष्ण्वधिष्ठाने सर्वपापप्रणाशने ॥ १७ ॥

सर्वपुण्यप्रदे नित्यं विष्णुसान्निध्यकारणे ॥
सकामोऽप्यनिशं योऽर्चेद्विष्णुं सोऽत्रैव मोक्षभाक्॥१८॥

पशुसोमसहस्रेण पुनरावृत्तिदेन च ॥
शालग्रामार्चनस्येह मोक्षदस्य कथं तुला ॥ १९ ॥

ज्योतिर्लिङ्गार्चनाधिक्यफलादस्याश्च पूजनात् ॥
गर्भवासो न भक्तस्य कुतो वार्तास्य दुर्गतेः ॥ २० ॥

न्यासादिविधिना ॥ १३ ॥ १४ ॥ विष्णोर्व्यापकस्यात्मनः ॥ १५ ॥ अर्चायां प्रतिमायाम् ॥ १६ ॥ तिष्ये कलौ ॥ १७ ॥ पशुसोमसहस्रं पुनरावृत्तिदं, तेन मोक्षदशालग्रामशिलार्चनस्य न तुलना ॥ १९ ॥ २० ॥

वेदयज्ञतपोदानतीर्थस्नानादिपुण्यदम् ॥
शालग्रामं सूपचारैर्योऽर्चेत्स हरिलोकभाक् ॥ २१ ॥
यत्र संनिहितो विष्णुस्तत्र लोकाश्चतुर्दश ॥
गङ्गादिसर्वतीर्थानि सर्वे देवाश्च तत्र हि ॥ २२ ॥
शालग्रामस्य पुरतः श्राद्धं कुर्वन्ति ये नराः ॥
तृप्यन्ति पितरस्तेषां श्रीविष्णोः समनुग्रहात् ॥ २३ ॥
समशालग्रामतोयं चक्राङ्कमिथुनाम्बुयुक् ॥
गव्याधिकं पिबेन्मूर्ध्ना वहेन्मुक्तः स पातकात् ॥ २४ ॥
संपूज्य विधिना दद्याच्छिलां पात्राय भक्तितः ॥
तेन दत्ताऽखिला पृथ्वी वैकुण्ठे स चिरं वसेत् ॥२५॥
शालग्रामशिलाऽमूल्या क्रयविक्रयतोऽस्य च ॥
बहुदोषोऽस्त्यतः पूज्या गुरुलब्धा शिलामला ॥२६॥
भूत्वा भागवतो विष्णुं संपूज्यापि हरेर्दिने ॥
यो भुनक्ति दुरात्मा स पूयास्राशी भविष्यति ॥ २७ ॥
तस्मात्कार्यं प्रयत्नेन नित्यमेकादशीव्रतम् ॥
प्रसङ्गेनापि यत्कृत्वा दुर्गतिं नैव पश्यति ॥ २८ ॥
नेदृशं पावनं पुण्यं नेदृशंपरमं तपः ॥
नेदृक् पूर्तेष्टदत्तादि तारकैकादशी ततः ॥ २९ ॥

॥ २१ ॥ २२ ॥ २३ ॥ 'शालग्रामाः समाः पूज्याः समेषु द्वितयं नहि ॥ विषमा नैव पूज्यन्ते विषमेष्वेक एव हि ॥ चक्राङ्कमिथुनं पूज्यम्' इत्युक्तेः ॥ २४ ॥ २५ ॥ अमूल्याऽनर्घ्या ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

व्रतं संकल्प्य पूर्वेद्युरेकभक्तो हरेर्दिने ॥
स्नात्वा वशी समभ्यर्च्य भक्त्या श्रीविष्णुमद्वयम्॥३०॥
नियतोऽनशनो रात्रौ षड्विंशगुणजागरम् ॥
सततं कीर्तयन्विष्णुं यः कुर्यात्सोऽत्र मुच्यते ॥ ३१ ॥
दशम्यामेकभक्तो य एकादश्यामुपोषितः ॥
द्वादश्यां पारणं कुर्यात्प्रीतिपात्रं हरेः स च ॥ ३२ ॥
अशक्तोऽपि स नक्ताशी हविष्याशी च वा चरेत् ॥
एकादश्या व्रतं भक्त्या पक्षयोरुभयोरपि ॥ ३३ ॥
एकादशीव्रतपरो यो व्रात्यैः सह भाषते ॥
नीचैश्च वृषलैर्म्लेच्छैस्तत्पुण्यं नश्यति क्षणात् ॥ ३४ ॥
तस्मान्मौनी व्रती भूत्वा विष्णुकीर्तनपूर्वकम् ॥
कुर्याद्व्रतं य एतत्स विष्णुलोके महीयते ॥ ३५ ॥
एकादशेन्द्रियैः पापं यत्कृतं मनुजैरिह ॥
एकादशीव्रतेनैव तन्नश्यति न संशयः ॥ ३६ ॥
बालो वृद्धोऽतिवृद्धोऽपि स्त्री वर्णाश्रमिणोऽखिलाः ॥
व्रताधिकारिणो ज्ञेया एकादश्याः सदैव हि ॥ ३७ ॥
एकादशी सकामानामैहिकामुष्मिकार्थदा ॥
कैवल्यदाप्यकामानामतोऽसावुभयात्मिका ॥ ३८ ॥

पूर्वेद्युर्दशम्यां 'एकादश्यां निराहारो भूत्वाहमपरेऽहनि ॥ भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत' इति संकल्प्य ॥ ३० ॥ 'एकादश्यां विशेषेण कर्तव्यं भो जन द्वयम् । रात्रौ जागरणं कुर्याद्दिवा च हरिकीर्तनम्' इत्युक्तेः सततं हरिकीर्तनं जागरं च कुर्यात् ॥३१॥३२॥ उभयोः शुक्लकृष्णयोः ॥३३॥३४॥३५॥३६॥३७॥ उभयात्मिका नित्या काम्या च ॥३८॥

पूर्वापरकुलोद्धर्त्री सर्वपापापहारिणी ॥
तारिणी दुर्गसंसारात्कामदाऽमूं न को भजेत् ॥ ३९ ॥
तावद्गर्जन्ति पाप्मानो यावन्नाचरितं व्रतम् ॥
दीप्ते व्रताग्नौ नृदेहे क्व स्थास्यन्त्यघपक्षिणः ॥ ४० ॥
पुनाति धूर्तमप्येतद् व्याजेनापि कृतं व्रतम् ॥
भक्त्या चेद्विधिवच्चीर्णं किं पुनस्तारकं नहि ॥ ४१ ॥
स्नातानि सर्वतीर्थानि सर्वे तेनार्चिताः सुराः ॥
सर्वव्रतानि चीर्णानि येनैकादश्युपोषिता ॥ ४२ ॥
तस्मात्सर्वप्रयत्नेन चरेदेकादशीव्रतम् ॥
धर्मः सनातनः सोऽयं सर्वथा विष्णुचिन्तनम् ॥ ४३ ॥
इति सप्तमाष्टके पञ्चमोऽध्यायः ॥ ५ ॥

॥ ३९ ॥ ४० ॥ व्याजेन कपटेन । धूर्तं वञ्चकम् ॥ ४१ ॥ ४२ ॥
॥ ४३ ॥ इति श्रीदत्तपुराणे सप्तमाष्टके टीकायां पञ्चमोऽध्यायः ॥ ५ ॥

इति वैष्णवधर्माणामेकादश्यादिव्रतानां च नियमकथनं
नाम सप्तमा० पञ्च० ॥ ७।५ ॥

---

**विकुण्डलेन प्रसादितैर्विष्णुदूतैस्तद्भ्रातृमोक्षोपाय-
कथनं नाम सप्तमाष्टके षष्ठोऽध्यायः ॥ ७ । ६ ॥**

हरिः ॐ ॥ अयं सर्वोत्तमो धर्मो वर्णाश्रमपरः सदा ॥
सेवनीयः प्रयत्नेन तद्विष्णोः स्मरणं परम् ॥ १ ॥
स्मरणं वासुदेवस्य सर्वाघौघनिदानहृत् ॥
हृत्स्थैर्यदं ज्ञानकरं वासनाजालनाशनम् ॥ २ ॥
कृताघघ्नानि सर्वाणि प्रायश्चित्तमुखानि तु ॥
विष्णोः स्मृत्याऽनया भाविपापेच्छाविर्भवोऽपि नो ॥ ३ ॥
तपस्तप्तं व्रतं चीर्णं दानं दत्तं क्रिया कृता ॥
कृतं सर्वं च तेनैव श्रीहरिर्येन संस्मृतः ॥ ४ ॥
पूज्यो विष्णुर्यथा भक्त्या तद्भक्ता अपि तादृशाः ॥
अतो विष्णोः प्रियतरा सेव्या भक्ताश्च विष्णुवत् ॥ ५ ॥
भूत्वाऽपि वैष्णवो मूढो यो निन्दति स दुर्मतिः ॥
शैवादीन्स तु नाप्नोति सद्गतिं तस्य दुर्गतिः ॥ ६ ॥
तस्मात्सर्वप्रयत्नेन निन्दासूयादिवर्जितः ॥
कामपीशकलां भक्त्या पूजयेत्स विमुक्तिभाक् ॥ ७ ॥

॥ श्रीगणेशाय नमः ॥

चतुःपञ्चाशत्तमे तु विष्णुदूताः प्रसादिताः ॥
विकुण्डलेन तद्भ्रातृमोक्षोपायमुपादिशन् ॥ १ ॥

॥ १ ॥ २ ॥ प्रायश्चित्तादीनि जाताघहराणि । विष्णुस्मृत्या तु न पापेच्छोद्भवोऽपि ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ 'फल-

शृणु सर्वोत्तमं धर्मं निरयादिनिवारणम् ॥
सर्वाभयार्पणं सत्त्वशोधनं गोनिरोधनम् ॥ ८ ॥

अद्रोहः सर्वभूतानां मनोवाक्कायकर्मभिः ॥
स्ववर्णाश्रमधर्मोक्तचरणं पापवारणम् ॥ ९ ॥

सत्यमेव प्रवक्तव्यं न चौर्यं यस्य कस्यचित् ॥
शक्त्या पात्रे प्रदातव्यं संत्याज्या विषयस्पृहा ॥ १० ॥

अयमेव परो धर्म इदमेव परं तपः ॥
इयमेव परा पूजा विष्णोर्विश्वात्मनो हरेः ॥ ११ ॥

आचारप्रभवो धर्मो विभुस्तत्प्रभुरच्युतः ॥
तुष्टेऽस्मिन्नुभयर्द्धीशे भक्तानां दुर्लभं किमु ॥ १२ ॥

तोऽपि च यत्कर्म नानर्थेनानुबध्यते ॥ केवलप्रीतिहेतुत्वात्तद्धर्म इति कथ्यते' इति । सर्वाभयार्पणं संन्यासः। सत्त्वशोधनं तपः। गोनिरोधनमप्रमत्तता। श्रुतिश्च—'नायमात्मा बलहीनेन लभ्यो०' मेति। भाष्यं—अयमात्मा बलप्रहीणेनात्मनिष्ठाजनितवीर्यहीनेन न लभ्यः। नापि लौकिकपुत्रपश्वादिविषयसंगतिनिमित्तप्रमादात्तथा 'तपसो वाऽप्यलिङ्गात्' तपोऽत्र ज्ञानं लिङ्गं संन्यासः संन्यासरहिताज्ज्ञानान्न लभ्यः। एतैरुपायैर्बलाप्रमादसंन्यासज्ञानैर्यतते तत्परः सन् प्रयतते। यस्तु विद्वान् विवेक्यात्मवित्तस्य विदुष आत्मा विशति ब्रह्मधाम संप्रविशति ॥ ८ ॥ ९ ॥ सत्यादीनि मुमुक्षोः सम्यग्ज्ञानसहकारीणि निवृत्तिसाधनानि। प्रसिद्धं हि लोके सत्यवादिनाऽनृतवाद्यभिभूयते 'सत्यमेव जयति नानृतम्' इति श्रुतेः सत्यवान् जयतीति श्रुत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥

सत्संगत्याऽपि ते वैश्य माघस्नानेन तोषितः ॥
श्रीविष्णुस्तत्प्रसादात्त्वं शुद्धो वैकुण्ठभागसि ॥ १३ ॥

धर्मः पृष्टस्त्वयाऽस्माभिः प्रोक्त एवं सनातनः ॥
आबाल्यं ये चरन्त्येनं नैषां स्वप्नेऽपि दुर्गतिः ॥ १४ ॥

श्रुत्वा विकुण्डलः प्राह तद्वचोऽमृतसंनिभम् ॥
स्वभ्रातुर्दुर्गतिं चित्त आनीयाह सुदीनवाक् ॥ १५ ॥

हृत्प्रसादकरं सौम्याः श्रुतं वो मङ्गलं वचः ॥
गङ्गेव पापहृत्सद्यः सतां संगतिरुत्तमा ॥ १६ ॥

वक्तुं प्रियं चोपकर्तुं सतां स्वाभाविको गुणः ॥
शीतलीक्रियतेऽर्को यैस्तापतप्तस्य का कथा ॥ १७ ॥

देवदूता यथा भ्राता निरयादुद्गतिं व्रजेत् ॥
तथोद्योगोऽद्य कार्यो यदुदाराः साधवो बुधाः ॥ १८ ॥

कर्तैव केवलं भुङ्क्ते कृतं सर्वं शुभाशुभम् ॥
एवं चेन्निष्फलो भाव्यो दैवाप्तः सदनुग्रहः ॥ १९ ॥

इति तस्य वचः श्रुत्वा क्षणं ध्यात्वाऽवदन्भटाः ॥
तद्भ्रातृमुक्त्युपायं ते तन्मैत्रीकृतबन्धनाः ॥ २० ॥

१३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ हे देवदूताः ॥ १८ ॥ सदनुग्रहः कुलतारकः ॥ १९ ॥ २० ॥

पुरा मधुवने सौम्य शाकल्याख्योऽवसन्मुनिः ॥
तपोऽध्ययनसंपन्नास्तस्य पुत्रा नवाभवन् ॥ २१ ॥

तत्र तेजस्विनः पञ्च बभुवुर्गृहमेधिनः ॥
परिव्राजोऽस्पृहाः शिष्टा निःसङ्गा निष्परिग्रहाः ॥ २२ ॥

वातशीतादिसहना जिताहारा जितेन्द्रियाः ॥
अक्रिया नष्टसंदेहा दृढज्ञाना महाव्रताः ॥ २३ ॥

पश्यन्तो विष्णुरूपेण विश्वं मौनं समाश्रिताः ॥
विस्मृत्य भौतिकं रूपं परमानन्दनिर्वृताः ॥ २४ ॥

येन केनचिदाच्छन्ना भोजिता येन केनचित् ॥
स्वापिता येन केनापि न ते वारब्धभोगिनः ॥ २५ ॥

एवं ते दैवयोगेन मत्स्यदेशे त्वदाश्रमे ॥
आगता वैश्वदेवान्ते वेदा रूपधरा इव ॥ २६ ॥

अष्टमे जन्मनि त्वं तु पूर्वमासीर्द्विजोत्तमः ॥
कुटुम्बवान् शीलवृत्तश्रुतयुक्तो महाव्रतः ॥ २७ ॥

तान्दृष्ट्वाभ्यागतान्सिद्धान्प्रत्युद्गत्वा प्रणम्य च ॥
सगद्गदं साश्रुनेत्रं सहर्षं प्रार्थ्य सद्गिरा ॥ २८ ॥

त्वयाभिनन्दितास्ते तु त्वद्गृहे समवस्थिताः ॥
संपूजिता भोजितास्ते ध्यायन्तोऽस्थुः परं मुदा ॥ २९ ॥

मधुवने मथुरायाम् ॥ २१ ॥ गृहमेधिनो गृहस्थाः ॥ २२ ॥ २३ ॥ २४ ॥ ॥ २५ ॥ २६ ॥ २७ ॥ प्रत्युद्गत्वा संमुखं गत्वा ॥ २८ ॥ २९ ॥

पादावनेजनं तीर्थं तेषां पीतं त्वया धृतम् ॥
शीर्णा ते तेन सर्वाघं नष्टं तत्स्तवनादपि ॥ ३० ॥

तेषामातिथ्यजं पुण्यं जातं वाचोऽप्यगोचरम् ॥
भूतानां प्राणिनः श्रेष्ठास्तेभ्यो विध्युपजीविनः ॥ ३१ ॥

ततोऽपि मानवाः श्रेष्ठाः श्रेष्ठास्तेभ्योऽपि च द्विजाः ॥
श्रेष्ठास्तेभ्योऽपि विद्वांसस्तेभ्योऽपि कृतबुद्धयः ॥ ३२ ॥

श्रेष्ठास्ततोऽपि कर्तारस्ततोऽपि ब्रह्मवित्तमाः ॥
अतः परं परं भूतं न भूतं न भविष्यति ॥ ३३ ॥

अतः सत्संगतिः श्रेष्ठा तारिणी पापहारिणी ॥
इति ते संचितं पुण्यं वर्णितं पूर्वजन्मजम् ॥ ३४ ॥

केनचिद्दैवयोगेन भ्रष्टस्यापि ततः पुनः ॥
जन्मन्यत्रैव सत्सङ्गात्पूर्वपुण्यप्रभावतः ॥ ३५ ॥

पादक्षालनोदकं तीर्थम् ॥ ३० ॥ वाचोप्यगोचरम् । अत्र श्रुतिः ' यं यं लोकं० म' इति । भाष्यं—यं यं लोकं पित्रादिलक्षणं मनसा संविभाति कल्पयति मह्यमन्यस्मै वा भवेदिति । विशुद्धसत्त्वः क्षीणक्लेश आत्मवन्निर्मलान्तःकरणः कामयते यांश्च कामान् प्रार्थयते भोगांस्तं तं लोकं जयते प्राप्नोति तांश्च कामान्संकल्पितान् भोगान् तस्माद्विदुषः सत्यसंकल्पत्वादात्मज्ञानेन शुद्धान्तःकरणं ह्यर्चयेत्पूजयेत् पादक्षालनशुश्रूषानमस्कारादिभिर्विभूतिमिच्छुः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

माघस्नानं द्विवारं ते जातमेकेन पातकम् ॥
प्रणष्टमपरेणातो विष्णुलोकः सनातनः ॥ ३६ ॥
ब्रह्मिष्ठातिथ्यजं पुण्यं भ्रात्रेऽर्पय ततः स तु ॥
भूत्वा विपापो वैकुण्ठं यास्यत्यद्य त्वया सह ॥ ३७ ॥
इत्युक्तः स ददौ तेन स पापोऽपि समुद्धृतः ॥
अथोर्ध्वं जग्मतुरुभौ नृपैवं पुण्यमुत्तमम् ॥ ३८ ॥
तस्मादध्रुवदेहेन प्राप्नुवन्ति ध्रुवं नराः ॥
इदमेव सदा कार्यमन्यथाधोगतिर्नृणाम् ॥ ३९ ॥
मकरस्थेऽरुणेऽघघ्न्य आपः शुद्धा मयोभुवः ॥
रमणीयं महो द्रष्टुं यासां शिवतमो रसः ॥ ४० ॥
ईशानावार्यपापानां चर्षणीनां क्षयन्त्य उत् ॥
भेषजं ददते शंभुर्यास्वग्निर्भेषजानि च ॥ ४१ ॥
प्रवहन्तीदमापोऽमूर्यत्किंचिद्दुरितं नरे ॥
शापद्रोहानृताद्युत्थं माघमासे विशेषतः ॥ ४२ ॥
यासूर्जं वरुणः सोमो विश्वेदेवा मदन्ति च ॥
वैश्वानरो यास्वाविष्टस्ताः सत्यो न पुनन्ति किम्॥४३

॥ ३६ ॥ ३७ ॥ उभौ भ्रातरौ । हे नृपार्जुन ॥ ३८ ॥ ॥ ३९ ॥ अरुणे सूर्ये । मयोभुवः सुखभूमयः । महो ब्रह्म द्रष्टुमपरोक्षीकर्तुं चर्षणीनां नृणां क्षयन्त्यो निवासभूताः । शंभुः सुखकरोऽग्निः यास्वप्सु । आपोहिष्ठेति श्रुतेः, ऊर्जं बलमन्नं वा ‘ यासु राजा वरुणः ’ इति श्रुतेः, ‘ आपमापामपः सर्वाः अस्मादस्मादितोमुतेति ’ पावनत्वमपां श्रुतम् ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्ध-

**इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां श्रीवासुदेव्यां कर्मकाण्डे सप्तमाष्टके षष्ठोऽध्यायः॥६॥**

त्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां कर्मकाण्डे सप्तमाष्टके टीकायां षष्ठोऽध्यायः ॥ ६ ॥

**विकुण्डलेन प्रसादितैर्विष्णुदूतैस्तद्भ्रातृमोक्षोपायकथनं नाम सप्तमा० षष्ठो० ॥ ७।६ ॥**

## सद्‌गुरुणा माघस्नानविधिरक्षोप्सरस्संवादकथनं नाम सप्तमाष्टके सप्तमः ॥ ७।७ ॥

हरिः ॐ ॥ निवर्तध्वं भटाः पुण्यकारिभ्य इति दण्डधृक् ॥
ब्रूतेऽतोऽधो न यान्त्येव स्वधर्मेणात्मशोषकाः ॥१॥

प्रसङ्गेन त्र्यहं स्नानादपि नाधो व्रजेन्नरः ॥
भक्त्या च विधिवत्स्नानात्कथं माघे त्वधोगतिः ॥२॥

संस्नानादुदितेऽर्केऽर्धे माघे माघा अघा अपि ॥
तस्माद्राजेन्द्र विधिना माघस्नानं चरेन्नरः ॥ ३ ॥

शुद्धो भूत्वा पुराचम्य संकल्प्य नियतो जले ॥
मकरस्थे रवौ माघे गोविन्दाच्युत माधव ॥ ४ ॥

स्नानेनानेन देवेश शरणं मे भवाच्युत ॥
मासमभ्यर्च्य संप्रीत्यै श्रीविष्णोर्नियमांश्चरेत् ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥

माघस्नानविधिं रक्षोप्सरःसंवादमेव च ॥
पञ्चपञ्चाशत्तमेऽस्मिन्नध्याये प्राह सद्‌गुरुः ॥ १ ॥

दण्डधृग्यमः ॥ १ ॥ २ ॥ माऽघाः पापहीनाः ॥ ३ ॥ शुद्धो मलोत्सर्गस्नानादिना । मकरस्थ इति स्नानमन्त्रः ॥ ४ ॥ ५ ॥

तिलाज्यहोमो भूशय्या हविष्याशनमर्चनम् ॥
विष्णोः कम्बलवस्त्रादिदानं ब्राह्मणभोजनम् ॥ ६ ॥

प्रत्यहं श्रवणं भक्त्या कीर्तनं सर्वदा हरेः ॥
कार्यमुद्यापनं चान्ते शक्त्या भोज्या द्विजातयः ॥७॥

तस्माम्बवन्धुः सरः स्रोतो धुनी गङ्गा यथोत्तरम् ॥
फलदा यमुनायोगे स्नानाद्गङ्गाधिपुण्यदा ॥ ८ ॥

स्नानात्सितासितायोग उत्पतन्ति दिवं नरः ॥
सर्वपापहरो धात्रा प्रयागो विहितः पुरा ॥ ९ ॥

ये माघे मकरस्थेऽर्के प्रातर्मज्जन्त्यघा अपि ॥
त्रिवेण्यां दिवि भुक्त्वा ते भोगान्यान्ति हरेः पदम् १०

अत्रैव स्नानतः सिद्धाः कृतार्था अमरा अपि ॥
शृण्वेकदाप्सरा काचिन्नाम्ना काञ्चनमालिनी ॥ ११ ॥

स्नात्वा प्रयागेऽभिषेक्तुं यावद्गच्छति शंकरम् ॥
मार्गे तदार्द्रवस्त्राया शीकरस्पर्शनाद्विधेः ॥ १२ ॥

हिमाद्रिस्थोऽसुरो घोरो हिंस्रोऽपि सहसाभवत् ॥
शान्तात्मा प्राह तां का त्वं कुतस्ते कान्तिरीदृशी ।१३।

तिलेति नियमाः ॥ ६ ॥ ७ ॥ अन्धुः कूपः । स्रोतः प्रवाहजलं । धुनी नदी । पूर्वपूर्वापेक्षयोत्तरोत्तरं फलाधिक्यम् । यमुनागङ्गायोगः प्रयागः । श्रुतिश्च 'सितासिते सरिते' इति ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ शीकरोऽम्बुकणः ॥ १२ ॥ १३ ॥ हे सुकेशि । 'स्वाङ्गाच्च' इति ङीप् । हे सुभ्रु भ्रूशब्द-

स्वर्गगामिनि सुश्रोणि सुभ्रू पीनोन्नतस्तानि ॥
चन्द्रानने विशालाक्षि सुकेशि सुरमोहिनि ॥ १४ ॥
क्व यासि कुत आयासि वस्त्रमार्द्रं कुतस्तव ॥
केन पुण्येन ते भाति सर्वं तेजोमयं वपुः ॥ १५ ॥
त्वद्वस्त्रबिन्दुपातेन कथं क्रूरोऽसुरोऽप्यहम् ॥
शान्तोऽभवं वदस्वैतदाश्चर्यं भाति मेऽधुना ॥ १६ ॥
कोऽयं तवाङ्गमहिमा महादेवीति भासि मे ॥
क्रूरस्य मेऽन्यथा शान्तिः कथं लोकैकसुन्दरि ॥ १७ ॥
श्रुत्वाऽसुरवचस्तत्तु तुष्टा काञ्चनमालिनी ॥
प्राहाप्सरा गतास्म्यद्य प्रयागं कामरूपिणी ॥ १८ ॥
सांप्रतं वर्तते माघो महापातकनाशनः ॥
स्नात्वार्धेऽभ्युदिते सूर्ये त्रिवेण्यामागतास्म्यहम् ॥ १९ ॥
आर्द्रः परिकरो मेऽद्य सुस्नानाद्गाङ्गतोयतः ॥
यास्यामि त्वरया रक्षः कैलासं पर्वतोत्तमम् ॥ २० ॥

स्योवङ्स्थानीयत्वात् 'नेयङुवङ्' इति नदीसंज्ञाप्रतिषेधात् 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वं नास्त्यतः प्रमाद इति चेन्न । 'अप्राणिजातेश्चारज्ज्वादीनाम्' इत्यत्रालाबूः कर्कन्धूरित्यूकारान्तादप्यूङ्प्रत्ययमुदाजहार भाष्यकारः । एतज्ज्ञापकात्क्वचिदूकारान्तस्याप्यूङन्तत्वान्नदीत्वे ह्रस्वत्वं वामनश्चाह ऊकारादप्यूङ्प्रकृतेरिति ॥ १४ ॥ आर्द्रं क्लिन्नं तेजोमयं तेजःप्रचुरम् ॥ १५ ॥ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ परिकरः कटिवसनम् । हे रक्षः ॥ २० ॥

तत्रास्ते पार्वतीनाथः सर्वदेवनमस्कृतः ॥
तं पूजयितुमीशानं त्वरयाम्यधुनाऽसुर ॥ २१ ॥
त्रिवेण्यम्बुप्रभावेण सद्यस्ते क्रूरता गता ॥
ईदृशं पावनं तीर्थं माघमासे विशेषतः ॥ २२ ॥
जाताऽहं येन चार्वङ्गी तत्पुण्यं ते वदाम्यहम् ॥
येन स्वर्गेऽप्यहं मान्या रूपलावण्यरञ्जिता ॥ २३ ॥
अहं विलासिनी पूर्वं कलिङ्गेशस्य भूभुजः ॥
रूपलावण्यैकनिधिः सौन्दर्यमदगर्विता ॥ २४ ॥
योषितामपि सर्वासामहमासं शिरोमणिः ॥
तत्र मेऽनुग्रहाद्राज्ञो भुक्ता भोगाः सुदुर्लभाः ॥ २५ ॥
स्वीकृतं तत्पुरं सर्वं मया लावण्यसंपदा ॥
चित्राण्यनेकरत्नानि भूषणानि वराणि च ॥ २६ ॥
मनोहराणि वासांसि भोगा अपि च सर्वशः ॥
भूपान्मयार्जितं सर्वं सदा मोहनरूपया ॥ २७ ॥
अनादृता अपि बलाद्रूपसंपत्तिदर्पिताः ॥
संसेवन्ते युवानो मे चरणौ कामकिंकराः ॥ २८ ॥
मया ते वञ्चिताः सर्वे सर्वस्वेनैव मायया ॥
तेऽन्योन्यं सेर्ष्यभावेन घातयन्तोऽमिता मृताः ॥२९॥
इत्थं कामवशादेव बहुकालो गतोऽसुर ॥
संप्राप्ते स्थाविरे दैवाद्विवेकोऽयं ममाभवत् ॥ ३० ॥

॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ मे मया ॥ २५ ॥ २६ ॥ २७ ॥ अनादृतास्तिरस्कृताः ॥ २८ ॥ मायया कापट्येन ॥ २९ ॥ ॥ ३० ॥

न दत्तं न हुतं तप्तं व्रतं नाचरितं मया ॥
नाराधितो मया देवः शिवः स्वर्गापवर्गदः ॥ ३१ ॥
नैव संतर्पिता विप्रा न कृतं प्राणिनां हितम् ॥
नाणुमात्रं कृतं पुण्यं सदा मे भोगलुब्धया ॥ ३२ ॥
चर्मखण्डं पापकुण्डं क्रीतं मे तेन किंसुखम् ॥
दुर्वाराघं ततः प्राप्तं दह्यते मेऽधुना मनः ॥ ३३ ॥
नास्यं मेऽद्य विवर्णायाः पश्यन्ति मयि ये रताः ॥
किं करोमि क्व याम्यद्य शरणं कुधियः क्व मे ॥ ३४ ॥
एवं विलप्य बहुशो गत्वा निर्वेदमुत्तमम् ॥
दृष्ट्वागमं द्विजं शान्तं शरणं करुणाकरम् ॥ ३५ ॥
सर्वं निवेदितं तस्मै जन्मप्रभृति यत्कृतम् ॥
सुशीलः सोऽवदत्पापे दुराचारासि यद्यपि ॥ ३६ ॥
छित्त्वाऽसङ्गासिनाऽऽमूलात्संसारद्रुममुन्नतम् ॥
सात्त्विकीं धृतिमास्थाय शंकरं शरणं व्रज ॥ ३७ ॥

अपवर्गो मोक्षः ॥ ३१ ॥ अणुमात्रं लेशमात्रमपि । मे मया । तृतीयार्थेऽव्ययम् ॥ ३२ ॥ किंसुखं कुत्सितसुखम् ॥ ३३ ॥ वलीपलितवेषैर्विवर्णायाः आस्यं मुखम् ॥ ३४ ॥ निःपूर्वो विदिर्वैराग्ये । यद्यपि 'ब्राह्मणो निर्वेदमायात्' इत्युक्तं तथापि विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगताखिलवेदवेदार्थोऽस्मिञ्जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गताखिलकल्मषतया नितान्तविमलस्वान्तः साधनचतुष्टयसंपन्नोऽधिकारीति प्रसिद्धत्वाज्जन्मान्तरसंस्कारवशाज्जातं वैराग्यं को निवारयेत् ॥ ३५ ॥ ३६ ॥ 'असङ्गशस्त्रेण दृढेन' इति स्मृतेः । 'धृत्या यया धारयते' इति सात्त्विकीम् ॥ ३७ ॥

आवाल्यं पापसंभूते निषिद्धाचरणं तव ॥
तन्निष्कृत्यै तथाप्यद्य प्रायश्चित्तं वदामि ते ॥ ३८ ॥
कालिन्द्या सङ्गता गङ्गा यत्र गुप्ता सरस्वती ॥
तत्र स्नानेन ते शुद्धिस्त्वं कृतार्था भविष्यसि ॥ ३९ ॥
न तादृक् पावनं तीर्थं त्रैलोक्ये सद्गतिप्रदम् ॥
पापोऽपि मुच्यते स्नानमात्रादेवाशुभादिह ॥ ४० ॥
स्वल्पं पापं महद्वाऽपि मनोवाक्कायजं हि यत् ॥
त्रिवेणीस्नानमात्रेण विलयं यात्यसंशयम् ॥ ४१ ॥
नानेन सदृशं तीर्थं सदृङ् नानेन पावनम् ॥
आशु स्वर्गतिदं नेदृक् प्रसिद्धं यच्छ्रुतिष्वपि ॥ ४२ ॥
नेक्षन्ति दुर्धियोऽपीदृगतस्तेषां सुदुर्मतिः ॥
पारदार्याघतो मुक्त इन्द्रोऽपीह शृणुष्व तत् ॥ ४३ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां
संहितायां श्रीवासुदेव्यां कर्मकाण्डे
सप्तमाष्टके सप्तमोऽध्यायः ॥ ७ ॥

हे पापसंभूते ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ 'सितासिते' इति श्रुतिप्रसिद्धम् ॥ ४२ ॥ ॥ ४३ ॥ इति सप्तमोऽध्यायः ॥ ७ ॥

इति सद्गुरुणा माघस्नानविधिरक्षोप्सरस्संवादकथनं नाम
सप्त० सप्त० ॥ ७।७ ॥

---

## पारदार्यादिन्द्रस्य प्रयागे मुक्तिमुक्त्वा रक्षोमुक्तिर्नाम सप्तमेऽष्टमोऽध्यायः ॥ ७।८ ॥

हरिः ॐ ॥ प्रमाभूतेन वेदेन गीतोऽपीन्द्रः शचीपतिः॥
स्वर्गे सम्राट् सुराधीशः प्रथमं यज्ञभागभुक् ॥ १ ॥
रूपान्तरेण स्वपत्नीधर्षणाद्गौतमेन सः ॥
शप्तः सहस्रभगवान्भूत्वागाल्लज्जितो वनम् ॥ २ ॥
धिङ् मोहिनीं स्त्रियं कामं दुर्दमं धिक् च दुर्धियम् ॥
मां दुर्दशासमापन्नमित्यात्मानं व्यगर्हयत् ॥ ३ ॥
ततोऽनाथाः सुरा इन्द्रमज्ञात्वापि शची गुरुम् ॥
पप्रच्छ क्व गतः स्वाराट् क्वान्वेष्टव्यो वदाधुना ॥ ४ ॥
प्राहेज्यः कृतपापार्तो यत्रास्ते दर्शयामि तम् ॥
इत्युक्त्वा तैः सहैत्येन्द्रं मेरुदर्यां व्यदर्शयत् ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥

षट्पञ्चाशत्तमे शक्रः पारदार्याघतोऽत्र तु ॥
मुक्तः प्रयाग इत्युक्त्वा रक्षोमुक्तिं व्यधाच्च सः ॥ १ ॥

स्वतःप्रमाणभूतेन 'त्वामिद्धि हवामहे', 'इन्द्रो यातोऽवसितस्य राजा' इति गीतः 'सम्राळन्यः स्वराळन्य उच्यते वां महान्ताविन्द्रावरुणौ' इति श्रुतेः सम्राट्त्वम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ इज्यो गुरुः ॥ ५ ॥ ह्रीतो

भूतिमत्तोऽजितात्माभीर्दैवोपहतधीः सुरेट् ।।
ह्रीतोऽवदद्गुरो त्राहि मां दैवाद्भगचिह्नितम् ।। ६ ।।

स प्राह शिष्य देवेन्द्र यद्यप्यनुचितं कृतम् ।।
सावधानो भवातस्त्वं मुक्त्युपायं वदामि ते ।। ७ ।।

प्रयागे स्नानमात्रेण त्रिवेण्यां कृतकिल्बिषात् ।।
मुक्तिमेष्यसि नैवात्र संशयः पाकशासन ।। ८ ।।

इत्युक्तः सोऽनुतप्तोऽगात् त्रिवेण्यां स्नानमात्रतः ।।
पूतात्माभूत्सहस्राक्षस्त्रिवेणीमहिमा त्वयम् ।। ९ ।।

तस्मात्त्वमपि तत्रैव गच्छ मुक्ता भविष्यसि ।।
इति विप्रवचः श्रुत्वा भक्तियुक्ता तदाभवम् ।। १० ।।

त्यक्त्वार्थान्विषवत्स्वांश्च शत्रुवद्दुर्गवद्गृहम् ।।
जितात्माऽसक्तधीः क्वापि भूत्वा वीतैषणागमम् ।।११।।

दुःसंगतिं यातनादां पापं चाधोगतिप्रदम् ।।
चित्ते संस्मृत्य संतापान्माघस्नानं मया कृतम् ।। १२ ।।

पापं नष्टं त्र्यहस्नानादीश्वरानुग्रहान्मम ।।
जातेदृक् शिष्टपुण्येन वरा जातिस्मराप्सरा ।। १३ ।।

लज्जितः ।। ६ ।। ७ ।। ८ ।। ९ ।। १० ।। अर्थान्विषयान् । स्वान् स्वजनान् । दुर्गं दुर्गमनीयवनवत् । जितचित्ता क्वापि गृहदेहपुत्रादावपि न सक्ता धीर्यस्याः । विशेषेण इता गता एषणा यस्याः ।।११।।१२।।१३।।

इति स्मृत्वाऽसुरोऽप्याह श्रृणूदन्तं स्मृतं हिं मे ॥
या काशी सर्वविख्याता स्मृतिमात्रेण मुक्तिदा ॥१४॥
तत्रासं श्रेष्ठकुलजो द्विजोऽज्ञोपि कुधीर्मया ॥
प्राज्ञैर्निर्भर्त्सितेनापि दुराचारः सदा कृतः ॥ १५ ॥
चण्डालस्यापि न त्यक्तो मया दुष्टप्रतिग्रहः ॥
हृतं हेमान्यनार्यश्च भुक्तं प्रेतान्नमप्यहो ॥ १६ ॥
वज्रलेपोपमं पापमविमुक्तपुरे कृतम् ॥
नाणुमात्रं कृतं पुण्यं दैवान्मृत्युवशोऽभवम् ॥ १७ ॥
क्षेत्रवासप्रभावेण नाभून्मे निरयोऽसतः ॥
ईशाज्ञया भैरवेण क्षिप्तः कल्पितयोनिषु ॥ १८ ॥
कल्पिता योनिदेहा मे महाकष्टान्नवोषिताः ॥
हिमाद्रौ सांप्रतं जन्म दशमं राक्षसं मम ॥ १९ ॥
अतीतानि सहस्राणि वर्षाणां पञ्चसप्ततिः ॥
नास्ति मे निष्कृतिर्मोक्षवार्ता स्वप्नेपि नो मम ॥ २० ॥

स्वोद्धाराय कृपोत्पादनार्थमुपोद्घातमाह—उपोद्घातो नाम प्रतिपाद्यमर्थं बुद्धौ संगृह्य तदर्थमर्थान्तरवर्णनम् । उदन्तं वृत्तान्तम् ॥ १४ ॥ अज्ञोऽज्ञातवेद-तत्त्वोऽत एव कुधीः । वासिष्ठे–'चतुर्वेदोपि यो विप्रः सूक्ष्मं ब्रह्म न विन्दति ॥ वेदभारभराक्रान्तः स वै ब्राह्मणगर्दभः' इति । स्मृतिश्च 'श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते ॥ एकेन विकलः काणो द्वाभ्यामन्धः प्रकीर्तितः' इति । हेम स्वर्णम् । प्रेतान्नं महैकोद्दिष्टश्राद्धीयान्नम् ॥ १५ ॥ १६ ॥ 'अन्यक्षेत्रे कृतं पापं पुण्यक्षेत्रे विनश्यति ॥ पुण्यक्षेत्रे कृतं पापं वज्रलेपो भविष्यति' इत्याह ॥ १७ ॥ १८ ॥ कल्पिता भूतप्रेतादयः ॥ १९ ॥ २० ॥

करालः श्मश्रुलः क्रूरः क्षुत्पिपासार्दितो भृशम् ॥
दुष्कर्मणैव दग्धोऽस्मि सौख्यवार्तापि मेऽत्र नो ॥ २१ ॥

क्षेत्रवासोद्भवं पुण्यं सफलं जातमद्य मे ॥
भवत्या दर्शनं सत्या अन्यथा मे कथं वद ॥ २२ ॥

सत्संगत्यैव धन्योऽद्य जातोऽहं शान्तमानसः ॥
अतः सत्संगतिं साध्वीं प्रशंसन्तीह कोविदाः ॥ २३ ॥

करालो दन्तुरः ॥ २१ ॥ एवमनीशाख्यदीनभावेन शोचत्यदृष्टात्मत्वान्मूढवत्। श्रुतिश्च 'समाने वृक्षे पुरुषो० क' इति। भाष्यम् 'सामाने वृक्षे शरीरे पुरुषो भोक्ता जीवोऽविद्याकामकर्मफलादिगुरुभराक्रान्तोऽलाबुरिव समुद्रे निमग्नो निश्चयेन देहात्मभावमापन्नोऽयमेवाहममुष्य पुत्रोऽस्य नप्ता, कृशः, स्थूलः, गुणवान्निर्गुणः, सुखी, दुःखीत्येवंप्रत्ययो नास्त्यन्योऽस्मादिति जायते म्रियते संयुज्यते वियुज्यते च संबन्धिबान्धवैरतोऽनीशा तया शोचति संतप्यते मुह्यमानोऽनेकैरनर्थप्रकारैरविवेकतया चिन्तामापद्यमानः स एवं प्रेतमनुष्यतिर्यगादिष्वाजवं ( अनवरतं ) जीवत्वमापन्नः कदाचिदनेकजन्मसु शुद्धधर्मसंचितनिमित्ततः केनचित्परमकारुणिकेन दर्शितमार्गोऽहिंसासत्यब्रह्मचर्यसर्वत्यागशमादिसंपन्नः समाहितः सन् जुष्टं सेवितमनेकैर्योगमार्गैः कर्मिभिश्च स यदा पश्यति ध्यायमानोऽन्यं वृक्षोपाधिविलक्षणं ईशमसंसारितयाऽशनायापिपासाशोकमोहजरामृत्य्वतीतं सर्वजगतोऽयमहमात्मा सर्वसमः सर्वभूतस्थो नेतरोऽविद्याजनितोपाधिपरिच्छिन्नो मायात्मेति विभूतिं महिमानं च जगद्रूपस्यैव मम परमेश्वरस्येति यदैव द्रष्टा तदा वीतशोको भवति। तस्माच्छोकसागराद्विमुच्यते कृतकृत्यो भवतीति च ॥ २२ ॥ २३ ॥

स्वादुक्षीरार्णवाम्भोऽपि हंसानामुपजीवनम् ॥
सन्तः सर्वसमा एव सर्वेषामुपजीवनम् ॥ २४ ॥

किं वक्ष्येऽतः परं भद्रे ज्ञात्वा कष्टां दशामिमाम् ॥
यद्रोचते तत्कुरुष्व पतितोऽहं तवाग्रतः ॥ २५ ॥

श्रुत्वा तद्भाषितं दीनं दयालुत्वेन साऽवदत् ॥
दास्ये ते माघजं पुण्यं निष्कृतिस्तेन ते भवेत् ॥ २६ ॥

स्नाता मे बहवो माघा ब्रह्मक्षेत्रे यथाविधि ॥
तत्रैकमाघजं पुण्यं दत्तं ते सद्गतिप्रदम् ॥ २७ ॥

इत्युक्त्वा साऽऽर्द्रवसनं निष्पीड्याादाय तज्जलम् ॥
संकल्प्यादान्माघपुण्यं दयया रक्षसे सती ॥ २८ ॥

रक्षोभावं विहायाशु तदैवास सुरोपमः ॥
नत्वाऽप्सरसमाहेदं प्रहृष्टो गद्गदाक्षरः ॥ २९ ॥

॥ २४ ॥ २५ ॥ २६ ॥ ब्रह्मक्षेत्रे प्रयागे ॥ २७ ॥ ॥ २८ ॥ देवसदृश आस । गद्गद इति सात्त्विकभावलक्षणम् । ते च 'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गश्च वेपथुः ॥ वैवर्ण्यमश्रुपातश्च प्रलयो ह्यष्ट सात्विकाः' इति ॥ २९ ॥ कर्मफलं शुभाशुभम् । 'कपूयचरणा अभ्याशोह कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा तद्यथेह रमणीयचरणा अभ्याशोह रमणीयां योनिम्' इत्यादिश्रुतेः ।

य: कर्मफलदो देव: शंभु: सोमस्त्रिलोचन: ॥
परोपकृत्यै सद्बुद्धिं भद्रे भद्रं ददातु ते ॥ ३० ॥

कर्मणो जडत्वात्प्राचीनं कर्म तद्वत्स मविषमफलप्राप्तिहेतुस्तथापि–'स्वातन्त्र्ये नश्वरेऽस्मिन्नहि खलु घटते प्रेरकोऽस्यान्तरात्मा' इति, 'फलमत उपपत्ते:' इति न्यायान्नेश्वर: कर्मफलद: । तथा 'कर्मैव फलदं यद्वा कर्माराधित ईश्वर: । अपूर्वावान्तरद्वारा कर्मण: फलदातृता ॥ अचेतनात्फलात्पूते शास्त्रीयात्पूजितेश्वरात् ॥ कालान्तरे फलोत्पत्तेर्नापूर्वपरिकल्पना' इति नानेनेश्वरस्य वैषम्यादिदोष: । 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति न्यायात् ॥ 'एष ह्येव साधु कर्म कारयति तं यमुन्निनीषते एष एवासाधु कर्म कारयति तं यमधो निनीषते' इति श्रुते: कर्मानुसारिफलदाता । देवो द्योतनात् । 'तस्य भासा सर्वमिदं विभाति' इति श्रुते: शं सुखं भवत्यस्मादिति शंभु: । 'एष ह्येवानन्दयाति' इति श्रुते: । उमा विद्या पार्वती वा तत्सहित: । त्रिलोचन: विश्वतैजसप्राज्ञप्रकाशकस्त्रिनेत्रो वा । परोपकाराय 'आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्तताम् ॥ नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवे: । इत्यादिबोधप्रदानेन । परोपकाराय ते तुभ्यं शोभनां सूक्ष्मां बुद्धिं ददातु' भद्रमात्यन्तिकं सुखं च ददातु । तत्तु योगगम्यमिति चेत् 'समाधिरीश्वरप्रणिधानात्' इतीश्वरानुग्रहलभ्यम । तत्र विघ्नबाहुल्यमिति चेत् 'तत: प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' इति । विघ्नध्वंसोऽपीश्वरानुग्रहादेवेति ॥ ३० ॥ आत्मापहारित्वात्पतित: । 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ॥ किं तेन न कृतं पापं चोरेणात्मापहारिणा' इत्युक्ते: । उद्धृतो भगवद्ध्यानार्हत्वेन पावनतां नीत: । 'सर्वपापप्रयुक्तोऽपि ध्यायन्निमिषमच्युतम् ॥ भूयस्तपस्वी भवति पङ्क्तिपावनपावन: ' ॥ 'स्नातं तेन समस्ततीर्

त्वयाऽद्योपकृतं साधु पतितोऽप्युद्धृतोऽस्म्यहम् ॥
यस्य मे निष्कृतिः क्वापि नैव सोऽद्यैव पावितः ॥३१॥

प्रसीद कृपयेदानीं कुर्वञ्जे मय्यनुग्रहम् ॥
शिक्षां विधेहि मे कुर्यां यया क्वापि न पातकम् ॥ ३२ ॥

प्रियं धर्म्यं निशम्यैवं रक्षोवाक्यं प्रसन्नधीः ॥
प्रवक्तुं तारकं धर्ममप्सरा उपचक्रमे ॥ ३३ ॥

र्थसलिलं सर्वापि दत्ताऽवनिर्यज्ञानां च सहस्रमिष्टमखिला देवाश्च संपूजिताः॥ संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योऽप्यसौ यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात्' इत्युक्तेः । भवत्याः प्रसादाद्वाङ्मनःकायस्थैर्याख्यत्रिदण्डिसंन्यासित्वमपि प्राप्तम् । 'वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च ॥ यस्यैते नियता दण्डास्त्रिदण्डीति स कथ्यते' इति स्मृतेः ॥ ३१ ॥ भो मातः, प्रसीद मय्यनुग्रहं कुरु च । यया क्वापि पापं न कुर्यां तादृशीं शिक्षां कुरु । यद्यपि 'नर्ते स्याद्विक्रियां दुःखी साक्षिता काऽविकारिणः ॥ धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः' इति सामान्यतोऽज्ञानवतोऽपि मे प्रकृतिबलाद्दुःखादिचेष्टा मृषाऽप्यहं दुःखी कर्ता भोक्तेत्यनुभवनिरासार्थोऽयं प्रश्नः ॥ ३२ ॥ धर्म्यं धर्मादनपेतम् ॥ ३३ ॥ ननु 'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः' इति । वर्णाश्रमवतामेवोपदेशार्हता नान्येषामिति चेत् 'तदुपर्यपि बादरायणः संभवात्' इति न्यायाद्देवयोनिजाया अस्या अधिकार एव । 'नाधिक्रियन्ते विद्यायां देवाः किंवाऽधिकारिणः । विदेहत्वेन सामर्थ्यहानेनैषामधिक्रिया ॥ अविरुद्धार्थवादादिमन्त्रादेर्देहसत्त्वतः ।

स्ववर्णाश्रमवर्णाधिकृता भुव्यपि मानवाः ॥
संसिद्धिं यान्ति ते दैव्या संपदैवान्यया न तु ॥ ३४ ॥
स्वसंपदाऽपि देवाः स्वर्जिग्युर्नान्येऽन्यया हताः ॥
गुरुसेवादिनेन्द्राद्या मुक्ता अत्रेति यच्छ्रुतम् ॥ ३५ ॥
भजस्व धर्मं तं नित्यं हिंसां सन्त्यज दूरतः ॥
परदोषोच्चारणं च कामं जह्यान्तरं रिपुम् ॥ ३६ ॥

अर्थित्वादेश्च सौलभ्याद्देवाद्या अधिकारिणः ' इत्यनवद्यम् ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वादिति स्ववर्णाश्रमाधिकृता अपि मानवाः दैव्या संपदा सिद्धिं यान्त्यन्ययाऽसुर्या न मुच्यन्ते । ' दैवी संपद्विमोक्षाय ' इति स्मृतेः ॥ ३४ ॥ स्वसंपदा देवाः स्वप्रकाशात्मानं स्वर्गं च जिग्युः । असुष्वेव पोषणादिना रमन्त इत्यसुरा दैत्यास्तेऽन्यया आसुर्या हताः मृता वञ्चिताश्च । 'शतं ह वै वर्षाणि मघवा प्रजापतौ ब्रह्मचर्यमुवास' इति श्रुतेः ॥ ३५ ॥ तस्माद्दैवीसंपत्त्याख्यं स्वधर्मं नित्यं भज । नित्यमिति धर्मविशेषणं वा । 'धर्मो नित्यः सुखदुःखे त्वनित्ये ' इत्युक्तेः । हिंसां परपीडाम् । दोषकर्तुरिव वक्तुर्गतिश्रवणात्परदोषोच्चारणं दूरे त्याज्यं आन्तरं काममविद्यावासनाप्रचयं बुद्ध्याश्रयं हृद्ग्रन्थ्याख्यं शत्रुम् । 'भिद्यते हृदयग्रन्थिः' इति तद्भेदान्मोक्षश्रवणात् । 'यदा सर्वे प्रभिद्यन्ते कामाः ' इति कामत्वमप्युक्तम् । एकवचनं जातिवाचकम् । कामो हि हृदयाश्रयो नात्माश्रयः । तत्त्याग एव मुमुक्षोः प्रधानं साधनम् । श्रुतिश्च ' कामान्यः कामयते मन्यमान० मा ' इति श्रुतेः । भाष्यं—कामान् यो दृष्टादृष्टविषयान् कामयते मन्यमानस्तद्गुणांश्चिन्तयानः प्रार्थयते स तैः कामभिर्धर्माधर्मप्रवृत्तिहेतुविषयेच्छारूपैः कामैः सह तत्र तत्र जायते यत्र यत्र विषयप्राप्तिनिमित्तं कामाः कर्मसु पुरुषं नियोजयन्ति । यस्तु परमार्थतत्त्वविज्ञानात्पर्याप्तकाम आत्मकामत्वेन परिसमंतादाप्ताः कामा यस्य तस्य

धृत्या शुध्द्या मनो बुध्द्या विनियम्येन्द्रियाणि च ॥
प्रत्याहृत्यार्चय शिवं पश्य स्वप्नोपमं जगत् ॥ ३७॥

वैराग्यरसिको भूत्वा व्युत्थानेऽपीह मा कुरु ॥
अहन्तां ममतां चास्रमांसास्थिघटितेऽध्रुवे ॥ ३८ ॥

भोगकाले कदाचित्तु प्राप्तायामप्यहंकृतौ ॥
बोधात्मव्यतिरेकेण न पश्येदं चिदन्वयात् ॥ ३९ ॥

कृतात्मनोऽविद्यालक्षणादपररूपादानीय स्वेन परेण रूपेण कृत आत्मा विद्यया यस्य तस्येह तिष्ठत्येव शरीरे तु सर्वे कामा धर्माधर्मप्रवृत्तिहेतवो विलयमुपयान्ति नश्यन्तीत्यर्थः । तज्जन्महेतुनाशान्न जायन्ते ॥ ३६ ॥ शुद्धया सात्त्विकया धृत्या बुद्धया च मनो विशेषेण नियम्य विषयेभ्य इन्द्रियाणि च प्रत्याहृत्य मुक्तजीवः शेतेऽस्मिन्निति शिवस्तं निरतिशयानन्दमात्मानं शिवं च सोहंभावेन पूजय । जगन्नामरूपात्मकं स्वप्नोपमं पश्य । यथा मनोमयः स्वप्नान् पश्यति यन्मित्रं पुत्रादिरूपं वा पूर्वं दृष्टं तद्वासनावासितः पुत्रमित्रादिवासनासमुद्भूतं पुनःपुनः प्रत्यनुभवतीव चास्मिन् जन्मन्यदृष्टं जन्मान्तरदृष्टं अत्यन्तादृष्टत्वे वासनानुपपत्तेः । एवं श्रुतं चानुभूतं चास्मिन् जन्मनि केवलेन मनसाऽननुभूतं च मनसैव जन्मान्तरेऽनुभूतं सत्परमार्थोदकादि असन्मरीच्युदकादि सर्वं मनोवासनोपाधिकं स्वप्नं मनोवासनोपाधिको जीवः सत्यतया पश्यति तद्यथा मृषा तत्तुल्यम् ॥ ३७ ॥ ब्रह्मलोकतृणीकाररूपवैराग्यरसिको भूत्वा समाधिं कुरु । ततो व्युत्थानेऽपि रक्तमांसास्थिघटिते स्वे परे देहेऽहन्तां ममतां च मा कुरु ॥ ३८ ॥ भोगकाले कदाचिदहंकारे प्राप्तेपि बोधात्मव्यतिरेकेण दृष्टिं मा कुरु किंतु चिदन्वयेन पश्य ॥ ३९ ॥ एवं देहात्मवत् स्वात्मरूपं तत्त्वतो दृढं ज्ञात्वा

ज्ञात्वैवं तत्त्वतः स्वात्मरूपं पश्चात्समाविश ॥
अयं हि परमो धर्मो यतः पातो न विद्यते ॥ ४० ॥

परमात्मरूपेण निष्पन्नात्मा विगतरागादिदोषः उपरतेन्द्रिय आत्मक्रीड आत्मरतिः स्वानन्दतुष्टः परिविस्मृताखिलो भूत्वा पश्चाच्छरीरपातकाले घटे भिन्ने घटाकाशवदविद्याकृतोपाधिपरिच्छेदं त्यक्त्वा परमव्ययमनन्तं विभुमाकाशकल्पं नित्यमजरमक्षरममृतमभयमपूर्वमनपरमनन्तरमबाह्यमद्वयं शिवं शान्तं ब्रह्म समाविश प्रदीपनिर्वाणवत् । इयमेव सूक्ष्मा गतिः । यदुक्तम्— 'शकुनानामिवाकाशे जले वारिचरस्य च ॥ पदं यथा न दृश्येत तथा ज्ञानवतां गतिः' इति । गतिशब्देनात्र नान्यद्गन्तव्यं 'अनध्वगा अध्वसु पारयिष्णवः' इत्युक्तेः । यदुक्तमाचार्यैः— 'देशपरिच्छिन्ना हि गतिः संसारविषयैव परिच्छिन्नसाधनसाध्यत्वात् । ब्रह्म तु समस्तत्वान्न परिच्छेदेन गन्तव्यं । यदि देशपरिच्छिन्नं ब्रह्म स्यान्मूर्तद्रव्यवदाद्यन्तवदन्याश्रितं सावयवमनित्यं कृतकं च स्यात् । न त्वेवंविधं ब्रह्म भवितुमर्हति अतस्तत्प्राप्तिश्च नैव देशपरिच्छिन्ना भवितुं युक्ता । अपिचाविद्यादिसंसारबन्धापनयमेव मोक्षमिच्छन्ति ब्रह्मविदो नतु कार्यभूतमिति 'न स पुनरावर्तते' इति श्रुतेः न पातः । धर्मः पूर्तेष्टादिलक्षणः । तथाहि 'अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम् ॥ आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥ शरणागतसंत्राणं भूतानां चाप्यहिंसनम् ॥ बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते ॥ वापीकूपतडागादि देवतायतनानि च ॥ अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥' इति । एतद्धर्मसाध्यलोक उपभोगेन क्षीयते । तत इमं लोकं हीनतरं वाविशन्त्यतः स परमो धर्मो भवितुं नार्हत्यत एवोक्तोयं परमो धर्म इति ॥४०॥ श्रुत्या श्रवणेन्द्रियेण । सुखमयी सुखप्रचुरा । प्राचुर्यार्थे मयट् । ननु

इति तद्वाक्सुधां पीत्वा श्रुत्या शुद्धाऽवदत्स ताम् ॥
सदा सुखमयी भूयाः साध्वि काञ्चनमालिनि ॥ ४१ ॥
प्रसादसुमुखस्यास्तु शंभोः सान्निध्यमन्वहम् ॥
आचन्द्रार्कं वसात्रैव सदा स्निग्धोमया सह ॥ ४२ ॥
धर्मनिष्ठा तपोनिष्ठा योगस्त्वव्ययस्तु सर्वदा ॥
मास्तु लोभोऽध्रुवे देह आपन्नार्तिं सदा जहि ॥ ४३ ॥
स्तुत्वैवं तां प्रणम्योक्ति तस्या भक्त्या विमृश्य सः ॥
प्राप्तेन व्योमयानेनारब्धं भोक्तुं दिवं ययौ ॥ ४४ ॥
अत्रान्तरे देवकन्याः पुष्पाणि ववृषुर्मुदा ॥
तस्या उपरि तां प्राप्य प्रोचुर्नत्वा प्रियंवदाः ॥ ४५ ॥
कथं भद्रे त्वया रक्षोमोक्षणं विहितं वद ॥
त्यक्तं यतो भियाऽस्माभिः क्रीडावनमिदं शुभम् ॥४६॥
इदं त्वदङ्गमाहात्म्यं किं वाच्यमधमोऽप्यसौ ॥
मुक्तः सद्य इतोऽत्रैव विहरामो यथासुखम् ॥ ४७ ॥
श्रुत्वा तद्भाषितं साऽऽह स्वधर्ममहिमा त्वयम् ॥
त्यक्त्वा लोभं ततो देव्यः संसेव्योऽयं सनातनः॥४८॥

प्रचुरत्वे दुःखास्तित्वमपि गम्यते प्राचुर्यस्य लोके प्रतियोग्यल्पत्वादिति चेन्न। मुक्तावस्थायां 'यत्र नान्यत्पश्यति' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिनाऽद्वैतप्रतिपादनात्। प्राचुर्यं तु 'एतमानन्दमयमुपसंक्रामति' इत्यानन्दमयनिर्देशेनैव विदुषः पुच्छप्रतिष्ठाभूतब्रह्मप्राप्तिफलनिर्देश इति ॥ ४१ ॥ स्निग्धा स्नेहयुक्ता ॥ ४२ ॥ ४३ ॥ विमृश्य विचार्य। व्योमयानेन विमानेन ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

इत्युक्त्वा त्वरया प्राप कैलासं हेममालिनी ॥
स्वप्नेपि नैव यद्वार्ता दुर्धीनां तं नगोत्तमम् ॥ ४९ ॥

त्रिलोचनं हताशिवं सदोमयान्वितं भवम् ॥
निरीक्ष्य साऽनवं भवं ननाम भाविताभवम् ॥ ५० ॥

इत्युक्तं धर्महार्दं ते राजञ्छ्रेयस्करं परम् ॥
यदीदृशं फलं भावि किं स्यान्मिथ्यात्मगोपनात्॥५१॥

अत एव हि ये लोकाः स्वधर्मे विधिचोदिताः ॥
मृता अप्यूर्ध्वगा एव नाधःपातोऽपि कामिनाम् ॥५२॥

निष्कामानां तु राजेन्द्र स्वधर्माचरणात्सताम् ॥
इह वान्यत्र वा मोक्षो नात्र कार्या विचारणा ॥ ५३ ॥

इत्याकर्ण्य स राजेन्द्रो धर्मतत्त्वं गुरूदितम् ।
अभ्यर्च्य तमनुज्ञातः पुरं गत्वा तथाचरत् ॥ ५४ ॥

शुद्धस्तेनैव पश्चात्स प्राप्तयोगोऽमृतं ययौ ॥
अतो धर्मपरैर्नित्यं तोषणीयस्त्वधीश्वरः ॥ ५५ ॥

॥४९॥ अनवं पुराणम् । भाविताभवं मोक्षहेतुम् ॥५०॥५१॥ **सकामोऽपि धर्मो न** पाताय । यतः काम्येपि शुद्धिरस्त्येव भोगसिध्यर्थमेव सा **'विड्वराहादिदेहेन नहैन्द्रं** भुज्यते पदम्' इति ॥ ५२ ॥ ५३ ॥ ५४ ॥ **तथापि निष्काम** एवानुष्ठेय इत्याह ॥ ५५ ॥ इति श्रीमद्दत्तात्रेयपुराणे **सार्धत्रि-**

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्ड-
मण्डितायां संहितायां श्रीवासुदेव्यां कर्मकाण्डे
सप्तमाष्टके अष्टमोऽध्यायः ॥८॥

साहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां कर्मकाण्डे सप्तमाष्टके टीकायां अष्टमोऽध्यायः ॥ ८ ॥

पारदार्यादिन्द्रस्य प्रयागे मुक्तिमुक्त्वा रक्षोमुक्तिर्नाम
सप्त० अष्ट० ॥ ७।८ ॥

॥ श्रीमद्दत्तपुराणे सप्तमाष्टकः संपूर्णः ॥

---

# अथ श्रीमद्दत्तपुराणे अष्टमाष्टकप्रारंभः

———:0:———

## अथ गालवर्षिसुतेन ब्रह्मचारिधर्मकथनं नामाष्टमाष्टके प्रथमोऽध्यायः ॥ ८ । १ ॥

श्रीदत्तात्रेयाय नमः ॥ हरिःॐ ॥

प्रहोता स्वयमेवायं भूत्वेहाग्न्यात्मनावति ॥
मन्दांस्तेनेश्वरेणोक्तो धर्म आद्योऽत्र वर्ण्यते ॥ १ ॥
गालवस्य मुनेः पूर्वं नर्मदातीरवासिनः ॥
शान्तो दान्तोऽभवत्पुत्रो व्रती बालोऽपि वृद्धवत् ॥ २ ॥
क्रीडाकालेऽपि स स्निग्धानाहूयार्चां प्रकल्प्य च ॥
मृदाद्येऽपूजयद्विष्णुं संकल्प्यैकादशीव्रतम् ॥ ३ ॥

॥ श्रीगणेशाय नमः ॥

सप्तपञ्चाशत्तमे तु गालवार्षि सुतोऽवदत् ॥
पूर्वस्मृत्या ब्रह्मचारिधर्माञ्छ्रीदत्तवर्णितान् ॥ १ ॥

'अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः ॥ इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ' इति स्मृतेः मोक्षार्थी क्रमत आश्रमान्वक्तुं धर्मस्तुतये तावद्दृक्कुराख्यायिकामाह—याज्ञिकगृहे देवानां प्रहोता सन् केवलकर्मभराक्रान्तानपि स्वयमेव यो रक्षति तेनेश्वरेण श्रीदत्तात्रेयेणोक्त आद्यः पुराणः धर्मोऽत्र पूर्वापेक्षया विशेषतो वर्ण्यते ॥ १ ॥ शान्तः समाहितचित्तः । दान्तो दमितेन्द्रियः ॥२॥ स्निग्धान् वयस्यान् । अर्चां विष्णुप्रतिमाम्॥ ३॥

दृष्ट्वैवं तत्पिताऽपृच्छत्कोऽर्च्यतेऽयं त्वयात्र तु ॥
केनेदमुपदिष्टं ते निर्द्वन्द्वं दुःसहं व्रतम् ॥ ४ ॥
स प्राहादिगुरुः प्राह व्रतं धर्मांश्च सर्वशः ॥
प्रसन्नो मेऽनसूयात्रितपःसंतानसत्फलः ॥ ५ ॥
पुराऽऽसं धर्मकीर्त्याख्यो राजाऽहं सोमवंशजः ॥
नववर्षसहस्राणि धर्मतो भूर्मयाऽविता ॥ ६ ॥
दैवात्पूर्तेष्टदत्ताढ्योऽप्यहं दुःसङ्गतश्च्युतः ॥
पूज्यैस्तिरस्कृतः खिन्नो रेवातीरे वनं ह्यगाम् ॥ ७ ॥
कष्टात्सजागरं दैवात्तत्रैकादश्युपोषिता ॥
प्रातर्मृतं भटा निन्युर्मां कृच्छ्रेण यमान्तिकम् ॥ ८ ॥
यमो मां वीक्ष्य तानाह नायं दुर्गतिभागतः ॥
स्वर्गे नयध्वं सुकृतभुक्त्यै सत्कृत्य सत्वरम् ॥ ९ ॥
योगी श्रीदत्तशिष्योऽयं दैवाद्भ्रष्टोऽपि सद्व्रतम् ॥
चक्रे पपौ च रेवाम्भः पुण्यलोकस्ततोऽस्य हि ॥ १० ॥
इत्युक्त्वा पुण्यलोकान्मां प्रापयत्तत्र मे चिरम् ॥
भुक्त्वा ततोत्तमान्भोगानिह योगिकुलेऽभवम् ॥ ११ ॥

निर्द्वन्द्वं द्वन्द्वनिवारकम् । दुःखेनापि सोढुमशक्यमेकादशीव्रतम् ॥ ४ ॥ धर्मान्वर्णाश्रमोचितान् ॥ ५ ॥ पुरा आसम् । अविता रक्षिता ॥ ६ ॥ ७ ॥ भटा यमदूताः । कृच्छ्रेण कष्टेन । दुःसङ्गपरिपाकार्थम् ॥८॥ ९॥१०॥ तत्र स्वर्गे । मे मया । हे तत तात । पूर्णकामत्वाद्योगिकुले । यो ह्यपूर्णकामो योगभ्रष्टः स शुचीनां श्रीमतां गेहेऽभिजायते ॥११॥

दत्तात्रेयप्रसादेन न नष्टा मे महास्मृतिः ॥
राज्यं प्रशासतः पूर्वं जातं मे दत्तदर्शनम् ॥ १२ ॥

दैवाद्दृष्टः सह्यसानाववधूतो दिगम्बरः ॥
वामेनालिङ्गितो गाढं कामिन्या दुःप्रकम्पया ॥ १३ ॥

मक्षिकावृतसर्वाङ्गो रक्ताक्षोऽगाधहृद्यती ॥
तया साकं हसन्गायन्मदमत्त इव स्थितः ॥ १४ ॥

दृष्ट्वा हृष्टेन मनसा दूराद्भक्त्या नमस्कृतः ॥
क्रुद्धवन्माहनत्सोऽपि काष्ठलोष्टेष्टिकादिभिः ॥ १५ ॥

सेवया सुचिरेणापि नाप्तो मे तदनुग्रहः ॥
धिक्करोति स मां नित्यं निर्भर्त्सयति चासकृत् ॥ १६ ॥

कदाचिन्मां विषीदन्तं दीनं प्राह दयापरः ॥
मया व्रात्येन ते कार्यं किं ब्रूहि नृपसत्तम ॥ १७ ॥

ननु मरणं नाम पूर्वदेहस्यात्यन्तविस्मृतिः, मृतस्य तव कथमियं स्मृतिरत आह—दत्तात्रेयेति । तर्हि दुर्दर्शस्य तस्य तव कथं दर्शनमित्यत आह–राज्यमिति ॥ १२ ॥ शक्तित्वेनापृथक्त्वाद्दुःप्रकम्पया ॥ १३ ॥ ॥ १४ ॥ मा माम् । लोष्टं मृत्पिण्डः ॥ १५ ॥ असकृत् पुनःपुनः ॥ १६ ॥ व्रात्येन संस्कारहीनेनेति बाह्यार्थः । ईशस्यानादित्वात्संस्कर्तुरभावाच्छुद्धत्वाच्चासंस्कृतो व्रात्यः स्वभावत एव शुद्धः । ईदृशाः प्रयोगाः क्वचिद्दृश्यन्ते 'व्रात्यस्त्वं प्राणैकऋषिरत्तासि सत्पतिः' इत्यादिः ॥ १७ ॥

ममास्ति धर्मजिज्ञासा व्रात्यो ह्यन्वर्थको भवान् ॥
इत्युक्तः स मया प्राह धर्मान्त्सर्वान्त्सनातनान् ॥ १८ ॥
वर्णाश्रमविभागेन समूलान्सोपपत्तिकान् ॥
तान्त्सर्वान्त्संस्मरे योगभ्रष्टत्वान्मे न विस्मृतिः ॥ १९ ॥
यदि ते श्रवणे श्रद्धा वक्ष्ये ताञ्छृणु सादरम् ॥
धर्मान्त्सनातनान्गुह्याञ्छ्रीदत्तात्रेयभाषितान् । २० ॥
ब्रह्मक्षत्रविशः शूद्रा वर्णा ब्रह्मसमुद्भवाः ॥
एते विभक्तकर्माणः स्वभावप्रभवैर्गुणैः ॥ २१ ॥
वर्णी वनी गृही चैते स्वाश्रमा आद्य एव सः ॥
संन्यासान्नैष्कर्म्यसिद्धिभाक् परावीशनिष्ठया ॥ २२ ॥

॥ १८ ॥ १९ ॥ २० ॥ त्रैवर्णिकस्योपनयनसंस्कारादिना वेदाध्ययनाधिकारत्वात्समासान्तं पदम् । त्रयीबाह्यत्वाच्छूद्रः पृथक्कृतः । एते चत्वारो वर्णा ब्रह्मसमुद्भवाः । 'ब्राह्मणोऽस्य मुखमासीत्' इति श्रुतेः । एते स्वभावप्रभवैर्गुणैर्विभक्तकर्माणः स्वभावः पूर्वजन्मवशाज्जातः प्रकृत्यपरपर्यायः तत्प्रभावैः सत्त्वादिगुणैः । तत्र सत्त्वोपसर्जनो ब्राह्मणः । रजःप्रधानः क्षत्रियः । रजस्तमोन्वितो वैश्यः । तमःप्रधानः शूद्रः ॥ २१ ॥ वर्णप्रशस्तिरस्यास्तीति वर्णी । 'वर्णाद्ब्रह्मचारिणि' इतीनिः । प्राशस्त्यार्थे मतुप् । आद्यो ब्राह्मण एव संन्यासान्मोक्षभाक् । परौ क्षत्रवैश्यौ ईश्वरनिष्ठया मोक्षभाजौ । नानयोः संन्यासेऽधिकारः । ब्रह्मणो ब्राह्मणस्येदं शमादिरूपं कर्म । पाठादि तु नियमविधिना 'स्वाध्यायोऽध्येतव्यः' इति । तच्च नियतं भविष्ये—

'धर्माच्छ्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम् ॥
स तु पञ्चविधः प्रोक्तो मूलधर्मः सनातनः ॥ १ ॥

**शमो दमस्तपः शौचं ज्ञानास्तिक्ये क्षमाऽऽर्जवम् ॥**
**सहजं ब्रह्मकर्मेदं पाठादि नियतं विधेः ॥ २३ ॥**

वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परः ॥
वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा ॥ २ ॥
वर्णत्वमेकमाश्रित्य यो धर्मः संप्रवर्तते ॥
वर्णधर्मः स उक्तस्तु यथोपनयनं नृप ॥ ३ ॥
यस्त्वाश्रमं समाश्रित्य ह्यधिकारः प्रवर्तते ॥
स खल्वाश्रमधर्मः स्याद् भिक्षादण्डादिको यथा ॥ ४ ॥
वर्णत्वमाश्रमत्वं च योऽधिकृत्य प्रवर्तते ॥
स वर्णाश्रमधर्मस्तु मौञ्ज्याद्या मेखला यथा ॥ ५ ॥
यो गुणेन प्रवर्तेत गुणधर्मः स उच्यते ॥
यथा मूर्धाभिषिक्तस्य प्रजानां परिपालनम् ॥ ६ ॥
निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्तते ॥
नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥

हारितस्तु—'आश्रमिणां पृथग्धर्मो विशेषधर्मः समानधर्मः कृत्स्नधर्मश्च' इत्याह । विस्तरभिया नेह प्रपञ्च्यते । सर्वेषां सामान्यधर्मः स्मर्यते—'क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ॥ अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥ आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ॥ अनभ्यसूया च तथा धर्मः सामान्य उच्यते' इति ॥ बृहस्पतिः—'दया क्षमाऽनसूया च शौचानायासमङ्गलम् ॥ अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च ॥ परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ॥ आपन्ने रक्षितव्यं तु दयैषा परिकीर्तिता ॥ बाह्ये चाध्यात्मिके चैव दुःखं चोत्पादिते क्वचित् ॥ न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥ न गुणान्गुणिनो हन्ति स्तौति मन्दगुणानपि ॥ नान्यदोषेषु रमते सानसूया प्रकीर्तिता ॥ अभक्ष-

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धस्थैर्यं प्रजाऽवनम् ॥**
**व्रतं च क्षात्रकर्मेदं श्रद्धाद्यागन्तुसाधनम् ॥ २४ ॥**

परिहारश्च संसर्गश्चाप्यनिर्गुणैः ॥ स्वधर्मे च व्यवस्थानं शौचमेतत्प्रकीर्तितम ॥ शरीरं पीड्यते येन सुशुभेनापि कर्मणा ॥ अत्यन्तं तन्न कर्तव्यमनायासः स उच्यते ॥ प्रशस्ताचरणं नित्यमप्रशस्तनिवारणम् ॥ एतद्धि मङ्गलं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥ स्तोकादपि प्रदातव्यमदीनेनान्तरात्मना । अहन्यहनि यत्किंचिदकार्पण्य तदुच्यते ॥ यथोत्पन्नेन संतोषः कर्तव्यो ह्यर्थवस्तुनः ॥ परस्याचिन्तयित्वार्थं साऽस्पृहा परिकीर्तिता ' इति । 'एतेऽष्टावात्मगुणाः' इति गौतमः । भारते—'सत्यं दमस्तपः शौचं संतोषो ह्रीः क्षमार्जवम् ॥ दानं क्षमा दया ध्यानमेष धर्मः सनातनः ॥ सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः ॥ तपः स्वधर्मवर्तित्वं शौचं संकरवर्जनम् ॥ संतोषो विषयत्यागो ह्रीरकार्यनिवर्तनम् ॥ क्षमा द्वन्द्वसहिष्णुत्वमार्जवं समचित्तता ॥ ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता ॥ दया भूतहितैषित्वं ध्यानं निर्विषयं मनः ' इति । देवलोपि—' शौचं दानं तपः श्रद्धा गुरुसेवा क्षमा दया ॥ विज्ञानं विनयः सत्यमिति धर्मस्य संचयः ॥ व्रतोपवासनियमैः शरीरोत्तापनं तपः ॥ प्रत्ययो धर्मकार्येषु तथा श्रद्धेत्युदाहृता ॥ नास्ति ह्यश्रद्दधानस्य कर्मकृत्यप्रयोजनम् ॥ यत्पुनर्वैदिकीनां च लौकिकीनां च सर्वशः ॥ धारणं सर्वविद्यानां विज्ञानमिति कीर्त्यते ॥ विनयं द्विविधं प्राहुः शश्वद्दमशमाविति ' इति ॥ अन्यच्च ' आनृशंस्यमहिंसा च प्रसादः सविगीतता ॥ श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च ॥ स्वेषु दारेषु संतोषः शौचं नित्यानसूयता ॥ आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप' इति ॥ २३ ॥ क्षत्रियधर्मानाह—शौर्यं पराक्रमः । तेजः प्रागल्भ्यम् । धृतिर्विपत्तावप्यविक्रियता । दाक्ष्यं दक्षताऽव्यामोहः । युद्धस्थैर्यं संमुखता । व्रतं प्रसिद्धम् । दानं दातव्यबुद्ध्या देशकालानुसारेण पात्रे धनत्यागः प्रजारक्षणं च । श्रद्धा भक्त्यागन्तुसाधनम् ॥ २४ ॥ विशः कर्माह—कृषिः कर्षणादिनान्नो-

गोरक्षा कृषिवाणिज्यं विशः शूद्रस्य सेवनम् ॥
इज्याऽध्ययनदानानि त्रयाणां पावनानि च ॥ २५ ॥

याजनाध्यापनादानैर्जीविकाऽऽद्यस्य कामतः ॥
वधूकरग्रहस्त्वेषां निवृत्तिस्तु परं पदम् ॥ २६ ॥

श्रुतिस्मृतिपुराणानि धर्ममूलं श्रुतिर्वरा ॥
तद्वैरे द्वौ वृषौ श्रुत्योर्द्वैधे स्मृत्योस्तु लौकिकः ॥ २७ ॥

वर्णाश्रमविभागोक्तो देशकालोचितो वृषः ॥
लौकिकोऽपि चतुर्वर्णैः सेवनीयः प्रयत्नतः ॥ २८ ॥

त्पादनम् । क्रयविक्रयादिलक्षणं वाणिज्यम् । त्रैवर्णिकसेवा शूद्रकर्म । इज्या यजनम् । त्रयाणां ब्रह्मक्षत्रविशाम् ॥ २५ ॥ आद्यस्य विप्रस्य । आदानं प्रतिग्रहः । स तपस्तेजोनुदिति मतश्चेदन्याभ्यां जीवेत् । तयोर्दोषदर्शी चेदृतामृताभ्यां शिलोञ्छवृत्त्या वा । कामत इत्यनेन रागी चेत्सहधर्मिणीसंयोगं कुर्यात् । एषां सर्वेषामपि विषयतो निवृत्तिरेव परं पदम् । तुशब्दः प्रवृत्तेः सकाशान्निवृत्तेर्वैलक्षण्यद्योतकः ॥ २६ ॥ तद्वैरे श्रुतिस्मृतिपुराणविरोधे श्रुतिर्वरा बलीयसी । 'उदिते जुहोत्यनुदिते जुहोति' इत्यादिलक्षणे श्रुत्योर्द्वैधे विरोधे द्वौ धर्मौ तुल्यबलविरोधत्वात्स्मृत्योर्मिथो विरोधे लौकिकः स्मार्तो धर्मः नालौकिको ग्राह्यः । याज्ञवल्क्यः—'स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः । अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः' ॥ इति ॥ २७ ॥ देशो हिमाचलादिः । कालोऽतिशीतादिः । वृषो धर्मः । लौकिकस्य ग्राह्यत्वं स्मर्यते 'यद्यपि स्यात्स्वयं ब्रह्मा त्रैलोक्यस्थापनक्षमः । तथापि लौकिकाचारं मनसापि न लङ्घयेत्' इति ॥ २८ ॥ एषां सर्वेषां

स्वगृह्योक्तोऽविरुद्धोऽपि स्मार्तो ग्राह्यो द्विजातिभिः ॥
स्वधर्मत्यागतश्चैषां पाखण्डत्वं सुदुःखदम् ॥ २९ ॥
समुद्रयात्राऽसवर्णस्त्र्युपयामश्चिरव्रतम् ॥
परायोद्वाहितादानं पुनश्च ह्यश्वमेधकौ ॥ ३० ॥
पुत्रोत्पत्तिर्देवराच्च मधुपर्के पशोर्वधः ॥
मधुमांसार्पणं श्राद्धे दिव्यं वननिषेवणम् ॥ ३१ ॥
महाप्रस्थानमित्येते धर्मा वर्ज्याः कलौ युगे ॥
लुप्ते वर्णविभागेऽत्र न संन्यासाग्निहोत्रकौ ॥ ३२ ॥
सुजन्मनापि शूद्रोऽयं संस्काराज्जायते द्विजः ॥
आचार्योऽत्र पिता माता सावित्री सूरिभिः स्मृता॥ ३३॥
विप्रोऽष्टमे नृपश्चैकादशे विड् द्वादशे क्रमात् ॥
संस्कार्यो द्विघ्नस्वाब्दोर्ध्वं पतितश्चेदसंस्कृतः ॥ ३४ ॥

दुःखदमिहामुत्र च खेददम् ॥ २९ ॥ कलिधर्मानाह— असवर्णस्त्रीविवाहः । चिरव्रतं नैष्ठिकब्रह्मचर्यम् । उद्वाहितायाः पुनः पराय दानम् । नरमेधोऽश्वमेधश्च ॥ ३० ॥ मधु मद्यम् । दिव्यं प्रत्ययार्थे तप्तशूलादिग्रहणम् ॥ ३१ ॥ महाप्रस्थानं हिमाचलोत्तरगमनम् । यावद्वर्णविभागस्तावत्संन्यासोऽग्निहोत्रं च ॥ ३२ ॥ सुजन्मनाऽव्यभिचारितजन्मना त्रैवर्णिककुमारोऽप्यसंस्कृतश्चेच्छूद्रप्रायः स चोपनयनसंस्काराद्द्विजत्वं लभते । अत्राचार्य उपदेष्टा पिता । सावित्री माता ॥ ३३ ॥ उपनयनकालमाह 'अष्टमे वर्षे ब्राह्मणमुपनयेद्गर्भाष्टमे वैकादशे क्षत्रियं द्वादशे वैश्यमाषोडशाद्ब्राह्मणस्यानतीतः काल आद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्यात ऊर्ध्वं पतितसावित्रीका भवन्ति नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयुः' इति गृह्योक्तेः । द्विगुणितस्ववर्षोर्ध्वमसंस्कृताश्चेत्पतिता इत्यन्वयः ॥ ३४ ॥ विप्रस्यैणेयं

ऐणेयरौरवाजत्वगेषां वस्त्राणि वा क्रमात् ॥
काषायरक्तपीतानि केशकूर्चासुसंमिताः ॥ ३५ ॥

पर्णोदुम्बरबिल्वोत्थाः सत्वग्दण्डाश्च मेखलाः ॥
क्रमान्मौञ्जीधनुर्ज्याऽव्यः स्वसूत्रैः संस्कृता द्विजाः ३६

कार्याश्चौलव्रतोद्वाहा उत्तरायणगे रवौ ॥
शुक्लपक्षे पुण्यभे च स्फुरद्रश्मौ गुरौ सिते ॥ ३७ ॥
मेखला सूत्रं दण्डश्चेद्भ्रष्टो धार्यः पुनर्नवः ॥
सायंप्रातश्चाग्निकार्ये कार्ये स्वापो दिवा न च ॥ ३८ ॥

प्राङ्मध्यान्त्यभवच्छब्दैर्विप्राद्यैर्भिक्षितं शुभम् ॥
भोज्यं गुर्वाज्ञया वेदा ग्राह्याः शक्त्या यथाविधि ॥३९॥

चर्म काषायवस्त्रं वा । क्षत्रस्य रौरवं रक्तवस्त्रं वा । विशोऽजचर्म पीतवस्त्रं वा । क्रमेणैषां केशादिसंमिताः सत्वचः पर्णादिदण्डाः । कूर्चं भ्रूमध्यं । पर्णः पलाशः । मौञ्जी मुञ्जनिर्मिता । धनुर्ज्या प्रसिद्धा । अविलोमजा आवी । यस्य यत्सूत्रं तेन स संस्कार्यः ॥ ३५ ॥ ३६ ॥ चौलाद्या उत्तरायणगे रवौ कार्याः । 'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयगोदानविवाहाः सार्वकालमेके विवाहम्' इति सूत्रात् । स्फुरत्किरणेऽनस्तमिते गुरौ शुक्रे च । स्फुरच्छब्दाद्बाल्यवार्धक्ये अपि त्याज्य। इदं ज्योतिःशास्त्रादवगन्तव्यम ॥ ३७ ॥ अग्निकार्यं समिदाधानादिरूपम् ॥ ३८ ॥ प्रागिति 'भवत्पूर्वां ब्राह्मणो भिक्षां याचेत् भवन्मध्यां राजन्यो भवदन्त्यां वैश्यः' भवान्भवती वा भिक्षां ददात्विति विप्रः । भिक्षां भवान्ददात्विति क्षत्रः । भिक्षां ददातु भवानिति वैश्यः । शुभं योग्यं गुर्वाज्ञया भोज्यम् । यथाविधि अध्ययननियमेन ॥ ३९ ॥ मधु मद्यम् । आकल्पो

मधुस्त्रीमांसलवणताम्बूलोच्छिष्टसेवनम् ॥
पादुकाछत्रगीताद्याकल्पासत्सङ्गलेपनम् ॥ ४० ॥

विप्रलापद्यूतवादद्दुःस्पर्शाष्टाङ्गमैथुनम् ॥
प्रेतकार्यं च नो कार्यं हीनानां वन्दनं न च ॥ ४१ ॥

ताताम्बागुर्वन्त्यकार्ये न दोषोऽथाभिवादयेत् ॥
क्रमान्नाम्ना शर्मवर्मगुप्तान्तेन गुरूनपि ॥ ४२ ॥

पूर्णाद्येशतिथ्यर्कक्रान्तौ मनुयुगादिषु ॥
अकालवर्षोत्पातेषु पाठे दोषो न नित्यके ॥ ४३ ॥

शब्दब्रह्ममयो विष्णुर्वेदः साक्षाद्धरिः परः ॥
वेदाध्यायी ततो विप्रः शुद्ध आर्षर्णवर्जितः ॥ ४४ ॥

वेषान्तरकरणम् ॥ ४० ॥ विप्रलापो विसंवादः । अष्टाङ्गमैथुनं योषित्स्मरणकीर्तनकेलिप्रेक्षणगुह्यभाषणसंकल्पाध्यवसायक्रियानिर्वृतिरूपम् ॥ ४१ ॥ प्रेतकार्यापवादमाह—तातः पिता अम्बा माता गुरुराचार्यः एषामन्त्येष्टयां न दोषः । यदाहुः—'ताताम्बाचार्यकेभ्योऽनलजलतिलदो ब्रह्मचारी तदीयाशौचोऽन्येभ्यस्तु दत्तः पुनरुपनयनं चाधिके कारयेत्तु ' इति । ब्राह्मणो देवदत्तशर्मा क्षत्रियो विष्णुदत्तवर्मा वैश्यः शिवदत्तगुप्त इत्यभिवादनीयनाम्ना गुरुं तत्स्थानापन्नांश्चाभिवादयेत् । शूद्रस्य मौञ्ज्यभावेपि प्रणामे दासनामोच्चारः । ४२ ॥ पूर्णा पूर्णिमा । आद्या प्रतिपत् । ईशौ चतुर्दश्यष्टम्यौ । सूर्यक्रान्तिः । युगादिर्मन्वादिर्ज्योतिःशास्त्रोक्त । अकालवर्षः भूकम्पाद्युत्पातः एषु वेदपाठे ग्रहणे ग्राहणे च दोषः । नित्यकर्माणि संप्रवृत्तयागादौ च न दोषः ॥ ४३ ॥ शब्दब्रह्ममयो वेदरूपः ॥ ४४ ॥ उत्सृष्टः कृतोत्सर्जनः ।

उत्सृष्टोपाकृताभ्यस्तगुप्तवेदमनुर्भुवि ॥
विप्रेभ्यो नार्पयति किं प्रत्येकः कामधेनुवत् ॥ ४५ ॥
अनध्यायेऽधीतवेदाः प्रज्ञायुःश्रीबलापहाः ॥
वेदान्विहाय योऽधीते शास्त्रं शूद्रसमः स च ॥ ४६ ॥
विप्रोत्थो गोलकः कुण्डो द्विजस्त्रीषु स तु क्वचित् ॥
संस्कार्योऽध्यापनीयश्चेत्युपदेशानुसारि तत् ॥ ४७ ॥
चतुर्व्रतेषु लुप्तेषु प्रायश्चित्तं चरेद्व्रती ॥
लक्षवारं जपेत्तंवोधियेति स्वव्रतात्यये ॥ ४८ ॥
अर्थतः केवलं वेष्टमधीत्य गुरवे मुदा ॥
दत्त्वेष्टं तदनुज्ञातः शुचिः स्नायाद्यथाविधि ॥ ४९ ॥
शक्तश्चेन्नैष्ठिको भूयात्प्रव्रजेत्सुविरक्त इत् ॥
अनाश्रमी न तिष्ठेत गृही भूत्वा यजेदतः ॥ ५० ॥

उपाकृतः कृतोपाकरणः । यो नियमेनाभ्यस्तो रक्षितश्च वेदमन्त्रः ॥ ४५ ॥ ॥ ४६ ॥ 'अमृते जारजः कुण्डो मृते भर्तरि गोलकः' इत्युक्तलक्षणो गोलकः कुण्डो वा ब्राह्मण्यां ब्राह्मणाज्जातश्चेत्संस्कार्योऽध्यापनीय इत्यस्य देशतो व्यवस्था ॥ ४७ ॥ चतुर्षु महानाम्नीमहाव्रतोपनिषद्गोदानाख्येषु प्रतिव्रतमेकैककृच्छ्ररूपं सव्याहृतिगायत्रीहोमपूर्वकं ब्रह्मचर्यव्रतात्यये महापापातिरिक्ते । ऋग्विधाने 'तंवोधिया जपेन्मन्त्रं लक्षवारं शिवालये' इति ॥ ४८ ॥ ४९ ॥ विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञातस्य वा स्नानमित्युक्तेः स्नानमत्र समावर्तनम् । सुतरां विरक्तश्चेत्संन्यस्य गच्छेत् 'ब्रह्मचर्याद्वा गृहाद्वा वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुतेर्विरक्तस्यैव ब्रह्मचरिणो न्यासेऽधिकारः । अतो ब्रह्मचर्यात । गृही गृहस्थः ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां त्रिकाण्ड-
मण्डितायां श्रीवासुदेव्यां कर्मकाण्डे अष्टमाष्टके
प्रथमोऽध्यायः ॥ १ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां त्रिकाण्डमण्डितायां वासुदेव्यां कर्मकाण्डे टीकायां अष्टमाष्टके प्रथमोऽध्यायः ॥ १ ॥

॥ इति गालवर्षिसुतेन ब्रह्मचारिधर्मकथनं नामाष्टमाष्टके
प्रथमोऽध्यायः ॥ ८।१ ॥

---

# गालवर्षिसुतेन गृहस्थधर्मवर्णनं नामाष्टमाष्टके द्वितीयोऽध्यायः ॥ ८।२ ॥

**हरिः ॐ ॥ ये यज्ञेनैव गृहिणो भूत्वाऽभ्यर्चन्ति भक्तितः ॥**
**अधियज्ञं क्रमाद्यान्ति कैवल्यं पदमव्ययम् ॥ १ ॥**

॥ श्रीगणेशाय नमः ॥

सर्वयज्ञानामधिष्ठाता फलदाता सर्वयज्ञाभिमानी चेदृशो विष्णुः 'यज्ञो वै विष्णुः' इति श्रुतेः । ननु 'यथैव छिन्ना नौर्बन्धनात्तीरं तीरमृच्छन्ती प्लवेतैवमेव ते सत्रिणस्तीरं तीरमृच्छन्तः प्लवेरन्' ॥ 'प्लवा ह्येते अदृढा यज्ञरूपाः' इति च श्रुतेः । प्लवते फलेन सह तत्साध्यं कर्म कुण्डनाशवत् क्षीरदध्यादीनां तत्स्थानां नाश इवेति श्रुत्यर्थः । एवंभूतात्कर्मणः कथमव्ययं कैवल्यं पदमित्यत आह–क्रमादिति । स च क्रमो वार्तिकसार उक्तः— 'रुचिद्वारोपकुर्वन्ति कर्माण्यात्मविमुक्तये ॥ अज्ञानस्याविरोधित्वान्न साक्षादात्मबोधवत् ॥ अविद्याया न चोच्छित्तौ ज्ञानादन्यदपेक्ष्यते ॥ ज्ञानोत्पत्तौ तु नैवान्यच्छमादिभ्यो ह्यपेक्ष्यते ॥ शमाद्युत्पत्तये नान्यद्बुद्धिशुद्धेरपेक्ष्यते ॥ बुद्धिशुद्धौ च नित्यादिकर्मभ्यो नान्यदिष्यते ॥ पारंपर्येण कर्मैवं विज्ञानायोपयुज्यते' इति । दोषश्रुतिस्तु कामनिन्दार्था । अत एव कर्मफलं तदासक्तिं च त्यक्त्वेश्वरप्रीतये एव नित्यं नैमित्तिकं च कर्मानुष्ठेयम् । 'कायेन मनसा बुद्ध्या' 'त्यक्त्वा कर्मफलासङ्गम्' इति स्मृतेः । तच्चानाश्रमिणां न सिद्ध्येदतः क्रमप्राप्तं गृहस्थाश्रममाह—शीलं स्वभावः लक्ष्म लक्षणम् । समानगोत्रप्रवररहितां । यवीयसीं स्वापेक्षया वयसा वपुषा च न्यूनां । भ्रातृमत्त्वं पुत्रसंततिज्ञापकम् । सुगुणामात्मगुणयुक्तां । ज्योतिःशास्त्रोक्तवर्ण-

धीरूपशीललक्ष्माढ्यामसमानार्षगोत्रजाम् ॥
यवीयसीं भ्रातृमतीं सुगुणां चोद्वहेद्वरः ॥ २ ॥
उद्वाहिता समानार्षादिजा चेन्मातृवत्सदा ॥
पाल्योद्वाह्या वा विधिना प्रायश्चित्तादिना पुनः ॥ ३ ॥
दोषे ज्ञाते सप्तपद्या अग्रे देया वरे मृते ॥
कन्याऽन्यत्राविद्धयोनिश्चेत्तथैव हठाद्धृता ॥ ४ ॥
ब्राह्मः प्रशस्तो दैवार्षकाया वा तदसंभवे ॥
गान्धर्वासुरपैशाचराक्षसा इतरस्य तु ॥ ५ ॥
ग्राह्याः स्वगृह्यविषयग्रामधर्मा विवाहके ॥
छत्रोष्णीषोपानहादियुग्दण्डी गमने द्विजः ॥ ६ ॥
द्व्युपवीतो द्विवासाः सन्बद्धचूडश्च कर्मणि ॥
पवित्रपाणिर्यतात्मा सोत्तरीयकमण्डलुः ॥ ७ ॥

वश्यभयोनिग्रहगणकूटनाड्य एकोत्तरगुणास्ते शोभना अष्टादशाधिका वा यस्याः । चकाराद्विषकन्यात्ववैधव्यदोषादिरहिता ग्राह्या । यद्वा चकाराद्द्वयोरप्येवंविधा गुणाद्या ग्राह्याः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ विवाहमाह आश्वलायनः—'अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः' इत्यादिखण्डेन ॥ ५ ॥ स्वगृह्यधर्मा देशधर्मा ग्रामधर्माश्च विवाहे ग्राह्याः । गृहस्थधर्मानाह—छत्रेत्यादि । गमने प्रयाणे छत्रादियुक्तः ॥ ६ ॥ द्वे उपवीते यस्य । द्वे वाससी यस्य । बद्धा चूडा शिखा येन । ईदृक्कर्मकरणकाले । यदुक्तं—'सदोपवीतिना भाव्यं सदा बद्धशिखेन च ॥ विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्' इति । न चात्रोत्तरार्धेन यज्ञोपवीतस्य कर्माङ्गतोक्तेः कर्मकालातिरिक्तकाले यज्ञोपवीतधारणमैच्छिकमिति वाच्यम् । पृथक्करणे नरकश्रवणात् । यतात्मा अप्रमत्तः ॥ ७ ॥ आहिताग्निरित्युपल-

प्रतिमासं कृत्तकेशनखादिस्त्वाहिताग्निकः ॥
प्रतिपक्षं च तीर्थादौ नित्यं क्षौरं न मङ्गले ॥ ८ ॥
नक्तं नग्नश्च न स्नायाद्गृही नग्नश्च न स्वपेत् ॥
नेक्षेन्नग्नां स्त्रियं रत्या विनाऽपि स्वां न वर्षति ॥ ९ ॥
धावेत वृक्षं नारोहेन्न बाहुभ्यां नदीं तरेत् ॥
नावरोहेत कूपं नाभ्यापद्येत्प्राणसंशयम् ॥ १० ॥
परान्नं परवादं च परवस्त्रादि संत्यजेत् ॥
पादाक्रमो न पादेन निर्माल्योच्छिष्टलङ्घनम् ॥ ११ ॥
शिरः संहतहस्ताभ्यां घर्षणीयं न कर्हिचित् ॥
नापसव्यं व्रजेत्पूज्यदेवालयशुभद्रुमान् ॥ १२ ॥
स्वपुण्यं परपापं नो वाच्यं गोप्यं स्वभायुषी ॥
दुःशास्त्रं द्यूतमद्यादिसेविनं च विवर्जयेत् ॥ १३ ॥
मद्यार्द्रास्थ्युच्छिष्टशूद्रचितितत्काष्ठभोगिनः ॥
स्पृष्ट्वा देवलकं स्नायाच्चण्डालं पतितं तथा ॥ १४ ॥

क्षणं गृह्याग्निमतोऽपि । तथाहि—'मासि मासि द्विजातीनां पक्षे पक्षे च यज्वनाम् ॥ ऋतावृतौ च यतिनां यथेष्टं ब्रह्मचारिणाम्' इति ॥ नित्यमावश्यकम् । 'गङ्गायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि ॥ आधाने सोमयागादौ दर्शादौ क्षौरमिष्यते' इत्युक्तः । मङ्गले विवाहादौ ॥ ८ ॥ निमित्तं विना नक्तं रात्रौ न स्नायात् । मैथुनं विना स्वकीयामपि नेक्षेत किमुतान्याम् । वर्षति न धावेत ॥ ९ ॥ नदीमित्युपलक्षणं जलाशयादेः ॥ १० ॥ ॥ ११ ॥ शुभद्रुमान् अश्वत्थादीन् ॥ १२ ॥ स्वभं जन्मर्क्षं । दुःशास्त्रं चार्वाकादि ॥ १३ ॥ १४ ॥ दुष्कृन्महापापी अजो मेषः अनयोः संबन्धि

वर्ज्या दुष्कृद्दीपमश्वच्छायावस्त्रनखोदकम् ॥
मार्जाराजरजः शूर्पवातः शूद्रान्नभोजनम् ॥ १५ ॥

वृषलीपतिसङ्गश्च चितिधूमः कुभाषणम् ॥
न मूर्धाभ्यङ्गावशिष्टतैलाभ्यङ्गोऽपि शस्यते ॥ १६ ॥

नाद्यात्ताम्बूलमशुचिर्नार्चेद्गुर्वग्निदेवताः ॥
वामहस्तेन न पिबेन्न निन्द्याद्विप्रसद्यतीन् ॥ १७ ॥

गुरोश्छायामनुज्ञां च नाक्रमेत्प्रत्यहं द्विजः ॥
ब्राह्मे मूहूर्ते उत्थाय ध्यायेद्ब्रह्म सनातनम् ॥ १८ ॥

रजः ॥ १५ ॥ वृषल्यः पञ्च ग्रन्थान्तरतोऽवगम्याः । तासामेकतमस्या अपि पत्युः सङ्गः संपर्कः ॥ १६ ॥ अशुचिर्गुर्वादीन्नार्चेत् । न पिबेज्जलादीति शेषः ॥ १७ ॥ ब्राह्ममुहूर्तो द्वेधा 'रात्रेस्तु चरमो यामो मुहूर्तो ब्राह्म उच्यते' इत्युक्तेः ॥ रात्रिगतमुहूर्तं पञ्चदशकं प्रक्रम्य 'ब्राह्मो नाभस्वतश्चैव मुहूर्तः क्रमशो निशि' इति पारिजातोक्तेरनयोरेकतरस्मिन् सनातनं चिरन्तनं असाध्यसाधनलक्षणमप्रमाणगोचरमतीन्द्रियमविषयं शिवं शान्तमविकृतमक्षरं सत्यं परविद्यागम्यं सबाह्याभ्यन्तरमजं परगतिसंज्ञकं पुरुषाख्यं सनातनं ब्रह्म ध्यायेत् । तदसंभवे सगुणं वा वेदतत्त्वार्थं वा । मनुः—'ब्राह्मे मुहूर्ते बुद्ध्येत धर्मार्थावनुचिन्तयेत् ॥ कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च' इति । अत्र स्वापे प्रायश्चित्तं रत्नावल्याम्—'ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी ॥ तां करोति द्विजो मोहात्पादकृच्छ्रेण शुद्ध्यति' इति ॥ १८ ॥

ग्रामाद्बहिस्तु नैर्ऋत्यां देवाम्ब्वध्वादिवर्जिते ॥
स्थलेऽम्बु दूरात्संस्थाप्य यतनासाक्षिवाक् तृणे ॥१९॥

उदङ्मुखोऽन्यथा नक्तमासीनो वस्त्रमस्तकः ॥
आर्षसूत्रं दक्षकर्णे कृत्वा मूत्रविशौ त्यजेत् ॥ २० ॥

लिङ्गं सहाद्भिरप्स्वार्द्रधात्रीमात्रमृदा गुदम् ॥
त्रिर्वामो दशवारं च करः शोध्याः कराङ्घ्रयः ॥२१॥

प्रत्येकं सप्तवारं द्विगुणं वीर्येऽर्धमन्यतः ॥
वर्णिवानप्रस्थभिक्षोः शौचं द्वित्रिचतुर्गुणम् ॥ २२ ॥

अर्धार्धार्धं निशाऽशक्तिमार्गेष्वज्ञाबलासु तु ॥
गन्धलेपान्तावधिः स्याद्गण्डूषान्वामतस्त्यजेत् ॥ २३ ॥

॥ १९ ॥ दिवोदङ्मुखो नक्तं दक्षिणाभिमुखः । आर्षसूत्रं निवीतम् ॥ २० ॥ लिङ्गं सहैकवारं प्रथमं वामकरो दशवारं ततो वामदक्षिणहस्तौ पादौ च प्रत्येकं सप्तवारम् ॥ २१ ॥ वीर्ये रेतस्खलने मैथुने च द्विगुणम् । मूत्रोत्सर्गेऽर्धम् । करादीन् प्रत्येकं त्रिवारम् । वर्णिनो ब्रह्मचारिणो द्विगुणम् । वनस्थस्य त्रिगुणम् । भिक्षोश्चतुर्गुणम् ॥ २२ ॥ निशायामर्धं अशक्तौ तदर्धं मार्गे तदर्धं । अज्ञेषु बालेषु । अबलासु पुरुषापेक्षयाऽल्पबलासु स्त्रीषु । 'पुरतः सर्वदेवाश्च दक्षिणे पितरस्तथा । ऋषयः पृष्ठतः सर्वे वामे गण्डूषमाचरेत्' इति स्मृतेर्वाम इत्युक्तम् । तद्राक्षसस्थानम् ॥ २३ ॥ आश्वलायनः— 'कुर्याद्द्वादश

द्विजो द्वादश चान्योऽल्पान् तर्जन्याऽऽस्यं न शोधयेत् ॥
क्षीरिकण्टकिवृक्षाम्रनिम्बापामार्गदारुणा ॥ २४ ॥
द्वादशाङ्गुलमात्रेण द्विजोऽन्योऽल्पेन मन्त्रवत् ॥
दन्तान्विशोधयेत्पर्णैर्निषिद्धाहेऽम्बुनाऽथवा ॥ २५ ॥
अशौचस्य क्रिया मोघा शौचमूलाऽखिला क्रिया ॥
तद्बाह्यशौचं स्नानादि कुर्याध्यानं तथाऽन्तरम् ॥ २६ ॥
मुक्ताङ्गुष्ठाल्पगोकर्णाकृतिहस्तेन कं त्रिभिः ॥
केशवाद्यैः प्राश्य हस्तौ द्वाभ्यां प्रक्षाल्य चाधरौ ॥ २७ ॥

गण्डूषान्पुरीषोत्सर्जने ततः ॥ मूत्रोत्सर्गे तु चतुरो भोजनान्ते तु षोडश ॥ भक्ष्यभोज्यावसाने तु गण्डूषाष्टकमाचरेत्' इति ब्राह्मणविषये । तारतम्यात्तन्यूनत्वमन्येषाम् । शौचाकरणे प्रायश्चित्तमाह बौधायनः--' गायत्र्यष्टशतं प्राणायामत्रयं च' इति । तथाहि--' देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ॥ उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत्' इति ॥ २४ ॥ अन्यः क्षत्रादिः । विष्णुः--' द्वादशाङ्गुलिकं विप्रे काष्ठमाहुर्मनीषिणः ॥ क्षत्रविट्शूद्रजातीनां नवषट्चतुरङ्गुलम्' इति । मन्त्रवत् ' मुखदुर्गन्धनाशाय दन्तानां च विशुद्धये ॥ ष्ठीवनाय च गात्राणां कुर्वेऽहं दन्तधावनम्' इति समन्त्रकम् । व्यासः—'प्रतिपद्दर्शषष्ठीषु नवम्यां दन्तधावनम् ॥ पर्णैरन्यत्र काष्ठैस्तु जिह्वोल्लेखः सदैव हि' ॥ २५ ॥ २६ ॥ कं जलं ब्राह्मणेनानीतम्--'संध्यार्थे भोजनार्थे वा स्नानार्थे पितृकर्मणि ॥ शूद्राहृतेन नाचामेत्' इत्यापस्तम्बोक्तेः शूद्राहृतमसत् । आचमनस्यावश्यकत्वाद्विशेषत उच्यते--' शुचौ देशे भूमिष्टपादोऽन्तर्जानुहस्तः प्राङ्मुख उदङ्मुखो वोपविश्य संहताङ्गुलिहस्तेन शुद्धं जलं गृहीत्वा मुक्ताङ्गुष्ठकनिष्ठेन वामेनान्वारब्धेन दक्षिणपाणिना ब्रह्मतीर्थेन केशव नारायण माध-

द्वाभ्यां प्रोक्ष्यास्यमेकैकात्करं पादौ शिरोऽपरैः ॥
आस्यं नासेक्षिणी कर्णौ नाभिं हृत्के भुजौ स्पृशेत्॥२८॥

नासां साङ्गुष्ठतर्जन्याङ्गुष्ठेनास्यं च दृक्श्रुती ॥
सानामिकेन साल्पेन नाभिं करतलाग्रतः ॥ २९ ॥

हृद्बाहून्कं च सर्वाभिः स्पृशेदाचमनं त्विदम् ॥
शुद्धौ कर्माद्यन्तयोश्च माषमज्जाम्बिवहाशने ॥ ३० ॥

चेति संबुद्धयन्तैस्त्रिभिर्नामभिः पिबेत् । गोविन्द विष्णो इति द्वाभ्यां करौ प्रक्षाल्य । मधुसूदन त्रिविक्रमेति द्वाभ्यां अङ्गुष्ठमूलेनौष्ठौ संमृज्य । वामन श्रीधरेति द्वाभ्यां तथैव मुखमुन्मार्ज्य । हृषीकेशेति वामकरं प्रोक्ष्य । पद्मनाभेति पादौ प्रोक्ष्य । दामोदरेति मूर्धानं प्रोक्ष्य । संकर्षणेति संहताङ्गुलित्रयेणास्यं संस्पृश्य । वासुदेव प्रद्युम्नेति द्वाभ्यां अङ्गुष्ठतर्जनीभ्यां नासापुटं संस्पृश्य । अनिरुद्ध पुरुषोत्तमेति द्वाभ्यां अङ्गुष्ठानामिकाभ्यां चक्षुषी संस्पृश्य । अधोक्षज नारसिंहेति द्वाभ्यां तथैव श्रोत्रे संस्पृश्य । अच्युतेति साङ्गुष्ठतर्जनीभ्यां नाभिं संस्पृश्य । जनार्दनेति पाणितलेन हृदयं संस्पृश्य । उपेन्द्रेति सर्वाभिः शिरः संस्पृश्य । हरे कृष्णेति द्वाभ्यां कराग्रेण दक्षिणवामबाहुमूले स्पृशेत् । इत्याचमनम् ॥ मलाद्युत्सर्गशुद्धयन्ते कर्मण आदावन्ते च । चकारात्क्षुताश्रुपातवस्त्रपरिधानादि ग्राह्यम् । अत्रैकवारं इहाशने माषमज्जनमात्राम्बु करस्थं प्राह्यं नाधिकं न्यूनं वा सुरावन्निषिद्धत्वात् । याज्ञवल्क्येन स्त्रीशूद्रयोः सकृदुक्तम्–'शुद्धयेरन्स्त्री च शूद्रश्च सकृत्पीताभिरन्ततः' इति नानयोर्द्विराचमनमिति भावः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ गोविशा गोमयेन ।

द्विजोऽप्सु गोविशा प्रातः स्नायान्मध्यंदिने मृदा ॥
भिक्षुर्व्रती त्रिकालं नो चिरंटी शिरसा सदा ॥ ३१ ॥
स्रवत्यात्मा सरन्ध्रोऽतो नित्यस्नानं विशोधनम् ॥
मान्त्राग्नेयाद्यशक्तस्य संध्योपास्याऽथ भूषितैः ॥ ३२ ॥
भाढ्या भहीनाऽर्कयुक्ता तूत्तमा मध्यमाऽधमा ॥
प्रातःसंध्या परा तद्वत्सार्कार्कोना च भान्विता ॥ ३३ ॥
त्रिनाड्यधस्तामकृत्वा चतुर्थार्घ्यं प्रदापयेत् ॥
अध्यर्धयामादासायं संध्या मध्याह्निकी स्मृता ॥ ३४ ॥
प्राणायामोऽघनिघ्नः प्राकार्यः सर्वेषु कर्मसु ॥
गृह्योक्तवन्मार्जनाघमर्षणार्घ्यार्पणादिकम् ॥ ३५ ॥
उपविश्य क्षमां प्रार्थ्य भूतान्युत्सार्य भावयेत् ॥
यथाङ्गमात्मन्यात्मानं देव्या तद्रूपमेकधीः ॥ ३६ ॥
आर्षदैवतच्छन्दांसि स्मरन्नक्षरपूर्वकान् ॥
न्यासान्कृत्वा स्थितो ध्यात्वा देवीमष्टशतं जपेत् ॥ ३७ ॥

भिक्षुः कुटीचको बहूदकश्च । यदुक्तम्-'स्नानं त्रिषवणं प्रोक्तं कुटीचकबहूदयोः ॥ हंसे तु सकृदेव स्यात्परहंसे न विद्यते' इति । व्रती वनस्थः । चिरंटी सुवासिनी वेणीबन्धपूर्वकं कण्ठाधः स्नायान्न शिरसा । सदेत्यनेन बुधमन्दान्यतरवारे शिरसा मङ्गलस्नाने न दोष इति सूचितम् ॥ ३१ ॥ अशक्तस्य भस्मादिस्नानं मृद्भस्मान्यतरभूषितैर्धृतपुण्ड्रैः संध्यावन्दनं कार्यम् ॥ ३२ ॥ भाढया सनक्षत्रा संध्योत्तमा । लुप्ततारा मध्यमा । अर्कयुक्ताऽधमा ॥ ३३ ॥ सार्धप्रहरमारभ्यासायम् ॥ ३४ ॥ ३५ ॥ एकधीरैकाग्र्ययुक् ॥ ३६ ॥ ३७ ॥ 'उत्तमे शिखरे जाते' इति विसृजेत् । विधेर्विधिना ।

**उपस्थाय प्रणम्येशानभिवाद्य गुरुं ततः ॥**
**संध्यां विसृज्य होमौ च सायंप्रातश्चरेद्विधेः ॥ ३८ ॥**

**क्लिन्नवस्त्रोऽपवित्रो नो विपुण्ड्रश्च क्रियाश्चरेत् ॥**
**ततो देवार्चनं कार्यं स्ववृत्त्या पोष्यपोषणम् ॥ ३९ ॥**

श्रुतिश्च– 'यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च ॥ अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति' इति ॥ भाष्यं–'यस्याग्निहोत्रं अदर्शं दर्शाख्यकर्मणा वर्जितं । अवश्यकर्तृत्वाद्दर्शस्याग्निहोत्रविशेषणमिव भवति तदक्रियमाणमित्येतत् । तथाऽपौर्णमासमित्यादिष्वग्निहोत्रविशेषणत्वं द्रष्टव्यम् । अग्निहोत्राङ्गस्याविशिष्टत्वादपौर्णमासं पौर्णमासकर्मवर्जितम् । अचातुर्मास्यं चातुर्मास्यकर्मवर्जितम् । अनाग्रयणं आग्रयणं शरदि कर्तव्यं तच्च न क्रियते यस्य । तथा अतिथिवर्जितं च । अतिथिपूजनमहन्यहनि क्रियमाणम् । यस्य स्वयं सम्यगग्निहोत्रकालेऽहुतं न यथाहुतमित्येतत् । अदर्शादिवदवैश्वदेवं वैश्वदेवकर्मवर्जितं हूयमानमप्यविधिना हुतं । एवं असंपादितमग्निहोत्राद्युपलक्षितकर्म किं करोतीत्युच्यते । आसप्तमान् सप्तमसहितान् तस्य कर्तुर्लोकान् हिनस्तीवायासमात्रफलत्वात् । सम्यक्क्रियमाणेषु हि कर्मसु कर्मपरिणामरूपेण भूरादयः सत्यान्ताः सप्तलोकाः फलं प्राप्यन्ते ते लोका एवंभूतेन कर्मणा त्वप्राप्यत्वाद्धिंस्यन्त इवायासमात्रं त्वव्यभिचारीत्यतो हिनस्तीत्युच्यते । पिण्डदानाद्यनुग्रहेण वा संबध्यमानाः पितृपितामहप्रपितामहाः पुत्रपौत्रप्रपौत्राः स्वसहिताः स्वात्मोपकाराः सप्तलोका उक्तप्रकारेणाग्निहोत्रादिना न भवन्तीति हिंस्यन्त इत्युच्यन्ते' इति ॥ ३८ ॥ क्लिन्नमार्द्रं । अपवित्रः हस्ते पवित्ररहितः शुद्धिरहितो वा । विपुण्ड्रः तिलकरहितः । 'अकृत्वा भालतिलकं तस्य कर्म निरर्थकम्' इति पारिजातोक्तेस्तिलकरहितो न कुर्यात् । अत्र पोष्याः–

स्ववृत्त्या जीवनाभावाद्गुर्वापद्यन्यवार्तया ॥
जीवेतानिन्द्यया नैव हीनवृत्त्या कुटुम्ब्यपि ॥ ४० ॥

कृतसंध्यः कृतोपस्थो जानुस्थसकुशाञ्जलिः ॥
सोंकारव्याहृतिं देवीं रोदसीदत्तदृग्जपेत् ॥ ४१ ॥

तां पच्छोऽर्धर्चशः सर्वां वेदान्साङ्गान्स्वशक्तितः ॥
तिष्ठन्नासीनो व्रजन्वाऽनध्यायेऽल्पं जपेत्ततः ॥ ४२ ॥

त्रिर्नमोब्रह्मण इति तर्पयेत्साक्षताञ्जलिः ॥
देवानृषींस्तिलैः पितॄन्स्वगृह्योक्तविधानतः ॥ ४३ ॥

निवीतं कण्ठलम्ब्यार्षं दक्षांसस्थं तु पित्र्यकम् ॥
प्राचीनावीतमन्यांसस्थं सूत्रं तूपवीतकम् ॥ ४४ ॥

तर्जन्यल्पाधःकराग्रमध्यादिषु यथाक्रमम् ॥
तीर्थं पैत्रं कायदैवमाग्नेयं ब्राह्ममुच्यते ॥ ४५ ॥

'जाया बन्धुजनः क्षीणस्तथाऽनाथः समाश्रितः ॥ अग्निर्गौरतिथिर्वह्निः पोष्यवर्ग उदाहृतः' इति ॥ ३९ ॥ अन्यत्रार्तया क्षात्रवैश्यवृत्त्याऽनिन्द्यया ॥ ४० ॥ कृतमध्याह्नसंध्यावन्दनः। वामपादमूले दक्षिणपादस्थापनमुपस्थः। देवीं गायत्रीं। रोदसीदत्तदृङ् मध्यमदृष्टिः। 'द्यावापृथिव्योः संधिमीक्षमाणः संमील्य वा' इति सूत्रात् ॥४१॥४२॥४३॥४४॥ निवीतं कण्ठलम्बिसूत्रमृष्यर्थं। दक्षबाहुस्थं प्राचीनावीतं पित्रर्थं। वामबाहुस्थमुपवीतं देवार्थम्॥४५॥

पित्रर्षिदेवा दानोपस्पर्शकार्यं चरेत्तु तैः ॥
नाह्नोऽतीयाद्विना दानं शक्त्या दद्यात्किमप्युत ॥४६॥
पञ्चयज्ञपरित्यागी ब्रह्महा पापभुक् च सः ॥
ब्रह्मयज्ञः सकृद्देवभूतपितृनृयज्ञकाः ॥ ४७ ॥
कार्याः प्रातः सायमन्नैः फलाम्ब्वाद्यैरसंभवे ॥
आयान्तमतिथिं सूक्त्या भोजयेच्छक्तितो मुदा ॥ ४८ ॥
अज्ञातगोत्रनामापि भोज्यः पङ्क्तिं विवर्जयेत् ॥
भुञ्जीत वृद्धबालाद्यैः शुद्धान्नं वाग्यतोऽञ्जसा ॥ ४९ ॥
खादितार्धं पुनर्नाद्यात्सशब्दं न पिबेज्जलम् ॥
नान्नं निन्द्याद्धितमितशुद्धान्नाशी ह्यलोलुपः ॥ ५० ॥
शुद्धास्यकर आचान्तो दद्याद्द्याच्च वीटकम् ॥
नयेच्छेषाहः श्रवणाद्यामोर्ध्वं च स्वपेन्निशि ॥ ५१ ॥
कार्या निशाद्ययामान्तं संकटान्तरिता क्रिया ॥
नैशा निशीथपर्यन्तं प्रायश्चित्तं ततः परम् ॥ ५२ ॥
अनिन्द्याहे रहो रात्रौ पत्नीमुपगमेन्निजाम् ॥
ततः पृथक् शयीतैवमाह्निकं तारकं परम् ॥ ५३ ॥

॥ ४६ ॥ ब्रह्मयज्ञः सकृद्दिवैव ॥ ४७ ॥ ४८ ॥ अञ्जसा शीघ्रम् ॥ ४९ ॥ अलोलुप इन्द्रियलौल्यरहितः ॥ ५० ॥ वीटकं ब्राह्मणाय दद्यात् स्वयं चाद्यात् ॥ ५१ ॥ निशीथोऽर्धरात्रः । अनिन्द्याहे मूलमघारेवतीश्राद्धतत्पूर्वदिनाष्टमीचतुर्दशीपर्वदिवसेषु । ऋतौ गर्भशङ्कित्वात्स्नायादनृतौ शौचमेवेति ॥५२॥५३॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रि-

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां श्रीवासुदेव्यां कर्मकाण्डे अष्टमाष्टके द्वितीयोऽध्यायः ॥ २ ॥

साहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां कर्मकाण्डेऽष्टमाष्टके द्वितीयोऽध्यायः ॥ २ ॥

इति गालवर्षिसुतेन गृहस्थधर्मवर्णनं नामाष्टमाष्टके द्वितीयोऽध्यायः ॥ ८।२ ॥

---

## और्ध्वदेहिक--श्राद्धलक्षणप्रयोगादिकथनं नामाष्टमाष्टके तृतीयोऽध्यायः ॥ ८।३ ॥

हरिः ॐ ॥ देवानामृणतो मुक्तिर्नित्यमासिकवार्षिकैः ॥
यज्ञैः श्राद्धैः पितृणां तु ह्यनृणो मुक्तिभाग्द्विजः ॥ १ ॥
प्रकुर्यात्प्रेतसंस्कारं प्रायश्चित्तपुरःसरम् ॥
यस्यौर्ध्वदेहिकं लुप्तं भवेत्प्रेतः स्वपीडकः ॥ २ ॥
विधिनावयवश्राद्धं विषमाख्यं वृषोत्सृतिः ॥
एकोद्दिष्टं मासिकानि दानमाब्दं सपिण्डनम् ॥ ३ ॥

॥ श्रीगणेशाय नमः ॥
अध्याये चैकोनषष्टितमे प्रेतक्रियोदिता ॥
श्राद्धार्हविप्रलक्ष्मादि तत्प्रयोगस्तथादितः ॥ १ ॥

नित्याः प्रात्यहिका मासिकाः पार्वणसंज्ञकाः वार्षिका आग्रयणाद्यास्तैरनुष्ठितैर्नु शीघ्रं देवानामृणतो मुक्तिः । संस्कर्तुः कृच्छ्रत्रयात्मकं प्रायश्चित्तं मृतस्य तूर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टास्पृष्टास्पृष्टखट्वादिमरणदोषापनुत्त्यै कृच्छ्रत्रयम् । स्वपीडको वंशपीडाकरः ॥ १ ॥ २ ॥ विधिना मृतस्नानाञ्जलिदानपूर्वकं प्रत्यहमवयवपिण्डदानं प्रथमतृतीयादिषु विषमश्राद्धं वृषोत्सर्गः द्वात्रिंशाहुत्यात्मकमेकोद्दिष्टं षोडशमासिकानि शक्त्या दशदानानि महादानान्युपदानानि आब्दं अब्दपर्यन्तं उदकुम्भदानं वा ततः सपिण्डनं । अधुनातना द्वादशाह एव कुर्वन्ति ‘ अनित्यात्कलिधर्माणां पुंसां चैवायुषः क्षयात् ॥ अस्थिरत्वाच्छरीरस्य द्वादशाहे सपिण्डनम् ’ इत्युक्तेः ।

अस्थि क्षिपेद्द्युनद्यां च गयायां पिण्डदापनम् ॥
यथोक्तश्राद्धदानं च ततः पुत्रस्य पुत्रता ॥ ४ ॥

अमायुगमनुक्रान्तिधृतिपातमहालयाः ॥
अष्टकान्वष्टकापूर्वेद्युःश्राद्धं नियतं चरेत् ॥ ५ ॥

निमन्त्रयेत्क्षयाहात्प्राक् द्वौ दैवे पितृकर्मणि ॥
त्रीनेकैकं वोभयत्र ततो वर्णी यतो भवेत् ॥ ६ ॥

एतत्पक्षे सपिण्ड्यधिकारार्थमेकोद्दिष्टविधिनापकृष्य षोडशमासिकानि कृत्वा सपिण्डी कार्या । पश्चाद्यथाकालमनुमासिकानि कार्याणि । सपिण्ड्युत्तरं नैकोद्दिष्टम् ॥ ३ ॥ द्युनद्यां भागीरथ्याम् । 'जीवतो वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता' इत्यन्वर्थत्वमुक्तम् ॥ ४ ॥ श्राद्धान्याह—अमा दर्शाः ( १२ ) युगादीनि कार्तिकशुक्लनवमी वैशाखशुद्धतृतीया भाद्रकृष्णत्रयोदशी माघमासेषु च ( ४ ) मन्वादीनि तु चैत्रशुद्ध तृ० ३ । १५ ज्येष्ठामा० ३० आश्विनकृष्ण ९ श्रावणकृष्ण ८ । ३० भाद्रशुद्ध ३ आषाढशुद्ध १० । १५ कार्तिकशुद्ध १२ । १५ पौषकृष्ण ११ माघकृष्णसप्तमी फाल्गुनपौर्णिमेत्येवं ( १४ ) रविसंक्रान्तयः ( १२ ) वैधृतयः ( १३ ) व्यतीपाताः ( १३ ) भाद्रापरपक्षे महालयाः ( १६ ) हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः ४ पूर्वेद्युः ४ अपरेद्युरन्वष्टकाः ४ एवं ( १२ ) एवं ( ९६ ) षण्णवतिः नियतान्याब्दिकवन्नित्यान्यननुष्ठातुः प्रत्यवायजनकानि ॥ ५ ॥ श्राद्धाहात्पूर्वेह्नि उभयत्र दैवे एकः पित्र्ये एकश्च । वर्णी ब्रह्मचर्यवान् यतो नियतश्च ॥ ६ ॥

दन्तधावनताम्बूलाभ्यङ्गरत्यन्यभोजनम् ॥
कर्तुर्वर्ज्यं द्व्यहं तद्वदामन्त्रितद्विजस्य च ॥ ७ ॥

रागादिहीनं स्वाचारनिरतं वेदतत्परम् ॥
स्वाश्रमं गुरुदेवेष्टं विप्रं श्राद्धे निमन्त्रयेत् ॥ ८ ॥

गुर्विण्युदक्यावृषलीपतिः कुष्ठी क्षतव्रतः ॥
न्यूनाधिकाङ्गो रोगार्तः कुष्ठी च कुनखी कुवाक् ॥ ९ ॥

परिवेत्ताऽग्रेदिधिषुर्देवाग्नी ग्रामयाजकः ॥
भिषक् च शास्त्री दैवज्ञोऽभार्यो देवलकः खलः ॥ १० ॥

वेदशास्त्रोपजीवी च निन्दको गायकः कविः ॥
अन्यस्त्रीधनहृत्कुण्डो गोलको राजसेवकः ॥ ११ ॥

श्राद्धे वर्ज्यः प्रयत्नेन स्वसंबन्धश्च निर्गुणः ॥
द्विजाञ्छ्राद्धाहात्पूर्वेह्नि तद्दिने वा निमंत्रयेत् ॥ १२ ॥

रत्यन्यान्नभोजने मैथुनं परान्नभोजनं च द्व्यहं द्विदिनम् ॥ ७ ॥ ८ ॥ उदक्या रजस्वला । क्षतव्रतोऽवकीर्णी ॥ ९ ॥ 'परिवेत्तानुजेनूढे ज्येष्ठे दारपरिग्रहात् ॥ पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः ॥ स तु द्विजोऽग्रेदिधिषुः' इत्युक्तलक्षणावुभौ । भिषग् वैद्यः । अभार्यो विधुरः स्नातकश्च । देवलको द्रव्यार्थं देवपूजकः ॥ १० ॥ ११ ॥ स्वसंबन्धो भागिनेयादिः ॥ १२ ॥ नित्यक्रियां ब्रह्मयज्ञान्तां । अलोहे आयसातिरि-

प्रातर्नित्यक्रियां कृत्वा गृह्येऽग्नौ लौकिकेऽथवा ॥
पाकं कुर्यान्नूतनभाण्डेऽलोहेऽसत्स्त्रीः इ निन्दिता ॥ १३ ॥
कुतुपे पुनराहूय द्विजाञ्छ्राद्धं समारभेत् ॥
तिथिर्ग्राह्याऽपराह्णेत्र चेत्प्रागेत्र दिनद्वये ॥ १४ ॥
पूर्वोत्तराहेऽपराह्णादूर्ध्वं प्राक् चेत्तदा परा ॥
सायाह्ने राक्षसं श्राद्धं दातुर्भोक्तुश्च दुःखदम् ॥ १५ ॥
द्विजाज्ञयाचम्य कर्ता श्राद्धं संकल्प्य वाग्यतः ॥
शुद्धौ देवौ पूर्वमुखौ शान्तौ पित्र्यानुदङ्मुखान् ॥ १६ ॥
उपवेश्यासनं दत्त्वा पाद्यानि च पृथक्पृथक् ॥
चतुरस्रं त्रिकोणं च वर्तुलं चार्धचन्द्रवत् ॥ १७ ॥

त्कपात्रेऽथवाऽलोहे स्वर्णरौप्यताम्रकांस्यमये । श्राद्धदेशेऽयःस्थापनस्यापि निषिद्धत्वात् । असत्स्त्री परकीया–वन्ध्या–दुराचारिण्यादिः । इह श्राद्धपाके । यदाहुः–'पुंश्चलीं च तथा वन्ध्यां विधवां चान्यगोत्रजाम् ॥ वर्जयेच्छ्राद्धपाकार्थममातृपितृवंशजाम् ॥ न पाकं कारयेत्पुत्रीं गर्भिणीं चापि दुर्मुखीम्' इति ॥ १३ ॥ 'अंशोऽष्टमोऽह्नः कुतुपः' इत्युक्तलक्षणे काले । पञ्चधा विभक्तस्य दिनस्य पूर्वभागः प्रातः । द्वितीयः संगवः । तृतीयो मध्याह्नः । चतुर्थोऽपराह्णः । पञ्चमः सायाह्नः । श्राद्धतिथिरपराह्णगा ग्राह्या । पूर्वेह्नि सायाह्ने प्रविष्टा द्वितीयेह्न्यपराह्णात्प्रागेव समाप्ता चेद्दिनद्वये साम्येन वैषम्येण वा चेत्तदा परा ग्राह्या ॥ १४ ॥ १५ ॥ वाग्यतो मृषालापादिवर्जितः । स्नातान्कृतपच्छौचान् द्विराचान्तानिति सूत्रोक्तवच्छुद्धौ शान्तावित्युपलक्षको गुणः ॥ १६ ॥ चतुरस्रादीनि वर्णक्रमतो मण्डलानि दैवानि । पित्र्याणि तु वर्तुलान्येव ॥ १७ ॥ आमेनामान्नेन न पक्वान्नेन द्विजैस्त्रैवर्णिकैरपि ।

पाद्यादौ मण्डलानीह क्रमाद्विप्रादिवर्णतः ॥
शूद्रेणामेन हेम्ना वा श्राद्धं कार्यं द्विजैरपि ॥ १८ ॥

पाकाभावे द्विजालाभे जातकर्मणि च ग्रहे ॥
तिलान्विकीर्यापहता इत्यृचार्घ्यं सहूतिकम् ॥ १९ ॥

संकल्पासनयोः षष्ठी द्वितीयाह्वानतर्पणे ॥
अन्नदाने चतुर्थी चान्यत्र संबुद्धयः स्मृताः ॥ २० ॥

शंनोदेवीत्यर्घ्यपात्रं स्पृष्ट्वा दैवे यवोस्यतः ॥
पित्र्ये तिलोसीत्यनेन क्षिप्त्वा यवतिलान्पृथक् ॥ २१ ॥

विश्वेदेवा उशन्तश्चेत्याह्वाने दैवपित्र्यके ॥
निवेद्यार्घ्याणि सव्येन या दिव्या इति मन्त्रयेत् ॥ २२ ॥

देवविप्रोत्तरे दर्भोपरि न्युब्जं पिधाय वा ॥
पित्र्यर्घ्यपात्रं संस्थाप्या समाप्तेस्तन्न चालयेत् ॥ २३ ॥

ग्रहे ग्रहणे । सहूतिकमाह्वानपूर्वकम् ॥ १८ ॥ १९ ॥ २० ॥ यवोसीति दैवेऽर्घ्यपात्रे यवान् पित्र्ये तिलोसीति तिलान् ॥ २१ ॥ दैवे आह्वाने ये देवासः उशन्तस्त्वा पित्र्ये ये चेह पितर इति ॥ २२ ॥ न्युब्जं स्थापयेदित्येकः पक्षः । अपिधानपक्षे पित्र्यं पितामहपात्रेणापिधाय स्थापयेत् । न चालयेदित्यत्र शौनकः ' नोद्धरेत्प्रथमं पात्रं पितॄणामर्घ्यपातितम् । आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् ' इति ॥ २३ ॥ पितॄंश्च संपूजयेत्

संपूज्य देवान् गन्धाद्यैः पितृंश्चोद्धृतमोदनम् ॥
बहिरग्नौ पित्र्यविप्रपाणौ वा विधिवद्धुनेत् ॥ २४ ॥

सोमोत्र पितृमानग्निः कव्यवाहश्च देवते ॥
देवपाणौ तु चेन्मन्त्रविपर्यासाच्च सव्यतः ॥ २५ ॥

आचान्तोत्र शुचिः कर्ता विप्रा अप्युज्झितासनाः ॥
प्राक्संस्थोत्तरगं दैवं पित्र्यं याम्यन्तमग्निगम् ॥ २६ ॥

विप्रैः प्रत्युत्तरं देयं सर्वत्रात्र यथोचितम् ॥
मण्डलोपरि पात्रेऽन्नं परिविष्टमनिन्दितम् ॥ २७ ॥

प्रोक्ष्योभयत्र प्रदेयं परिषिच्य यथाविधि ॥
ये देवासश्च ये चेहेत्युक्त्वेशाय समर्प्य तत् ॥ २८ ॥

आयतनाद्बहिरग्नौ पित्र्यविप्रपाणौ वा सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति हुनेत्। विधुरस्तु देवविप्रपाणौ जुहुयाच्चेत्तदा मन्त्रविपर्यासेन सव्येन च होमः ॥ २४ ॥ २५ ॥ अत्राग्नौकरणोत्तरं कर्ता कृताचमनः शुचिः विप्रा अपि हुतपाणिस्थान्नं भस्मरक्षितमण्डलोपरिस्थपात्रे संस्थाप्य त्यक्तासना आचान्ताः शुद्धाः स्युः। अत्र सर्वत्र दैवं कर्मोपवीती प्राक्संस्थमुदगपवर्गं। पित्र्यं त्वर्घ्यपात्रनिवेदनादि दक्षिणान्तं दक्षिणाविसर्जनवर्ज्यं सर्वं प्राचीनावीती आग्नेयीसंस्थं दक्षिणापवर्गमाग्नेयीमुखः कुर्यात् ॥ २६ ॥ यथोचितं करिष्ये कुरुष्व, क्षणः क्रियतां ओं तथेत्यादि ॥ २७ ॥ उभयत्र दैवे पित्र्ये च दैवे ये देवासो दिवि० पित्र्ये ये चेह पितर इति चोक्त्वा ब्रह्मार्पणमित्युक्तभावनयेश्वराय समर्प्य ॥ २८ ॥

मूर्तामूर्तपितॄन्नत्वा दद्यादापोशनं द्विजान् ॥
प्राणाग्निहोत्रपूर्वं तान्भक्त्या संप्रार्थ्य भोजयेत् ॥ २९ ॥

श्रावयेत्पौरुषं राक्षोघ्नं चान्यन्नाचिकेतकम् ॥
त्यक्त्वा हास्यादि तैः स्वस्थं भोक्तव्यं मौनमास्थितैः ३०

चेद्भुक्तोऽन्योन्यसंस्पृष्टो गायत्र्यष्टशतं जपेत् ॥
हविष्यान्नं माषतैलपक्कं शस्तं सरामठम् ॥ ३१ ॥

मधुवाताक्षन्नमीति तृप्तौ जप्त्वा च वाचयेत् ॥
संपन्नं चोच्छिष्टभाग्भ्योन्ने त्यक्ते प्राशयेदपः ॥ ३२ ॥

अमूर्तानां च मूर्तानामिति नत्वा नात्र चित्राहुतयः । श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि शिवोमाविशाप्रदाहायेति प्राणाग्निहोत्रपूर्वं तान्भोजयेत् । किं कृत्वा ' अपेक्षितं याचितव्यं त्याज्यं चैवानपेक्षितम् । उपविश्य सुखेनैव भोक्तव्यं स्वस्थमानसैः' इति प्रार्थ्य ॥ २९ ॥ सहस्रशीर्षा० १६ पौरुषं । कृणुष्वपाज० १५ । इंद्रासोमा० १९ । रक्षोहणं० १९ । इति राक्षोघ्नं । अन्यत्पितृसूक्तादि पवित्रं ' प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते ' इति नाचिकेत एवोक्तत्वात्तदपि श्रावयेत् । तैर्भुञ्जानैः । आदिशब्दाद्वार्तादि ॥ ३० ॥ हविष्यं यवतिलमुद्गशाल्यादि माषान्नं तैलपक्कं च सरामठं हिङ्गुसहितम् ॥ ३१ ॥ तृप्तौ जातायामलमिति वाचयेत् । श्राद्धं संपन्नमिति च वाचयेत् । ' यजमानकुले जाता दासा दास्योऽन्नकाङ्क्षिणः ॥ ते सर्वे तृप्तिमायान्तु मया दत्तेन भूतले ' इत्युच्छिष्टभाग्भ्योऽन्ने त्यक्ते तानमृतापिधानमसीत्यपः प्राशयेत् ॥ ३२ ॥ पूर्वं पिण्डदानं आचान्तेषु वेति

पूर्वमाचान्तेषु वात्र पिण्डान्दद्यात्कुशोपरि ॥
शुन्धन्तामित्यादि दद्यादञ्जनाभ्यञ्जनेऽर्चयेत् ॥ ३३ ॥

नमो व इत्युपस्थाय ततः पिण्डान्प्रवाह्य च ॥
मध्यपिण्डं पुत्रकामश्चेत्पत्न्या प्राशयेदिह ॥ ३४ ॥

विकिरप्रकिरोच्छिष्टपिण्डान्दत्त्वा यथाविधि ॥
गोत्राभिवादनं पात्रचालनं स्वस्तिवाचनम् ॥ ३५ ॥

ताम्बूलदक्षिणापात्रोच्चालनाशीर्विसर्जनम् ॥
सव्यापसव्ये दैवे च पित्र्ये स्वाहा स्वधा क्रमात् ॥३६॥

नत्वा द्विजेषु यातेषु वैश्वदेवं विधाय च ॥
स्वेष्टैर्भुञ्जीत कर्ताऽथ व्रतेऽवग्रहणं स्मृतम् ॥ ३७ ॥

वेदाभ्यासः श्रमरती पुनर्भुक्तीरिह त्यजेत ॥
तर्पणं त्वाब्दिकेऽन्येद्युर्दर्शादौ पूर्वमेव च ॥ ३८ ॥

पक्षान्तरं । विप्राग्रतोपहता इति लेखां विलिख्य शुन्धन्तां पितर इत्यादि पिण्डदानान्तं कृत्वाञ्जनाभ्यञ्जने वासोदशां पञ्चाशद्वर्षादूर्ध्वं स्वीयहृदयलोम वा दत्त्वा पूजयेत् ॥ ३३ ॥ परेतन पितर इति पिण्डान्प्रवाह्य पुत्रकामश्चे-दाधत्त पितर इति मध्यपिण्डं पत्न्या प्राशयेत् ॥ ३४ ॥ प्रथममुच्छिष्टपात्रं । द्वितीयमर्घ्यपात्रं । दातार इत्याशिषः ॥ ३५ ॥ ३६ ॥ व्रते एकादश्यादौ न भक्षणम् ॥ ३७ ॥ रतिर्मैथुनं कर्ता भोक्ता च वर्जयेत । सकृन्महालये आब्दिके च परेद्युस्तिलतर्पणं । दर्शादौ पूर्वम् ॥ ३८ ॥ त्रिदैवं पितृपिता-

त्रिदैवमाब्दं षड्दैवं दर्शाद्यखिलदैवतम् ॥
महालयगयातीर्थनित्यतर्पणकर्म च ॥ ३९ ॥
स्वशक्तः पितृसूक्तेन हुनेद्दद्यात्तृणं गवे ॥
यत्किंचिद्वा द्विजे दद्यात्कुर्याद्वा तिलतर्पणम् ॥ ४० ॥
श्मशाने चोर्ध्वबाहुः सन्कुर्याद्वोच्चैश्च रोदनम् ॥
दरिद्रोऽहं महापापी पितरोऽवन्तु मामिति ॥ ४१ ॥
चेत्प्रमादादिनाऽतीते श्राद्धाहे त्वेष्यदर्शके ॥
कार्यमाब्दमिनोऽलिस्थो यावत्कार्यो महालयः ॥४२॥

महप्रपितामहोद्देशेन क्रियमाणम् । दर्शादि तु षड्दैवतं पितृत्रयमातामहत्रयात्मकं । महालयाद्यखिलदैवतम् । उक्तं संग्रहे—'ताताम्बात्रितयं सपत्नजननी मातामहादित्रयं सस्त्रि स्त्रीतनयादि तातजननीस्वभ्रातरः सस्त्रियः ॥ ताताम्बात्मभगिन्यपत्यधवयुग्जायापिता सद्गुरुः शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे' इति ॥ ३९ ॥ सुतरामशक्तश्चेदुदीरतामिति पितृसूक्तेन यत्किंचिद्धनधान्यादि वा द्विजे ब्राह्मणाय दद्यादित्यर्थः ॥ ४० ॥ अवन्तु रक्षन्तु ॥ ४१ ॥ श्राद्धाहेऽतिक्रान्ते आगामिन्याममावास्यायां आब्दं प्रत्याब्दिकश्राद्धं । अपरपक्षीयमहालयेऽतीते यावद्वृश्चिकदर्शनं दर्शाष्टमीद्वादशीभरणीव्यतीपातसूर्यक्रान्त्यन्यतमदिवसे सकृन्महालयः कार्यः ॥ ४२ ॥ अस्मिन् श्रद्धापूर्वं श्राद्धे कृते धनधान्यादिवृद्धिः । विभक्तैर्देशान्तरगैश्च श्राद्धं पृथक्कार्यम् । मृतभर्तृकयाऽपुत्रया वार्षिकं कार्यं । महालयोऽपि भर्त्रादित्रयपितृत्रयोद्देशेन कार्यः । पत्न्या रजस्याब्दिकं सति संभवे तद्दिनेऽसंभवे पञ्चमदिने कार्यम् । सकृन्महालयस्तु कालान्तर एव । अन्यच्छ्राद्धं यथाकालमेव । अनेकेष्वविभक्तभ्रातृषु ज्येष्ठेन कनिष्ठेन वा कार्यं । आशौचे तु शुद्धाह एव । मण्डपप्रतिष्ठायां तु न पित्र्यं कर्म । अपुत्रस्य दौहित्रोऽ-

कुलक्षयोऽकृते श्राद्धे पितृशापाद्भविष्यति ॥
पितृतृप्तिः कृते चास्मिन्धनधान्यकुलर्द्धयः ॥ ४३ ॥
यत्र यत्र गता येषां पितरस्तत्र तत्र ते ॥
तुष्यन्ति श्राद्धदानेन श्रीविष्णोः समनुग्रहात् ॥ ४४ ॥
सूक्ष्मात्मनैव तेऽश्नन्ति पितृलोकगतास्त्विह ॥
भूतप्रेतपिशाचाश्चेच्छ्राद्धाभावे बुभुक्षिताः ॥ ४५ ॥

धिकारी । तदभावे गोत्रजाः । जनकपालकयोरुभयोः संतत्यभावे दत्तकस्तद्धनमपहरेत् श्राद्धं च कुर्यात् । राजकार्यान्तरनियुक्तस्य बन्धस्थस्य व्यसनार्तस्य च विप्रेण श्राद्धं कारयेत् । पुत्रो वा कुर्यात् । यदुक्तम्–' वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति ॥ एभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ' इति ॥ श्राद्धशब्दार्थस्तु पित्रादीन्मृतानुद्दिश्य विहिते काले देशे च विधिना पक्कान्नादिदानं । तत्र त्रयं मुख्यम्—' होमश्च पिण्डदानं च तथा ब्राह्मणभोजनम् ॥ श्राद्धशब्दाभिधेयं स्यादेकस्मिन्नौपचारिकम्' इत्युक्तेः । अश्रद्धया पितरो न सन्तीति मत्वा श्राद्धमकुर्वाणस्य पितरो रक्तं पिबन्ति ॥ ४३ ॥ यत्र यत्र गताः पितरस्तत्पुत्रादिभिस्तदुद्देशेन श्राद्धे क्रियमाणे तत्तन्नामगोत्ररूपान्नानीश्वरस्तत्फलं प्रापयेत् । देवत्वेऽमृतरूपेण गन्धर्वत्वे भोग्यरूपेण पशुत्वे तृणरूपेण सर्पत्वे वायुरूपेण यक्षत्वे पानरूपेण दानवत्वे मांसत्वेन प्रेतत्वे रुधिरत्वेन मनुष्यत्वेऽन्नादिरूपेणोपतिष्ठते ॥ ४४ ॥ सूक्ष्मात्मना वायुरूपेण । यदुक्तम्—'तस्य ते पितरः श्रुत्वा श्राद्धकालमुपागतम ॥ अन्योन्यं मनसा ध्यात्वा संपतन्ति मनोजवाः ॥ ब्राह्मणैः सह तेऽश्नन्ति पितरो वायुरूपिणः ' इति ॥ अत एव रामेण श्राद्धे क्रियमाणे सीता दशरथादीन् विप्रेषु ददर्शेति श्रूयते । तथाहि–' प्रावृष्यन्ते यमः प्रेतान्पितॄंश्चाथ यमालयात् ॥ विसर्जयति भूर्लोकं कृत्वा शून्यं स्वकं पुरम् ॥

कुर्वन्त्यनर्थान्नित्यं तच्छ्राद्धं कुर्यादतन्द्रितः ॥
दत्ते मुक्तेष्वपि श्राद्धे विष्णुस्तुष्येत शास्त्रकृत् ॥ ४६ ॥
दाताऽऽदाता च भोक्ता च सर्वो विष्णुः सनातनः ॥
सर्वाधारः सर्वकर्ता सर्वभूतात्मकोऽव्ययः ॥ ४७ ॥
अनौपम्यस्वभावोऽजो भगवान्हव्यकव्यभुक् ॥
विश्वंभरः स हि स्रष्टा चाद्योऽनन्तो जनार्दनः ॥ ४८ ॥
निर्गुणोऽपि निराकारः सगुणो माययाऽभवत् ॥
तदाज्ञापालनात्पापशान्तिर्मुक्तिस्ततोऽचिरात् ॥ ४९ ॥
श्रीदत्तो भगवानाह तातैवं श्राद्धपद्धतिम् ॥
तेनोक्तमेतं तिथीनां निर्णयं चापि मे शृणु ॥ ५० ॥

ते पुत्राद्यैः प्रकाङ्क्षन्ति पायसं मधुसंयुतम् ॥ कन्यागते सवितरि पितरो यान्ति वै सुतान् ॥ अमावास्यादिने प्राप्ते गृहद्वारं समाश्रिताः ॥ श्राद्धाभावे स्वभवनाच्छापं दत्त्वा व्रजन्ति ते ॥ अतो मूलैः फलैर्वापि तथाप्युदकतर्पणैः ॥ पितृतृप्तिं प्रकुर्वीत नैव श्राद्धं विवर्जयेत् ' इति ॥ ४५ ॥ संन्यासिषु मुक्तेष्वपि श्राद्धं देयं तद्द्वाराऽन्येषां तृप्तिश्रवणात् । किंच श्राद्धे ब्रह्मादिस्तम्बपर्यन्तसफलभूततृप्तिः । सा च पिशाचादीनां विकिरादिभिः, वृक्षादिरूपाणां स्नानवस्त्रोदकादिना, केषांचिदुच्छिष्टपिण्डधर्मपिण्डादिदानेनेत्यतो ब्रह्मीभूतपितृकेणापि श्राद्धं कार्यम् । शास्त्रकृत 'शास्त्रयोनित्वात्' इति न्यायात् अधिकरणमालायां—' न कर्तृ ब्रह्मदेवस्य किं वा कर्तृ न कर्तृ तत् ॥ विरूपानित्यया वाचेत्येवं नित्यत्वकीर्तनात् ॥ १ ॥ कर्तृनिश्वसिताद्युक्तेर्नित्यत्वं पूर्वसाम्यतः ॥ सर्वावभासिवेदस्य कर्तृत्वात्सर्वविद्भवेत् ॥ २ ॥' ॥ ४६ ॥ ४७ ॥ ४८ ॥ शास्त्ररूपतदाज्ञापालनात् ॥ ४९ ॥ हे तात गालव ! मे मत्तः ॥ ५० ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्त्र्यां संहितायां वासुदेव्यां कर्मकाण्डे अष्टमाष्टके तृतीयोऽध्यायः ॥ ३ ॥

संहितायां त्रिकाण्डमण्डितायां वासुदेव्यां कर्मकाण्डे टीकायां अष्टमाष्टके तृतीयोऽध्यायः ॥ ३ ॥

और्ध्वदेहिक–श्राद्धलक्षणप्रयोगादिकथनं
नामाष्टमाष्टके तृतीयो० ॥ ८।३ ॥

---

## तिथ्यादिनिर्णयसप्तसंस्थाग्रहणोपाकर्मनिर्णयो नामाष्टमाष्टके चतुर्थोऽध्यायः ॥ ८।४ ॥

हरिः ॐ ॥ विहितं कर्म निर्णीय तिथीन्कार्यं हि धीमता ॥
अनिर्णीतासु तिथिषु न किंचित्फलदं कृतम् ॥ १ ॥

व्यर्केन्द्वंशा द्वादशाप्तास्तिथिर्यातेतशेषकम् ॥
भोग्यं हराच्च्युतं भुक्त्यन्तर्भक्तास्तत्कलाः क्रमात् ॥२॥

॥ श्रीगणेशाय नमः ॥

अथ षष्टितमेऽध्याये तिथ्यादीनां च निर्णयः ॥
कथ्यते सप्तसंस्थादि ग्रहोपाकर्मनिर्णयः ॥ १ ॥

तिथीनित्युपलक्षणं नक्षत्रादेरपि । अथ त्रिभिः श्लोकैस्तिथ्यादिसाधनमाह । अत्र सूर्यचन्द्रौ सूर्यार्यब्रह्मादिपक्षीयौ दृक्तुल्यौ साध्यौ । विगतो राश्यादिरर्को यस्मादसौ व्यर्कः स चासौ राश्यादिरिन्दुश्च तस्यांशाः कार्यास्ते द्वादशभिराप्ता भक्ता लब्धं याता गता तिथिः । शेषं हराद्द्वादशभ्यश्च्युतं तद्विद्यमानतिथेर्भोग्यं । तच्चन्द्रसूर्यभुक्त्यन्तरेण सावर्णितेन भाजितं क्रमेण यातैष्यघटिकादि ज्ञेयम् । ग्रन्थविस्तरभियोपपत्त्यादि न दर्श्यते । शुद्धप्रतिपदन्त्यार्धाद्बवात् । ल्यब्लोपे पञ्चमी । प्रतितिथि बवमारभ्य द्वे द्वे करणे इति क्रमेण सप्त पुनः पुनर्देयानि कृष्णचतुर्दश्युत्तरार्धाच्छुक्लप्रतिपदाद्यार्धपर्यन्तं शकुनिमारभ्य चत्वारि स्थिराणि ज्ञेयानि । एवं गणनया ' शुक्ले पूर्वार्धेऽष्टमीपञ्चदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्धे । कृष्णेन्त्यार्धे स्यात्तृतीयादशम्योः पूर्वे भागे सप्तमीशंभुतिथ्योः ' इति नियमेन भद्राप्रवृत्तिर्ज्ञेया ॥ १ ॥ २ ॥

यातैष्यघटय: प्रतिपदन्त्यार्धात्करणं बवात् ॥
कृष्णे भूतोत्तरार्धात्तु चत्वारि शकुनेः क्रमात् ॥ ३ ॥
ग्लोः केन्द्वोरष्टशत्याप्ता लिप्ता यातौ भयोगकौ ॥
ग्लोः केन्द्वोर्गतिहृत्षष्टीघ्नलिप्तास्तिथिवद्धटीः ॥ ४ ॥
पितरेकादशी पूर्णा तृतीयामा चतुर्दशी ॥
परविद्धाष्टमी षष्ठी ग्राह्याऽन्याः पूर्वसंयुताः ॥ ५ ॥

॥ ३ ॥ केवलचन्द्रान्नक्षत्रसाधनं सूर्यचन्द्रयोगाच्च योगसाधनं चाह— ग्लोश्चन्द्रस्य केन्द्वोः सूर्ययुक्तचन्द्रस्य च राश्यादेर्लिप्ताः कलाः अष्टशत्या ८०० प्ताः भक्ताः लब्धमितानि गतर्क्षाणि योगाश्च । शेषं नक्षत्रस्य योगस्य च भुक्तं तद्धरात् ८०० शुद्धं तयोर्भोग्यं तच्च षष्टिघ्नं सावर्णितं क्रमेण चन्द्रगत्या सूर्यगत्या च भक्तं नक्षत्रयोगयोर्गतैष्यघट्यादि ॥ ४ ॥ तिथिनिर्णयमाह । हे पितः, एकादश्याद्याः परविद्धा ग्राह्याः । व्रते एकादशी द्वादशीविद्धा ग्राह्या । पूर्णा पूर्णिमा सावित्रीव्रतं विना परविद्धा ग्राह्या । अष्टादशघटिकातो न्यूनचतुर्दशीत्वे 'भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम्' इति दूषकत्वोक्तेः कुलधर्मादौ पूर्वविद्धा न ग्राह्या । यतीनां क्षौरादौ त्रिमुहूर्ताधिकव्यापिनी ग्राह्या । त्रिमुहूर्तन्यूनत्वे चतुर्दशीयुताऽपि ग्राह्या । अमावास्याऽप्येवम् । सा चापराह्णपर्यन्तं सोमवारे मुहूर्तमात्रयोगेऽपि सोमवतीत्यनुष्ठेया । तृतीया रम्भातिरिक्तव्रते परविद्धा ग्राह्या । गौरीव्रते कलामात्रापि परा ग्राह्या । दिनक्षयवशात्कलामात्रापि परा न लभ्येत तदा द्वितीयाविद्धैव ग्राह्या । चतुर्दशी शुक्ला परा कृष्णा पूर्वा । शिवरात्रिव्रते निशीथव्यापिनी ग्राह्या । व्रतमात्रेऽष्टमी शुक्ले परा कृष्णे पूर्वा । बुधाष्टम्य-पराह्णे मुहूर्तमात्रयोगवत्यपि ग्राह्या । भैरवव्रते मध्याह्नव्यापिनी । दिनद्वये व्याप्तावव्याप्तौ वा पूर्वैव । स्कन्दातिरिक्तान्यव्रते षष्ठी परैव । उक्त ३ । ६ ॥

स्कन्दोऽहिविद्धोऽर्कः शंभुविद्धो नोपोषणे शुभः ॥
पर्वद्वयार्कविश्वे प्राग्विद्धा अपि तथैव च ॥ ६ ॥

तिथीशा अग्निकौ गौरी गणेशोऽहिर्गुहो रविः ॥
शंभुर्दुर्गा यमो विश्वे विष्णुः कामः शिवः शशी ॥ ७ ॥

क्वचित्कृष्णे शिवौ शस्तौ पूर्वविद्धौ शिवेपि च ॥
शुक्लेऽपराह्णात्पूर्वाह्णादन्यदा सत्तिथिर्व्रते ॥ ८ ॥

८ । ११ । १४ । १५ । ३० । सप्तम्योऽन्याः १ । २ । ४ । ५ । ७ । ९ । १० । १२ । १३ । पूर्वविद्धा ग्राह्याः । पक्षद्वयेऽप्युपवासे प्रतिपत्पूर्वैव । द्वितीया कृष्णे पूर्वा शुक्ले परा । चतुर्थी गणेशव्रतातिरिक्ते कार्ये पञ्चमीयुता ग्राह्या । गणेशव्रते मध्याह्नव्यापिनी परतो मध्याह्नव्याप्त्यभावाल्पत्वे पूर्वविद्धैव । ' चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ' इत्युक्तेः । संकष्टचतुर्थीव्रते चन्द्रोदयव्यापिनी ग्राह्या । उभयदिने तथाव्याप्तौ पूर्वैव । दिनद्वये चन्द्रोदयव्याप्त्यभावे परैव । नागातिरिक्तपञ्चमी पूर्वविद्धैव । सप्तमी षष्ठीयुतैव । यदा दिवा षष्ठीविद्धा न लभ्यते तदाऽगत्या परैव । नवमीदशम्यावप्येवम् । त्रयोदशी शुक्ले पूर्वा कृष्णे परा । शनिप्रदोषादौ सूर्यास्तोत्तरं त्रिमुहूर्तात्मकप्रदोषव्यापिनी ग्राह्या । उभयव्याप्त्यभावे परैव ॥ ५ ॥ स्कन्दः षष्ठी । अहिविद्धः पञ्चमीविद्धः नोपोषणे शुभः । स्कन्दातिरिक्तव्रते षष्ठी पूर्वेद्युः षण्मुहूर्तन्यूनपञ्चमीवेधे पूर्वान्यथा परा । अर्कः सप्तमी शंभुविद्धोऽष्टमीविद्धापि तथा । पर्वद्वयममा पूर्णमासी अर्को द्वादशी च पूर्वविद्धापि तथैव ॥ ६ ॥ तिथीशानाह—कः- प्रजापतिः अमायाः पितरः ॥ ७ ॥ क्वचिदुक्तं शिवौ अष्टमीचतुर्दश्यौ कृष्णे पूर्वविद्धौ प्रशस्तौ शिवे तृतीयानवम्यौ च । शुक्लेऽपराह्णादन्यदा पूर्वाह्णगेति यावत् । कृष्णे पूर्वाह्णादन्यदा व्रते प्रशस्ता ॥ ८ ॥

असंभवे व्रतादीनां यदा पौर्वाह्णिकी तिथिः ॥
द्विमुहूर्ताधिका ग्राह्या साकल्योक्त्योदयाद्रवेः ॥ ९ ॥

प्रदोषाधिव्यापिनीष्टा तिथिर्नक्तव्रते सदा ॥
उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः ॥ १० ॥

अर्धरात्रादधो भानोर्नक्षत्रविहिता तिथिः ॥
सैव ग्राह्या मुनिश्रेष्ठ नक्षत्रविहितव्रते ॥ ११ ॥

तिथिनक्षत्रसंयोगो विहितो व्रतकर्मणि ॥
प्रदोषव्यापिता श्रेष्ठा तयोर्न्यूना त्वनिष्टदा ॥ १२ ॥

अर्धरात्रे यदा व्याप्तनक्षत्रं तु दिनद्वये ॥
यत्पुण्यतिथिसंयुक्तं तदा तद्ग्राह्यमुच्यते ॥ १३ ॥

दिनद्वयेऽर्धरात्रे चेन्नक्षत्रं च तिथिर्यदि ॥
क्षये पूर्वा प्रशस्ता स्याद्वृद्धौ कार्या तथोत्तरा ॥ १४ ॥

अर्धरात्रद्वयव्याप्तिर्नास्ति नक्षत्रसंयुता ॥
ह्रासवृद्धिविहीना चेद् ग्राह्या पूर्वाथवा परा ॥ १५ ॥

व्रतानुष्ठाने तत्कालिकतिथ्यसंभवे . सूर्योदयमारभ्य द्विमुहूर्ताधिका चेत् 'यां तिथिं समनुप्राप्य उदयं याति भास्करः ॥ सा तिथिः सकला ग्राह्या दानाध्ययनकर्मसु' इति साकल्योक्त्या ग्राह्या ॥ ९ ॥ येन नक्षत्रेण ॥ १० ॥ व्रते नक्षत्रविहितेऽर्धरात्रात्प्राक् सूर्यास्तोर्ध्वम् ॥ ११ ॥ तयोर्नक्षत्रतिथ्योः ॥ १२ ॥ पुण्यतिथिर्व्रततिथिः ॥१३॥१४॥१५ ॥

ज्येष्ठासंमिश्रितं मूलं रोहिणी वह्निसंयुता ॥
मैत्रेण सहिता ज्येष्ठा संतानधनहानिदा ॥ १६ ॥

तत्र स्युस्तिथयः पुण्याः कर्मानुष्ठानतो दिवा ॥
रात्रिव्रतेषु सर्वेषु संधियोगो विशिष्यते ॥ १७ ॥

तिथिर्नक्षत्रयोगेन या पुण्या परिकीर्तिता ॥
तस्यां तु यद्व्रतं कार्यं सैव ग्राह्या विचक्षणैः ॥ १८ ॥

मध्याह्नव्यापिनी ग्राह्या श्रवणद्वादशीव्रते ॥
सूर्येन्दुग्रहणं यावत्तावद्ग्राह्या जपादिषु ॥ १९ ॥

मध्याह्नव्यापिनी ग्राह्या गणेशर्ष्यहिपूजने ॥
पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः ॥ २० ॥

वह्निः कृत्तिका । मैत्रेणानुराधया ॥ १६ ॥ १७ ॥ या जन्माष्टम्यादितिथिः रोहिण्यादिनक्षत्रयोगेन ॥ १८ ॥ श्रवणद्वादशीव्रते वामनजयन्त्यां मध्याह्नपर्यन्तं स्वल्पोपि द्वादश्याः श्रवणयोगः सा ग्राह्या । नात्रोत्तराषाढावेधनिषेधः । न चात्रैकादशीव्रतलोपः । नारदः—'उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुताम् ॥ एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयम्' इति । श्रवणयुता द्वादशी चेत् सा वैष्णवैः स्मार्तैश्चोपोष्या । त्यजेदेकादशीं तदेत्युक्तेपि त्यागपदेन फलाहारो बोध्यो न भोजनम् ॥ १९ ॥ गणेशपूजने दिनद्वये साकल्येन मध्याह्नव्याप्तावव्याप्तौ वा पूर्वैव ऋषिपूजने । सर्पपूजने तु त्रिमुहूर्ताधिकचतुर्थीवेधे द्विमुहूर्तापि परैव । पर्वणः पूर्णिमाया अमायाश्च ॥ २० ॥ पर्वखण्डत्वे पर्वापेक्षया पर्वप्रतिपदोर्ह्रास-

यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः ॥
पूर्वाह्णमध्याह्नसंधौ यागः संधिदिने शुभः ॥ २१ ॥

पूर्वेद्युरन्वाधानं चेदपराह्णे तु तद्दिने ॥
यागोऽन्येद्युः संगवोर्ध्वं यदि चावर्तनात्पुरा ॥ २२ ॥

पूर्णा संधिमती तत्र सद्यस्काले द्वयं स्मृतम् ॥
समापनीया प्रतिपदीष्टिर्नैत्र तु पर्वणि ॥ २३ ॥

सर्वैरेकादशी ग्राह्या दशमीपरिवर्जिता ॥
एकादशी कलामात्रा द्वादशी तु प्रतीयते ॥ २४ ॥

त्रयोदशी च रात्र्यन्ते तत्रैवं निश्चयो मतः ॥
पूर्वोपोष्या गृहस्थैस्तु यतिभिश्चोत्तरा तथा ॥ २५ ॥

उपोष्या द्वादशीविद्धाऽलाभे त्वेकादशी यदा ॥
कलामात्रा द्वादशी चेत्पारणार्हा परैव तु ॥ २६ ॥

वृद्धिघटिका गणयित्वा तदर्धं ह्रासे पर्वणि वियोज्य वृद्धौ संयोज्य संधिकालो ज्ञेयः ॥ २१ ॥ यागदिनात्पूर्वेद्युरन्वाधानं उपवासाख्यं कर्म 'दर्शपूर्णमासयोरुपवसति न ह वा अव्रतस्य देवा हविरश्नन्ति' इति श्रुतेः। अपराह्णे संधिश्चेत्तद्दिनेऽन्वाधानं पूर्वेद्युर्यागः। संगवोर्ध्वमावर्तनात्पूर्वं पूर्णिमा संधिमती चेत्तत्र सद्यस्कालेऽन्वाधानं यागश्च। पूर्वाह्णापराह्णसंधिभूतो मुहूर्त आवर्तनाख्यः कलात्मक इत्यन्ये ॥ २२ ॥ २३ ॥ सर्वैः स्मार्तैर्भागवतैश्च ॥ २४ ॥ २५ ॥ परेद्युरलाभे दशमीविद्धाप्युपोष्या ॥ २६ ॥ अत्र

शुक्ले वा यदि वा कृष्णे भवेदेकादशीद्वयम् ॥
पूर्वा गृहस्थस्य परा मुमुक्षुयतिनां स्मृता ॥ २७ ॥
द्वादश्यां विद्यते किंचिद्दशमीसंयुता यदि ॥
दिनक्षये द्वितीयेऽह्नि सर्वेषां परिकीर्तिता ॥ २८ ॥
विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत् ॥
अविद्धापि निषिद्धैव परतो द्वादशी यदि ॥ २९ ॥
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ॥
द्वादश द्वादशीं हन्ति त्रयोदश्यां तु पारणम् ॥ ३० ॥
एकादशी कलामात्रा विद्यते द्वादशी यदि ॥
द्वादशी च त्रयोदश्यां नास्ति वा विद्यतेऽथवा ॥ ३१ ॥
विद्धाप्येकादश्युपोष्या पूर्वैव गृहिणा तदा ॥
अवीराभिश्च यतिभिरुपोष्येहोत्तरा वरा ॥ ३२ ॥
संपूर्णैकादशी विद्धा द्वादश्यां नास्ति किंचन ॥
द्वादशी च त्रयोदश्यामस्ति तत्र द्विजोत्तम ॥ ३३ ॥
उपोष्या द्वादशीविद्धा क्वचित्पूर्वेति चोच्यते ॥
तिथिर्मध्याह्नगा ग्राह्या भवोत्सर्जनकर्मणि ॥ ३४ ॥

वैष्णवानां स्मार्तानां चाष्टादशभेदा ग्रथान्तरतो ज्ञेयाः । नात्र विस्तरभियोक्ताः ॥ २७ ॥ २८ ॥ २९ ॥ क्षयवशादेकादशी द्वादशीयुक्ता रात्रिशेषे त्रयोदशी पूर्वोपोषिता चेद्द्वादशैकादशीफलघ्नी । अतस्तां त्यक्त्वा परोपोष्या । त्रयोदश्यां पारणमिदं वैष्णवविषयम् ॥ ३० ॥ ३१ ॥ अवीरा निष्पतिसुता । यतिः संन्यासी वैष्णवो वा । तैः परोपोष्या ॥ ३२ ॥ ॥ ३३ ॥ तिथिः पञ्चमी पूर्णिमा च भं श्रवणर्क्षं मध्याह्नव्यापि ग्राह्यं शुक्ल एव न कृष्णे ॥ ३४ ॥ क्षयाहे आब्दिकश्राद्धे रविक्रान्तौ द्विस्वभावे मिथुन-

क्षयाहदर्शश्राद्धादौ तिथिर्ग्राह्यापराह्णगा ॥
द्विस्वभावे मृगे चोर्ध्वं स्थिरे कर्कटके परा ॥ ३५ ॥

तुलाजोभयतस्त्रिंशन्नाड्यः पुण्या बुधैः स्मृताः ॥
नोपवासः क्रान्तिपातग्रहार्के सार्भगेहिनः ॥ ३६ ॥

अर्कद्विपर्वरात्रौ च चतुर्दश्यष्टमी दिवा ॥
एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥ ३७ ॥

ग्रहयामाच्चतुर्यामं पूर्वं वेध इनग्रहे ॥
न क्वचिद्भोजनं पानं कृतं चेन्मांसमद्यवत् ॥ ३८ ॥

तथा चन्द्रग्रहे यामत्रयं वेधोऽत्र चापदि ॥
अतिवृद्धार्भातुराणां वेधः स्यात्सार्धयामकः ॥ ३९ ॥

कन्याधनुर्मीनेषु त्रिंशन्नाड्यः पुण्यकालः। ज्योतिर्निबन्धे मकरे चत्वारिंशन्नाड्य उक्ताः। वृषसिंहवृश्चिककुंभेषु पूर्वं त्रिंशन्नाड्यः। मेषतुलयोः पर्वोत्तरं पञ्चदश पञ्चदश। सार्भगेहिनः पुत्रवद्गृहिणः ग्रहे पुरश्चरणाङ्गोपवासः पुत्रवद्गृहिणापि कार्यः। निषेधस्तु केवलोपोषणस्य ॥३५॥ ३६ ॥ अर्को रविः द्वे पर्वणी पर्णामावास्ये आसां रात्रौ चतुर्दश्यष्टम्योर्दिवा। इदं भोजननिषेधमात्रपालनं नतु किंचिद्व्रतं। 'निषेधस्तु निवृत्त्यात्मा कालमात्रं प्रतीक्षते' अतो भोजनकालव्यापिनीं तिथिं त्यक्त्वा पूर्वमुपरिष्टाद्वा भोक्तव्यम्। शिवरात्रिव्रतिभिस्तु चतुर्दश्यामपि पारणा कार्या विधिप्राप्तेर्निषेधाप्रवेशात्। एवमन्यत्राप्यूह्यम् ॥ ३७ ॥ ग्रहस्पर्शयामात्पूर्वं चतुःप्रहरं सूर्यग्रहे ॥३८॥ अर्भा बालाः। आतुरा रोगार्ताः ॥३९॥ अस्मिन्ग्रहे स्पर्शे स्नानं

मेघादिनाप्यदृष्टेऽस्मिञ्शास्त्राज्ज्ञात्वा चरेत्क्रियाम् ॥
स्नानं स्पर्शेन्ते यजनं दानं मोक्षे तथाप्लवः ॥ ४० ॥

राहुग्रस्तौ च सूर्येन्दू तथैवास्तंगतौ यदि ॥ ॥
दृष्ट्वा स्नात्वाथ भुञ्जीत परेद्युः शुद्धमण्डलम् ॥ ४१ ॥

अन्वाधानेष्टिमध्ये चेच्चन्द्रसूर्यग्रहस्तदा ॥
प्रायश्चित्तं प्राक् सह वा कृत्वा यागं चरेद्बुधः ॥ ४२ ॥

उदुत्यमासत्येनेति द्वाभ्यां सूर्यग्रहे हुनेत् ॥
नवोनवश्चाप्यायस्वेत्याभ्यां चन्द्रग्रहेपि च ॥ ४३ ॥

श्रावण्यां श्रवणाकर्म प्रदोषेऽहिबलिस्ततः ॥
आश्वयुज्यामाश्वयुजीकर्म मध्याह्न एव तत् ॥ ४४ ॥

वर्षाशरत्पर्वणि च पृथक् तन्त्रेण वा स्मृतम् ॥
श्यामाकव्रीह्याग्रयणं मार्गे प्रत्यवरोहणम् ॥ ४५ ॥

अस्तेऽथ कृष्णे हेमन्तशिशिराष्टमिकासु च ॥
अष्टका अन्वष्टकाश्च पूर्वेद्युश्चेति गृह्यतः ॥ ४६ ॥

मध्ये होमः मुच्यमाने दानं मुक्तौ स्नानं च ॥ ४० ॥ ४१ ॥ ४२ ॥ इष्टेः प्राक् सह वा ॥ ४३ ॥ अहिबलिः सर्पेभ्यो बलिः ॥ ४४ ॥ वर्षापर्वणि श्यामाकाग्रयणं शरत्पर्वणि व्रीह्याग्रयणं चकाराद्वसन्ते यवाग्रयणम् । श्रौते स्मार्ते च चान्द्रर्तुग्रहणम् । मार्गे पूर्णायामस्तमये प्रत्यवरोहणम् ॥४५॥४६॥

गृह्योक्ते भे तिथौ शुक्ले नभसि श्रुत्युपाकृतिः ॥
भाद्रे वौषध्यनुत्पत्तौ ग्रहसंक्रान्त्यदूषिते ॥ ४७ ॥
एवं तिथीर्विनिश्चित्य सिद्धान्तार्केन्दुयोगतः ॥
यः करोति व्रतादीनि तस्य स्यादक्षयं फलम् ॥ ४८ ॥
नित्योपवासकार्यादौ तिथिस्तात्कालिकी मता ॥
व्रतादौ निर्णयाद्ग्राह्या ततः श्रेयः परं स्मृतम् ॥ ४९ ॥
वेदप्रणिहितो धर्मो धर्मात्तुष्यति तत्पतिः ॥
तस्माद्धर्मपरा ये ते विष्णुसायुज्यभागिनः ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां श्रीवासुदेव्यां कर्मकाण्डे अष्टमाष्टके चतुर्थोऽध्यायः ॥ ४ ॥

स्वगृह्योक्ततिथ्यादौ ग्रहसंक्रान्त्यदूषिते श्रावणे शुक्ले ओषधिप्रादुर्भावे वेदोपाकरणं । तदसंभवे भाद्रपदे च । नात्र भद्रागुर्वाद्यस्तदोषः । स च नूतन एव ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां कर्मकाण्डे अष्टमाष्टके टीकायां चतुर्थोऽध्यायः ॥ ४ ॥

तिथ्यादिनिर्णयसप्तसंस्थाग्रहणोपाकर्मनिर्णयो नामाष्टमाष्टके चतु० ॥ ८।४ ॥

## पापहेतुतन्निवृत्तिप्रायश्चित्तकृच्छ्रादिलक्षणकथनं नामाष्टमाष्टके पञ्चमोऽध्यायः ॥ ८।५॥

हरिः ॐ ॥ हयेष्ट्याद्या अपि कृताः पापिनो नोर्ध्वमार्गदाः ॥
प्रायश्चित्तं शृणु ततो दत्तोक्तं स्वर्गतिप्रदम् ॥ १ ॥
योऽहंभावं समापन्नो बुद्धिर्यस्य च लिप्यते ॥
निषिद्धाचरणात्सोऽत्र पतेच्छुद्धो न चेदघात् ॥ २ ॥
रसो येन जितो नैव हृषीकं यद्वशे न च ॥
स कर्मणाप्यनुपदं प्रत्यवायी न संशयः ॥ ३ ॥
अहंकारमतस्त्यक्त्वा भजेदीशं स्वकर्मभिः ॥
असक्तः सोऽमृतं याति प्रायश्चित्त्यस्तकल्मषः ॥ ४ ॥
प्रमादलुप्तकर्मा तु प्रायश्चित्त्या शुचिर्विना ॥
अनुतप्तं प्रयत्नाद्धि दुःसङ्गापहृतक्रियः ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥

पापहेतुस्तन्निवृत्तिर्महापापविशोधनम् ॥
कृच्छ्रलक्ष्म च संप्रोक्तमेकषष्टितमेऽत्र तु ॥ १ ॥

हयेष्टिरश्वमेधः ॥ १ ॥ अहंभावमहंकारम् ॥ २ ॥ रसो विषयाभिलाषः । हृषीकमिन्द्रियम् ॥ ३ ॥ प्रायश्चित्त्याऽस्तं त्यक्तं कल्मषं पापं येन॥ ४ ॥ दुःसङ्गापहृतक्रियोऽप्यनुतप्येच्चेच्छुचिर्भविष्यति नान्यथा ॥ ५ ॥ यत्प्रष्टव्यं

कामक्रुल्लोभहीनैस्तु धर्मशास्त्रविशारदैः ॥
विप्रैः स्वधर्मः प्रष्टव्यः सद्धर्मफललिप्सुभिः ॥ ६ ॥

ब्रह्महा मद्यपः स्वर्णस्तेयी च गुरुतल्पगः ॥
महापातकिनस्त्वेते तत्संसर्गी च तत्समः ॥ ७ ॥

सकृत्तदन्नभुक्त्याब्दमेकत्र शयनादिना ॥
संसर्ग एषां पातित्यं ददातीति सुनिश्चितम् ॥ ८ ॥

अज्ञानाद्ब्राह्मणं हत्वा चीरवासा जटी वनी ॥
वन्याहारो भवेन्नित्यमेकाहारो मिताशनः ॥ ९ ॥

तदपि कामक्रोधलोभहीनैर्धर्मशास्त्रज्ञैः सह । तथाचादेशश्रुतिः— 'अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः' इति । परिषत्प्रकरणे 'त्रयोऽप्यध्यात्मवेत्तार एकोऽप्यध्यात्मवित्तमः' इत्युक्तेर्ज्ञान्यनुग्रहेण पावनत्वं स्मृतम् ॥ ६ ॥ ब्रह्माणं हतवानिति क्विप् । गुरुः पिताऽऽचार्यश्च तत्तल्पं दाराः 'तल्पं शय्याट्टदारेषु' इत्यभिधानात् ॥ ७ ॥ सकृदेकवारं बुद्धिपूर्वकं तदुच्छिष्टान्नभोजनेन वर्षपर्यन्तमेकत्र शयनादिना । एषां चतुर्णां मध्य एकतमस्य पापिनः संसर्गः पातित्यं ददाति इति ऋषिभिर्निश्चितं ॥ ८ ॥ ब्रह्महणो निष्कृतिमाह—अज्ञानादिति । जटी केशश्मश्रुलोमनखधारी । वनस्थो वनोद्भवफलाद्याहारः । स च दिन एवैकवारं परिमितः प्राणधारणक्षमो यस्य ॥ ९ ॥ आदिशब्देन याजन-

सम्यक्संध्यामुपासीत त्रिकालस्नानतत्परः ॥
अध्यापनादिकं सर्वं त्यक्त्वा भक्त्या हरिं भजेत् ॥ १० ॥

यतेन्द्रियो ब्रह्मचारी गन्धमाल्यादिवर्जितः ॥
तीर्थसेवी भवेद्वापि पुण्यारण्याश्रमाश्रयः ॥ ११ ॥

यदि वन्यैर्न जीवेत ग्रामे भिक्षां चरेन्मिताम् ॥
शरावपात्रधृक् चैककाले भोजनमाचरेत् ॥ १२ ॥

एवं कृत्वा द्वादशाब्दं नित्यं हरिपरायणः ॥
ब्रह्महा शुद्धिमाप्नोति कर्मार्हश्च ततो भवेत् ॥ १३ ॥

गोनिमित्तं द्विजार्थं वा व्रतमध्ये मृतोऽगदैः ॥
हिंस्रैर्हतो वा शुद्धः स्यात्स्वेच्छापूर्वं मृतो न च ॥ १४ ॥

शुद्धो वायुतगोदानैः कोटिगायत्रिकाजपैः ॥
एषामन्यतमं कृत्वा ब्रह्महा शुद्धिमाप्नुयात् ॥ १५ ॥

दीक्षितं क्षत्रियं हत्वा ब्रह्महत्याव्रतं चरेत् ॥
दीक्षितं ब्राह्मणं हत्वा द्विगुणं व्रतमाचरेत् ॥ १६ ॥

प्रतिग्रहौ त्याज्यौ ॥ १० ॥ ११ ॥ मितां प्राणधारणक्षमाम् ॥ १२ ॥ कर्मार्हः कर्मयोग्यः ॥ १३ ॥ स्वेच्छापूर्वं मृतस्य न शुद्धिः । 'असुर्या नाम' इति श्रुतेरात्महनोऽन्धतमसप्रवेशश्रवणात् ॥ १४ ॥ १५ ॥ ब्रह्महत्याव्रतं द्वादशाब्दम् ॥ १६ ॥ अद्रेः पाताद्भृगुपातात् । आदिशब्देन माता-

अशक्तोऽग्निं विशेद्वाद्रेः पातान्मृत्युमवाप्नुयात् ॥
आचार्यादिवधे चैव व्रतं प्रोक्तं चतुर्गुणम् ॥ १७ ॥

द्विजमात्रो हतो येन त्रिंशत्कृच्छ्रैः स शुध्यति ॥
एष विप्रस्य गदितः प्रायश्चित्तविधिः पितः ॥ १८ ॥

प्रोक्तं द्वित्रिगुणं क्षत्रविशोः शूद्रस्य चाधिकम् ॥
सप्रायश्चित्तदेहान्तशिक्षा शूद्रस्य शुद्धिदा ॥ १९ ॥

राज्ञैव शिक्षा कर्तव्या शूद्रस्येति विनिश्चितम् ॥
ब्रह्मपुत्रवधे त्वर्धं ब्रह्महव्रतमेव च ॥ २० ॥

कन्यकागर्भहन्तॄणां व्रतं पादतदर्धकम् ॥
यज्वपन्त्या ब्राह्मणवद् ब्राह्मण्या अष्टवत्सरम् ॥ २१ ॥

हत्वा क्षत्रियविप्रं तु षडब्दं व्रतमाचरेत् ॥
संवत्सरत्रयं वैश्यं शूद्रं हत्वा तु वत्सरम् ॥ २२ ॥

पितरौ ग्राह्यौ ॥ १७ ॥ द्विजमात्रः कर्मभ्रष्टोऽनधीतवेदो विप्रवंश्यः ॥ १८ ॥ ब्राह्मणवधे क्षत्रस्य द्विगुणं । वैश्यस्य त्रिगुणं । शूद्रस्य प्रायश्चित्तपूर्वकं देहत्याग एव ॥ १९ ॥ असंस्कृतविप्रपुत्रवधेऽर्धं षडब्दम् ॥ २० ॥ विप्रकन्याहन्तुस्त्र्यब्दं गर्भहन्तुः सार्धाब्दं यज्वपत्नीवधे द्वादशाब्दं केवलब्राह्मणीवधेऽष्टाब्दम् ॥ २१ ॥ २२ ॥ अब्दसिद्धयै प्राजापत्यादि

हत्वा च दीक्षितं शूद्रमष्टवर्षव्रतं चरेत् ॥
त्र्यहं दिवा त्र्यहं सायं त्र्यहमद्यादयाचितम् ॥ २३ ॥
नाद्यात्त्र्यहं कायकृच्छ्रोऽयुतगायत्रिकाजपात् ॥
सहस्रहवनाद्वापि द्वादशद्विजभोजनात् ॥ २४ ॥
गोदानाच्छक्तितोऽर्धाद्वा प्राजापत्यः प्रसिध्यति ॥
त्रिंशताब्दव्रतं कृच्छ्रैः शक्त्या कार्यो शुचिर्धिया ॥२५॥
प्रायश्चित्तविधानज्ञैस्तारतम्याच्च कोविदैः ॥
बालवृद्धातुरस्त्रीणां प्रायश्चित्तं प्रकल्पयेत् ॥ २६ ॥
गौडी पैष्टी च माध्वी च न पेयास्त्रिविधाः सुराः ॥
त्रिभिर्वर्णैश्च तत्स्त्रीभिः शूद्रैश्चापि हितेप्सुभिः ॥ २७ ॥

तत्प्रत्याम्नायानाह–एकाहे दिवा परेह्नि सायं तत एकाहमयाचितं तत एकाहमुपवासः एवं त्रिरावृत्त्या कृच्छ्रो द्वादशदिनसाध्यः । तदशक्तावाज्येन गायत्रीसहस्रहोमः दशसहस्रगायत्रीजपो गोदानं शक्त्या तन्मूल्यं वा । 'धेनोरभावे निष्कं स्यात्तदर्धं पादमेव वा ॥ कार्षापणैकमूल्यादि दरिद्राणां प्रकीर्तिता' इति स्मृतेः ॥ २३ ॥ २४ ॥२५॥२६॥ सुरापानप्रायश्चित्तं वक्तुं तावत्सुराभेदानाह–गौडी गुडजा । पैष्टी पिष्टजा । माध्वी मधुपुष्पजेति त्रिविधा त्रिभिर्वर्णैस्तत्स्त्रीभिश्च न पेया शूद्रैरपि । नन्वत्रैवर्णिकस्य शूद्रस्य को दोष इति चेद्दोषाभावेपि गुणोपपत्तेर्न पेया । ननु तन्त्रोक्तप्रकारेण देवताप्रसादरूपपाने को दोष इति चेत् तस्यावैदिकत्वात्ततो मोक्षस्याप्यसंभवान्मोक्षरूपहितेच्छुभिः सर्वैरपि कदापि कथमपि न पेया । तत्पाने मरणान्तप्रायश्चित्तोक्तेः स्पर्शे तदङ्गच्छेदोक्तेश्चाल्पप्रायश्चित्तेन दोषानपगमेन पातित्यापातात् । इत्थमेव सर्वे प्राचीनाश्च निर्बन्धेन लिखन्ति । नवीनतरा भास्कररायप्रभृतयोऽपि प्राचीनग्रन्थाननुसृत्यैव परिष्कुर्वन्ति सभायां चैतन्मतं श्लाघन्ते

पयो गोमूत्रमाज्यं वा प्रतप्तं मद्यपः पिबेत् ॥
तप्तेन ताम्रपात्रेण लोहपात्रेण वा तथा ॥ २८ ॥

नारायणपरो भूत्वा पिबेद्यावन्मृतिं व्रजेत् ॥
मद्यपः शुद्धिमाप्नोति नान्यथेति विनिश्चितम् ॥ २९ ॥

चरेद्विप्रो ब्रह्महत्याव्रतमज्ञानतः पिबन् ॥
चान्द्रद्वयं ससंस्कारं रोगशान्त्यै निषेविणाम् ॥ ३० ॥

सुरासंस्पृष्टमन्नादि सुराभाण्डोदकादि च ॥
सुरापानसमं ज्ञेयं कर्पूरस्य च भक्षणम् ॥ ३१ ॥

एकादशप्रकारेषु मद्येष्वेकतमं पिबन् ॥
उक्तशुद्धिमकुर्वाणः पतितस्तं न भाषयेत् ॥ ३२ ॥

परोक्षं वाऽपरोक्षं वा बलात्कारेण वापि च ॥
परस्वानामुपादानं स्तेयमित्युच्यते बुधैः ॥ ३३ ॥

च। आचरणं त्वन्यथा कुर्वन्ति तत्तु स्वयं दुर्दैववशेन ब्राह्मण्यभ्रष्टोऽभूवं अन्ये त्वेवं मा भूवन्निति भूतदययान्यनिवारणायैव तत्प्रतिपादनम्। एवमेव 'मद्यं दत्त्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते' इति स्मरणात् मांसमद्ययुत-राजसपूजायामपि द्विजस्य नाधिकार इति दिक् ॥ २७ ॥ मद्यपिप्रायश्चित्तमाह—पय इति ॥ २८ ॥ २९ ॥ औषधान्तरेण रोगशान्त्यभावे रोग-निवृत्त्यर्थमेव मद्यपाने गर्भाधानादिसंस्कारपूर्वकं चान्द्रायणद्वयम् ॥ ३० ॥ केवलकर्पूरभक्षणम् ॥ ३१ ॥ निषिद्धमद्येषु तालादिजेषु ॥ ३२ ॥ स्वर्णस्तेयिप्रायश्चित्तं वक्तुं स्तेयरूपं तावदाह—परोक्षमिति ॥ ३३ ॥

गवाक्षगतसूर्यांशुदृश्यं तत्त्रसरेणुकम् ॥
ऋक्षस्तदष्टकं प्रोक्तं तत्त्रयं राजसर्षपः ॥ ३४ ॥

ते पञ्च सर्षपः प्रोक्तस्तत्षट्कं यव उच्यते ॥
यवत्रयं कृष्णलः स्यान्माषस्तत्पञ्चकं स्मृतः ॥ ३५ ॥

ते षोडशाक्षः कर्षश्च चत्वारस्ते पलं तथा ॥
यवमात्रे हृतेऽज्ञानाद्ब्रह्मस्वेऽब्दव्रतं स्मृतम् ॥ ३६ ॥

माषाधिकं हृतं चेत्तु ज्ञानतो ब्रह्महव्रतम् ॥
गुरूणां यज्ञकर्तॄणां ब्रह्मिष्ठानां मनस्विनाम् ॥ ३७ ॥

श्रोत्रियाणां द्विजातीनां हृतं हेम कथंचन ॥
प्रायश्चित्तं तु संकल्प्य नारायणमनुस्मरन् ॥ ३८ ॥

करीषाच्छादितो दग्धः स्तेयपापाद्विमुच्यते ॥
ब्रह्मस्वं क्षत्रियो हृत्वा सोऽश्वमेधेन शुध्यति ॥ ३९ ॥

आत्मतुल्यं सुवर्णं विड् दद्याद्वा गोव्रतं चरेत् ॥
आदौ हृत्वा ततः कोऽपि पश्चात्तापमुपैति चेत् ॥ ४० ॥

प्रायश्चित्ततारतम्यार्थं मानमाह—त्रसरेण्वष्टकमृक्षः ऋक्षत्रयं राजसर्षपः ॥ ३४ ॥ यवत्रयं कृष्णलः ॥ ३५ ॥ गुञ्जा षोडशमाषा अक्षः कर्षश्चत्वारकर्षाः पलं ॥ ३६ ॥ ब्रह्महव्रतं द्वादशाब्दं गुर्वादिश्रोत्रियान्तानां स्वर्णस्तेये देहान्त एव प्रायश्चित्तम् ॥ ३७ ॥ ३८ ॥ करीषेण शुष्कगोमयेन ॥ ३९ ॥ आत्मतुल्यं स्वशरीरभारतुल्यम् । विड् वैश्यः ॥ ४० ॥

एकं सांतपनं कृत्वा द्वादशाहेन शुध्यति ॥
वज्ररत्नमनुष्यस्त्रीधेनुभूम्यादिषु स्मृतम् ॥ ४१ ॥

स्वर्णस्तेयोदितं प्रायश्चित्तमेव विशोधनम् ॥
प्राणायामद्वयं हेम्नि त्रसरेणुसमे हृते ॥ ४२ ॥

त्र्यसुयामा ऋक्षमात्रे चत्वारः सर्षपोपमे ॥
गायत्र्यष्टसहस्रेण शुद्धिर्गौसर्षपोपमे ॥ ४३ ॥

प्रातरारभ्य चासायं जपाच्छुद्धिर्यवोपमे ॥
माषमात्रे सांतपनमत ऊर्ध्वं पुरोदितम् ॥ ४४ ॥

गोमूत्रपक्वयवभुक् वाब्देनैकेन शुध्यति ॥
सुवर्णं न्यूनमानेन रजतस्तेयकर्मणि ॥ ४५ ॥

दशनिष्कान्तपर्यन्तमूर्ध्वं निष्कचतुष्टयम् ॥
हृतं चेद्रजतं कुर्याद्द्विजश्चान्द्रायणं परम् ॥ ४६ ॥

द्विगुणं शतनिष्कान्ते सहस्रान्ते चतुर्गुणम् ॥
अत ऊर्ध्वं ब्रह्महत्याव्रतं न्यूनं तु ताम्रके ॥ ४७ ॥

सांतपनं वक्ष्यमाणम् । द्वादशाहेन प्राजापत्येन । वज्रो हीरकः । रत्नं माणिक्यादि ॥ ४१ ॥ रत्नादिभूम्यन्तेषु स्वर्णस्तेयवत्प्रायश्चित्तम् ॥ ४२ ॥ त्र्यसुयामाः प्राणायामत्रयम् ॥ ४३ ॥ पुरोदितं करीषेण दहनम् ॥ ४४ ॥ अनुतप्तस्य विकल्पमाह गोमूत्रेति ॥ ४५ ॥ परं यवमध्यम् ॥ ४६ ॥ अत ऊर्ध्वं सहस्रनिष्काधिकरौप्यस्तेये ताम्रस्तेये रूप्यतो न्यूनम् ॥ ४७ ॥

कांस्यपित्तलमुख्येषु चायस्कान्तादिषूदिता ॥
निष्कमात्रेषु कृच्छ्रेण शुद्धिरूर्ध्वं तथाधिका ॥ ४८ ॥
रौप्यवत्स्वल्परत्नेषु धान्यवस्त्रतृणादिषु ॥
फलमूलौषधाद्येषु शुद्धिः कृच्छ्रेण गद्यते ॥ ४९ ॥
रसेऽन्ने पुस्तके चापि शुद्धिर्योज्या विशेषतः ॥
अकृत्वा निष्कृतिं याति ना सर्वत्रात्र दुर्गतिम् ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां
त्रिकाण्डमण्डितायां श्रीवासुदेव्यां कर्मकाण्डे
अष्टमाष्टके पञ्चमोऽध्यायः ॥ ५ ॥

अयस्कान्तो लोहचुम्बकः ॥ ४८ ॥ ४९ ॥ रसे गुडमध्वाज्यलवणादौ । ना पुरुषः ॥ ५० ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां त्रिकाण्डमण्डितायां वासुदेव्यां कर्मकाण्डे टीकायां अष्टमाष्टके पञ्चमोऽध्यायः ॥ ५ ॥

पापहेतुतन्निवृत्तिप्रायश्चित्तकृच्छ्रादिलक्षणकथनं
नामाष्टमाष्टके पञ्च० ॥ ८।५ ॥

---

## गुरुतल्पोपपातकशुध्दिकथनं नामाष्टमाष्टके षष्ठोऽध्यायः ॥ ८।६ ॥

हरिः ॐ ॥ उभावपि कृताघेन लिप्येते दंपती ततः ॥
कार्योऽप्यन्यतराघस्य ताभ्यां संशुद्धिरुत्तमा ॥ १ ॥
अज्ञानाज्जननीं गत्वा सपत्नीं वोज्झितेन्द्रियः ॥
स्वयमेव स्वमुष्कं स छित्त्वा पापमुदाहरन् ॥ २ ॥
पाण्योर्गृहीत्वा संतप्तो यातुधानदिशं व्रजेत् ॥
गच्छन्तं तं महापापं नैव कोऽपि निवारयेत् ॥ ३ ॥

॥ श्रीगणेशाय नमः ॥

स द्विषष्टितमेऽध्याये गुरुतल्पगनिष्कृतिम् ॥
प्राहोपपातकादीनां शुद्धिमूर्ध्वगतिप्रदाम् ॥ १ ॥

उभौ दंपती एकतरेण कृतपापेन लिप्येते अतो द्वयोः प्रायश्चित्तं जातिभ्रंशार्हपापचारिणीमपि प्रायश्चित्त्या विशोध्य तां दासीवत्पालयेत् । सा तथा नाचरति चेत्तां त्यक्त्वा घटस्फोटविधिं कुर्यात् ॥ १ ॥ स्वस्त्री-भ्रमाज्जननीं सपत्नीं वा गत्वा तद्योनौ उज्झितं सिक्तं इन्द्रियं 'शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च' इति कोशादिन्द्रियं वीर्यं येन सः । रेतःसेकात्पूर्वंनिवृत्तौ न देहान्तप्रायश्चित्तमिति वक्तुमुज्झितेन्द्रिय इत्युक्तम् ॥ २ ॥ यातुधानः निर्ऋतिः ॥ ३ ॥ तदशक्तौ प्रकारान्तरमाह–भृगोः

आदेहपातं गच्छन्स मृतः पापाद्विशुध्यति ॥
तदशक्तावश्ममूर्ध्नि देहत्यागो भृगोर्भृशम् ॥ ४ ॥

स्ववर्णोत्तमवर्णस्त्रीगमने ब्रह्महव्रतम् ॥
मत्याऽभ्यासेन यो गच्छेत्स्ववर्णामुत्तमामपि ॥ ५ ॥

करीषवह्निदग्धाङ्गः शुद्धिं याति न चान्यथा ॥
रेतःसेकात्पूर्वमेव निवृत्तौ ब्रह्महव्रतम् ॥ ६ ॥

ब्रह्महत्याव्रतं क्षत्रे वैश्ये त्वत्र षडब्दकम् ॥
शूद्रे मातृगमे त्र्यब्दं देहान्तो ब्राह्मणीगमे ॥ ७ ॥

प्रजावतीं स्नुषां पुत्रीं भगिनीं च सखिस्त्रियम् ॥
शिष्यपत्नीं च संगत्य षडब्दं व्रतमाचरेत् ॥ ८ ॥

मातुः पितुः स्वसारं चाचार्यमातुलयोषितम् ॥
गत्वाऽधिकं चरेदन्यस्त्रियं गत्वाब्दमाचरेत् ॥ ९ ॥

सकृद्गत्वाऽब्दमभ्यासे द्विगुणं च चतुर्गुणम् ॥
अत्यन्ताभ्यास इत्येवं सुधीः सर्वत्र योजयेत् ॥ १० ॥

पर्वतस्योच्चतरादधः पाषाणोपरि । अनेन मरणं सूचितम् । तेन नात्महत्यादोषः चोदनया प्रायश्चित्तविधानात् ॥ ४ ॥ मत्या बुद्धिपूर्वकं दोषं जानन्नप्यभ्यासेन रागेणासकृत् । उत्तमां स्ववर्णश्रेष्ठाम् ॥ ५ ॥ ६ ॥ क्षत्रे वैश्ये च मातृगमे शूद्रस्य ब्राह्मणीगमे च देहान्तप्रायश्चित्तम् ॥ ७ ॥ प्रजावतीं भ्रातृजायाम् ॥ ८ ॥ अधिकं षडब्दाधिकम् । अन्यस्त्रियं परस्त्रियम् ॥ ९ ॥ १० ॥ शोधितस्य कृतप्रायश्चित्तस्याप्यसंग्रहः तेन व्यवहारो

प्रजामुत्पाद्य शूद्रायां ब्राह्मण्याद्धीयते द्विजः ॥
चाण्डालीगस्य विप्रस्य शोधितस्याप्यसंग्रहः ॥ ११ ॥

तपस्विनीं च विधवां तथा शीलवतीमपि ॥
गत्वा चरेद्द्वादशाब्दं विशेषाच्च रजस्वलाम् ॥ १२ ॥

ऋतुं विनापि गमने स्वपत्न्यां वर्णितालयः ॥
निषिद्धाहे हठाद्वापि पुनर्मामित्यृचौ जपेत् ॥ १३ ॥

व्रतं द्वित्रिगुणं वर्णिवनिनोः सर्वथा यतेः ॥
मातृगामिव्रतं प्रोक्तं कृच्छ्रास्तु स्मरणादिषु ॥ १४ ॥

न कार्यः ॥ ११ ॥ १२ ॥ ऋतुं विना षोडशादिनोत्तरम् । वर्णितालयो ब्रह्मचर्यहानिः । निषिद्धाहे चतुर्दश्यादिदिने । हठात्तदननुमत्या बलात्कारेण ॥ १३ ॥ वर्णिनो ब्रह्मचारिणो व्रतं सर्वत्र द्विगुणं 'गार्दभीं त्वचं वसित्वा शरावधृक् व्रतं चरेत्' इति कौर्मे विशेषो ज्ञेयः । न्यायमालायाम् 'नचाधिकारिकमपि पतनानुमानात्तदयोगात्' । 'अपि पूर्वमपि त्वेके भावमशनवत्तदुक्तम्' ॥ 'भ्रष्टोर्ध्वरेतसो नास्ति प्रायश्चित्तमथास्ति वा ॥ अदर्शनोक्तेर्नास्त्येव व्रतिनो गर्दभः पशुः ॥ उपपातकमेवैतद्व्रतिनो मधुमांसवत् ॥ प्रायश्चित्ताच्च संस्काराच्छुद्धिर्यत्नपरं वचः' । असंग्रहोऽपि तत्रैवोक्तः— 'बहिस्तूभयथापि स्मृतेराचाराच्च' । 'शुद्धः शिष्टैरुपादेयस्त्याज्यो वा दोषहानितः ॥ उपादेयोऽन्यथा शुद्धिः प्रायश्चित्तकृता वृथा ॥ आमुष्मिके च शुद्धिः स्यात्ततः शिष्टास्त्यजन्ति तम् ॥ प्रायश्चित्तादृष्टवाक्यादशुद्धिस्त्वैहिकीष्यते' इति ॥ यतेर्मैथुनस्मरणादिषु कृच्छ्रत्रयम् । बहुवचनस्य च त्रित्वे

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥
उत्साहोऽध्यवसायश्च क्रियानिष्पत्तिरित्यदः ॥ १५ ॥

अष्टाङ्गमैथुनं प्रोक्तमेकमप्यत्र पातयेत् ॥'
तत्प्रयत्नादिदं वर्ज्यं विधवाव्रतिभिक्षुभिः ॥ १६ ॥

द्रष्टुर्मन्तुस्तथाऽऽज्ञप्तुस्तुर्यभागमघं स्मृतम् ॥
स्वस्त्रीभ्रमात्पारदार्ये द्वयोरप्यर्धमीरितम् ॥ १७ ॥

पुंसो यत्परदारेषु स्त्रीणामपि तथा व्रतम् ॥
प्रेतान्नात्ता च संस्कार्यः कृच्छ्राद्दुर्भोजिनस्तथा ॥१८॥

यस्य येन भवेत्सङ्गो ब्रह्महादिचैतुर्ष्वपि ॥
तत्तद्व्रतं विधायैव शुद्धिमाप्नोति नान्यथा ॥ १९ ॥

अज्ञानात्पञ्चरात्रं तु तत्सङ्गे कायकृच्छ्रकः ॥
अनुष्ठेयो द्वादशाहसङ्गे सांतपनं महत् ॥ २० ॥

पराको माससंसर्गे त्रिमासे तत्त्रयं तथा ॥
चान्द्रत्रयं च वर्षार्धे षण्मासं न्यूनवत्सरे ॥ २१ ॥

पर्यवसानात् ॥ १४ ॥ १५ ॥ १६ ॥ तुर्यभागं चतुर्थांशम् ॥ १७ ॥ पुरुषस्य जारकर्मसु यत्प्रायश्चित्तं तथैव स्त्रीणामपि । प्रेतान्नात्ता महैकोद्दिष्टान्नभोक्ता । दुर्भोजिनो निषिद्धभोजिनः ॥१८॥ येन ब्रह्मघ्नादिना ॥१९॥ तत्सङ्गे पापिसंसर्गे प्राजापत्यकृच्छ्रः ॥२०॥ तत्त्रयं पराकत्रयम् ॥ २१ ॥

अब्दे पापिसमं ज्ञाने द्विगुणं व्रतमिष्यते ॥
मण्डूकं नकुलं काकं वराहं मषकं शुकम् ॥ २२ ॥

अजमोतुमविं श्वानं हत्वैणं कुक्कुटं कपिम् ॥
विप्रोऽज्ञानाच्चरेदर्धकृच्छ्रं त्रीनश्वहा तथा ॥ २३ ॥

तप्तकृच्छ्रं करिवधे पराकं गोवधेन हि ॥
कामतो गोवधे शुद्धिर्गुरूणां च तथैव च ॥ २४ ॥

टिट्टिभं चक्रवाकं च हंसं कारण्डवं तथा ॥
उलूकं सारसं श्येनं कपोतं वनजानपि ॥ २५ ॥

मयूरं चाषं बलाकं शिशुमारं च कच्छपम् ॥
अन्यांश्च जलजान्हत्वा द्वादशाहव्रतं चरेत् ॥ २६ ॥

शयनासनयानेषु हृतेष्वज्ञानतो द्विजः ॥
भक्ष्यभोज्योपहारेषु पञ्चगव्यं विशोधनम् ॥ २७ ॥

शुष्कैधस्तृणवृक्षेषु चर्मवल्कगुणेषु च ॥
हृतेष्वन्येषु चाज्ञानात्तादृशेषु त्र्यहं व्रतम् ॥ २८ ॥

॥ २२ ॥ ओतुं मार्जारम् । एणं मृगम् ॥ २३ ॥ २४ ॥
॥ २५ ॥ शिशुमाराद्या जलचरविशेषाः ॥ २६ ॥ यानं शिबिकादि
॥ २७ ॥ शुष्कैधः शुष्ककाष्टम् । वल्कं वल्कलम् । गुणो रज्जुः ॥ २८ ॥

प्राजापत्यव्रतं प्रोक्तं रेतोविण्मूत्रभोजने ॥
शूद्रोच्छिष्टाशनेऽज्ञानात्प्रोक्तं चान्द्रायणत्रयम् ॥ २९ ॥
चण्डालं पतितं मद्यपं महापापिनं द्विजः ॥
रजस्वलां सूतिकां च रजकं यवनादिकम् ॥ ३० ॥
स्पृष्ट्वा सचैलं स्नात्वैव गव्यं पीत्वा शुचिर्भवेत् ॥
गायत्रीं च विशुद्धात्मा जपेदष्टशतं ततः ॥ ३१ ॥
एषामन्यतमं स्पृष्ट्वा ज्ञानाद्भोजनमाचरेत् ॥
द्विरात्रोपोषितः शुध्येत्पञ्चगव्याशनाद्द्विजः ॥ ३२ ॥
स्नाने दाने जपे चैषां ध्वनिं श्रुत्वाऽध्वरे द्विजः ॥
गायत्र्यष्टसहस्रं तु जपित्वा शुद्धिमाप्नुयात् ॥ ३३ ॥
व्रतादौ भोजने चैषां ध्वनिं श्रुत्वा तदैव तु ॥
मुखात्तमन्नं संत्यज्य स्नात्वा चोपोषितः शुचिः ॥३४॥
नित्यभुक्तौ तु भुक्तं चेद्गायत्र्यष्टशतं जपेत् ॥
कलहश्वघरट्टादिशब्दे ज्ञाते तथैव च ॥ ३५ ॥
भुक्तौ परस्परस्पर्शे तथा पङ्क्तिस्थ उत्थिते ॥
गुरुं विनोद्गमेद्धीमानज्ञानी वा व्रतं चरेत् ॥ ३६ ॥

॥ २९ ॥ ३० ॥ गव्यं पञ्चगव्यम् । अष्टशतं अष्टाधिकशतम् ॥ ३१ ॥ एषु चण्डालादिषु ॥ ३२ ॥ स्नानादिकर्मकाले यज्ञे च । ध्वनिं चण्डालादिशब्दम् । अष्टसहस्रं अष्टाधिकसहस्रम् ॥ ३३ ॥ मुखात्तं मुखे गृहीतमन्नकवलम् ॥३४॥३५॥ गुरुं विना भोक्ष्यमाणपङ्क्तिस्थे उत्थिते भोजनं त्यक्त्वोद्गमेदुत्थाय गच्छेत् । व्रतं गायत्रीजपरूपमेकोपवासरूपं वा ॥३६॥

पापानामधिकं पापं विप्रसद्देवनिन्दितम् ॥
अयत्नान्निष्कृतिस्तेषां प्रायशो वाप्यधोगतिः ॥ ३७ ॥

यस्तु रागादिनिर्मुक्तः पश्चात्तापेन संयुतः ॥
प्रायश्चित्तं चरन्विष्णुपरः शीघ्रं स मुच्यते ॥ ३८ ॥

संस्मृतः पूजितो ध्यातो भक्त्या वा नमितो हरिः ॥
निर्दहत्येव पापानि तूलराशिं यथानलः ॥ ३९ ॥

नैवं यो निष्कृतिं कुर्यात्पापी धर्मपराङ्मुखः ॥
लब्ध्वाऽकीर्तिमिह प्रेत्य पच्यते नरके चिरम् ॥ ४० ॥

ततो योन्यन्तरं याति भुक्तदुःखोऽप्यघांशतः ॥
प्रायशो वासनाभूम्ना भूतप्रेतपिशाचताम् ॥ ४१ ॥

हुंत्वंकाराद्गुरोर्विप्राभिभवादब्रह्मराक्षसः ॥
गर्दभो हीनसेवी स्यात्कुक्कुटोऽतिथिहापकः ॥ ४२ ॥

विप्रो ज्ञानी । सन् साधुः । तेषां निन्दकानाम् । 'तस्यैते दायादा भवन्ति । उपयन्ति सुहृदः पुण्यकृत्या द्विषन्तः पापकृत्याम्' इति श्रुतेः ॥ ३७ ॥ ३८ ॥ 'हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ॥ अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः' इत्युक्तेर्विष्णुस्मृतेः पावनत्वमुक्तम् ॥ ३९ ॥ निष्कृतिं प्रायश्चित्तम् । 'प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः ॥ अपश्चात्तापिनः प्रेत्य नरकं यान्ति दारुणम्' इति स्मृतेः ॥४० ॥ ततो नरकात् । अघांशतोऽवशिष्टपापयोगात् वासनाबहुत्वात् ॥ ४१ ॥ गुरोः मातुः पितुरुपदेष्टुश्च हुंकारात्त्वंकाराच्च । यदुक्तम् 'गुरुं हुंकृत्य त्वंकृत्य विप्रं निर्जित्य वादतः ॥ अरण्ये निर्जले देशे जायते ब्रह्मराक्षसः' इति ॥४२॥

उष्ट्रोऽर्थहृद्वनचरः फलपत्रादिहृद्भवेत् ॥
मधु दंशः पलं गृध्रोऽन्नमाखुश्चातको जलम् ॥ ४३ ॥

गन्धाच्छुच्छुन्दरी धान्यं शलभोऽलिर्विषं तथा ॥
कृमिः कीटः पतङ्गः स्यात्स्वर्णं हृत्वा तृणं पशुः ॥४४॥

काको निर्मन्त्रभुग्गृध्रो मित्रध्रुग्दाम्भिको बकः ॥
इत्याद्या बहुशो योनीर्भुक्त्वा रुग्णा भवन्त्यथ ॥ ४५ ॥

हृद्रोगी परहृद्भेत्ता गुरुत्यागी महामयी ॥
क्षयी तु ब्रह्महा कुष्ठी स्वर्णहृत्पुस्तकापहा ॥ ४६ ॥

जन्मान्धो विश्वासघाती वमी गण्डी गणार्थहृत् ॥
अपुत्रोऽन्यार्थहृद्वस्त्रहृच्छ्वित्री चानृती कुवाक् ॥ ४७ ॥

गुल्म्यन्नहृत्कुरुङ्मांसभोक्ता क्वास्यस्तु तैलहृत् ॥
देवार्थहृत्पाण्डुरोगी रोगाः सर्वेऽत्र पापतः ॥ ४८ ॥

मधु हृत्वा दंशः । पलं मांसम् ॥ ४३ ॥ ४४ ॥ निर्मन्त्रभुक् निमन्त्रणं विना परगृहे भोक्ता । आपोशनादिमन्त्रं विना वा भोक्ता । योनीस्तिर्यग्योनीः भुक्त्वोषित्वा समीभूते शुभाशुभे कर्मणोऽनुरूपं फलमनुभूय तस्य संक्षये पुनरिमं लोकं प्रतिपद्यत इति क्रमेण नृयोनिं प्राप्य रुग्णा भवन्ति ॥ ४५ ॥ पुस्तकापहो जन्मान्ध इत्यग्रिमेणान्वेति ॥ ४६ ॥ वमी वमनशीलोऽम्लपित्तग्रस्तो वा । श्वित्री श्वेतकुष्ठी ॥४७॥ किं बहुना उक्तेन रोगाः सर्वेऽत्र पापत एव भवन्ति ॥ ४८ ॥ पुनः पुनः श्वयोनिः कृमि-

स्त्रीपुंसोः पारदार्याच्छ्वकृमियोनिः पुनः पुनः ॥
तदघं परिहर्तव्यं जातं चेन्निष्कृतिं चरेत् ॥ ४९ ॥
कामक्रोधादिकं त्यक्त्वा स्वधर्मं सर्वदा चरन् ॥
ईशभक्तो विशुद्धात्मा सद्गतिं याति नेतरः ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्ड-
मण्डितायां संहितायां श्रीवासुदेव्यां कर्मकाण्डे
अष्टमाष्टके षष्ठोऽध्यायः ॥ ६ ॥

योनिश्च ॥ ४९ ॥ 'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ॥ कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्' इति स्मृतेः कामादेरेव नरकहेतुत्वात्कामादींस्त्यक्त्वेश्वरप्रीतये स्वधर्मं चरन् भक्त्या शुद्धान्तःकरणः सद्गतिं याति नेतरः ॥ ५० ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां कर्मकाण्डेऽष्टमाष्टके षष्ठोऽध्यायः ॥ ६ ॥

गुरुतल्पोपपातकशुद्धिकथनं नामाष्टमाष्टके
षष्ठोऽध्यायः ॥ ८।६ ॥

---

**षोडशसंस्काराशौचनिर्णयवानप्रस्थाश्रमादिवर्णनं नामाष्टमाष्टके सप्तमोऽध्यायः ॥ ८।७ ॥**

हरिः ॐ ॥ तदिदात्महितं तात नित्यं कुर्यादतन्द्रितः ॥
यद्दुर्लभं ब्रह्मजन्म तच्च्युतस्य गतिर्नहि ॥ १ ॥
निःस्पृहः शान्तचित्तो यः स्वधर्मपरिनिष्ठितः ॥
संस्कारैः संस्कृतो विप्रः पवित्रो योग्यतां व्रजेत् ॥ २ ॥
अष्टाचत्वारिंशता यः संस्कारैः संस्कृतः शुचिः ॥
नित्यनैमित्तिकज्ञाता ब्राह्मणः सोऽश्नुतेऽमृतम् ॥ ३ ॥
पञ्चविंशतिसंस्कारास्तदभावे सुनिश्चिताः ॥
पवित्रत्वं योग्यता च विप्रस्येह न चान्यथा ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥

स त्रिषष्टितमेऽध्याये गर्भाधानादिसंस्कृतीः ॥
अशौचनिर्णयं चाह वानप्रस्थाश्रमं सुतः ॥ १ ॥

हि यस्माद्दुर्लभं नृजन्म ततः प्रच्युतस्य नोर्ध्वगतिः। अत एव तदेव पूर्वोक्तं आत्मने हितं स्वधर्मं अतन्द्रितोऽप्रमादः कुर्यात् ॥ १ ॥ संस्कारैर्गर्भाधानादिभिः पवित्रः शुद्धान्तःकरणो योग्यतां ज्ञानाधिकारितां व्रजेत् ॥ २ ॥ यस्यैतेऽष्टाचत्वारिंशत्संस्काराः स ब्राह्मणः सायुज्यं सरूपतां जयतीति श्रवणात्। अमृतं मोक्षम् ॥ ३ ॥ अन्यथा प्रकारान्तरेण। यदाहुः—'पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः ॥ ते पवित्राश्च योग्याः स्युः श्राद्धादिषु सुयन्त्रिताः' इति ॥ ४ ॥ गर्भाधानमुहूर्तमाह—

प्रथमर्तौ शुभे काले गर्भाधानं मुनीरितम् ॥
अत्रैव दुष्टमासादौ शान्तिः कार्या यथाविधि ॥ ५ ॥

प्राक्चतुर्निट्श्राद्धतत्प्राग्दिनेऽह्नि व्रतपर्वसु ॥
जन्माहाद्यष्टमीभूतमूलान्त्यपितृभेषु नो ॥ ६ ॥

पूर्तेष्टसंस्कारमुखे वृद्धिश्राद्धमवश्यकम् ॥
संपूज्या मातर इह देवाश्च पितरो नव ॥ ७ ॥

मातृपूर्वा इह प्रोक्तास्तत्सत्त्वे पितृतोऽपि हि ॥
मातामहे जीवति तत्पार्वणं लुप्यते खलु ॥ ८ ॥

वृद्धौ तीर्थे च संन्यस्ते स्वताते पतिते सति ॥
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥ ९ ॥

'पूर्वाश्चतस्रो रात्रीः श्राद्धतत्पूर्वदिनेऽह्नि दिवा । ये हि गच्छन्ति रागान्धा नरा नारीं रजस्वलाम् ॥ पर्वण्यप्सु दिवा श्राद्धे ते वै नरकगामिनः' इत्युक्तेः ॥ ५ ॥ जन्मर्क्षमासतिथिषु । भूते चतुर्दश्यां । अन्त्यर्क्षे रेवत्याम् । पितृभे मघायाम् ॥ ६ ॥ पूर्तं स्मार्तकर्म । इष्टं श्रौतकर्म । संस्कारा गर्भाधानादय एषां मुखे आरम्भे नवदैवत्यं नान्दीश्राद्धं कार्यम् । मातरो गौर्याद्याः षोडश ब्राह्मयाद्याः सप्त ॥ ७ ॥ इह नान्दीश्राद्धे मातृपूर्वाः । मातरि विद्यमानायां तत्पार्वणं विलोप्य पितृपूर्वं कार्यम् । मातामहे जीवति न तत्पार्वणम् ॥ ८ ॥ द्वारलोपे प्रकारान्तरमाह—वृद्धौ वृद्धिश्राद्धे । स्वताते पतिते संन्यस्ते वा तन्मात्रादीनुद्दिश्य कार्यम् ॥ ९ ॥ नात्रापसव्यं । तिलार्थे यवाः ।

प्रदक्षिणं तूपचारस्तिलार्थं इह वै यवैः ॥
योज्यः स्वाहात्र सर्वत्र युग्मा विप्राः प्रतिस्थलम् ॥१०॥

उपास्मा इति पञ्चर्चं प्राजापत्योन्त इष्यते ॥
दक्षिणा द्राक्षामलकं निष्क्रयो वात्र दापयेत् ॥ ११ ॥

हेम्ना चतुर्गुणेन द्विगुणामेन त्वसंभवे ॥
जातकर्मणि नान्नेन प्रागिह स्वस्तिवाचनम् ॥ १२ ॥

द्विजे गर्भाधानमुखाः संस्कारा वेदमन्त्रतः ॥
जातकर्मादिचौलान्ता नारीणामप्यमन्त्रकाः ॥ १३ ॥

कार्याः पौराणिकैर्मन्त्रैः संस्कारा ब्राह्मणोदितैः ॥
शूद्राणां न व्रतं त्वत्र छुरिकाबन्ध इष्यते ॥ १४ ॥

प्रत्येकं युग्मा विप्राः । 'युग्मान्वृद्धिपूर्तेष्वयुग्मानितरेषु प्रदक्षिणमुपचारो यवैस्तिलार्थः' इत्युक्तेः । स्वधास्थाने स्वाहा सर्वत्र । मातृपितामहीप्रपितामह्यः नान्दीमुख्यः वः युग्मब्राह्मणभोजनपर्याप्तमिदमन्नं स्वाहेति वाच्यम् ॥ १० ॥ अन्ते उपास्मैगायतेति पञ्चर्चं प्रजापते नत्वदिति मन्त्रश्चेष्यते । अत्र नान्दीश्राद्ध एव ॥ ११ ॥ अन्नासंभवे द्विगुणामेन चतुर्गुणमूल्यमितहिरण्येन वा कार्यम् । जातकर्मणि सति संभवेऽपि हेम्नैव । अत्र पूर्वं स्वस्तिवाचनं कार्यम् ॥ १२ ॥ द्विजे त्रैवर्णिके ॥ १३ ॥ ब्राह्मणोक्तैः पौराणिकमन्त्रैः शूद्रसंस्काराः । उपनयनस्थाने तदुक्तमासादौ छुरिकाबन्धस्ततो विवाहः ॥ १४ ॥ गर्भाधानसंस्कारं विना पत्नीगमने वृषदानं

गर्भाधानं विना पत्नीगमे गोदानमाचरेत् ॥
तृतीये गर्भमासे पुंसवं चानवलोभनम् ॥ १५ ॥

तुर्ये षष्ठेऽष्टमे वा स्यात्सीमन्तोन्नयनं सकृत् ॥
तथा विष्णुबलिर्गर्भरक्षाहेतुर्विकल्पितः ॥ १६ ॥

जाते पुत्रे पिता स्नात्वा सचैलं जातकर्म च ॥
कुर्याद् गृह्योक्तविधिना होमः स्वाग्नौ न वा क्वचित्॥१७

सूतकं त्वत्र सर्वेषां दशाहं वाऽविशेषतः ॥
क्षत्रियादेर्द्वादशाहपक्षमासात्मकं क्रमात् ॥ १८ ॥

मृतेऽप्येवं सोदके तु त्र्यहं स्नानं सगोत्रके ॥
त्रिबन्ध्वाद्ये त्र्यहं शावेऽतीते च दशरात्रके ॥ १९ ॥

कार्यम्। प्रथमगर्भसंस्कारलोपे प्रतिगर्भं गर्भाधानसंस्कारावृत्तिः। सीमन्तसंस्कार एकवारमेव। तल्लोपे प्रतिगर्भमावृत्तिः ॥ १५ ॥ १६ ॥ क्वचित्सूत्रे होमो नोक्तस्तत्र वृद्धिश्राद्धात्पूर्वं सर्पिर्मधुहिरण्यनिकाषप्राशनादिरूप एव संस्कारः ॥ १७ ॥ अत्र जनने चतुर्वर्णानां दशाहाशौचम्। पक्षान्तरमाह—क्षत्रियादेरिति ॥ १८ ॥ इदमन्यत्राप्यतिदिशति—मृतेऽप्येवमिति। कूटस्थमारभ्य सप्तपुरुषपर्यन्तं दशाहम्। चतुर्दशपर्यन्तं त्र्यहम्। एकविंशतिपर्यन्तमेकाहः। ततः स्नानमात्रम्। त्रिबन्धुषु आदिशब्दाच्छ्वशुरमातामहभगिनीभागिनेयपितृमातृस्वस्रसृपुत्रीमुखा ग्राह्याः। एषां संनिधौ त्रिरात्रं। असंनिधौ पक्षिणी। दशाहोर्ध्वं त्रिदिनाद्याशौचं नैव। जननाशौचमपि तथैव। इदं सर्वेषां तुल्यमेव ॥ १९ ॥ दशाहेऽतीते दशाहोत्तरं

प्राक्त्रिमासोऽर्वाक्षण्मासात्पक्षिण्याब्दमथाप्लुतिः ॥
पित्रोर्दशाहं भर्तुश्चाहिताग्नेर्दाहतस्त्र्यहम् ॥ २० ॥
दाहेऽस्थ्यादेः सूतके तु नाभ्युत्थानाभिवादने ॥
दानपूजाक्रिया यज्ञा मृतकेऽस्पर्शतापि च ॥ २१ ॥
अर्घ्यान्ता मानसी संध्या षष्ठीपूजेष्यतेऽत्र तु ॥
न दोषो दक्षिणादाने जातकेऽन्यत्र दोष इत् ॥ २२ ॥
द्वादशे षोडशे विंशे द्वात्रिंशेऽह्नि जनैः क्रमात् ॥
वर्णैः कार्यं नामकर्म होमोऽप्यत्र स्वगृह्यतः ॥ २३ ॥
पुंसां समाक्षरं स्त्रीणां विषमाक्षरनाम च ॥
बहुगुर्वक्षरं चार्थघोषहीनमसत्स्मृतम् ॥ २४ ॥

त्रिमासात्प्राक् त्रिदिनं । ततः षण्मासपर्यन्तं पक्षिणी । ततो नवमासपर्यंतमेकाहः । ततो वत्सरान्तेऽपि स्नानं । दंपत्योः परस्परं पित्रोः पुत्रस्य च दशाहातिक्रमेऽपि दशाहं । आहिताग्नेर्दाहेऽस्थिदाहे पर्णशरदाहे वा दाहदिनादारभ्य दशाहम् । अन्येषां मरणत एवान्येषामस्थ्यादिदाहे त्र्यहम् । आशौचमध्ये समस्वल्पकाद्याशौचपाते पूर्वशेषेण शुद्धिः । 'नैवाशौचेन पित्र्यं पितुरुपशमने पक्षिणी मातृमृत्यौ' इति विशेषः । दुर्मरणमृतानां पतितानां च प्रायश्चित्तं विना नाशौचं । सर्वेषां देशान्तरे स्नानमित्यादि ज्ञेयम् ॥ २० ॥ जातके मृतके चाभ्युत्थानादि न । सूतिकावर्जं जन्मन्यस्पृश्यता नैव । मृतके सर्वेषामस्पृश्यता ॥ २१ ॥ अत्रार्घ्यदानपर्यन्ता मानसी संध्या नान्यत् । इह जन्माशौचमध्ये पञ्चमषष्ठदिनयोः षष्ठीदेवीपूजेष्यते । अत्र प्रथमे पञ्चमे षष्ठे दशमे चाह्नि दाने न दोषः । मृतके दातुर्ग्रहीतुश्च दोष एव ॥ २२ ॥ जन्मतो विप्रादेर्द्वादशादिदिनेषु नामकर्म ॥ २३ ॥ बहूनि गुर्वक्षराण्यस्येदृशं नाम वर्जनीयम् ॥ २४ ॥ आव्रता-

अभिवादनकं गोप्यं पितृभ्यामाव्रतात्खलु ॥
मासाच्छुद्धिः पुत्रसूनां स्त्रीसूनां सा तु मण्डलात्॥२५॥

एकत्रिंशद्दिने प्राग्वा दुग्धपानं च कम्बुना ॥
निष्क्रमस्तुर्यमासे भूम्युपवेशस्तु पञ्चमे ॥ २६ ॥

षष्ठात्समे मासि पुंसोऽन्नाशनं विषमे स्त्रियाः ॥
पञ्चमाद्वर्षमध्येऽत्र होम उक्तः स्वगृह्यतः ॥ २७ ॥

गर्भाद्यन्नाशनान्तेषु स्वस्वकाले न दोष इत् ॥
गुरुशुक्रास्तादिभवः कालेऽतीते स तु स्मृतः ॥ २८ ॥

तृतीयेऽब्दे चोपनीत्या सह वा चौलमिष्यते ॥
मातर्यधः पञ्चमाब्दाद्गर्भिण्यां नैव कारयेत् ॥ २९ ॥

द्रुपनयनपर्यन्तं नाक्षत्रनाम मातापितृभ्यां गोप्यम् । मण्डलाच्चत्वारिंशद्दिनतः कन्यासूनां शुद्धिः ॥ २५ ॥ कम्बुना शङ्खेन । अन्नप्राशनकाले प्रयाणोक्तकाले चतुर्थे मासि निष्क्रमणम् ॥ २६ ॥ षष्ठमासमारभ्य समे मासि पुंसोऽन्नाशनं । पञ्चमाद्विषमे मासि कन्याया अन्नाशनम् ॥ २७ ॥ गर्भाद्यन्नाशनान्ताः संस्काराः स्वस्वकाले क्रियन्ते चेद्गुरुशुक्रबाल्यवार्धक्यास्तगुर्वतिचारसिंहमकराश्रयविष्णुशयनक्षयाधिमासदोषो नैव । स्वकालातिक्रमे स दोषः स्मृतः ॥ २८ ॥ तृतीयेब्दे उपनयनेन सह वा यथाकुलाचारं चौलं कार्यं । 'सूनोर्मातरि गर्भिण्यां तदा चौलं न कारयेत् ॥ पञ्चमाब्दात्तदूर्ध्वं तु गर्भिण्यामपि कारयेत् ॥ सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यते' इत्येतत्सर्वमभिप्रेत्य मातरीत्याद्युक्तम् ॥ २९ ॥ अन्यथा

गर्भाधानादिचौलान्ता अतीता यदि संकटात् ॥
प्रत्येकं पादकृच्छ्रोऽत्र चौलेऽर्धो द्विगुणोऽन्यथा ॥३०॥
प्रायश्चित्ते कृतेऽतीतं कर्म कार्यं न वेतरत् ॥
चूडा कार्यैव नारीणां तथैवोद्वाहतः पुरा ॥ ३१ ॥
एवं सुसंस्कृतो लब्ध्वा द्विजत्वं शक्तितः सुधीः ॥
अधीत्योद्वाह्य सदृशीं पत्नीं चेत्कामुको गृही ॥ ३२ ॥
नित्यकर्मपरः पुत्रमुत्पाद्यास्मै समर्प्य च ॥
गृहं सभार्यो रागी चेद्वानप्रस्थाश्रमं चरेत् ॥ ३३ ॥
नित्यं त्रिषवणस्नायी नखश्मश्रुजटाधरः ॥
भूमिशायी ब्रह्मचारी होमयज्ञपरायणः ॥ ३४ ॥
ग्रामकृष्युद्भवं वर्ज्यं पुष्पमूलफलादिकम् ॥
भोक्तव्या षोडशग्रासा रात्रौ नैव कदाचन ॥ ३५ ॥
वन्यतैलेन चाभ्यङ्गो नित्यः कार्यो न सर्वदा ॥
दण्डान्तरेण नियतं पत्न्या व्यवहरेद्वशी ॥ ३६ ॥

संकटं विना संस्कारातिक्रमे प्रत्येकमर्धकृच्छ्रप्रायश्चित्तं व्याहृतिहोमश्च ॥ ३० ॥ अतीतमतिक्रान्तं कर्म । यदुक्तं 'प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै । कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः' इति ॥ ३१ ॥ ब्रह्मचर्येण वेदानधीत्य कामुकश्चेत्सदृशीं भार्यामुद्वाह्य गृही गृह्याचरणतत्परो भवेत् ॥ ३२ ॥ अस्मै पुत्राय गृहं समर्प्यानुपरतरागश्चेद्वानप्रस्थाश्रमं चरेत् ॥ ३३ ॥ त्रिषवणस्नायी त्रिकालस्नानतत्परः ॥ ३४ ॥ ३५ ॥ नित्यो दीपावल्यादौ विहिताभ्यङ्गः । वशी जितेन्द्रियः ॥ ३६ ॥ आन्तर-

सहेत शीतवातादिद्वन्द्वान्यान्तरवैरिणः ॥
जित्वा यमैश्च नियमैर्युक्तो योगपरायणः ॥ ३७ ॥

वेदान्ताभ्यासनिरतः शान्तो दान्तो जितेन्द्रियः ॥
द्वन्द्वातीतोऽनहंकारो निर्ममः साधनान्वितः ॥ ३८ ॥

दैवीसंपत्तिसंपन्नः सर्वत्र समदृक् शुचिः ॥
विप्रो यदैव विरजेत्तदैव प्रव्रजेत्सुधीः ॥ ३९ ॥

यदान्तर्दृढवैराग्यं जातं सर्वेषु वस्तुषु ॥
तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत् ॥ ४० ॥

पातकप्रतिबन्धेन वैराग्यं जायते न चेत् ॥
वानप्रस्थः प्रकुर्वीत शुध्द्यै कृच्छ्रमुखव्रतम् ॥ ४१ ॥

कृच्छ्रस्तु द्वादशदिनसाध्यः कायः पुरोदितः ॥
प्रत्यहं चाष्टभिर्ग्रासैर्यतिचान्द्रायणं मतम् ॥ ४२ ॥

मासेनैव चरेद्ग्रासं चत्वारिंशच्छतद्वयम् ॥
शिशुचान्द्रायणं चाहोरात्रं ग्रासैस्तथाष्टभिः ॥ ४३ ॥

वैरिणः कामादीन् ॥ ३७ ॥ साधनानि नित्यानित्यविवेकादीनि ॥ ३८ ॥ 'ब्रह्मचर्याद्वा गृहाद्वनाद्वा' इति श्रुतेः। यत्राश्रमे यदहरेव दृढवैराग्यं तत्र तदैव प्रव्रज्या। अत्र वैराग्यमेव परमकारणं तद्विना संन्यासः पातायैव ॥ ३९ ॥ ४० ॥ ४१ ॥ कायः प्राजापत्यः ॥ ४२ ॥ अहोरात्रमष्टौ ग्रासा दिवा चत्वारि रात्रौ चत्वारीति। 'यथाकथंचिद्ग्रासानां चत्वारिंशच्छतद्वयम्। मासेनैवोपभुञ्जीत चान्द्रायणमथापरम्' इति योगीश्वरोक्तेः। नानयोः शुक्लाद्यारम्भनियमः ॥ ४३ ॥ यवमध्यमाह—शुक्लप्रतिपदमारभ्य

शुक्लाद्यतिथिमारभ्य वर्धमानान्दिने दिने ॥
शुक्ले ग्रासांश्चरेत्कृष्णे ह्रासयेद्यवमध्यकम् ॥ ४४ ॥

तथा पिपीलिकामध्यं ज्ञेयमाद्यान्तपूर्णिमम् ॥
हव्यगव्यग्रासमानमार्द्रामलकसंमितम् ॥ ४५ ॥

कुक्कुटाण्डोपमं बर्ह्यण्डवद्वाऽऽस्याविकारतः ॥
सदर्भाम्भः पञ्चगव्यपानमेकदिनं ततः ॥ ४६ ॥

उपोषणं परेद्युश्च कृच्छ्रः सांतपनाभिधः ॥
अतिसांतपनः सप्ताहात्पृथग्द्रव्ययोगतः ॥ ४७ ॥

एकभक्तेन नक्तेनायाचितेनोपवासतः ॥
पादकृच्छ्रः पर्णकृच्छ्रः शुद्धपर्णाम्बुपानतः ॥ ४८ ॥

दिने दिने एकैकं ग्रासं वर्धयेत् कृष्णे ह्रासयेत् ॥ ४४ ॥ पिपीलिकामध्यमाह—पूर्णिमामारभ्य पूर्णिमान्तं चरेद् भक्षेत् । कृष्णे ग्रासह्रासः शुक्ले वृद्धिरिति । द्रव्यमाह—हव्यं यवगोधूमतण्डुलान्यतमं । गव्यं दुग्धदध्याज्यान्यतमं । ग्रासमानमाह—आर्द्रेति ॥ ४५ ॥ विप्रतिपत्तिं वारयति—आस्याविकारत इति । प्रमाणत्रयमध्ये मुखेन ग्रसनार्हो यत्प्रमाणो ग्रासस्तत्प्रमाणः स्वीकार्यः । दुग्धादि तु तन्मितं पर्णपुटादिना मेयम् । सांतपनमाह—सकुशोदकं पञ्चगव्यमेकदिने पीत्वा ॥ ४६ ॥ परेद्युरुपोषणं कार्यम् । अतिसांतपनमाह—प्रथमेह्नि गोमूत्रं द्वितीये गोमयं तृतीये क्षीरं चतुर्थे दधि पञ्चमे घृतं षष्ठे कुशोदकं सप्तमे ह्युपवास इति ॥ ४७ ॥ पादकृच्छ्रमाह—स्पष्टम् । पर्णकृच्छ्रमाह—बिल्वाश्वत्थाब्जदलदर्भान् जले निधायोपरि धृत्वा तद्गलिताम्बु पिबेदिति ॥ ४८ ॥ द्वादशदिनं दुग्धपानात्पराकः । त्रिसप्ताहं

द्वादशाहोपवासेन पराको दुग्धपानतः ॥
एकविंशत्यहः कृच्छ्रातिकृच्छ्रः पावनो नृणाम् ॥ ४९ ॥
नारायणपरो भूत्वा व्रतं भक्त्या चरेदिदम् ॥
विपापो विरजो भूत्वा पश्येदात्मानमात्मनि ॥ ५० ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां वासुदेव्यां कर्मकाण्डे अष्टमाष्टके सप्तमोऽध्यायः ॥ ७ ॥

तथैव दुग्धपानात्कृच्छ्रातिकृच्छ्रः ॥ ४९ ॥ प्रायश्चित्तेन विगतं पापं यस्यात एव विगतं विक्षेपादिकारणीभूतं रजो यस्मात् । आत्मना सत्त्वप्रधानेन शुद्धान्तःकरणेनात्मनि बुद्धौ आत्मानं प्रतीचं पश्यत्यपरोक्षीकरोति ॥ ५० ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां संहितायां त्रिकाण्डमण्डितायां वासुदेव्यां कर्मकाण्डे टीकायां अष्टमाष्टके सप्तमोऽध्यायः ॥ ७ ॥

षोडशसंस्काराशौचनिर्णयवानप्रस्थाश्रमादिवर्णनं नाम अष्टमाष्टके सप्तमोऽध्यायः ॥ ८।७ ॥

---

## प्रलय–युगमान--संन्यासपद्धतिकथनं नामाष्टमाष्टकेऽष्टमोऽध्यायः ॥ ८।८ ॥

हरिः ॐ ॥ त्वं चिन्मयं परात्मानं ये न पश्यन्ति दुर्धियः ॥
तेऽभीक्ष्णं प्रलयं यान्ति स्वकर्मपरिचोदिताः ॥१॥

॥ श्रीगणेशाय नमः ॥
चतुःषष्टितमेऽध्याये प्रोक्तं प्रलयलक्षणम् ॥
युगमानादि संन्यासपद्धतिश्च यथाक्रमम् ॥ १ ॥

एवं तावद्व्यतिक्रान्तैः पञ्चदशाध्यायैर्विधिप्रतिषेधार्थैरवगन्तव्यं यत्सूचितं वस्तुनात्मयाथात्म्यविज्ञानं अतो विधिप्रतिषेधार्थविषयस्यात्मानि क्रियाकारकफलाध्यारोपेण प्रपञ्चस्य स्वाभाविकस्याज्ञानस्य संसारबीजस्य निवृत्त्यर्थं तद्विपरीतब्रह्मात्मैकत्वविज्ञानं क्रियाकारकफलाध्यारोपलक्षणशून्यमात्यन्तिकनिःश्रेयसप्रयोजनं संन्यासस्याधिगन्तव्यमित्युत्तरग्रन्थ आरभ्यते। तमेतमर्थं कर्मानुष्ठानतोऽप्यकृतार्थत्वं संन्यासमन्तरेणेति वक्तुमुपक्रमते—त्वं चिदिति। ननु गार्हस्थ्याच्चेत्परब्रह्मविज्ञानं जातं तत्रैवास्त्वकुर्वतासनं ततोऽन्यत्र न गमनमिति चेन्न कामप्रयुक्तत्वाद्गार्हस्थ्यस्य एतावान्वै काम इति 'उभे ह्येते एषणे एव' इत्यवधारणात्कामनिमित्तपुत्रादिनिबन्धनियमाभावमात्रं नहि ततोऽन्यत्र गमनं व्युत्थानमुच्यतेऽतो न गार्हस्थ्य एवाकुर्वत आसनमुपपन्नविद्यस्य। एतेन गुरुशुश्रूषातपसोरप्यप्रतिपत्तिर्विदुषः सिद्धा। अत्र केचिद्गृहस्था भिक्षाटनादिभयात्परिभवभयाच्च त्रस्यमानाः सूक्ष्मदृष्टितां दर्शयन्त उत्तरमाहुः ॥ भिक्षोरपि भिक्षाटनादिनियमदर्शनाद्देहधारणमात्रार्थिनो गृहस्थस्यापि साध्यसाधनेषणोभयविनिर्मुक्तस्य देहमात्रधारणार्थमशनाच्छादनमात्रमुपजीवतो गृह एवास्त्वासनमिति न स्वगृहविशेषपरि-

**प्रलयः पञ्चधाऽत्राद्यः स्वापो दैनंदिनाभिधः ॥**
**इन्द्रियोपरतिर्दैवाद्द्विप्रपञ्चलयस्त्विह ॥ २ ॥**

ग्रहनियमस्य कामप्रयुक्तत्वादित्युक्तोत्तरमेतत् । स्वगृहविशेषपरिग्रहाभावे च शरीरधारणमात्रप्रयुक्ताशनाच्छादनार्थिनः स्वपरिग्रहविशेषाभावेऽर्थाद्भिक्षुकत्वमेव । शरीरधारणार्थायां भिक्षाटनादिप्रवृत्तौ यथा नियमो भिक्षोः शौचादौ तथा गृहिणोऽपि विदुषोऽकामिनोऽस्तु । नित्यकर्मसु नियमेन प्रवृत्तिर्यावज्जीवश्रुतेर्नित्योक्तत्वात्प्रत्यवायपरिहारायेति एतन्नियोगविषयत्वेन विदुषः प्रयुक्तमशक्यनियोज्यत्वाच्चेति यावज्जीवादिनित्यचोदनार्थक्यमिति चेन्न । अविद्वद्विषयत्वेनार्थवत्त्वात् । यत्तु भिक्षोः शरीरधारणमात्रप्रवृत्तस्य प्रवृत्तेर्नियतत्वं तत्प्रवृत्तेर्न प्रयोजकं । आचमनप्रवृत्तस्य पिपासापगमवन्नान्यत्प्रयोजनार्थत्वमवगम्यते । नचाग्निहोत्रादीनां तद्वदर्थप्राप्तप्रवृत्तिनियमत्वोपपत्तिः अर्थप्राप्तप्रवृत्तिनियमोऽपि प्रयोजनाभावेऽनुपपन्न एवेति चेन्न । तन्नियमस्य पूर्वप्रवृत्तिसिद्धत्वात्तदतिक्रमे यत्नगौरवादर्थप्राप्तस्य व्युत्थानस्य पुनर्बन्धनाद्विदुषः कर्तव्यत्वोपपत्तिः । अविदुषाऽपि मुमुक्षुणा पारिव्राज्यं कर्तव्यमेव । तथाच ' शान्तो दान्तः ' इत्यादिवचनं प्रमाणम् । शमादीनां चात्मदर्शनसाधनानामन्याश्रमे त्वनुपपत्तेः । 'अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम्' इति च । श्वेताश्वतरे विज्ञायते ' न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति श्रुतेः 'ज्ञात्वा नैष्कर्म्यमाचरेत्' इति च स्मृतेर्ब्रह्माश्रमपदे वसेदिति च ब्रह्मचर्यादिविद्यासाधनानां साकल्येनात्याश्रमिषूपपद्यते गार्हस्थ्येऽसंभवान्न चासंपन्नं साधनं कस्यचिदर्थस्य साधनायालमिति पूर्वाचार्यैरुक्तत्वात्साकल्येन साधनप्राप्त्यै संन्यासं वक्तुं तावत्प्रलयेऽपि मुक्त्यभावं दर्शयति । त्यं तं न पश्यन्ति नापरोक्षीकुर्वन्ति ॥ १ ॥ स्वापं प्रलयत्वेन लक्षयति-इन्द्रियेति । इह निद्रायां स्थूलसूक्ष्मप्रपञ्चलयः ॥ २ ॥ कालवेगादात्मसंबन्धिभूतानां उत्पत्तिनाशौ अग्निज्वा-

कालान्नित्येऽपि दृश्येते नात्र भूतोद्भवक्षती ॥
वह्न्यर्चिवन्मृतौ नाशमज्ञः पश्यति नान्यदा ॥ ३ ॥

प्रारब्धान्ते यदोदानः पुण्येनोर्ध्वमधोंऽहसा ॥
द्वाभ्यां नृजन्म वा लैङ्गं नयत्येषोऽपरो लयः ॥ ४ ॥

यन्निमित्तमनर्थोऽभूद्देहस्यात्यन्तविस्मृतिः ॥
अहंकारास्पदस्यास्य तल्लयो नित्यसंज्ञितः ॥ ५ ॥

त्रिलोकी कल्प्यते ब्रह्मदिनान्ते प्रलयाय सः ॥
नैमित्तिकोऽत्र कः शेते स सवासनजीवहृत् ॥ ६ ॥

तुर्यः प्राकृतिकोऽस्यान्ते द्विपरार्धावसानतः ॥
सप्त प्रकृतयस्त्वत्र कल्प्यन्ते प्रलयाय हि ॥ ७ ॥

शताब्दं नैव वर्षोऽत्र लोका अन्योन्यभक्षिणः ॥
पिबतेऽर्कोऽखिलरसान्दहत्यग्निरशेषतः ॥ ८ ॥

लावन्नित्यावपि न दृश्येते अज्ञो देहप्राणवियोगमेव नाशं मनुते स च यावत्प्रारब्धं न भवति ॥ ३ ॥ अंहसा पापेन । 'पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्' इति श्रुतेः ॥४॥ तं प्रलयत्वेन लक्षयति । यन्निमित्तं देहनिमित्तं अहंकारास्पदस्य देहस्यात्यन्तविस्मृतिरेव मरणं स प्रलयो नित्यसंज्ञितः ॥५॥ चतुर्युगसहस्रमितब्रह्मदिनान्ते को ब्रह्मा सवासनजीवान्तःकरणैः सह चतुर्युगसहस्राब्दं शेते स नैमित्तिकः प्रलयः ॥ ६ ॥ द्विपरार्धावसाने स्वमानेन शतवर्षमितेऽस्य ब्रह्मणोऽन्ते मोक्षसमये सप्तप्रकृतिलयात्मकः प्रलयः ॥ ७ ॥ अत्र भुवि वर्षो वृष्टिः । अग्निः संकर्षणमुखोत्थः ॥ ८ ॥ सांवर्तकः प्रलयकालीनः वर्षः । अपां रसमित्य-

ततः सांवर्तको वर्षो विश्वमेकोदकं ततः ॥
ग्रसत्यापो भुवो गन्धं लीयते भूरपां रसम् ॥ ९ ॥

ग्रसत्यग्निः प्रलीयन्ते तास्ततोऽग्नेर्ग्रसत्यसौ ॥
रूपं वायुर्लीयतेऽग्निस्पर्शं खं ग्रसते ततः ॥ १० ॥

वायुः प्रलीयते शब्दमहंकारो ग्रसत्यथ ॥
प्रलीयते खं ततोऽहंकारं ग्रसति वै महान् ॥ ११ ॥

तं गुणास्तांश्च प्रधानमवशं कालचोदितम् ॥
भूतभौतिकसृष्टास्पृगात्माऽव्यक्तोऽगुणोऽद्वयः ॥ १२ ॥

यस्मिन्सदिव भातीदमवशं रज्जुसपर्वत् ॥
कुतः सतोऽस्य प्रलयो निर्विकारस्य साक्षिणः ॥ १३ ॥

ग्रिमेणान्वयः ॥ ९ ॥ ता आपः प्रलीयन्ते। खमाकाशः ॥ १० ॥ महान्महत्तत्त्वम् ॥ ११ ॥ प्रधानं प्रकृतिः। सांख्यसिद्धान्तापलापमाह— कालचोदितमिति प्रधानविशेषणं। भूतभौतिकानां सृष्टं सृष्टिः। नपुंसके भावे क्तः। भूतभौतिकसृष्टिं न स्पृशतीति तथाभूत आत्मा असङ्गत्वात्। तत्प्रलयाभावं विशिनष्टि—अव्यक्तः यो ह्यवयवोपचयैर्व्यज्यते यथा देहादिः। अव्यक्तशब्देन किं मायोच्यते। न। अगुणः। माया हि गुणमयी अयं त्वगुणः। यो हि गुणी स गुणात्यये नश्यति यथा भूम्यादिः। आकाशादिकार्यसंहर्तुः कालात्मवस्तुनः सद्वितीयत्वं। आत्मा त्वद्वय एव ॥ १२ ॥ कालस्याप्यात्मन्यभाव इति वक्तुं अद्वय इत्युक्तं। ईदृशश्चेत्तर्हि तत्र कथं जगद्भानमित्यत आह— यस्मिन्निति ॥ १३ ॥ ननु जगदुपादानभूत आत्मन्येव भूतलयश्चेत्तर्हि

चतुर्षु प्रलयेष्वेषु नायं लभ्योऽजितात्मनाम् ॥
शश्वत्ततोऽवशो जीवो जायते म्रियतेऽपि च ॥ १४ ॥
प्रलये साधनाभावादुपस्थोऽपि न बुध्यते ॥
ततोऽवशो वासनाभिः पुनर्जन्मादिदुःखभाक् ॥ १५ ॥
बुद्धीन्द्रियमनःप्राणाहंकारेभ्यो विलक्षणम् ॥
यदाऽसंशयमात्मानं वेत्त्यसौ मुच्यते तदा ॥ १६ ॥
तदैव कारणाविद्या सकार्याऽपि प्रलीयते ॥
आत्यन्तिकाख्यः प्रलयः पञ्चमोऽयमनुत्तमः ॥ १७ ॥
आत्मन्यभेदेन विद्वान्विमुक्तो नामरूपतः ॥
प्रलीयते खमिव खे नद्योऽब्धाविव नान्यथा ॥ १८ ॥

अनायासेनैव जीवानां प्रलये आत्मलाभ इति चेन्नेत्याह—चतुर्ष्विति ॥ १४ ॥ आत्मन्येव प्रलयश्चेत्कुतो न लभ्यत इत्यत आह—गुरुशास्त्रविवेकादिसाधनाभावात्समीपस्थोऽप्ययमात्मा ब्रह्मेति न बुध्यते । अवशः प्रकृतिपरतन्त्रः ॥ १५ ॥ तर्हि कदा लभ्यत इत्यत आह—बुद्धीति । असंशयं संशयादिभावनारहितं यथातथाऽसौ साधकः आत्मानं प्रत्यगभिन्नपरमात्मनं वेत्ति शास्त्राचार्योपदेशेन मननादिना चाखण्डैकरसत्वेनापरोक्षीकरोति तदा मुच्यते । 'विमुक्तश्च विमुच्यते ' इति श्रुतेः ॥ १६ ॥ यदा वेत्ति तदैव जन्मान्तरप्रापकक्रियारूपकार्यसहिताप्यविद्या विशेषेण लीयते । कारणभूतायास्तस्या विलये कार्योत्पत्त्यभावान्न पुनर्भवः । अयमेवात्यन्तिकप्रलयः ॥ १७ ॥ अस्य अनुत्तमत्वं विशदयति–आत्मनीति । आत्यन्तिकप्रलये दृष्टान्तद्वयमाह—खमिव खे नद्योऽब्धाविवेति । श्रुतिश्च ' यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ॥ तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं ' इति । खदृष्टान्तेन जीवस्य ब्रह्मरूपत्वं सूचितम् । 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतेः। नान्यथा सालोक्यादिना ॥१८॥

तस्मात्सर्वप्रयत्नेन सर्वानर्थप्रशान्तये ॥
आत्मज्ञाने सदोद्योगः कर्तव्यो वेदचोदितः ॥ १९ ॥

खखाभ्राष्टाश्विसप्तक्ष्मामितेऽब्दे लक्षजीविनः ॥
कृते नरा ध्यानमुक्ता यत्र धर्मश्चतुष्पदः ॥ २० ॥

खखाभ्रर्त्वङ्केनमिताब्दा त्रेताऽत्र त्रिपाद्वृषः ॥
इष्ट्वेश्वरं मखैर्मुक्ता मानुषा अयुतायुषः ॥ २१ ॥

द्वापरेऽभ्राभ्रखाब्ध्यङ्गाष्टमिताब्दे द्विपाद्वृषः ॥
नराः सहस्रायुषोऽस्मिन्नीशोपासनयोद्धृताः ॥ २२ ॥

खखाभ्रदन्ताब्धिमिताब्दे तिष्येऽत्र शतायुषः ॥
धर्मभ्रष्टा नराः सर्वे शिश्नोदरपरायणाः ॥ २३ ॥

अव्रता वर्णिनोऽशौचा यतयश्च कुटुम्बिनः ॥
ग्राम्यार्थसक्ता वनिनो लुप्ताचाराश्च गेहिनः ॥ २४ ॥

उपसंहरति—तस्मादिति। वेदेन नियमविधिना चोदितः ॥ १९ ॥ युगपरत्वेन मुक्त्युपायं कथयति—अष्टाविंशत्यधिकसप्तदशलक्षवर्षात्मके लक्षवर्षायुषो नरा ध्यानेन मुच्यन्ते ॥ २० ॥ षण्णवतिसहस्राधिकद्वादशलक्षवर्षात्मके त्रेतायुगे त्रिपादो धर्मः। अत्रायुतायुषो नराः यज्ञैरिष्ट्वा मुच्यन्ते ॥ २१ ॥ चतुःषष्ट्यधिकाष्टलक्षवर्षात्मके द्वापरे द्विपादो धर्मः। अत्र सहस्रायुषो नरा ईश्वरोपासनया मुच्यन्ते ॥ २२ ॥ द्वात्रिंशत्सहस्राधिकचतुर्लक्षमिते कलौ शतायुषः ॥ २३ ॥ वर्णिनो ब्रह्मचारिणः। यतयः संन्यासिनः। शौचरहिताः कुटुम्बिनश्च ॥ २४ ॥ अपत्रपा निर्लज्जाः।

ह्रस्वाकारा महाहारा मन्दभाग्या अपत्रपाः ॥
स्त्रैणा बहुप्रजा मूढास्त्यक्तस्वजनसौहृदाः ॥ २५ ॥
भर्त्रवज्ञापरा नार्यः पुत्राः पितृद्रुहोऽनुगाः ॥
पतित्यागपराः शिष्याः सर्वथा गुरुवञ्चकाः ॥ २६ ॥
अर्थतो भक्षयिष्यन्ति म्लेच्छप्राया नृपाः प्रजाः ॥
द्विजा वराटार्थमपि वेदविक्रयिणः खलाः ॥ २७ ॥
प्रतिग्रहपरान्नस्त्रीसक्ताः सिद्धिविवर्जिताः ॥
हीनवृत्तिरताः श्रेष्ठा हीनाश्च श्रेष्ठवृत्तयः ॥ २८ ॥
यज्ञयागविहीनेऽत्र वृष्टिरन्नं क्वचित्क्वचित् ॥
नरा वृद्धाः षोडशेऽब्दे प्रसूता दशमेऽबलाः ॥ २९ ॥
दस्युप्रायेषु भूपेषु पाखण्डप्रचुरे वृषे ॥
शूद्रप्रायेषु वर्णेषु छागप्रायासु गोषु च ॥ ३० ॥
गृहप्रायेष्वाश्रमेषु शून्यप्रायेषु सद्मसु ॥
अणुप्रायास्वोषधीषु शमीप्रायेषु च द्रुषु ॥ ३१ ॥
विष्ण्वंशो धर्मरक्षार्थं कल्क्याख्यः कारनाटके ॥
अवतीर्याश्वगो म्लेच्छान्हत्वा संस्थां करिष्यति ॥ ३२ ॥

स्त्रैणाः स्त्रीजिताः ॥ २५ ॥ अनुगा भृत्याः स्वामित्यागपराः ॥ २६ ॥ ॥ २७ ॥ २८ ॥ अत्र भूतले कलौ अबलाः स्त्रियः दशमे वर्षे जातापत्या भविष्यन्ति ॥ २९ ॥ दस्युप्रायेषु चोरप्रायेषु । वृषे धर्मे ॥ ३० ॥ फलरहितशमीप्रायेषु वृक्षेषु ॥ ३१ ॥ अश्वगोऽश्ववाहनः ॥ ३२ ॥

सोमार्कवंश्यौ देवापिमरू योगेन संस्थितौ ॥
कलापग्रामे तौ भूपौ तदैवेह भविष्यतः ॥ ३३ ॥
भविष्यति तदा धर्मश्चतुष्पादश्च पूर्ववत् ॥
वर्णाश्रमव्यवस्था च वृष्टिर्धान्यर्द्धिरुत्तमा ॥ ३४ ॥
सत्यप्येवं कलावेकं तारकं साधनं सुखम् ॥
श्रीदत्तस्मरणं नृणां सद्यः श्रेयस्करं परम् ॥ ३५ ॥
तत्संन्यस्याखिलं भक्त्या श्रीदत्तं संस्मरेद्द्विजः ॥
तत्प्रसादाद्विशुद्धात्मा भूत्वा मुक्तो भविष्यति ॥ ३६ ॥

सोमवंश्यो देवापिः । सूर्यवंशीयो मरुः ॥ ३३ ॥ ३४ ॥ एवं सति विद्यमानेऽपि कलौ एकं मुख्यं सुखं सुखकरम् ॥ ३५ ॥ तत्तस्माद्धेतोः ॥ ३६ ॥ संन्यासक्रममाह—ज्ञातेति । ब्रह्मचर्येण वेदानधीत्य स्नात्वा गार्हस्थ्येन पुत्रानुत्पाद्याध्वरैरीश्वरमिष्ट्वा वानप्रस्थेन साधनसामग्रीं प्रतिलभ्य प्रव्रजेदित्याश्रमसमुच्चयपक्षः । 'ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वाऽथ पुनरव्रती वा व्रती वा स्नातकोऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति विकल्पपक्षमध्ये विरक्तोऽनुकूलपक्षमाश्रित्य संन्यसेत् । अपिच स्मर्यते 'प्रव्रजेद्ब्रह्मचर्याद्वा प्रव्रजेच्च गृहादपि । वनाद्वा प्रव्रजेद्विद्वानातुरो वाऽथ दुःखितः' इति । आतुरो मुमूर्षुः । दुःखितो व्याघ्रादिभीतः । अत्रातुरस्य प्रेषमात्रम् । 'आतुराणां च संन्यासे न विधिर्नैव च क्रिया ॥ प्रेषमात्रं समुच्चार्य संन्यासं तत्र कारयेत्' इति स्मरणात् । दण्डग्रहणादिरूपे विविदिषाख्यसंन्यासे दशविधब्राह्मणानामेवाधिकारः । ते च पञ्च द्राविडाः पञ्च गौडाश्चेति । कलौ संन्यासनिषेधस्त्रिदण्डीपरः । संन्यासश्चतुर्धा कुटीचको बहूदको हंसः परमहंसश्चेति । अत्रोत्तरोत्तरश्रेष्ठत्वमग्रे वक्ष्यति । बहिः कुट्यां वसन् काषायवासास्त्रिदण्डी

ज्ञाताज्ञातैनसां कृत्वा निष्कृतिं निर्ममो वशी ॥
अष्टौ श्राद्धानि कृत्वाऽथ विरजाहोममाचरेत् ॥ ३७ ॥

शिखायज्ञोपवीतवान् बन्धुगृहे भुञ्जानो य आत्मनिष्ठः स कुटीचकः ॥ १ ॥ पुत्रादींस्त्यक्त्वा सप्तगृहान् भिक्षां चरन् तीर्थसेवी पूर्वोक्तवेषवान् बहूदकः ॥ २ ॥ हंसपरम हंसयोः शिखायज्ञोपवीतसत्त्वासत्त्वाभ्यां भेदः । द्वयोरप्येकदण्डः ॥ ३ ॥ परमहंसस्य विविदिषादशायां दण्डधारणं नित्यं । विद्वद्दशायां कृताकृतम् । तथाच श्रुतम्—'न दण्डं न शिखां नाच्छादनं चरति स परमहंसः' इति । तथाप्याश्रमोपकारार्थं लोकसंग्रहार्थं च दण्डो धार्य एव । वैराग्यं विना जीवनाद्यर्थं संन्यासो नरकायैव । यदुक्तम्—'एकदण्डं समाश्रित्य जीवन्ति बहवो नराः ॥ रौरवे नरके घोरे कर्मत्यागात्पतन्ति ते ॥ काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ॥ स याति नरकान्घोरान्यावदिन्द्राश्चतुर्दश' इति । वार्तिके च 'प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ॥ संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः' इति । संन्यासस्तूत्तरायणे गुरुशुक्रास्तादिवर्जिते काले कार्यः । नातुरस्यायं नियमः । ज्ञाताज्ञातदोषपरिहारार्थं सर्वप्रायश्चित्तं कृत्वा तदसंभवे कृच्छ्रचतुष्टयात्मकं कृत्वा एकादश्यां द्वादश्यां वा ब्रह्मरात्रिः स्यात्तथा श्राद्धाद्यारभेत । देवर्षिदिव्यमनुष्यभूतपितृमात्रात्माख्यान्यष्टौ श्राद्धानि नान्दीमुखत्वविशेषणेन नान्दीश्राद्धवत्कृत्वा षट्केशशिखावर्जं वपनं कृत्वा विरजाहोममाचरेत् ॥ ३७ ॥ 'अयं ते योनिरिति' स्वात्मन्यग्नीन्समारोप्य । 'सर्वे भवन्तु वेदाढ्याः सर्वे भवन्तु सोमपाः ॥ सर्वे पुत्रमुखं दृष्ट्वा सर्वे भवन्तु भिक्षुकाः' इति पुत्रादिभ्य आशिषो दत्त्वा जलाशयं गत्त्वा गायत्रीप्रवेशं कृत्वा । 'अभयं सर्वभूतेभ्यो मत्तः' ॥ 'यत्किंचिद्बन्धकं कर्म कृतमज्ञानतो मया ॥ प्रमादालस्यदोषोत्थं तत्सर्वं संत्यजाम्यहम् ॥ त्यक्तसर्वो विशुद्धात्मा

स्वात्मन्यग्नीन्समारोप्य कृत्वा देवीप्रवेशनम् ॥
त्यक्त्वैषणाश्च संबन्धान् दत्त्वा सर्वाभयं ततः ॥ ३८ ॥

हुत्वा शिखां चोपवीतं स यथाजातरूपधृक् ॥
कौपीनं परिधानं च काषायं प्रार्थितो दधत् ॥ ३९ ॥

कुण्डीधरः समित्पाणिर्ब्रह्मिष्ठं श्रोत्रियं गुरुम् ॥
उपसंगम्य भक्त्येशाभिन्नं मत्वा प्रणम्य च ॥ ४० ॥

गतस्नेहशुभाशुभः ॥ एष त्यजाम्यहं सर्वं कामभोगसुखादिकम् ॥ रोषं तोषं विवादं च गन्धमाल्यानुलेपनम् ॥ भूषणं नर्तनं गेयं दानमादानमेव च ॥ नमस्कारं जपं होमं याश्च नित्यक्रिया मम ॥ नित्यं नैमित्तिकं काम्यं वर्णधर्माश्रमाश्च ये ॥ सर्वमेव परित्यज्य ददाम्यभयदक्षिणाम् ॥ पद्भ्यां कराभ्यां विहरन्नाहं वाक्कायमानसैः ॥ करिष्ये प्राणिनां पीडां प्राणिनः सन्तु निर्भयाः '। इत्यभयं दत्त्वा ॥ ३८ ॥ 'आपो वै सर्वाः' इति शिखामुत्पाट्य तां यज्ञोपवीतं च जले हुत्वा ॥ 'त्राहि मां सर्वलोकेश वासुदेव सनातन ॥ संन्यस्तं मे जगद्योने पुण्डरीकाक्ष मोक्षद ॥ युष्मच्छरणमापन्नं त्राहि मां पुरुषोत्तम' इतीश्वरं प्रार्थ्य । यथाजातरूपधरो नग्न इति यावत् भूत्वोदङ्मुखो गच्छेत् । विविदिषुश्चेदाचार्यानुमतेन कषायेण रक्तं काषायं सार्धपञ्चहस्तं परिधानं तदर्धमानविस्तारं अष्टादशाङ्गुलदैर्घ्यं कौपीनं द्विगुणितं कटिसूत्रयुतं च दधानः ॥ ३९ ॥ कुण्डी कमण्डलुः । 'त्रायस्व भो जगन्नाथ गुरो संसारवह्निना ॥ दग्धं मां कालदष्टं च त्वामहं शरणं गतः' इति नत्वा ॥ ४० ॥ महावाक्यानि षोडश । तानि च

प्रसाद्य सेवया तस्मात्संप्रदायानुसारतः ॥
महावाक्यान्युपादाय ज्ञात्वाऽऽचारानशेषतः ॥ ४१ ॥

दण्डी भूत्वा कारयित्वा पर्यङ्काशौचमुत्तमम् ॥
गुरूपदिष्टमध्यात्मस्वरूपं समनुस्मरेत् ॥ ४२ ॥

स्नानं शौचं देवपूजा ध्यानं भिक्षाटनं जपः ॥
सर्वथैतानि कार्याणि यतिना राजदण्डवत् ॥ ४३ ॥

प्रज्ञान ब्रह्म ॥ १ ॥ तद्योऽहं सोऽसौ योऽसौ सोहम् ॥ २ ॥ विज्ञानमानन्दं ब्रह्म ॥ ३ ॥ स एतमेव पुरुषं ब्रह्म ततममपश्यत् ॥ ४ ॥' इत्यृचः ॥ ' अहं ब्रह्मास्मि ॥ ५ ॥ ब्रह्माहमस्मि ॥ ६ ॥ सत्यं ज्ञानमनन्तं ब्रह्म ॥ ७ ॥ स यश्चायं पुरुषे यश्चासावादित्ये स एकः ॥ ८ ॥' इति यजुषः ॥ २ ॥ ' तत्त्वमसि ॥ ९ ॥ एकमेवाद्वितीयं ब्रह्म ॥ १० ॥ ब्रह्मैवेदं सर्वं ॥ ११ ॥ सर्वं खल्विदं ब्रह्म ॥ १२ ॥' इति साम्नः ॥ ३ ॥ ' अयमात्मा ब्रह्म ॥ १३ ॥ तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥ १४ ॥ प्राणोऽस्मि प्रज्ञात्मा ॥ १५ ॥ एष त आत्मा ब्रह्म ॥ १६ ॥' इत्यथर्वणः ॥ ४१ ॥ गृहस्थहस्तेन मृज्जलाभ्यां परितोऽङ्कयोरुत्सङ्गयोः शौचम ॥ ४२ ॥ राजदण्डवदित्यनेन विविदिषोरकरणे प्रत्यवायो द्योतितः । आश्रमाभिमानित्वाच्छौचं गृहस्थोक्ताच्चतुर्गुणं शौचम् । स्वयंच्युतपुष्पादिना शिवविष्ण्वन्यतरप्रतिमापूजा मानसपूजा वा । ध्यानं निर्गुणं तदसंभवे सगुणमपि । दिवैव सकृद्भिक्षाटनं । द्वादशसहस्रं प्रणवजपः । श्रवणादिरतानां सहस्रं । निर्विकल्पसमाधिनिष्णातानां न किंचित्कृत्यं बाह्यकृत्यस्य चित्तविक्षेपकत्वात् ॥ ४३ ॥ अर्थो

शुक्लवस्त्रं मञ्चकोऽर्थः स्त्रीकथा लौल्यमेव च ॥
वस्त्रासनाऽमत्रलोभः संचयः शिष्यसंग्रहः ॥ ४४ ॥

दिवास्वापो वृथाजल्पो यानं बन्धाय वै यतेः ॥
नाध्येतव्यं न वक्तव्यं न श्रोतव्यं हि बन्धकृत् ॥ ४५ ॥

एकरात्रं वसेद्ग्रामे त्रिरात्रं पत्तने पुरे ॥
पञ्चरात्रं वसेन्मासांश्चतुरो वार्षिकान्सदा ॥ ४६ ॥

काशीस्थानामशक्तानां विहारो नैव विद्यते ॥
वसेदनियतागारो दर्यां वा शून्यवेश्मनि ॥ ४७ ॥

अलाबुं मृन्मयं दारुमयं वैणवमेव वा ॥
दद्यात्सदैकपात्रं चेद्भग्नमप्सु विनिक्षिपेत् ॥ ४८ ॥

तथैव दण्डं संस्कृत्य दद्यान्मुद्राद्वयान्वितम् ॥
सत्वचं वैणवं विप्रमयोनिं समपर्वकम् ॥ ४९ ॥

द्रव्यम्। लौल्यमिन्द्रियचापल्यम्। अमत्रं पात्रम्। नैषां विशेषसंग्रहः। न सेवार्थं शिष्यसंग्रहः ॥ ४४ ॥ दिवास्वापो विद्याप्रमादः। यदुक्तम्—'विद्या दिनं प्रकाशत्वादविद्या रात्रिरुच्यते ॥ विद्याभ्यासे प्रमादो यः स दिवास्वाप उच्यते' इति। बन्धकृदित्यनेन मुक्तिदस्य वेदान्ताध्ययनादेर्न दोषः ॥ ४५ ॥ ४६ ॥ नियतानिवासरहितः। दर्यां गुहायाम् ॥ ४७ ॥ पात्रादि भग्नं चेदप्सु क्षिपेत् ॥ ४८ ॥ दण्डं भग्नं ब्रह्ममुद्रां परशुमुद्रां च। विप्रं श्वेतं योनिचिह्नरहितम्। षट्पर्वा सुदर्शनः। अष्टपर्वा नारायणः। दशपर्वा गोपालः। द्वादशपर्वा वासुदेवः। चतुर्दशपर्वानन्तः एवं समपर्वा न न्यूनो नाधिकश्च ॥४९॥

द्विभागं मूलतस्त्यक्त्वा बध्नीयाद्ब्रह्ममुद्रिकाम् ॥
परशुं चान्त्यपर्वान्ते संप्रदायानुसारतः ॥ ५० ॥

क्रोशपादोत्तरं दण्डं विनेयान्न न लङ्घयेत् ॥
विना परशुमुद्रां च ग्रामसीमां नदीं तथा ॥ ५१ ॥

विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ॥
कालेऽपराह्णभूयिष्ठे दण्डी भिक्षां चरेद्यतिः ॥ ५२ ॥

माधूकरं चोपपन्नं तात्कालिकमयाचितम् ॥
अत्र माधूकरं श्रेष्ठं यतो दोषो न विद्यते ॥ ५३ ॥

मनःसंकल्परहितान्गृहांस्त्रीन् पञ्च सप्त वा ॥
संतोषपूर्वं भिक्षेत स्मृतं माधूकरं तु तत् ॥ ५४ ॥

लब्धाग्रभिक्षातुर्यांशं ब्रह्मादिभ्यः समर्प्य च ॥
निवेद्य विष्णवे शिष्टं तदद्यादौषधोपमम् ॥ ५५ ॥

अन्त्यपर्वणोर्मध्ये ॥ ५० ॥ नेयान्न गच्छेत् । परशुमुद्रां विना ग्रामसीमां नदीं च न लङ्घयेत् ॥ ५१ ॥ दण्डीत्यनेन भिक्षाकाले दण्डस्यावश्यकत्वं नोदपात्रस्येति सूचितम् । 'भिक्षाकाले दण्डमेकं नोदपात्रं कदाचन ॥ दण्डं कमण्डलुं चैव प्रयाणे धारयेद्यतिः' इत्युक्तेः ॥ ५२ ॥ ॥ ५३ ॥ माधूकरलक्षणमाह—मन इति ॥ ५४ ॥ लब्धाग्रभिक्षायाश्चतुर्थांशं ब्रह्मविष्णुसूर्यभूतेभ्यः समर्प्य शिष्टं विष्णवे निवेद्याद्यात् । तच्च क्षुद्व्याधिचिकित्सार्थमौषधबुद्ध्या न स्वादार्थं ॥ ५५ ॥ एकस्वामिकमन्नं

एकान्नाशी भवेद्यस्तु कदाचिल्लंपटो यतिः ॥
स चण्डालसमो ज्ञेयस्तस्माद्भैक्ष्यं समाहरेत् ॥ ५६ ॥

मद्यमांसोपमं पश्येद्यतेरन्नं जलं गृही ॥
आद्यन्तजलयुग्दद्यादन्नं तस्मै महाफलं ॥ ५७ ॥

भिक्षामा सप्तमान्मासान्नाचरेद्गर्भिणीगृहे ॥
उदक्यायाश्चतुरहं हव्यकव्यादिने तथा ॥ ५८ ॥

पुत्रोद्भवे मासमेकं सार्धं कन्योद्भवे तथा ॥
गोमहिष्यादिसूतौ च दशाहं सूतके तथा ॥ ५९ ॥

षोडशाहं व्रतोद्वाहे वर्ज्या वृद्धिदिने तथा ॥
श्राद्धेष्ट्यादौ वैश्वदेवकर्तुः क्षौरदिने तथा ॥ ६० ॥

पितर्यब्दं मृतेऽर्धाब्दं मातर्यब्दाङ्घ्रिकं स्त्रियि ॥
पितामहे च पुत्रादौ तदर्धं मासमन्यके ॥ ६१ ॥

निषिद्धम्। 'एकभिक्षा न कर्तव्या वासिष्ठसदनादपि। माधूकरं प्रकर्तव्यं चण्डालसदनादपि' इत्युक्तेः। अलं चण्ड इति चण्डालः कोपनः न चण्डालजातीयः। यतेर्ब्राह्मणातिरिक्तभिक्षानिषेधात्। एवं चतुर्वर्णेषु भैक्ष्यमिति विप्रजातावेव वृत्तिवशाच्चातुर्वर्ण्यं। सति संभवे नित्यमेकगृहभिक्षा न कर्तव्या। अत्रात्रिविष्णू–'संभवे बहुगेहानां नतु तेष्वेव नित्यशः॥ अभावे बहुगेहानां तेषु भिक्षेदलोलुपः' इति ॥ ५६ ॥ 'यतेरन्नं न भोक्तव्यं प्राणैः कण्ठगतैरपि' इत्युक्तेः गृहिणा तदन्नं जलं च नादेयम् ॥ ५७ ॥ उदक्या रजस्वला ॥ ५८ ॥ ५९ ॥ व्रतं चौलम् ॥ ६० ॥ अब्दाङ्घ्रि त्रिमासम्। अन्यके सगोत्रे। सर्वत्र वैश्वदेवकर्तुः संबन्धः

अयने विषुवे रात्रावेकादश्यां न भोजनम् ॥
सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षितम् ॥ ६२ ॥

क्षौरं द्विमास्या पौर्णायां यतेर्दाहक्रियादि नो ॥
व्यसुर्देहो गवि क्षेप्यः पुत्रश्चेच्छ्राद्धमाचरेत् ॥ ६३ ॥

कुटीचको बहूदश्च हंसः परमहंसकः ॥
अत्रोत्तरोत्तरः श्रेष्ठश्चान्त्यो नैष्कर्म्यसिद्धिभाक् ॥ ६४ ॥

स्वशाखोपनिषद्गीताविष्णुनामसहस्रकम् ॥
श्रीरुद्रं पौरुषं तारं जपन्मुच्येत्परात्मदृक् ॥ ६५ ॥

बालोऽपि योगभ्रष्टत्वात्पित्रे लब्धस्मृतिर्जगौ ॥
दत्तोपदिष्टान्सद्धर्मान् तारांस्तत्संग्रहस्त्वयम् ॥ ६६ ॥

॥ ६१ ॥ विषुवस्तुलामेषयो रवेः संक्रान्तिः ॥ ६२ ॥ 'कुटीचकं तु प्रदहेत् पूरयेच्च बहूदकम ॥ हंसो जले विनिक्षेप्यः परहंसं प्रकीरयेत् ॥ एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् । न कुर्याद्वार्षिकादन्यद्ब्रह्मीभूताय भिक्षवे ' इति । व्यसुर्गतप्राणः । गवि जले भुवि वा दशाहे क्षीरतर्पणं लिङ्गपूजा पायसबलिदीपदानादि कार्यं । पुत्रश्चेदेकादशेऽह्नि पार्वणश्राद्धं कुर्याद्द्वादशाहे नारायणबलिं त्र्ययोदशेऽह्न्याराधनं चाब्दिकमपरपक्षे द्वादश्यां महालयं दर्शादिश्राद्धं च कुर्यात् 'असंस्कृतं विशीर्येत यतेर्यत्र कलेवरम । धर्मलोपो भवेत्तत्र दुर्भिक्षं मरणं तथा ॥ दिवंगते गुरौ शिष्य उपवासं तदाचरेत् ॥ न स्नानमाचरेद्भिक्षुः पुत्रादिमरणे श्रुते ॥ पितृमातृक्षयं श्रुत्वा स्नानाच्छुद्ध्यति सांबरः ' इत्याकरतो ज्ञेयम् ॥ ६३ ॥ ॥ ६४ ॥ तारं प्रणवम् ॥ ६५ ॥ बालो गालवपुत्रः ॥ ६६ ॥ उप-

इति भ्रमनिवृत्त्यै श्रीदत्तात्रेयो यदाह तत् ॥
समासेनेह ग्रथितमनेन प्रीयतां स्वराट् ॥ ६७ ॥
समानी वोऽस्त्विहाकूतिः समानहृदयानि वः ॥
समानमस्तु वो दत्ते मनो नोऽव्यात्त्र्यधीश्वरः ॥ ६८ ॥

इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां श्रीवासुदेव्यां कर्मकाण्डे आदित अष्टमाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥

संहरति--इतीति । स्वराट् स्वयंप्रकाशः ॥ ६७ ॥ समाप्तौ मङ्गलमाह--आशीर्वादरूपं अनुष्टुभाह--समानीति ॥ ६८ ॥ इति श्रीमद्दत्तात्रेयपुराणे सार्धत्रिसाहस्र्यां त्रिकाण्डमण्डितायां संहितायां वासुदेव्यां कर्मकाण्डे टीकायां अष्टमाष्टके अष्टमोऽध्यायः ॥ ८ ॥

इति प्रलय–युगमान–संन्यासपद्धतिकथनं नामाष्टमाष्टकेऽष्टमोध्यायः ॥ ८।८ ॥

अत्र काण्डास्त्रयोऽध्यायाश्चतुष्षष्टिस्तथाष्टकाः ॥
अष्टौ सार्धत्रिसाहस्रश्लोका ॐकारसंमिताः ॥ १ ॥
सद्वादशसहस्राढ्यलक्षा ११२००० क्षरात्मकं त्विदम् ॥
श्रोतुर्वक्तुर्दत्तलोकप्रदं तारं पुराणकम् ॥ २ ॥

॥ इति श्रीदत्तपुराणं सटीकं समाप्तम् ॥

# दत्तपुराणशुद्धिपत्रम्

| पत्रं | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| २ | २५ | सच्चिादात्मा | सच्चिदात्मा |
| ४ | ५ | शीषर्वं | शीर्षंव |
| ,, | १४ | ईदृग्रुप | ईदृग्रूप |
| ,, | १६ | पदौपचारिक | पदमौपचारिक |
| ५ | ११ | पङि्क्त | पङ्क्ति |
| ,, | ,, | सं॒प | संप |
| ६ | २२ | त्तदि | चदि |
| ७ | ३ | सुमनःसुमनाः | सुमनःसुमनः |
| ८ | १६ | त्रिशुद्धया | विशुद्धया |
| ,, | १८ | अवगतेः। | अवगतेः |
| ९ | ४ | शेषा विशेषा | शेषाविशेषा |
| ,, | १० | शोधनं द्या | शोधनं चा |
| १० | ४ | श्रीमद्वावासु | श्रीमद्वासु |
| १२ | २२ | कीतिर्यस्य | कीर्तिर्यस्य |
| १३ | १३ | प्रधानादरेपि | प्रधानादेरपि |
| ,, | ११ | या त्ताकाराय | यात्ताकाराय |
| १५ | ७ | वन्धवं | बन्धवे |
| १७ | १३ | निर्विघ्नम् | निर्विघ्नम् |
| १८ | २ | दत्तात्रेयं | दत्तात्रेय |
| ,, | १० | ढास | दास |
| ,, | ११ | इष्ठार्थ | इष्टार्थ |
| १९ | १८ | माक्षेच्छ्व | मोक्षेच्छ्व |
| २० | १२ | देहाभ्रन्यो | देहाभ्रौभ्यो |
| ,, | १३ | ऋचिकातप | ऋचीकतप |

| पत्रं | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| २० | १६ | वैष्णबधर्मदर्शक | वैष्णवधर्मादर्शक |
| २२ | १२ | सारभृतं | सारभूतं |
| २३ | १२ | प्रीत्यैः | प्रीत्यै |
| ,, | १८ | यज्ञस्य देव | यज्ञस्य देवं |
| २५ | २ | प्रमन्महेस्माऽ | प्रमन्महेऽस्मा |
| ,, | ,, | तिस्तोता | ति स्तोता |
| ३३ | ३ | भवान्तां | भवांस्तां |
| ३५ | १३ | प्रजापरिति | प्रजापतिरिति |
| ३६ | ८ | पाह्यहंसो | पाह्यहसो |
| ३७ | १६ | ब्राह्मणः | ब्रह्मणः |
| ३८ | १८ | ज्ञायिन एव | ज्ञानिन एव |
| ४० | १७ | कार्मठाः | कर्मठाः |
| ,, | १८ | तद्रपेश्वर | तद्रूपेश्वर |
| ४४ | ३ | गृरूद्युक्त | गुरूद्युक्त |
| ,, | १६ | ब्रयात् | ब्रूयात् |
| ४५ | १६ | प्रारब्धगत | प्रारब्धागत |
| ५१ | १६ | धारवर्षकेण | धारावर्षकेण |
| ,, | २२ | भुक्त्यै | मुक्त्यै |
| ५३ | २ | क्रिया कर्त्तुर्विफलं | क्रियाकर्तुर्विफलं |
| ५६ | ७ | विन्दन्ति | विन्दति |
| ५७ | २३ | यद्वा | ‘यद्वा |
| ५९ | ८ | लभ्य ’ इति | लभ्यः ’ इति |
| ,, | १६ | सत्यात्प्रशब्द | सत्यप्रशब्द |
| ,, | २३ | विजतीयभेदो | विजातीयभेदो |
| ६० | ६ | त्सोर्मढस्य | त्सोर्मूढस्य |
| ६२ | ११ | स्येन्द्रियार्थे | स्येन्द्रियस्यार्थे |
| ,, | १६ | इत्युक्तलक्षणा | इत्युक्तलक्षणा |

| पत्रं | पंक्तिः | अशुद्ध | शुद्धं |
|---|---|---|---|
| ६२ | १८ | नैव ' | नैव, |
| ,, | २२ | विरोधो | निरोधो |
| ६३ | १२ | भवत्यैव | भक्त्यैव |
| ६४ | १४ | दैहिकप्रस्तुतप्रति-<br>वन्धे । तद्दर्श | ऐहिकमप्यप्रस्तुत-<br>प्रतिबन्धे तद्दर्श |
| ६७ | १८ | ब्राह्मणः | ब्रह्मणः |
| ७५ | १९ | सुत्रम् | सूत्रम् |
| ७६ | २१ | द्वतैवादाः | द्वैतवादाः |
| ७७ | २२ | केमनिच | केमनिच् |
| ७९ | १४ | लुप्त | लुप्तं |
| ८१ | ३ | प्रत्यग्ज्योतिपरा | मां प्रत्यग्ज्योतिरा |
| ८२ | १९ | छाकार | छकार |
| ,, | २० | प्रणापान | प्राणापान |
| ८३ | ११ | दूयतवं | दूयेतैवं |
| ,, | १३ | स्निमस्व | स्मिन्स्व |
| ८५ | १६ | दभ्रवेदिना | दभ्रवेदिना |
| ८६ | ९ | पूजाफलं | पूजा फलं |
| ८७ | १२ | इतिवत्पदौप | इतिवद्दौप |
| ९० | ७ | माजह्ने | माजह्ने |
| ९१ | ९ | बह्मविधा | ब्रह्मविद्या |
| ९२ | १० | संन्यासः । ननु | सन्यासः न तु |
| ९४ | १२ | त्वाद्भूतावासः | त्वाद्भूतावासः |
| ,, | १५ | तत्धेग | तद्धेयं |
| ९६ | ३ | बाह्याथादौं | बाह्यार्थौदा |
| ९९ | ९ | समाह्ने | समाह्ने |
| १०२ | १० | दैवी सं | दैवीसं |
| १०४ | २१ | युक्प्या | युक्त्या |

| पत्रं | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| २०४ | ५ | दोषघ्नि | दोषघ्नी |
| ,, | २३ | भ्रमध्यगा | भ्रूमध्यगा |
| २०५ | ६ | बिन्दुस्त्स्या | बिन्दुः स्त्स्या |
| ,, | ७ | मुद्रा बद्धो | मुद्राबद्धो |
| ,, | १४ | कृतम्कुम्भकः | कृतकुम्भकः |
| २०७ | ११ | मूर्ध्नि | मूर्ध्नि |
| २०९ | ३ | समाधिस्थ्यं | समाधिस्थं |
| २१० | २२ | म् ' इति | म् ' इति |
| २११ | ५ | बाद्ध | वाद्य |
| ,, | १४ | नाशादन्त | नादशान्त |
| २१३ | १ | अ० १ | अ० ८ |
| २१६ | ११ | विषयी सत्त्व | विषयिसत्त्व |
| ,, | २२ | बुद्धिः | बुद्धेः |
| २१८ | १४ | विद्यादिवर्जितः | अविद्यादिवर्जितः |
| २२० | ३ | तारागद्वे | ता रागो द्वे |
| २२१ | ८ | शूद्धोपि | शुद्धोपि |
| २२२ | १८ | मृह्यम् | मूह्यम् |
| २२३ | ७ | आस्यास्थि | आस्या स्थि |
| ,, | ,, | यत्न | यत्ना |
| २२४ | २ | प्रत्याहारस्वार्थो | प्रत्याहारः स्वार्थो |
| २२७ | १३ | देव तेऽहं | देवतेऽहं |
| ,, | २० | प्रतिकोपा | प्रतीकोपा |
| २२८ | ८ | संक्रियमाणे | संस्क्रियमाणे |
| ,, | २४ | ग्रंन्थ | ग्रन्थ |
| २२९ | २३ | भूमाऽप | भूमाप |
| २३० | १९ | च्चेन्नेत्याह | चेन्नेत्याह |
| २३२ | २२ | मर्तिः | मूर्तिः |

| पत्रं | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १३३ | ८ | ब्रह्मति | ब्रह्मेति |
| १३७ | ११ | कुड्लोभ | कुड्मलोभ |
| १४४ | १६ | श्यजांशौ | श्न्यजांशौ |
| १४८ | ६ | युगे त्र | युगेऽत्र |
| ,, | ,, | जन्तूंस्त- | जन्तूं- |
| ,, | ७ | प्त्वातपो | स्तप्त्वा तपो |
| ,, | १३ | सुधिय | सुधियं |
| १५४ | १२ | प्रत्यक्तं | प्रत्यक्त्वं |
| ,, | १३ | वृत्तैस्तौति | वृत्तैः स्तौति |
| १५५ | १८ | विग्रह सेवन | विग्रहसेवन |
| १६६ | २४ | साङ्गोपा | साङ्गोपाङ्ग |
| १६८ | ४ | शाङ्गी | शाङ्गीं |
| १६९ | २३ | पर्वतः भूर्वा | पर्वतः भूर्वा |
| १७० | ६ | दंष्टयो | दंष्ट्रयो |
| १७२ | १४ | वां वयुयो | वां युवयो |
| १७७ | २ | योऽसा | योऽसौ |
| १८१ | २४ | शिष्यभृतेन | शिष्यभूतेन |
| १८३ | १० | पूजत | पूजात |
| ,, | १२ | नस्तिाष्ठ | नस्तिष्ठा |
| १८४ | २ | हूने | हुने |
| ,, | १२ | भ्रतिभ्यः | श्रुतिभ्यः |
| १८६ | ९ | राह्याद्या | रा ह्याद्या |
| ,, | १० | मारहुस्थितम् | माहुरस्थितम् |
| १८८ | ५ | पिङ्गलो | पिङ्गलो |
| ,, | ७ | हृद् ग्रन्थि | हृद्ग्रन्थि |
| १९१ | १५ | दाप्नोति । परम् | दाप्नोति परम् |
| ,, | १७ | मन्दार्थमेवमय | मन्दार्थमेवाय |

